वारणासिधर्मसूरिकृतः

# साहित्यरत्नाकरः

[समीक्षात्मकम् अध्ययनं सम्पादनञ्च]

अध्येता सम्पादकश्च

वेम्पटि कुटुम्बशास्त्री

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः

वाराणसी

SARASVATĪBHAVANA-STUDIES
[ 77 ]

# SĀHITYARATNĀKARAḤ

OF

## VĀRAṆĀSI DHARMASŪRI

## [A CRITICAL STUDY AND EDITION]

*BY*

**PROF. VEMPATY KUTUMBA SASTRY**
Vice-Chancellor
Sampurnanand Sanskrit University
Varanasi




VARANASI
2010

*Research Publication Supervisor*—
**Director, Research Institute**
Sampurnanand Sanskrit University
Varanasi.

ISBN : 81-7270-243-4



*Published by*—
**Prof. Narendranath Pandey**
***Director, Academic, Research & Publication Institute***
Sampurnanand Sanskrit University
Varanasi-221002.



*Available at*—
**Sales Department,**
Sampurnanand Sanskrit University
Varanasi-221 002.



**First Edition,** 500 Copies

**Price** : Rs. 660.00



*Printed by*—
**Shreejee Printers**
Nati Imli, Varanasi-221002

सरस्वतीभवन-अध्ययनमाला

[७७]

## वारणासिधर्मसूरिकृतः

# साहित्यरत्नाकरः

## [ समीक्षात्मकम् अध्ययनं सम्पादनञ्च ]

*अध्येता सम्पादकश्च*

**प्रो. वेम्पटिकुटुम्बशास्त्री**

कुलपतिः

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य

वाराणस्याम्




**वाराणस्याम्**

२०६७ तमे वैक्रमाब्दे    १९३२ तमे शकाब्दे    २०१० तमे ख्रैस्ताब्दे

*अनुसन्धान-प्रकाशन-पर्यवेक्षकः—*
**निदेशकः, अनुसन्धान-संस्थानस्य**
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी।

ISBN : 81-7270-243-4



*प्रकाशकः—*
**प्रो. नरेन्द्रनाथपाण्डेयः**
**निदेशकः, शिक्षण-शोध-प्रकाशन-संस्थानस्य**
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी - २२१००२



*प्राप्तिस्थानम्—*
**विक्रय-विभागः,**
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी - २२१००२



**प्रथमं संस्करणम्** - ५०० प्रतिरूपाणि
**मूल्यम्** - ६६०.०० रूप्यकाणि



*मुद्रकः—*
**श्रीजी प्रिण्टर्स**
नाटी इमली, वाराणसी।

N : 81-

# गुरुवन्दना



सदाशिवसमारम्भां शङ्कराचार्यमध्यमाम् ।
अस्मदाचार्यपर्यन्तां वन्दे गुरुपरम्पराम् ।।

श्रीकामकोटिपीठेशं यतिराजत्रयं श्रये ।
यत्कृपादृष्टिपातेन पावितं जन्म मेऽभवत् ।।

राज्यलक्ष्मीजगन्नाथौ वन्दे मे पितरौ यतः ।
जन्मब्रह्मज्ञानदाभ्यां जातो विद्याधिकारवान् ।।

वेङ्कटरमणाचार्यं वन्दे ऋग्वेददेशिकम् ।
नरसिंहं तं वरदं वन्दे साहित्यदेशिकौ ।।

अद्वैतदेशिकं वन्दे वैदुष्यनिकषोपलम् ।
वेपत्तूरूपनामानं सुब्रह्मण्यबुधोत्तमम् ।।

बोधे च बोधने चापि द्वितीयरहितं गुरुम् ।
सिरुवामणिपूर्वाख्यं कृष्णमूर्तिबुधं श्रये ।।

एकलव्यनयेनैव यस्माद्विद्या उपार्जिताः ।
गोडोपनामधेयं तं सुब्रह्मण्यगुरुं भजे ।।

मूर्तं व्याकरणं यश्च दक्षिणामूर्तिरूपिणम् ।
सूर्यनारायणं वन्दे 'पेरि'पूर्वं गुरुं सदा ।।

राघवसुब्रह्मण्यौ कार्येऽस्मिन् मार्गदर्शकौ ।
अन्यानपि गुरून् वन्देऽस्मीदृशो यत्प्रसादतः ।।



'पद्मभूषण'-'कविकोकिल'-प्रभृति

बहुबिरुदभाजां

अन्ताराष्ट्रियसंस्कृतसमवायस्य प्रथमाध्यक्षचराणां

दिगन्तविश्रान्तकीर्तीनां

**डॉ. वि. राघवन्-महोदयानां**

स्मृतौ

ग्रन्थममुं समर्पयामि।

# पुरोवाक्

अथासौ मुद्रीयमाणो ग्रन्थः प्रायः सप्तविंशतिवर्षपूर्वं राष्ट्रियसंस्कृत-संस्थानस्य नवदिल्लीस्थस्य 'विद्यावारिधिः' इत्युपाध्यर्थं समर्पितात् शोधप्रबन्धाद् अभिन्न एव। सम्पादनात्मकस्य द्वितीयस्य ग्रन्थभागस्य सज्जीकरणं तु ततोऽधिकतया त्रिंशद्वर्षपूर्वमेव सुसम्पन्नम्। तममुं विदुषां करकमलयोः प्रापय्य प्रसन्नतामनुभवामि।

अलङ्कारशास्त्रसम्बन्धिनि ग्रन्थसमुदाये **साहित्यरत्नाकरः** अतिविशिष्टं किमपि स्थानमलङ्करोति। ऐदम्प्राथम्येन यशोभूषणरूपे अलङ्कारशास्त्रग्रन्थे भगवन्तं श्रीरामं कृतिनायकं कृत्वा शास्त्रार्थप्रतिपादनं कृतं धर्मसूरिणा। एवमेव वृत्तित्रयसम्बद्धान् विविधशास्त्रप्रतिपादितान् अतिगभीरान् विचारान् क्रोडीकृत्य वैशद्येन प्रतिपादनम् ऐदम्प्राथम्येन दृश्यते साहित्यरत्नाकरे। धर्मसूरेः कविता तावदतीवोज्ज्वला, प्रसादगुणशोभिता, माधुर्यधुर्या चकास्ति, या च अन्यालङ्कारवैलक्षण्येन यतिब्रह्मचार्यादिभिरपि सुसंसेव्या। सकलशास्त्रपारदृश्वासौ धर्मसूरिर्मीमांसकमतप्रवणतामुपलक्षयन् समग्रमपि ग्रन्थं शास्त्रीयग्रन्थ-ग्रथनमर्यादाभिः समपोषयत्। आद्यन्तग्रन्थानुसन्धानेन अनुसन्धातॄणां मनसि अलङ्कारशास्त्रस्य शास्त्रत्वं हृदयगोचरम् अनुभवगम्यं च यथा स्यात् तथैषा ग्रन्थसंरचना कृता धर्मसूरिणा।

अत एव न्यायव्याकरणादि शास्त्रचतुष्टयकृतस्य वृत्तिविचारस्य वैशद्येन प्रतिपादनात्मकं प्रथमतरङ्गचतुष्टयं प्राधान्यमर्हति साहित्यरत्नाकरे। अत एव चास्माभिरपि तत्र प्रतिपादितानां न्यायव्याकरणमीमांसालङ्कारशास्त्रसम्बन्धिनां विचाराणां वैशद्येनानुसन्धानं कृतम् २.२, २.३, २.४, २.५ ग्रन्थविभागेषु।

अर्थालङ्कारविभागे अनुसन्धातव्यार्थानां बाहुल्यम् उपलभ्य तत्र प्रवृत्ता अपि वयं मूलग्रन्थे तद्विषयकविशदविचाराभावमुपलक्ष्य ग्रन्थगौरवं च विभाव्य स्थालीपुलाकन्यायेनैव कतिचिद् अलङ्कारेषु तत्तन्मूलतत्त्वविषयकानुसन्धानं निर्व्यूढवन्तः २.८ ग्रन्थविभागे।

रस-ध्वनि-प्रभृत्यालङ्कारिकतत्त्वेषु मूलग्रन्थस्य सिद्धार्थानुवदन-प्रवणतामुपलक्ष्य अस्माभिरपि न कृतो महान् सम्भ्रमः; किन्तु ग्रन्थयोजनायां प्रस्तुतीकरणे च विद्यमानं वैशिष्ट्यं यथोचितं प्रपञ्चितमेव। किञ्च

भोजराजरससिद्धान्ते ग्रन्थकर्तुस्तथा इतरेषामालङ्कारिकाणां च न समीचीनमवगाहनमासीदित्यतस्तन्मतं किञ्चिद् विस्तरेण कथितम्।

साहित्यरत्नाकरमधिकृत्य कृते विचारे प्राधान्येन एकावली-प्रतापरुद्रीयाभ्यां तुलनात्मकतयैव विचारः प्रस्तुतो यत्कारणमस्य ग्रन्थद्वयस्य प्रभावः साहित्यरत्नाकरस्योपरि अनपलपनीयो गणनीयश्च संदृश्यते। कतिपयप्रधानस्थलेषु एताभ्यामुभाभ्यां भिद्यते धर्मसूरिः। तादृशस्थलानि विमृष्टानि, धर्मसूरेर्हृदयमपि यावच्छक्यं प्रकटितं २.१ ग्रन्थविभागे।

प्रथमे ग्रन्थविभागे धर्मसूरेर्व्यक्तिगतांशा व्यमृश्यन्त। धर्मसूरे-र्देशकालविषये पूर्वसूरिभिर्बहुभिर्बहुधा निबद्धमस्तीत्यतोऽस्मत्पक्षस्य सयुक्तिकं प्रतिष्ठापयिलव्यत्वात् कश्चन विस्तार आदृतः। साहित्यरत्नाकरपठितृणां स्वानुभवसाक्षिकतया धर्मसूरिकविताप्राशस्त्यं हृद्गोचरं भविष्यतीत्यतः कविताविषयकविचारः, द्वितीये ग्रन्थविभागे तत्तच्छास्त्रसम्बद्धानां नैकेषां विषयाणां विमृष्टत्वात् पुनरुक्तिः परिहर्तव्येत्यतः पाण्डित्यविषयकविचारश्च स्थूलतया सिंहावलोकनन्यायेन निर्व्यूढौ।

तृतीये ग्रन्थविभागे साहित्यरत्नाकरव्याख्यानानि परामृष्टानि। तत्रापि अलङ्कारसुधाकरस्य परामर्शे वक्तव्यांशानां बहूनां वचनं न सम्पन्नं विषयबाहुल्यम् अप्रकृतत्वञ्च परिभाव्य।

अध्ययने सम्पादने वा ज्ञाताज्ञातत्रुटिप्रमादरूपेण ये दोषा ये च अव्युत्पत्तिकृताः स्युस्तत्र सर्वत्र ममैवानवधानाव्युत्पन्नत्वादिकं कारणमिति निवेदयामि। ये च केचन गुणास्ते गुरूणामेवेति सविनयं विज्ञापयामि।

पाठसमीक्षात्मकसम्पादनरूपो द्वितीयो भागो मद्रासनगरस्थयोः मद्रास-शासकीय-प्राच्यहस्तलिखितग्रन्थालय-अड्यारुग्रन्थालययोरुपलभ्यमाना अष्टौ मातृका आश्रित्य सम्पादितः।

विश्वविश्रुतकीर्तीनामलङ्कारशास्त्रपाथोनिधिमन्थने मन्दरायितानां प्रातः-स्मरणीयानां यशःकायानां **डॉ.वि.राघवन्महोदयानां** मार्गदर्शनलाभः केनापि मत्पूर्वजन्मार्जितपुण्यपरिपाकेन सम्पादनकर्मणि मयाधिगतः। अर्द्धाधिकस्य प्रथमस्य समीक्षात्मकाध्ययनभागस्य प्रस्तुतावपि तेषामेव मार्गदर्शनलाभ आसीत्। अवशिष्टस्य, विशिष्य प्रथमतरङ्गचतुष्टयस्य प्रस्तुतौ प्रविधिसम्बन्धि-मार्गदर्शनं यशःकायेभ्यः **डॉ. मल्लादि-द.बालसुब्रह्मण्यमहाभागेभ्यः**, शास्त्रीयविषयविवेचनसम्बन्धिमार्गदर्शनञ्च सन्मित्रमणिभ्यः **डॉ.कं.वे. रामकृष्णमाचार्यमहाभागेभ्यः** सम्प्राप्य कृतकृत्योऽहमभवम्।

शोधकार्यसम्पादनाय भारतशासनस्य तदानीन्तनशिक्षामन्त्रालयेन परम्परागतपाठशालाविद्यार्थिनां कृते शोधकार्यकरणाय दीयमानं विद्यार्थिवेतनं प्रदत्तम्। तस्यैव मन्त्रालयस्याङ्गभूतं राष्ट्रियसंस्कृतसंस्थानं शोधकार्यार्थम् अनुमतिं प्रदायोपाकरोत्। उभयेभ्यस्तेभ्यो धन्यवादाः।

सोमपीथिनां **ब्रह्मश्री-अनन्तनारायणघनपाठिनां श्रीमत्याः जानकम्मा-महाभागायास्तत्पुत्रस्य** मे भ्रातृकल्पस्य **प्रो. राजगोपालन्-महोदयस्य, प्रो. के.ई.गोविन्दन्-महोदयस्य श्री-एस.बी.एस.-भट्टाचार्यमहोदयस्य** चोपकारं स्मारं स्मारं कार्तज्ञ्यमावेदयामि।

मद्रास-शासकीय-प्राच्यहस्तलिखितग्रन्थालयाधिकारिणः, अड्यारु-ग्रन्थालयाधिकारिणः, कुप्पुस्वामि-शास्त्रि-गवेषण-समितेरधिकारिणश्च कार्तज्ञ्य-प्रतिवेदनेन विभूष्यन्ते।

अयञ्च ग्रन्थः सकलविद्याराजधान्यां काश्यां विश्वविश्रुतस्य सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य प्रकाशनसंस्थानेन प्राकाश्यमानीयत इति प्रमोदस्य विषयः। प्रकाशनसंस्थानस्य निदेशकः **प्रो. नरेन्द्रनाथपाण्डेय**महोदयो धन्यवादार्होऽस्ति। **डॉ. हरिवंशपाण्डेयः** महान्तं श्रममूढ्वा ग्रन्थस्यास्य स्वरूपसंरचनायाम् अक्षरंशोधने च अभिनन्दनार्हं साहाय्यमकरोत्, तस्य योगक्षेमयोः कृते भगवन्तं भूतभावनं प्रार्थये। श्रीजीमुद्रणालयस्य यजमानः **श्री. अनूपकुमारनागरः** त्वरितगत्या सुन्दरमुद्रणं विधायोपाकारोत्, तस्मै साधुवादाः। येऽप्यन्येऽत्र प्रत्यक्षतः परोक्षतो वा साहाय्यमकुर्वन् तेभ्यः सर्वेभ्यो हार्दान्यभिनन्दनानि।

अन्ते च भवानीविश्वनाथयोश्चरणकमलेषु ग्रन्थममुं सभक्तिश्रद्धं समुपाहरन् विरमामि।

**वाराणस्याम्**
माघपूर्णिमायाम्,
२०६६ तमे वैक्रमाब्दे

**(प्रो. वेम्पटिकुटुम्बशास्त्री)**
कुलपतिः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

धर्माभिख्यकवेर्गिरां विवरणे कोऽन्यः कृती गौतमात्
शेषाहेर्हयवक्त्रतोऽम्बुजभवाद्वाचस्पतेर्वायुजात्   ।।

– मल्लादि–लक्ष्मणसूरिः, मन्दरः।

लोकोत्तारकरामनामघटितोदारप्रबन्धोत्तमं
कुर्वन् कृत्यरतिं स्वकीयकवितामत्युज्ज्वलां लम्भयन्।
धन्यो धर्मसुधीवरः सुमनसामग्रेसरस्तद्वचो–
व्याख्यानैककृतिः कृती यदि तदा किं नो भवेयं त्वहम्।।

–चर्ल–वेङ्कटसूरिः, नौका।

# विषयानुक्रमणिका

## ।। अथ प्रथमोऽध्यायः ।।

# धर्मसूरिः – तद्देशकालकृतिवैदुष्यादीनां विचारः



।।श्रीरामस्सहायः।।

श्रीवेङ्कटाचलाधीशं श्रियाध्यासितवक्षसम्।
श्रितचेतनमन्दारं श्रीनिवासम् अहं भजे।।
गुरुर्ब्रह्मा गुरुर्विष्णुः गुरुर्देवो महेश्वरः।
गुरुस्साक्षाद् परं ब्रह्म तस्मै श्रीगुरवे नमः।।

### 1.1 धर्मसूरिः कः?

अथ संस्कृतवाङ्मयवियति सुविशाले 'धर्मसूरिः' इत्यभिधया प्रायः सप्त तारका विलसन्ति। इदं च महदाश्चर्यस्थानं यद् नैकस्याप्येतेषां देशकालादयो जननजीवनादीनि च सुस्पष्टं ज्ञायन्ते। केचन केवलं नाममात्रप्रसिद्धाः। तेषां स्थितिरेव सन्देहास्पदा भवति। महति कालार्णवे निमग्नानाम् एतेषां कविपण्डितवरेण्यानां सम्बन्धिनो ये केचन विषया विरलविरलतया कथञ्चिद् दृष्टिपथम् आगता अत्र प्रस्तूयन्ते।

### 1.1.1 पन्दिल्ल-धर्मसूरिः

कश्चित् पन्दिल्लवंशीयो धर्मसूरिः "शाब्दिकचक्रवर्ती" इति विरुदवतः पद्मनाभस्य पुत्रः[1]। उपेन्द्रयतेः शिष्यः[2] अयम्, परिभाषार्थप्रकाश[3] इति व्याकरणसम्बन्धिनं ग्रन्थं व्यरचयत्। "पन्दिल्ल" इति गृहनाम्नो लिङ्गाद् आन्ध्र इति तर्क्यते।

परिभाषार्थप्रकाशस्य समग्रपरिशीलनेन इदं ज्ञायते यदेष ग्रन्थो वैयाकरणपरिभाषाप्रतिपादकस्तद्विवरणरूपश्चेति। अस्मिन् भाष्यकारमारभ्य भट्टोजिदीक्षितपर्यन्तं नैके वैयाकरणाः स्मृताः। एतेन ग्रन्थस्य अस्य सकलव्याकरणग्रन्थार्वाचीनता प्रतीयते। अस्य पन्दिल्लवंशीयत्वस्य स्पष्टत्वात् प्रकृताद् वारणासिवंशीयाद् धर्मसूरेरयं भिद्यते।

### 1.1.2 जैनो धर्मसूरिः

अयं 'जयतिहुणस्तोत्रं'[4] व्यरचयद्। ग्रन्थनाम्नो लिङ्गाद् जैन इति तर्क्यते। ग्रन्थं वा तत्कर्तारं वा अधिकृत्य अधिकं तु न ज्ञायते। जैनत्वादेव प्रकृतधर्मसूरे-र्भिद्यत इति चात्र न श्रद्धीयते।

### 1.1.3 वाक्यप्रकाशकारो धर्मसूरिः

'वाक्यप्रकाश' इति कश्चन ग्रन्थो भण्डारकरशोधसंस्थायां वर्तते[5]। तस्य च तालपत्रग्रन्थस्य परिशीलनेनेदं ज्ञायते यदस्य ग्रन्थस्य कर्ता "उदयधर्म" इति स चासौ जैनश्च[6] इति।

### 1.1.4 रघुवंशव्याख्याता धर्मसूरिः

'धर्मसूरिः' इत्यभिधेयवता केनचित् कृता काचिद् रघुवंशमहाकाव्यव्याख्या लाहोरनगरे वर्तत इति N. C.C. तो ज्ञायते[7]। अमुमप्यधिकृत्य न किञ्चिदधिकं जानीमः।

### 1. 1.5 ब्रह्मामृतवर्षिण्याः कर्ता धर्मसूरिः

धर्माभट्ट इत्यभिधेयवता विरचिताया ब्रह्मसूत्रवृत्त्यात्मिकाया ब्रह्मामृतवर्षिण्या मातृकाः G. O. M. L मध्ये द्वे[8], अड्यारग्रन्थालये नव[9] च आहत्य एकादश उपलभ्यन्ते। चतुर्वारं चैषा वृत्तिः प्रकाशिता[10]। अयं च धर्माभट्टः प्रकृतधर्मसूरेर्भिन्न एवेति समुचितप्रमाणप्रदर्शनपुरस्सरं स्वप्रसङ्गे (1.4.1.2) निरूपयिष्यते। अयं तिरुमलाचार्यस्य सूनुः। मन्त्रवादिरामचन्द्रार्यस्य प्रियशिष्यः, आन्ध्रदेशीयश्च। अधिकं तु पश्चाद् विवक्ष्यते।

### 1.1.6 रङ्गशायिनः पिता धर्मसूरिः

रङ्गशायिनो गृहनामधेयं यद्यपि 'चिलकमर्रि' इति भवति, तथापि असौ रङ्गशायी प्रकृतगुण्टूरुमण्डलस्थ-'पलनाडु'-सीमनि 'गुरजाल'-नाम्नि ग्रामे स्थिरवासम् उपकल्पयामास इति गुरजालरङ्गशायी अथवा गुरजालशायी इति व्यवहृत आसीत्।[11]

असौ भानुकरमिश्रप्रणीताया रसमञ्जर्या आमोदाख्यां व्याख्याम् अकरोत्[12]। रङ्गशायिनः काल आमोदविरचनाकालश्च प्रकृतधर्मसूरिकालनिर्णये महदुपकुरुत

इति विस्तरेण उपरिष्यत् प्रतिपादयिष्येते (1.3.4.6)। रङ्गशायिनः पितुर्नाम धर्मसूरिरित्यासीद्। किन्तु तत्पितृनाम्ना कोऽपि ग्रन्थो नोपलभ्यते। किञ्च 'चिलकमर्रि' इति गृहनाम्नो भेदाद् असावपि प्रकृतधर्मसूरेर्भिन्न एवेति निश्चीयते।

## 1.1.7 साहित्यरत्नाकरकारो धर्मसूरिः

शिङ्गराचार्यस्य सूनुः अनन्तार्यः स्वीये कविसमयकल्लोलाख्ये प्रबन्धे धर्मसूरेः साहित्यरत्नाकरग्रन्थाद् बहून् श्लोकान् उदाजहार। स एवम् अनेन उदाहृतो धर्मसूरिः साहित्यरत्नाकरकारश्च प्रकृतावेव। अनेन शिङ्गराचार्येण कृष्णराजजयडिण्डिमनामा अन्योऽपि ग्रन्थोऽलेखि।

अत्रेदं वाच्यं यदसौ कविसमयकल्लोलकर्ता अनन्तार्यः अमात्यतिक्कन्नस्य तनूद्भवात् छन्दोदर्पणनामकान्ध्रच्छन्दोग्रन्थविरचितुरनन्तार्यात् क्रिस्तशतकीयपञ्चदशशतकमध्यवर्तिनो भिन्न एव[13] इति। अस्माभिर्नवीनसंस्करणार्थं स्वीकृतस्य साहित्यरत्नाकराख्यस्य ग्रन्थस्य कर्ता धर्मसूरिरयमेवेति बोध्यम्।

## 1.1.8 धर्मसूरेर्वंशः

साहित्यरत्नाकरस्य आरम्भे (पृ० 1-4) इष्टदेवताप्रार्थनानन्तरं धर्मसूरिर्विस्तरेण स्ववंशक्रमम् अलिखत्। तद्यथा-






प्रपितामहं त्रिपुरारिसोमयज्वानम् आरभ्य सर्व एव स्वपितरो विशदतया वर्णिताः। सर्वे च ते त्रिपुरारिसोमयज्वादयः 'शुभतपःश्रुतशीलवृत्ताः' हविर्भिर्देवान्, अशनैरतिथीन्, विद्योपदेशविधया शिष्यांश्च परितोषयन्तो वाराणसी-विहितनित्यनिवासदीक्षाश्च आसन्निति स्पष्टम् अभिहितम्।

त्रिपुरारिसोमयज्वनः कुमारः 'बहुमुखोद्गतवाग्विभूतिः' धर्मो नागाम्बिकां परिणीय निगमागमानां सत्सम्प्रदायं प्रवर्तयामास। निरन्तरमहेश्वराराधकः सः सप्तवारं कृतैः प्रासादमहामन्त्रपुरश्चरणैः परमेश्वरं सन्तोष्य ततः स्ववंशे सप्तपुरुषपर्यन्तं 'विच्छेदशून्यविमलाखिलशास्त्रबोधं' वरत्वेन उपलब्धवान्। प्रहृष्यद् वरदाद् महेशाद् ईदृशस्यैव वरस्य लाभः पिशुनयति वंशस्य अस्य पाण्डित्यैकपक्षपातिताम्। नूनं विलक्षण एव असौ वरः।

पूर्वोक्तस्य वरस्यैव महिम्ना धर्मपण्डितस्य पुत्रास्त्रयोऽपि नारायण-पर्वतेश-रामाख्या महापाण्डित्यमण्डिता आसन्। तेषु नारायणो वेदपाठे पदक्रमादिविविधेषु विकृतिपाठेषु च नितान्तं प्रज्ञावान् भूत्वा वेदविद्वन्मण्डल्या सह अनेकदेशेषु चचार। रामावधानिनामानं च पण्डितं वेदचर्चागोष्ठ्या विजित्य अनेकपण्डितानां स्तुतिशतैः सह धर्मभूपनाम्नो राज्ञः शिबिकां, चामरं, छत्रं तथा 'गर्वाखर्वावधानीश्वरशरभघटागण्डभेरुण्डः' इति विरुदं चावाप।

नारायणावधानिनोऽनुजो ग्रन्थकर्तुः पिता च पर्वतनाथसूरिः पञ्चभिः श्लोकैर्महता आडम्बरेण उपश्लोकितः। जिह्वाग्रस्थितषड्दर्शनीकोऽसौ पर्वतनाथः षण्णां दर्शनकाराणाम् ऐकात्म्यलीलायितम् आसीत्। न केवलं महापण्डित एव आसीत्; किन्तु वाग्मित्वे शेषेण, तेजसि सूर्याचन्द्रमसोः, शुचित्वे अग्निना, विष्णुभजनायां सनकादिमहर्षिभिः, अभीष्यर्थविश्राणने पारिजातादिभिश्च तुल्यकक्ष आसीत्। पाणिनि-काणाद-भाट्ट-प्राभाकर-शाङ्करादितन्त्रेषु निरतिशयस्वातन्त्र्यवान् असौ जनार्दनाह्वयबुधं मध्येविपश्चित्सभं जित्वा

"मायावादिभयङ्कराख्य"–विरुदात् तं प्रच्याव्य तदीयं "वादिकेसरि" इति विरुदं स्वयम् अविन्दत्। पर्वतनाथस्य अनुजो रामपण्डितोऽपि निरतिशयवाग्वैभववान् स्वप्रतिभादृषन्निकषणप्रोद्दीप्तषड्दर्शनीरत्नस्रङ्मयकन्धर आसीत्।

एवं दैवेन पौरुषेण च यत्नेन समुपलब्धमहापाण्डित्यशोभासमुदयोऽसौ वारणासिवंश आन्ध्राणां गर्वकारणं कदाचिद् आसीद्।

## 1.2 धर्मसूरेर्देशः

धर्मसूरेर्जन्मदेशः कः? इति विचारे क्रियमाणे अद्य यावद् उपलभ्यमानेभ्यो लघुनिबन्धेभ्यः पक्षद्वयं स्पष्टं प्रतिभाति। तत्र श्रीवेमूरुनरसिंहशास्त्रिणां पेदपुलिवर्रुपक्ष एकः। श्री E.V.V. राघवाचार्याणां कठेवरपक्षो द्वितीयः।

### 1.2.1 श्रीवेमूरुनरसिंहशास्त्रिणां पक्षः

श्रीवेमूरुनरसिंहशास्त्रिणः स्वलिखिते कस्मिंश्चित् लघुनिबन्धे[14] स्वपक्षम् एवम् उपस्थापयन्ति –

(1) आन्ध्रदेशे विशिष्य च नैजामदेशे सुप्रसिद्धपण्डिता वेदान्तविद्याप्रचारकाः परमहंसपरिव्राजकाचार्याः श्रीअच्युतस्वामिनो धर्मसूरिं पेदपुलिवर्रुग्रामाभिजनं वदन्ति स्म।

(2) अहमपि पेदपुलिवर्रुग्रामे कञ्चित्कालं न्यवसम्। तस्मिन् समये तत्रत्या वारणासिवंशीया धर्माभट्टोऽथवा धर्मसूरिः स्वकूटस्थपुरुष इति माम् अवोचन्।

(3) स्वकूटस्थपुरुषेण धर्मसूरिणैव आन्ध्रेषु अन्यत्र अनभ्यस्तं ध्रुवोपस्थानं स्वीयसन्ध्यावन्दने प्रवेशितमिति, अधुनापि तद्ध्रुवोपस्थानं तैरनुष्ठीयत इति च ते माम् अकथयन्।

(4) तेषां पितृपितामहादयः क्रमाद् धर्मसूरिरस्मत्कुलमूलपुरुष इत्यनेकवारं तान् बोधितवन्तः।

(5) धर्मसूरिविरचितास्तालपत्रग्रन्थाश्चिरकालं स्वगृहेषु विद्यमाना अपि कृष्णानद्युत्प्लवेषु नष्ट इत्यपि ते मामुक्तवन्तः।

(6) एते च वारणासिवंशीया आत्मनो धर्मसूरेरनन्तरवंशपरम्परायां

नवमपुरुषान्तरीयान् गणयन्ति। एते आन्ध्रब्राह्मणानां मध्ये विद्यमानासु उपशाखासु 'तेलगाण्य'-नामकोपशाखीया हरितगोत्रीयाश्च वर्तन्ते। इति।

धर्मसूरिः कृष्णस्तुतिनामकं ग्रन्थं विरचितवानिति साहित्यरत्नाकराद् अवगम्यते। अयमपि विषयो धर्मसूरेः पेदपुलिवर्रुग्रामाभिजनत्वसाधने उपकरोति। अतः प्रदर्शितप्रमाणैर्गुण्टूरुमण्डले रेपल्लेनाम्नि उपमण्डले कृष्णानद्याः कूले विद्यमानः पेदपुलिवर्रुग्राम एव धर्मसूरेर्जन्मभूमिरिति श्रीनरसिंहशास्त्रिणां पक्षः सिद्ध्यति[15]।

### 1.2.2 श्रीराघवाचार्याणां पक्षः

श्री E.V.V. राघवाचार्यास्तु पेदपुलिवर्रुपक्षस्य सारांशं जानन्तोऽपि कथञ्चित् 'तेनालि'-नगरोपकण्ठभूत-'कठेवर'-ग्रामाभिजनं धर्मसूरिं मन्यन्ते। स्वमतस्य उपष्टम्भका युक्तयोऽपि तैर्न प्रदर्शिताः[16]।

### 1.2.3 अस्मदभिप्रायः

अतोऽस्मिन् विषये निश्चयम् अधिजिगमिषुरहमपि साक्षात् कठेवरग्रामं पेदपुलिवर्रुग्रामं चागच्छम्। कठेवरे वारणासिवंशीया एव मया नोपलब्धाः, ये धर्मसूरिम् आत्मनो मूलपुरुषं कथयेयुः। पेदपुलिवर्रुग्रामे च वर्तन्ते वारणासि-वंशीया तेलगाण्यशाखीया हरितगोत्रीयाः। तत्रत्या वृद्धाः पुराणपण्डिताः श्रीदैतसत्यनारायणशास्त्रिमहोदया मया साक्षात्कृताः, ये श्रीनरसिंहशास्त्रिणां पक्षस्य सर्वात्मना संवादितया स्वकीयम् अभिप्रायं प्राचीकटन्।

किञ्चापश्यं तस्मिन् ग्रामे काञ्चिकामकोटिपीठधीश्वरैर्जगद्गुरुभिः श्रीश्रीश्रीचन्द्रशेखरेन्द्रसरस्वतीश्रीचरणैः 1968 क्रीस्ताब्दप्रान्तकाले ग्रामम् इमं स्वचरणरजसा परिपूतवद्भिर्निर्मापितं वारणासिवंशीयानां गृहस्थले शिला-शासनमेकम्। तस्य शिलाशासनस्य आन्ध्रभाषायां विद्यमानस्य संस्कृतानुवादोऽ-धस्ताद् दीयते-

"श्रीशाङ्करभाष्यव्याख्यानभूताया रत्नप्रभायाः (रामानन्दीयम्) कर्तॄणां साहित्यरत्नाकरग्रन्थकर्तॄणां पूर्वाश्रमे वारणासिधर्माभोट्टु इति नामवतां यतीश्वरभूतानां निवासस्थानं व्याघ्रेश्वरक्षेत्रभूतं पेदपुलिवर्रुग्रामः। श्रीश्रीश्रीकाञ्चि-कामकोटिपीठाधिपानाम् आध्वर्यवे शिलाशासनमिदं निर्मितम्"।

अन्यत्र कुत्रचिदपि वारणासिवंशीया धर्मसूरिम् आत्मनो मूलपुरुषं न कथयन्ति, कथयन्ति च पेदपुलिवर्रुग्रामस्था इत्येतदेकं प्रबलं प्रमाणं भवति धर्मसूरेः पेदपुलिवर्रुग्रामाभिजनत्वसाधने। इतराणि च प्रमाणानि दर्शितान्येव। अतो धर्मसूरेर्जन्मदेशः पेदपुलिवर्रुग्राम एव भवितुम् अर्हतीति निश्चीयते।

असौ ग्रामो व्याघ्रेश्वरक्षेत्रनाम्नाऽपि व्यवह्रियते। अयञ्च ग्रामो नारदेन प्रतिष्ठितेन व्याघ्रपादमहर्षिणा सेवितेन च शिवलिङ्गेन व्याघ्रपादानुग्रहार्थं स्वयं काञ्चीतोऽवतीर्णवता वरदराजेन च पवित्रीकृतो वर्तते। श्रीवैष्णवानां रामानुजसम्प्रदायानुसारिणां पवित्रक्षेत्रभूतस्य एतस्य इतिहासः स्थलमाहात्म्यादयश्च प्रान्तेतिहासपत्रेभ्यो ज्ञायन्ते[17]।

## 1.2.4 धर्मसूरेर्वाराणसीसम्बन्धः

साहित्यरत्नाकरे स्ववंशवर्णनावसरे स्वप्रपितामहादयस्त्रिपुरारिसोम-यज्वादयो वाराणसीविहितनित्यनिवासदीक्षा आसन् इति स्पष्टम् अभिहितम् अस्ति। एतेन इदं ज्ञायते यद् एतद्वंशीया अनेके पण्डिता वाराणस्यां नित्यनिवासं कृतवन्तः। एतेनैव कारणेन अयं वंशः 'वारणासि'वंश इति ख्यातिम् अलभत[18]।

## 1.2.5 धर्मसूरेरुत्कलेषु वासः

यद्यपि धर्मसूरेर्जन्मदेशः पेदपुलिवर्रुग्रामाद् अन्य एवेति निश्चितरूपेण वक्तुं न शक्यते, तथापि निश्चयसमा काचिद् उत्कटसम्भावना तद्विषयिणी सम्भवत्येव अस्माकं हृदये। तथा हि – अङ्गीकृत्यापि पेदपुलिवर्रुग्राममेव अस्य जन्मदेशम् इदम् अवश्यम् अङ्गीकर्तव्यं भवति यद् धर्मसूरेर्महान् प्रभाव उत्कलेषु संदृश्यते। एतेन कारणेन भूयांसमेव कालं स तत्रोषितवान् स्यादिति।

### 1.2.5.1 जगन्नाथपुर्यां व्यायोगप्रदर्शनम्

तथा हि–धर्मसूरिणा विरचितो नरकासुरवधव्यायोगः[19] पुरुषोत्तमक्षेत्र-भूतजगन्नाथपुर्यां प्रथमतया प्रदर्शित इति युक्तिभिर्निश्चीयते। व्यायोगस्य अस्य नान्द्यां नीलाद्रेः शिखरेषु नित्यकुतुकी भगवान् जगन्नाथः स्तुतः।[20]

प्रसिद्धश्चेदं यत् श्रीजगन्नाथो यस्मिन् पर्वते सन्निधत्ते सः पर्वतो नीलाद्रिरिति नीलाचल इति च व्यवह्रियते। पुरुषोत्तमक्षेत्रमाहात्म्ये[21]–

"मुनय ऊचुः –

पुरुषोत्तमं महाक्षेत्रं पुण्यं परमपावनम्।
यत्रास्ते दारवतनुः श्रीशो मानुषलीलया।।
* * * * *

जैमिनिरुवाच –

अहो तत्परमं क्षेत्रं विस्तृतं दशयोजनैः।
तीर्थराजस्य सलिलादुत्थितं वालुकाचितम्।।
नीलाचलेन महता मध्यस्थेन विराजितम्।
एकस्तनमिव क्षोण्याः सुदूरात्परिवारितम्।।"[22]

पुरुषोत्तममाहात्म्ये – [23]

"विष्णुरहस्ये शौनकादीन् प्रति नारदः –

नीलाचलं सकृद् गत्वा स्नात्वा चैव महोदधौ।
जगन्नाथमुखं दृष्ट्वा देशान्तरगतोऽपि वा।।
सायुज्यं समवाप्नोति देहान्ते योगिदुर्लभम्।।"

श्रीशङ्करभगवत्पादा अपि जगन्नाथाष्टके [24]–

"महाम्भोधेस्तीरे कनकरुचिरे नीलशिखरे
वसन् प्रासादान्तः सहजबलभद्रेण बलिना।
सुभद्रामध्यस्थः सकलसुरसेवावसरदो
जगन्नाथस्वामी नयनपथगामी भवतु मे।।"

एतैः प्रदर्शितैः प्रमाणैर्महाम्भोधेस्तीरे विराजमाने पुरुषोत्तमक्षेत्रे विद्यमानः पर्वतो नीलाचल इति सुनिश्चितं भवति। नरकासुरविजयव्यायोगेऽपि नान्द्या ईषदनन्तरं समुद्रस्य प्रस्तावो वर्तते, यत्र –"लवणजलनिधेः समुत्सारितो महेन्द्रनीलमणिराशिरिव प्रकाशते नीलसुन्दरगिरिः" इत्यत्यन्तरमणीयतया नीलाचल उत्प्रेक्षितः। "तदहं तावद् आश्रिताभिमतफलप्रदायकस्य निखिल-निगमश्रेणिमुक्तावलीनायकस्य कमलामुखकमलदिननायकस्य भगवतो जगन्नायकस्य शरत्कालविहितोत्सवसमालोकनातिकौतुकान् अखिलदिगन्ता-गन्तुकान् सकलकलाकलापकोविदान् पारिषदान् अभिगम्य सत्वरं किमपि

रूपकम् अभिनीय विज्ञापने सफलीकरिष्यामि। (इति परिक्रम्य अवलोक्य च) अयं खलु लवणजलनिधेरुल्लोलकल्लोलजालेन कूले समुत्सारितो महेन्द्रनीलमणि-राशिरिव प्रकाशते नीलसुन्दरगिरिः। यद् इदानीम्–

चाम्पेयसान्द्रवनराजिविराजमान-
पार्श्वद्वयस्तुहिनपाण्डुरतुङ्गशृङ्गः।
निष्पन्दमानविततायतहेमपक्ष-
भ्राजद्वलक्षमुखताक्ष्यधियं तनोति।।[25]"

किञ्चात्रैव "भगवतो जगन्नायकस्य" इत्युक्तेः, भगवतो रूढस्य नामान्तरस्य अनुक्तेश्च जगन्नायकपदं रूढ्या जगन्नाथमेव बोधयतीति स्वीकर्तव्यं भवति। भगवतो जगन्नाथस्य शरदि कार्तिकशुद्धैकादशीमारभ्य पूर्णिमापर्यन्तं रासोत्सवः प्रचलति। अयञ्च शारदोत्सवः "जगन्नाथपञ्चुक" इति उत्कलभाषया व्यवह्रियते। शारदोत्सवोऽपि प्रदर्शितव्यायोगगद्यभागे स्पष्टम् अभिहितः।

एवञ्च नीलाचलस्य तत्प्रान्तवर्तिनो लवणजलनिधेः श्रीजगन्नाथस्य शारदोत्सवस्य चोट्टङ्कनेनायं व्यायोगः पुरुषोत्तमक्षेत्रे अद्यत्वे पुरीति व्यवह्रियमाणे भगवतो जगन्नाथस्य शारदोत्सवे प्रथमप्रदर्शनम् अलभत इति निश्चितं भवति।

### 1.2.5.2 उत्कलालङ्कारिकाणामुपरि धर्मसूरेः प्रभावः

अथ धर्मसूरेरनन्तरं ये आलङ्कारिकास्तं प्रमाणत्वेन स्वीकृत्य उदाहृतवन्त-स्तेषूत्कलीयालङ्कारिका अधिकसङ्ख्याका दृश्यन्ते। यद्यपि आन्ध्रा-लङ्कारिकैरपि गुरजाल-रङ्गशायि – कटिकिनेति – रामकवि – अहोबलपण्डित-प्रभृतिभिर्धर्मसूरिः स्मृतः, तथापि तस्य नामग्रहणमात्रं वा एकस्य द्वयोर्वा श्लोकयो-स्तदीययोरुद्धरणमेव वा तद्ग्रन्थेषु दृश्यते, न तु तेषामुपरि धर्मसूरेर्महान् प्रभावः।

किन्तूत्कलालङ्कारिकाणामुपरि वर्तते महान् प्रभाव इति वक्तुं शक्यते। वक्ष्यते च विस्तरेण तत्प्रकरणे (1.8)। 1690 (क्रि०पू०) तोऽनन्तरं ये च यावन्तश्च उत्कलालङ्कारिकाः प्रसिद्धा वर्तन्ते ते सर्वे अनेन प्रभाविता वर्तन्त इति वक्तुं शक्यते। तथा हि –

1. कविरत्नपुरुषोत्तममिश्रस्य[26] (1690 – 1750 क्रि० प०)

"नाट्याटोपविधूतधूर्जटिजटाजूटलवालस्थली –

निर्गच्छत्सुरनिम्नगामलजलसंस्पर्धिभिर्यो गुणैः।"

इत्ययं पद्यभागः स्मारयति धर्मसूरेः ( पृ० 4)

"आटेपोद्भटनाट्यधूर्जटिजटाकोटीरकोटीनट -

द्गङ्गातुङ्गतरङ्गरिङ्गणभरप्रस्पर्धिवाग्वैभवः।।"

इत्यमुं श्लोकं स्वरूपसंवादेन।

2. रघुनाथदासस्य[27] (1690 – 1750 क्रि० प०) साहित्यभूषणे उपदशवारं धर्मसूरिरुदाहृतः। किञ्च सर्वोऽपि साहित्यभूषणग्रन्थः साहित्यरत्नाकरानुवादैः सम्भरित इत्यपि मया तद्दर्शनेन निश्चितम्।

3. जगन्नाथमिश्रः[28] (1715 – 1721 क्रि० प०) स्वीये रसकल्पद्रुमे अनेकवारम् अमुं स्मरति उद्धरति च ततः।

4. जगन्नाथनारायणदेवनाम्ना लोकनाथत्रिपाठिना[29] (1760 क्रि० प०) विरचिते कविकण्ठहारे उपपञ्चवारं स्मृतो धर्मसूरिः।

5. जगन्नाथनारायणदेवस्य आस्थानविदुषा सुपूजितेन कविरत्नगोपीनाथ-पात्रेण[30] स्वीये सुमहति कविचिन्तामणौ उपपञ्चवारमुदाहृतो धर्मसूरिः।

### 1.2.5.3 उत्कलालङ्कारिककृतानि व्याख्यानानि

एतदतिरिक्ततया क्रैस्ताब्दशशताब्देर्द्वितीयपादे स्थितवता महामहोपाध्यायकृष्णमिश्रेण[31] निरुपमपाण्डित्यशोभितं किञ्चिद् व्याख्यानं कृतम् अलङ्कारसुधाकरनामकं साहित्यरत्नाकरस्योपरि। एवम् अज्ञातकालेन वासुदेवचयनिना रचितम् अन्यदपि साहित्यरत्नाकरव्याख्यानमुपलभ्यते[32]। महामहोपाध्यायमधुसूदनतर्कवाचस्पतिना लिखितं तु नौकाव्याख्यानं प्रकाशितचरमेव[33]। एवञ्च साहित्यरत्नाकरस्योपरि लिखितेषु उपलभ्यमानेषु च पञ्चसु व्याख्यानेषु त्रीणि उत्कलीयैरालङ्कारिकैर्लिखितानि, द्वे च आन्ध्रैः।

### 1.2.5.4 धर्मसूरेरुत्कलेषु वासविषयेऽस्मदभिप्रायः

एतैः प्रमाणैर्धर्मसूरिरान्ध्रः सन्नपि गञ्जां-प्रान्तीयो वा विजयनगर-मण्डलाभिजनो वा भवितुम् अर्हतीति मे मतिः। अनया सम्भावनया अहं पार्लाखिमुडिनामकोपमण्डलं गत्वा तत्र वंशधरानद्याः कूले वाराणसीनामकं पट्टणं यद् वर्तते तत्रान्ध्रब्राह्मणा अनेके आसन्निति ज्ञातवान्। अस्य पट्टणस्य नामधेयं तु विपरिवर्तितं Post and Telegraph विभागेन प्रसिद्धवाराणस्या सह

सम्भवद्भ्रमंज्ञाननिवृत्त्यर्थम्। अधुना काशीनगरमित्येतद् व्यवह्रियते। प्राय आन्ध्रेषु गृहनामानि ग्रामनाम्ना एव समभूवन्निति विषयो वारणासि–धर्मसूरे–रेतद्देशाभिजनत्वोक्तौ सुमहत्साहाय्यम् आचरति।

सुप्रसिद्धोत्कलैतिहासिकाः शिलाशासनपरीक्षणकुशलाश्च श्रीसत्यनारायण–राजगुरुमहाशया मामेवम् अवोचन् यद् कृष्णदेवरायेण विजयनगरसाम्राज्याधीशेन विजययात्रा एतद्वाराणसीपट्टणपर्यन्तमेव कृता आसीत्, यत्कारणं श्रीकूर्मपर्यन्तं सर्वत्रोपलभ्यमानानि तदीयानि शिलाशासनानि भुवनेश्वरे लिङ्गराजमन्दिरे भुवनप्रसिद्धे पुर्यां जगन्नाथमन्दिरे च नोपलभ्यन्ते। अतो वंशधरानद्याः कूले वारणासिसमीप एव कृष्णदेवरायस्य उत्कलप्रभूणां च युद्धभूमिरासीत्। एवञ्च ऐतिहासिकैर्यस्य वारणासिकटकस्य पर्यन्तगमनं कृष्णदेवरायस्य कथितं तद् वाराणसीकटकं प्रकृतकटकेन महानदीतीरस्थेन अभिन्नमिति अनेकेषाम् अद्यतनैतिहासिकानाम् अभिप्रायो भ्रम एवेति।[34]

त एव इत्थमप्यवोचन् यत् तस्मिन् युद्धसमये वाराणसीपट्टणस्थानां ब्राह्मणानां कृते शासनशब्देन उत्कलेषु व्यवह्रियमाणा अग्रहाराः षोडश वंशधरानद्या उभयोरपि कूलयोरुपकल्पिताः। अत एव पूर्वं वाराणस्यां विद्यमाना अनेके ब्राह्मणवंशास्तस्मिन् समये तेषु अग्रहारेषु अन्यत्र च इतस्ततो गता इति।

तस्माद् अस्माभिरेवं तर्क्यते यद् धर्मसुरिस्तेष्वग्रहारेषु अथवा गङ्गांप्रान्ते कुत्रचिद् आसीदिति।

कृष्णमिश्रेण कृतं धर्मसूरेर्दाक्षिणात्यत्वकथनं[35] तस्य गङ्गां–देशाभिजनत्वं न बाधेत। यत्कारणं पार्लाखिमुण्डिप्रभृतिराज्यानि दाक्षिणात्यानीति गङ्गवंशानुचरितचम्प्वां स्पष्टम् अभिहितम् अस्ति।[36] श्रीरङ्गंसोमेश्वरशास्त्रिणां वचनेन (1.21) साहित्यरत्नाकरस्य पठनाभ्यासो गङ्गां–देशीयवारणासिवंशीयेषु सन्दृश्यते; किन्तु तेषामुपशाखा तु धर्मसूरेः शाखाया भिद्यते। तस्माद् यावत्तस्मिन् देशे वेलनाडु अथवा तेलगाण्यशाखाया वारणासिवंशस्य कस्याश्चित्शाखायाः सत्ता प्रमाणैर्न निश्चिता भवति, यावद्वा तत्रत्या वारणासिवंशीया धर्मसूरिम् आत्मनो मूलपुरुषं न कथयेयुः, तावद् अस्माकं तर्कस्तर्क एव भवितुम् अर्हति। तस्मिंश्च देशे वारणासिवंशस्य सत्ताम् अधिकृत्य मया कृतः क्रियमाणश्च प्रयत्नोऽद्य यावन्न फलित इति, अतो धर्मसूरिः पेदपुलिवरुग्रामाभिजन इत्येव

मया अधुना निश्चीयते। धर्मसूरिणा यो धर्मभूपः स्मृतः (1. 3.4.4) तस्य देशकालादिविचारणायां कृतायां बडखिमुण्डिराज्याधीशः कश्चिद् गङ्गवंशराजो धर्मभूप इतिहासे प्रसिद्धो वर्तते। तेनैव च धर्मसूरेर्ज्येष्ठपिता सम्मानित इत्यस्माकम् आशयः (1. 3.4.5)। एवञ्च पेदपुलिवर्रुग्रामाभिजनत्वेऽपि धर्मसूरेर्बडखिमुण्डिधर्मभूपेन सह सम्बन्धः स्वज्येष्ठपितृव्येन सम्पादितः स्यात्। कश्चिच्च कालम् उत्कलेषु धर्मभूपसम्बन्धाद् अयम् अतिवाहितवान् स्याद् इति सर्वं सुस्थमेव।

### 1.3 धर्मसूरेः कालः

विहितकर्मस्विव अनुसन्धानकर्मण्यपि ग्रन्थकर्तुर्देशकालसङ्कीर्तनं प्रधानं प्रथमं च स्थानं लभते। परन्तु प्रायः संस्कृतकवीनां शास्त्रकाराणां च कालः कालगर्भे विलीन एव वर्तत इति विदितचरमेव संस्कृतपण्डितानां समेषाम्। पूर्वेषां रचनाव्यासङ्गः स्वमतिवैशद्यैकप्रयोजन आसीत्। मुद्रणादीनाम् अभाववति तस्मिन् काले तादात्विकोपलब्धेषु ग्रन्थेषु गुणदोषौ परिशील्य तौ सम्यगाकलयितुं तद्विषयविचारविषया ग्रन्थास्तैर्व्यरच्यन्त। अपि च स्वनाम्न उद्घाटनमपि दोषाय अकल्पत तस्मिन् काले, किमुत देशकालादिसङ्कीर्तनम्। अतश्च ग्रन्थस्थविषयविमर्शनदृष्टीनां तेषां नासीद् ततोऽप्यप्रधानेषु कालादिनिरूपणेष्वासक्तिरावश्यकता च।

धर्मसूरिरपि स्वग्रन्थे कुत्रचिदपि स्वदेशकालावधिकृत्य स्पष्टरूपेण न किञ्चिद् उक्तवान्। अतो विमृश्यैवैष विषयो निश्चेतव्यो भवति।

#### 1.3.1 धर्मसूरिकालविषये साहित्येतिहासकर्तॄणां मतानि

धर्मसूरिम् अधिकृत्य प्रसिद्धालङ्कारशास्त्रेतिहासग्रन्थेषु बहुषु उल्लेखनम् अस्ति। किन्त्वेतदुल्लेखनं लघुपरिचयात्मकमेव दृश्यते, न तु विस्तृतविचारात्मकम्।

(क) पी० वी० काणेमहोदयः पञ्चदशक्रैस्तशताब्देः प्रथमचरणं धर्मसूरेः कालो भवितुम् अर्हतीति अभिप्रैति[37]।

(ख) श्री० एस्० के० डेमहाशयोऽपि विद्यानाथाद् अर्वाचीनत्वमित्येकमेव प्रमाणमाश्रित्य अमुं पञ्चदशक्रैस्तशताब्दस्य पूर्वार्धवर्तिनं

तर्कयति[38]। प्रसङ्गात् तु एतेन एवमुक्तं यद् चर्लवेङ्कटसूरिकृताया नौकाख्यायाः साहित्यरत्नाकरव्याख्यायाः सम्पादको बामण्डाभिजनः श्रीमधुसूदनमिश्रः (1901) इति। इदं प्रामादिकम्। श्रीमधुसूदनमिश्रेण स्वोपज्ञव्याख्यानभूषित एव साहित्यरत्नाकरः 1901 क्रि० प० तमे संवत्सरे बामण्डातः प्रकाशितः। किन्तु एतद्विरचिताया अपि व्याख्याया नौका इत्येव नामधेयम्। अत एव प्रमादो डेमहाशयस्य।

(ग) श्री एम्०कृष्णमाचार्यमहोदयोऽमुं क्रैस्तषोडशशताब्दवर्तिनम् अङ्गीकरोति[39]। प्रसङ्गाद् इदमपि तेनोक्तं यद् धर्मसूरिः 'वेलनाडु' इत्यस्या आन्ध्रब्राह्मणोपशाखायाः सम्बन्धी इति। एतत्तु पूर्वम् (1.2.1) अस्माभिः प्रदर्शितेन प्रमाणेन विरुध्यत इति ज्ञातव्यम्।

अन्यच्च चर्लवेङ्कटसूरिरचिता व्याख्या नौकाख्या नेल्लूरुनगरे मुद्रापिता इति यदुक्तं तदप्यसाधु। बहुकालाद् अमुद्रिता एषा व्याख्या 1971 क्रि० प० तमे वर्षे संस्कृतपरिषद्, हैदराबाद-द्वारा प्रकाशिता। नेल्लूरुनगरे मुद्रितापि व्याख्या मल्लादि-लक्ष्मणसूरिविरचिता मन्दराख्यैव या पुनः मद्रास्नगरेऽपि द्वितीयवारं मुद्रिता।

किञ्च बलभद्रदेवेन पूजितत्वं, मायाशबरीविलासस्य हनुमत्सन्देश-तारावल्याश्च कर्तृत्वं च यद् वस्तुतो मधुसूदनमिश्रसम्बन्धि वर्तते तदपि मल्लादिलक्ष्मणसूरावारोपितमेतेन। एवं मधुसूदनमिश्ररचिताया नौकाख्याया व्याख्यायाः प्रकाशनं मद्रास्नेल्लूरुनगरयोरभूदित्यप्युक्तम्। एवं मधुसूदनमिश्रः 1900 क्रि० प० तमाद् वर्षात् किञ्चित् प्राग् गोदावरीमण्डले पञ्चत्वम् अधिगत-वानित्यप्युक्तम्। सर्वमप्येतदनवधानकृता प्रमादपरम्परा। मद्रास्नेल्लूरुनगरयो-र्मल्लादिलक्ष्मणसूरिविरचिता मन्दराख्यैव मुद्रिता। मल्लादिलक्ष्मणसूरिरेव 1900 क्रि० प० समीपकाले अम्रियत इति सम्भवत्प्रमाणैर्ज्ञायते। ई० वि० वि० राघवाचार्याणां लघुनिबन्धस्य द्रष्टुरस्यैषा प्रमादपरम्परा चिन्त्यैव।

(घ) श्री-पि० श्रीराममूर्तिमहाभागोऽपि कालविषये किमपि नूतनतया नाविष्करोति। किन्तु साहित्यरत्नाकरे रूपकलक्षणप्रकरणमपि वर्तत इत्यलिखत्[40]। एतल्लेखनमपि प्रामादिकमेव। काव्यप्रकाशादिग्रन्थवद्

रूपकप्रकरणं विना प्रायः सर्वे इतरे विषया अत्र विमृष्यः। स्पष्टं चैतद् भविष्यति।

### 1.3.2 धर्मसूरिकालनिर्णयोपयोगिनो लघुनिबन्धाः

पूर्वं निर्दिष्यः साहित्येतिहासकर्तारः सर्वे धर्मसूरिकालविषये सुनिशित-मनुसन्धानकर्म कृतवन्त इति वक्तुं न शक्यते। स्वैः सुमहत इतिहासस्य लिखितव्यत्वात् केनचिदपि आधारेण यावद् यद्वा तेऽजानन्त तावत् तत् लिखितवन्त इत्येव वक्तव्यं भवति। किन्तु साहित्यरत्नाकरम् अधिकृत्य धर्मसूरिं चाधिकृत्य लिखितेषु केषुचित् लघुनिबन्धेषु दृश्यते कश्चनानुसन्धानात्मकः कालविषयकविचारः। स चात्र प्रस्तूयते।

#### 1.3.2.1 श्रीवेमूरुनरसिंहशास्त्रिणां मतम्

श्रीवेमूरुनरसिंहशास्त्रिणः स्वीये "साहित्यरत्नाकरकार एव भाष्यरत्न-प्रभाकार" इत्यस्मिन् लघुनिबन्धे[41] धर्मसूरेः कालनिर्णये प्रवृत्ता अपि भूयस्तन्निर्णये स्थितानुपरोधान् परामृश्य "अयं विद्यानाथादपि अर्वाचीन इत्युक्तेरन्यत्किञ्चिद् इदानीं न पार्यते वक्तुम्" इत्युपसमाहार्षुः। देशविषये पुनः पेदपुलिवरुग्राम एवास्य जन्मदेश इति, तस्मिंश्च ग्रामेऽधुना विद्यमाना वारणासिवंशीया धर्मसूरि-वंशपरम्परायां नवमा इति च निश्चितवन्तः।

#### 1.3.2.2 श्रीआचण्टवेङ्कटरायसांख्यायनशर्मणां मतम्

श्रीमन्त आचण्टवेङ्कटरायसांख्यायनशर्माणोऽपि स्वीये "साहित्यरत्ना-करकार एव भाष्यरत्नप्रभाकार" इत्याख्ये लघुनिबन्धे[42] वेमूरुनरसिंहशास्त्रिणां लघुनिबन्धे सूचितानाम् अंशानामनुबन्धरूपेण कांश्चन अंशान् प्रकटीचक्रुः। विद्यानाथादस्य अर्वाचीनत्वं तथैव अङ्गीकुर्वन्ति। साहित्यरत्नाकरे सप्तमतरङ्गे "वक्षोजाङ्गणचुम्बि" इति श्लोक आत्मना कृतात् कंसवधनाम्नो नाटकाद् धर्मसूरिणा उदाहृतः। तेन चेदं ज्ञायते यद् धर्मसूरिः कंसवधनामकं नाटकं व्यरचयदिति। अकबरचक्रवर्तिनः समकालिकः किञ्चिदर्वाचीनो वा शेषकृष्णकविर्महाराष्ट्रब्राह्मणः सप्ताङ्कपरिमितं कंसवधनाटकमेकं विरचयामास इत्यतोऽसौ धर्मसूरिः शेषकृष्णकवेः प्राचीन एव भवितुमर्हतीत्यलिखन्।

किन्त्वेतैर्धर्मसूरेः शेषकृष्णकव्यपेक्षया प्राचीनत्वे साधकानि समुचितानि

च कारणानि नैव प्रदर्शितानि। न हि उभयोः समाननामकनाटकविरचनं तयोरन्यतरस्य प्राचीनत्वे प्रगल्भते।

### 1.3.2.3 श्री-के० राजन्नशास्त्रिणां मतम्

श्रीमन्तः के० राजन्नशास्त्रिण एकं लघुनिबन्धं धर्मसूरिविषयकं प्रकटीकृतवन्तः[43]। ते तस्मिन् लघुनिबन्धे नूत्नतया निश्चयानुकूलतया च किमपि नालिखन्। किन्तु तैर्वक्ष्यमाणाः ( 1.3.2.4) राघवाचार्यप्रदर्शिता एव युक्तयस्तथैव अनूदिताः। अस्मिन्निबन्धे अयं तु भागो विशेषदर्शनम् अर्हति–

"केचित्तु अभिप्रयन्ति यद् दोनेरुकोनेरुनाथकविविरचितम् अस्ति बालभागवताख्यं काव्यद्वयम् आन्ध्रभाषायाम्। तत्रैकं द्विपदच्छन्दोबद्धम्, अन्यच्च पद्यमयम्। प्रायो धर्मसूरिप्रणीतबालभागवतकाव्यस्य आन्ध्रानुवादरूपं स्याद् एतत् काव्यद्वयमिति धर्मसुधीः षोडशशताब्दपूर्वार्धे (1547 क्रि० प०) विद्यमानात् कोनेरुनाथकवेः प्राचीन इति। तथापि धर्मसूरिकृतबालभागवतकाव्यमेव नाद्य यावदुपलब्धम्। उपलभ्यते तु पद्यद्वयमेव तत्रस्थं साहित्यरत्नाकर - नरकासुरविजयव्यायोगयोः समुद्धृतम्। यदि समुपलब्धपद्यद्वयार्थोऽपि समुपलभ्येत आन्ध्रबालभागवतकाव्ये तर्ह्येव सिद्धं स्यान्नः समीहितम्" इति।

भूय आन्ध्रवाङ्मयस्सर्वोऽपि संस्कृतानुवादरूप एव दृश्यते। अथवा एवमस्तु - संस्कृतवाङ्मयस्थाः प्रसिद्धाः काव्यनाटकादयः सर्वेऽपि आन्ध्र्याम् अनूदिताः सन्ति। अतो राजन्नशास्त्रिणाम् अभ्यूहोऽभ्यूहतामात्रेण सोपपत्तिक एव। किन्तु वस्तुस्थितिस्तु विपरीता दृश्यते। दोनेरुकोनेरुनाथकविना गद्यपद्योभयात्मकतया 'प्रबन्धमु' इत्याख्यां व्यवह्रियमाणकाव्यविशेषतया एकं बालभागवतं रचितम् अस्ति। तेनैव च बालभागवतमेव द्विपदाख्येन छन्दसा च पृथग् लिखितम् अस्ति। अयं ग्रन्थः 'द्विपदभागवतमु' इत्यपि प्रसिद्धिम् अवाप। उभयमपि[44] समानकर्तृकं समानविषयकमिति निश्चप्रचम्। उभयमप्यान्ध्र्यामेव सुप्रसिद्धान्ध्रकविना बम्मेरपोतराजाख्येन प्रणीतस्य संस्कृतश्रीमद्भागवतस्य अर्थानुवादात्मकस्य 'श्रीमदान्ध्रमहाभागवतमु' इत्याख्यस्य प्रबन्धनामकान्ध्रकाव्यविशेषस्य सङ्ग्रहकरणात्मकमेवेति मया साक्षाद् ग्रन्थद्वयपठनेन निश्चितम्[45]। न तु धर्मसूरिविरचितबालभागवतकाव्यस्य अनुवादात्मकौ तौ द्वावपि। किञ्च यौ द्वौ श्लोकौ साहित्यरत्नाकरे नरकासुरविजयव्यायोगे च बालभागवताद् गृहीतत्वेन

धर्मसूरिणा उदाहृतौ[46], तयोः समानच्छायानि पद्यानि उभयविधेऽपि आन्ध्रबालभागवते न दृश्यन्ते तस्मात् नायमंशो धर्मसूरेः कालनिर्णये ईषदपि साहाय्यं करोति।

### 1.3.2.4 श्री-इ० वि० वि० राघवाचार्याणां मतम्

तत्र तावद् अनुसन्धानात्मकलघुनिबन्धेषु श्रीमताम् इ० वि० वि० राघवाचार्याणां लघुनिबन्धा एव विशेषेण पठनम् अपेक्षन्ते। तैर्वस्तुतो महानेव प्रयत्नः कृतो धर्मसूरेः कालनिर्णयविषये। प्रथमं तैरान्ध्रसाहित्यपरिषत्पत्रिकायाः सप्तदशतमे सम्पुटे षष्ठेऽङ्के "साहित्यरत्नाकरमु-नौकामन्दरमुलु" इति शीर्षकेण आन्ध्रभाषायां कश्चन लघुनिबन्धः प्रस्तुतः। तैरेव च 'आन्ध्रविज्ञानसर्वस्वमु' इति ग्रन्थे (तृतीये सम्पुटे 853 तमे पृष्ठे) धर्मसूरिमधिकृत्य किञ्चिदुदाहृतम्। एवं पुनरपि तैरेव 1939-1940 वर्षीयायाः 'New Indian Antiquary' इत्याख्यायाः पत्रिकाया द्वितीये सम्पुटे "Dharmasūri - His date and Works" इति शीर्षकेण आङ्ग्लभाषायाम् अन्यः कश्चित् लघुनिबन्ध उपनिबद्धः। एतेषु त्रिष्वपि तदीयानुसन्धानस्य क्रमिको विकासोऽनुभूयते। श्रीमतां राघवाचार्याणां लेखनानि धर्मसूरेः कालनिर्णये महदुपकुर्वन्ति परीक्षां चार्हन्ति। परीक्षणस्य आनुकूल्यतासम्पादनार्थं तानाशयान् समासतो विमृशामः।

प्रथमम् आभ्यन्तरप्रमाणानि -

(क) धर्मसूरिस्तदीयसाहित्यरत्नाकरे विद्यानाथं नाम्ना स्मरति तथा विमृशति च (पृ० 79)। विद्यानाथकालस्तु डा० पी० वी० काणेमतानुसारेण[47] 1300-1325 क्रि० प०, डा० एस्० के० डेमतेन[48] 1290-1310 क्रि० प० च भवति। अत्र च अर्वाचीनतरकालग्रहणेन धर्मसूरिः 1325 क्रि० प० तोऽनन्तरभावीति निश्चेतुं शक्यते।

(ख) धर्मसूरिर्होयसालवंशीयस्य वीरबल्लालराजस्याश्रये स्थितं विद्याचक्रवर्तिनं कुत्रचित् निर्दिशति (पृ० 67)। विद्याचक्रवर्ती च रुय्यकविरचितालङ्कारसर्वस्वस्य सञ्जीविन्याख्यां व्याख्यां समालिखत्। वीरबल्लालस्य कालस्तु 1291 - 1342 क्रि० प० इति भवति[49]। तस्माद् ततोऽपि धर्मसूरिरर्वाचीन इति स्पष्टमेव।

(ग) धर्मसूरिणा स्मृतेषु अत्यन्तम् अर्वाचीनः शिङ्गभूपालः[50], यस्तु वेलुगोटिवंशीयाद् राजकवे रसार्णवसुधाकरकर्तुः शिङ्गभूपालादनन्य एव। शिङ्गभूपालस्य कालनिर्णयस्तु बहुभिर्बहुधा प्रदर्शितो दृश्यते। तत्र प० शेषगिरिशास्त्रिणस्तथा डा० एस्० के० डेमहाशयाश्च 1330 क्रि० प० तमे वर्षे आसीदित्याहुः[51]। श्री ए० एन्० कृष्ण-अय्यङ्गारः सः 1360-1400 मध्यकालिक इति न्यरूपयत्[52]। अत्र च प्राचीनतमं कालमादाय धर्मसूरिः 1330 क्रि० प० अनन्तरभावीति वक्तुं शक्यते।

(घ) अथ श्रीराघवाचार्यैः प्रदर्शितानि बाह्यानि पारम्परिकानि प्रमाणानि दीयन्ते। आन्ध्रदेशीयः प्रथितयशा बहूनां ग्रन्थानां तथा व्याख्यानानां च विरचयिता मल्लिनाथो धर्मसूरिं न कुत्रापि स्मृतवान्। यदि धर्मसूरि-र्मल्लिनाथादपि प्राचीनः स्यात् तर्हि सदेशं पाण्डित्यसब्रह्मचारिणं चैनं न खलु नूनं विस्मृतवान् स्यात्। मल्लिनाथः 1400 – 1414 क्रि० प० तमे काले आसीदिति प्रदर्शयितुं सन्ति प्रमाणानि[53]। अतश्च ततोऽप्यर्वाचीनो वा तत्समकालिको युवा वास्याद् धर्मसूरिः।

(ङ) आलङ्कारिकशिरोमणिः पण्डितराजजगन्नाथो न कुत्रचिदपि धर्म-सूरिणा स्मृतः। जगन्नाथस्य रसगङ्गाधरसमुदयानन्तरं न कोऽप्यर्वाचीन आलङ्कारिक एनं विस्मृतवान्। अतश्च कदाचित् 1625 क्रि० प० तमे वर्षे साहित्यिकव्यासङ्गवतो[54] जगन्नाथादपि धर्मसूरिः प्राचीनतर इति तर्क्यते। स्थूलदृष्ट्या धर्मसूरेः कालस्य पूर्वोत्तरावधी निर्णीतौ भवेताम्। स च मध्यवर्तिकालः 1414 क्रि० प० त आरभ्य 1625 क्रि० प० पर्यन्तं व्याप्नोति।

(च) 'अप्प'-कविः प्रथित आन्ध्रवैयाकरणः स्वग्रन्थमूलभूत-संस्कृतव्याकरणालङ्कारग्रन्थसंस्मरणावसरे साहित्यरत्नाकरमपि गणयति[55]। अप्पकवीय-ग्रन्थस्य रचनाकालस्तत्रैव स्पष्टं निरूपितः[56], यः 1656 क्रि० प० संवत्सरेणाभिन्नो भवति। अतश्च धर्मसूरिस्ततोऽपि प्राचीन इति सिद्ध्यति।

(छ) अयमपि मध्यवर्तिकालोऽल्पीकर्तुं शक्यः। आन्ध्र्यां प्रसिद्धस्य

द्विपदकाव्यस्य 'हरिचरितमु' इत्यस्य कर्ता गौरनः संस्कृतेऽपि 'लक्षणदीपिकाख्यं'[57] ग्रन्थं व्यरचयत्। तत्र साहित्यरत्नाकरो नाम्ना निर्दिष्टः। यदि स्याद् अयं ग्रन्थः प्रकृतसाहित्यरत्नाकरग्रन्थादभिन्नः, तर्हि धर्मसूरिर्गौरनसमकालिको वा किञ्चित्पूर्वो वा भवितुम् अर्हति। गौरनस्य कालस्तु 1440 – 1450 क्रि० प० इति निश्चितम्[58]। अतो धर्मसूरिः 1414 – 1430 क्रि० प० मध्यकाले व्यराजत। अथवा स्थूलतया क्रैस्तपञ्चदशशताब्दस्य प्रथमचरणे आसीदिति श्रीराघवाचार्याणां निर्णयः।

### 1.3.3 श्रीराघवाचार्याणां मतस्य विमर्शनम्

अधुना ग्रन्थकर्तुः कालनिर्णये परीक्षणार्हाः केचिदंशा विचार्यन्ते।

(क) तद्यथा – पूर्वावधिनिरूपणं यत् कृतं राघवाचार्यैः फलतस्तत्सत्यमेव। तत्र तैर्धर्मसूरेर्मल्लिनाथात् सम्भवदर्वाचीनत्वं यदाशङ्कितं तदधिकृत्य अन्यानि कानिचित् प्रमाणानि दीयन्ते। विद्यानाथसमकालिको विद्याधर एकावलीनामानम् अलङ्कारग्रन्थं व्यरचयत्। स च तरलेन व्याख्यानेन संयोजितो मल्लिनाथेन।[59] एतद्ग्रन्थद्वयम् अलङ्कारशास्त्रे विशिष्टं स्थानम् अलङ्करोति। धर्मसूरेः साहित्यरत्नाकरे एकावल्याः पञ्चाशद् ग्रन्थभागाः, तरलाद् प्रायः षष्टिर्ग्रन्थभागा अनूदिता दृश्यन्ते। एते च अनुवादा द्विधा दृश्यन्ते–शब्दतोऽनुवादाः, अर्थतोऽनुवादाश्चेति। अपि चैते अनुवादाः स्वरूपपरिमाणेन वाक्यद्वयमारभ्य विंशतिवाक्यपर्यन्तमुपलक्ष्यन्ते। किञ्च तरलानुवादेषु शब्दानुवादा अधिकसंख्याका दृश्यन्ते।

अत्रेदम् अवधेयम् – यदि पारिभाषिकपदभूयिष्ठे शास्त्रीयविषयविचारे उभयोः शब्दसाम्यं भवति, तर्हि तत्र तयोरनुवाद्यानुवादकभावम् आतनोति। परन्तु यत्र साधारणविषयेषु पारिभाषिकपदरहितेषु विचारेषु शब्दतौल्यम् अनुभूयते, तत्र नूनं कतरस्य अनुवादकत्वं युक्तियुक्तं सेत्स्यति। तथा धर्मसूरिमल्लिनाथयो स्तुलनात्मकम् अध्ययनमपि उपरिष्टाद् स्वप्रसङ्गे भविष्यति। अथोदाहरणार्थमेक एव तुल्यरूपो ग्रन्थभागोऽधस्तात् प्रदर्श्यते–

| धर्मसूरेः साहित्यरत्नाकरः | एकावलीतरलम् पृ० 14<br>Ed. by K.P. Trivedi, |
| --- | --- |
| ननु पुरुषप्रवृत्तिरूपां भावनां विदधानः प्रत्यय एव प्रवर्तकः। तस्य प्रेरणार्थविधानात्। तत्कथं वाक्यं प्रवर्तकमिति चेत् - प्रत्ययः प्रवर्तक इत्याकलयन् स च विशिष्ट-भावनाभिधायीति किं नाचकलद् भवान्। तथा कलने वाक्यमेव प्रवर्तकमिति किं नाज्ञासीत्। न हि भावयेदित्युक्ते कश्चित् प्रवर्तते। किन्तु इदम् अनेन एवं भावयेदिति। तथा सति अंशत्रयविशिष्टभावना-भिधायी प्रत्ययः प्रवर्तक इति वाक्य-मेव प्रवर्तकमित्युक्तं भवति। इदम् उदितमाचार्यैः कारिकायाम्-<br>"किमाद्यपेक्षितैः पूर्णः<br>समर्थः प्रत्ययो विधौ।<br>तेन प्रवर्तकं वाक्यं<br>शास्त्रेऽस्मिंश्चोदनोच्यते।।"<br>इति। | ननु पुरुषप्रवृत्तिरूपां भावनां विदधानः प्रत्यय एव प्रवर्तकः। तस्य प्रेरणार्थे विधानात्। तत्कथं वाक्यं प्रवर्तकमिति चेत् - अहो पेलवग्राहिपाण्डित्य-मायुष्मतो, येन प्रत्ययः प्रवर्तक इत्याकलयता स च विशिष्ट इति नाकलितम्। तदाकलने वाक्यमेव प्रवर्तक-मित्यपि किं नाकलयेः। तथा हि - न हि भावयेदित्युक्ते कश्चित् प्रवर्तते। किन्तु इदम् अनेनैवं भावयेदिति। तथा सति अंशत्रयविशिष्टभावनाभि-धायी प्रत्ययः प्रवर्तक इति वाक्यमेव प्रवर्तकमित्युक्तं भवति। तदुक्तमाचार्यैः कारिकायाम् -<br>"किमाद्यपेक्षितैः पूर्णः<br>समर्थः प्रत्ययो विधौ।<br>तेन प्रवर्तकं वाक्यं<br>शास्त्रेऽस्मिंश्चोदनोच्यते।।"<br>इति। तत्सुष्ठूक्तं वाक्यमेव प्रवर्तकमिति। |

अपि च तात्पर्याख्यवृत्त्यन्तरसद्भावासद्भावविचारावसरे तरले –

'पदार्थावगमसमनन्तरभाविनी समन्वयशक्ति-
स्तात्पर्यम् इत्यलङ्कारसर्वस्वसञ्जीविनीकारोऽपि।'

इति यन्मल्लिनाथेन लिखितं[60] तदेव तथैव तत्रैव लिखति धर्मसूरिरपि (पृ० 67)। अतश्च सञ्जीविनीकारवाक्यस्य यदेतदुद्धरणं धर्मसूरिणा न तत्साक्षाद् सञ्जीविन्याः किन्तु तरलादिति बोद्धव्यम्।

अथ साधारणतो यद्यपीयं शङ्का न कस्यापि उदेति यन्मल्लिनाथ एव धर्मसूरे-रनूदितवान् प्रायः समकालिकत्वादिति, तथापि प्रमाणान्तरसत्त्वात् निश्चयदार्ढ्याय च अध्यारोपापवादन्यायमाश्रित्य तन्निरूप्यते। लक्षणासंसाधनानन्तरं तत्स्वरूपं द्वाभ्यां कारिकाभ्यां संग्रहेण ब्रवीति धर्मसूरिः –

"अत्रायं लक्षणासंग्रहः –

स्वार्थत्यागे समानेऽपि सह तेनान्यलक्षणा।
यत्रेयमजहत्स्वार्था जहत्स्वार्था च तं विना।।
स्वार्थैकांशत्यागादंशान्तरमेव लक्ष्यते यत्र।
सा जहदजहत्स्वार्था तत्त्वमसीत्यादिविषयदृश्येयम्।।"

इति (पृ० 51)। इमे द्वे अपि कारिके तथैव दृश्येते तरले[61]।

प्रतापरुद्रीयव्याख्याने रत्नापणे मल्लिनाथस्य तनूजः कुमारस्वामी तु-

"तदुक्तं तातपादैरेकावलीतरले, तन्त्रवार्तिकव्याख्याने सिद्धाञ्जने च"

इति प्रतिज्ञाय, इमे कारिके तथैव उदाहृतवान्[62]। यदि च इमे कारिके मल्लिनाथकर्तृके न स्यातां कथं नाम कुमारस्वामिनः 'तातपादैः' इत्युक्तिः सङ्गच्छेत?

एवमेव दशमे तरङ्गे-

विवृतं च एतद् रसाकरे-

"प्रेमा दिदृक्षा रम्येषु तच्चिन्ता त्वभिलाषकः।
रागस्तत्सङ्गबुद्धिः स्यात् स्नेहस्तत्प्रवणक्रिया।।
तद्वियोगासहं प्रेम रतिस्तत्सहवर्तनम्।
शृङ्गारस्तन्मयक्रीडा सम्भोगे सप्तधा क्रमः।।"

इति शृङ्गारस्य सप्तावस्थत्वं प्राचीकटद् धर्मसूरिः (पृ० 248)।

सोऽयं रसाकरो नाद्य यावत् कुत्रचित् मुद्रितामुद्रितग्रन्थेषु लभ्यते। मल्लिनाथः परं मेघसन्देशव्याख्याने 'रसाकरं' स्मरति[63]। उदाहरति च इमे एव द्वे कारिके तत्र।

अपरोक्षं हीदं सत्यं यदनुपलभ्यमानानां बहूनां ग्रन्थानां सत्तासूचकानि मल्लिनाथव्याख्यानानीति। एवञ्च मल्लिनाथादेव इमे कारिके स्वीकृत्य उदाहृतवान् धर्मसूरिरिति पर्यवस्यति।

किञ्च धर्मसूरेर्ग्रन्थः स्वतन्त्रः। मल्लिनाथस्य तु तरल एकावल्या व्याख्यानात्मकः। एवञ्च धर्मसूरिग्रन्थात् तद्गतान् विषयान् संगृह्य कथं नाम प्रभवति मल्लिनाथस्तान् स्वमूलभूतैकावल्यां समारोपयितुं विशिष्य च यो मल्लिनाथः-

"नामूलं लिख्यते किञ्चिद् नानपेक्षितमुच्यते"।

इति स्वीयप्रतिज्ञायाः प्रत्यक्षरपरिपालने दक्ष इत्येव विद्वद्भिः सम्मानितः। एवञ्च पूर्वावधिनिर्णयविषये मल्लिनाथाद् अस्य अर्वाचीनत्वं सिद्धमेव।

(ख) अथ उत्तरावधिनिर्णयावसरे साहित्यरत्नाकरे जगन्नाथस्य स्मरणाभावाद् हेतोर्यद् जगन्नाथाद् अस्य प्राचीनत्वं राघवाचार्यैः समर्थितं तत्र अस्माकं वैमत्यमुत्तरत्र प्रदर्शयिष्यते।

स्वीकृत्यापि जगन्नाथाद् धर्मसूरेः प्राचीनत्वं 1414 तः - 1625 क्रि० प० पर्यन्तस्य मध्यकालस्य न्यूनीकरणे ये प्रयत्नाः श्रीराघवाचार्यैः कृतास्ते परिशीलनार्हाः सन्ति।

(ग) गौरनरचिताया लक्षणदीपिकायाः पदार्थदीपिका इत्यपि नामान्तरम् अस्ति[64]। 'रेचर्ल'-वंशराज्ञः सिङ्गयमाधवेन्द्रस्य महामात्यस्य पोतराजस्य भ्रातृपुत्रोऽसौ गौरन आयमप्रभोस्तनय आसीत्[65]।

'प्रणम्य पिङ्गलं नाम कविपुङ्गवसन्नुतम्'।

इति पिङ्गलाचार्यप्रणमनाद् अयं ग्रन्थः छन्दोविषयक इति सुज्ञेयमेव। त्रिंशत्पुटपरिमिते अस्मिन् लिखितकाकलग्रन्थे पञ्च प्रकाशा विद्यन्ते। प्रतिप्रकाशान्तपुष्पिकासु द्वयोर्नाम्नोरन्यतरेण अयं ग्रन्थो निर्दिश्यते। एतस्मिन् ग्रन्थे प्रायोऽष्टवारं साहित्यरत्नाकर उदाहृतः। सर्वाण्यपि इमानि उद्धरणानि गणदेवताप्रतिपादनादिच्छन्दश्शास्त्रसम्बद्धान्येव विद्यन्ते[66]। अतः सुस्पष्टमेव इदं

ज्ञायते यत् नायं ग्रन्थः प्रकृतः साहित्यरत्नाकरः, किन्त्वन्योऽन्यविषयकश्चेति। यद्यपि एकविंशतितमात् पृष्ठात् नायकनिरूपणादयोऽलङ्कारशास्त्रसम्बन्धिनो विषया दरीदृश्यन्ते, तथापि तत्र न दृश्यन्ते साहित्यरत्नाकरसम्बन्धिन उद्धाराः।

G.O.M.L. मध्य एव D 12952 इत्यङ्केन अन्यो लक्षणदीपिकाग्रन्थ उपलभ्यते। ग्रन्थान्तगद्यसाम्याद् यद्यपि एककर्तृकत्वम् अनयोः सिद्ध्यति, तथापि स्वरूपविसंवादः सुमहान् अनुभूयतेऽनयोर्द्वयोः। अस्मिन्नपि उपद्वादशवारं साहित्यरत्नाकर उद्धृतः। तन्मध्ये त्रिष्वेव स्थलेषु उद्धरणानि उभयग्रन्थसाधारणानि सरूपाणि च दृश्यन्ते। सर्वाण्यपि उद्धरणानि छन्दश्शास्त्रविषयकाणि प्रकृत–साहित्यरत्नाकरेऽनुपलभ्यमानानि च दृश्यन्ते।

किञ्च गौरनः स्वीये हरिश्चन्द्रद्विपदकाव्ये धर्मसूरिं नैव स्मरति। तस्माद् गौरनेन कृतं साहित्यरत्नाकरनामनिर्देशमाश्रित्य धर्मसूरिकालनिर्णयः कर्तुम् अशक्य एव।

(घ) एवम् अप्पकवीयग्रन्थोऽपि प्राधान्येन आन्ध्रव्याकरणच्छन्दःप्रतिपादक एव, न त्वलङ्कारग्रन्थः। तथापि प्रतापरुद्रीयादीनां ग्रन्थानां नामनिर्देशः कृतः पूर्वग्रन्थनामसंग्रहाख्ये विभागे। साहित्यरत्नाकरस्य नाम तु छन्दोग्रन्थानाम् अन्ते, अलङ्कारग्रन्थानाम् आदौ च निर्दिष्टम् अस्ति। तस्मात् छन्दोग्रन्थत्वमिव अलङ्कारग्रन्थत्वमपि अस्मिन् स्वीकर्तुं शक्यते। किञ्च अप्पकवीये आदौ कञ्चन भागं परित्यज्य, सर्वोऽपि इतरो ग्रन्थः छन्दोविषयक एव। अन्यच्च आन्ध्रसाहित्यपरिचयवताम् इदम् अपरोक्षमेव यद् अप्पकवीयग्रन्थतत्प्रतिपादित–बहुमुखयतिप्रासतत्प्रभेदादिभिर्विषयैः प्रसिद्ध इति। तस्माद् अत्रापि स्मृतः साहित्यरत्नाकरग्रन्थः छन्दोविषयकः प्रकृतभिन्नः प्रायो लक्षणदीपिकायां स्मृताद् अभिन्नश्चेति निश्चीयते। तस्माद् गौरन–अप्पकविकालमाश्रित्य धर्मसूरेः कालनिर्णये श्रीराघवाचार्यैः कृतः प्रयत्नो न शोभातिशयं पुष्णाति।

### 1.3.4 धर्मसूरेः कालविषयेऽस्मन्निर्णयः

सम्पूर्णे साहित्यरत्नाकरे उपलभ्यत एक एवैतिहासिकोंऽशः, यस्य अङ्गीकारे धर्मसूरेः कालनिर्णयः क्रि० प० सप्तदशशतके भवितुम् अर्हति। तं विषयम् अधिकृत्य अत्र किञ्चित् प्रस्तूयते। धर्मसूरिः स्वज्येष्ठपितृव्यवर्णनावसरे–

जित्वा रामावधानिप्रवरमुरुमरुद्वेगवद्वेदचर्चा-
गोष्ठ्या नारायणार्यः सदसि बुधशतैः श्लाघ्यमानावधानः।
सन्तुष्टाद् धर्मभूपाद् अलभत शिबिकां चामरच्छत्रपूर्वं
गर्वाखर्वावधानीश्वरशरभघटागण्डभेरुण्डचिह्नम्।।

इत्यस्मिन् श्लोके (पृ० 3) धर्मभूपस्य नामग्रहणं करोति। एतेन ज्ञायते यद् अस्य ज्येष्ठपितृव्यः केनचिद् धर्मभूपनामकेन राज्ञा सम्मानित इति। कोऽयं धर्मभूपः? कः कालस्तस्य? इति विमर्शनेन धर्मसूरेः कालनिर्णयः सम्पन्नप्रायो भवति। इतिहासग्रन्थानामालोडनेन दक्षिणदेशे सम्भावितधर्मसूरिकाले पञ्च धर्मभूपा दृष्टिपथम् आगच्छन्ति। यथा –

(1) धर्मरायः (इम्मिडिनरसिंहरायः) सालुववंशीयः।
(2) धर्मनायड्डु। वेलुगोटिवंशीयः। राचकोण्डराज्यस्याधीशः।
(3) धर्मनायड्डु। अनन्तरोक्तस्य पौत्रः।
(4) धर्मः। दामर्लवंशीयो विजयनगरसाम्राज्यसामन्तानां कालहस्ति-प्रभूणाम् अन्यतमः।
(5) धर्मदेवः (पद्मनाभ-अनङ्गभीमदेवः) गङ्गवंशीयः। बडखिमुण्डि-राज्यस्याधीशः।

### 1.3.4.1 सालुववंशीयो धर्मरायः

'आरगल्' इति 'आरगल्लूर्' इति वा व्यवह्रियमाणे ग्रामे[67] कामेश्वरदेवालये तमिलभाषानिबद्धं शिलाशासनमेकं विद्यते[68]। अस्मिन् शासने सालुव-नरसिंग-भुजबलदेवमहारायतनयेन सालुवधर्मरायेण (इम्मिडि-नरसिंहेण) 1426 तमे शकसंवत्सरे रक्ताक्षिसंवत्सरशुद्धत्रयोदश्यां शुक्रवासरे स्वातिनक्षत्रयुक्तायां कृतं दानमेकं शास्यते। अयञ्च शकवर्षतिथिः क्रैस्तशके एप्रिल 26, 1504 क्रि० प० शुक्रवासरेण अभिन्ना भवतीति स्वामिकन्नुपिल्लैमहाभागस्य आशयः(Indian Ephimaries)।

'इम्मिडि' इत्यान्ध्रपदस्य द्वितीय इत्यर्थः। एवञ्च पूर्वतनान् सङ्गमवंशीयान् विनाश्य यः प्रथमनरसिंहभूपो विजयनगरसाम्राज्यम् आसादितवान् तस्य अयं तनयो द्वितीयनरसिङ्गराय इति निश्चप्रचम्।

अस्मिन्नेव ग्रामे करिवरदराजदेवालयगर्भगृहस्य उत्तरे भागे अन्यदेकं

शिलाशासनं विद्यते, यत्र अयमेव सालुववंशीयधर्मराय: (इम्मिडि-नरसिंहराय:) कीर्तित:। शासनं चेदं दुर्मतिसिंहमासशुद्धदशम्यां इन्दुवासरे हस्तनक्षत्रयुक्तायां कृतम्। शकाङ्को यद्यपि 1444 इति लिखितो दृश्यते, तथापि 1424 शकसंवत्सर एव भवितुम् अर्हतीति श्रीवि० रङ्गाचार्या अभिप्रयन्ति[69]।

एवम् आभ्यां द्वाभ्याम् शिलाशासनाभ्यां इदं ज्ञायते यद् इम्मिडि-नरसिङ्गरायस्य धर्मराय इति नामान्तरमासीदिति। अत एव एस्० कृष्णस्वामि-अय्यङ्गारो विजयनगरराजन्यवंशवृक्षे इम्मिडिनरसिंहरायस्य 'धर्मराय' इति नामान्तरम् अपि सूचयति। अस्य राजत्वकालमपि 1492-1505 क्रि० प० मध्यवर्तिनं निश्चिनोति[70]।

### 1.3.4.2 वेलुगोटिवंशीयौ धर्मनायडू

वेङ्कटगिरिसंस्थानस्य अधीशा एते वेलुगोटिवंशीया आन्ध्रेतिहासे प्रमुखं स्थानं लभन्ते। एतद्वंशपरम्परायां षष्ठोऽनपोत: प्रख्यात आसीत्। तस्य द्वौ पुत्रौ पेदसिङ्गमनायडुर्धर्मनायडुश्च। तत्र धर्मनायडुप्रभो: 'तिम्म' इति तिम्मस्य पुन: 'धर्म' इति 'चिट्टिदास' इति च सन्ततिरासीत्। एषा वंशावलिरधोनिर्दिष्टाऽस्ति-




वेलुगोटिवंशपरम्परायां सप्तमो नवमश्च धर्मनायडुनाम्ना व्यवहृतौ आस्ताम्[71]। तत्र च सप्तमधर्मस्य ज्येष्ठो य: सिङ्गम: स एव रसार्णवसुधाकरकार: शिङ्गभूपाल:। अस्य च पौत्र: सर्वज्ञशिङ्गभूपाल:, य: प्रसिद्धान्ध्रकविना बम्मेरपोतराजेन भोगिनीदण्डके, प्रसिद्धान्ध्रमहाकविना श्रीनाथेन च स्मृत:[72]। सप्तमधर्मस्य काल: शिङ्गभूपालानुजत्वादेव 1360-1400 क्रि० प० भवितुम् अर्हति। तत्पौत्रस्य तु तत्पौत्रत्वादेव 1450 क्रि० प० प्रान्तकाल इति च निश्चीयते।

### 1. 3.4.3 दामर्लवंशीयो धर्मः

दामर्लवंशीया विजयनगरसाम्राज्यस्य सामन्तभूताः श्रीकालहस्तिप्रभवः। एतद्वंशीयेन राज्ञा दामर्लवेङ्कभूपालेन विरचिते 'बहुलाश्वचरितमु' इति आन्ध्रग्रन्थे दामर्लवंशे द्वौ धर्मौ आस्तामिति दृश्यते। किन्त्वेतावधिकृत्य कुतश्चिदपि किमपि न ज्ञायत इत्यत एतौ अत्र न परिगण्येते।

### 1.3.4.4 गङ्गवंशीयो धर्मदेवः

'बडखिमुण्डि' - राज्याधीशः पद्मनाभ-अनङ्ग -भीमदेवो धर्मदेव इत्यपि व्यवहृत आसीत्[73]। अयं विषयः कृष्णश्रीचन्दनेन विरचितस्य अब्ददूताख्यस्य खण्डकाव्यस्य ग्रन्थान्तपद्यात् ज्ञायते[74]। अयञ्च बडखिमुण्डिगङ्गवंशीयः पद्मनाभ-अनङ्ग-भीमदेवः ('अनङ्गभीम' इति तु एतद्वंशीयैः सर्वैरेव राजभिर्ध्रियते स्वमूलपुरुषस्य सार्वभौमगङ्गवंशीयस्य अनङ्गभीमदेवस्य स्मृतौ) विजयनगर[75] राजधानीकृत्य दक्षिणोत्कलान् पर्यपालयत्।

अखण्डखिमुण्डिराज्यं तु क्रैस्तदशमशताब्देरेव स्वतन्त्रप्रतिपत्तिं लेभे। इदं तु राज्यम् अद्यतनानि बडखिमुण्डि-सनकिमुण्डि-पार्लाखिमुण्डि-बस्तर-कोरापुट्नामकानि उपमण्डलानि व्याप्य प्राभवत्[76]।

सार्वभौमगङ्गवंशस्य (Imperial Gangas) परिपालनकालः कज्जलभानुना अन्तमुपगतः। कज्जलभानुर्महाप्रभाववता गजपतिवंशीय-कपिलेन्द्रदेवेन पराजितः सन् स्वराजधानीं कटकं परित्यज्य गुडारिकटकं[77] राजधानीकृत्य क्षुद्रमेकं राज्यं व्यधत्त। अस्य कज्जलभानोर्वंशपरम्परायां 1527 क्रि० प० तः 1566 क्रि० प० पर्यन्तं स्वर्णलिङ्गभानुः 1566 क्रि० प० तः 1590 क्रि० प० पर्यन्तं शिवलिङ्गभानुश्च क्रमेण खिमुण्डिराज्यं पर्यपालयताम्। एषा तु कज्जलभानोर्वंशावलिः-



नृसिंहदेवः
|
अनन्तदेवः
|
पद्मनाभदेवः
|
पीताम्बरदेवः — वासुदेवः
|
पुरुषोत्तम–अनङ्गभीमदेवः (भीमधर्मदेवः)

गङ्गवंशानुचरितचम्पूग्रन्थोक्तदिशा पद्मनाभदेवः शिवलिङ्गभानोश्चतुर्थो दृश्यते। किन्तु मध्यवर्तिनस्त्रयोऽप्यप्रसिद्धा आसन्। तस्मात् तेषां परिपालन–कालोऽतिस्वल्प एव भवितुम् अर्हति। पद्मनाभदेवस्तु अतीव प्रभाववान् योद्धा अनेकेषां युद्धानां नेता चाभवत्। अयं पद्मनाभदेवो नन्दपुरराजानं विश्वम्भरं विजित्यापि करुणया पुनस्तमेव तस्मिन्नेव राज्ये प्रतिष्ठापयामास[78] इति गङ्गवंशानुचरितात् ज्ञायते। तस्मादसौ पद्मनाभदेवो विश्वम्भरराज्ञः समकालिको भवितुम् अर्हति।

अधुना पद्मनाभदेवस्य कालनिर्णयं कुर्मः। विश्वम्भरदेवस्य अनन्तरं राजत्वमुपगतवान् कृष्णदेवः (1676 – 1681 क्रि० प०) मल्लकीमर्दन इति बिरुदेन भूषित आसीत्[79]। यद्यपि कोऽसौ मल्लकिरिति निश्चितरूपेण वक्तुं न शक्यते तथापि दिल्लीशस्य औरङ्गजीवचक्रवर्तिनः (1658 – 1707 क्रि० प०) असौ सेनानीरासीदित्यैतिहासिकाश्चिन्तयन्ति। अस्य कारणं तु औरङ्गजीवो भूभागमिमं जेतुमुद्युक्तो गञ्जां तथा विशाखपट्टनं–प्रान्तदेशीयै राजभि–र्विफलितप्रयत्नः कृतः[80]।

गङ्गवंशानुचरिते तु पद्मनाभदेव एव मल्लकेर्हन्तेति स्पष्टं निर्दिष्टम् अस्ति[81]–

"यः पारावारवारिप्रकरवलयितक्ष्मान्तसामन्तकोटी–
राजत्कोटीरकोटीमणिगणकिरणैः प्रांशुमूर्च्छन्नखांशुः।
दिल्लीशस्यापि तस्याखिलयवनपतेर्भागधेयं निनीषन्
सेनानीः कश्चिदागाद् बहुतरतुरगो मल्लकीर्ति [ति] प्रसिद्धः।।

तं मत्वा धूमकेतुं निजनृपतिकुलोत्तंसविध्वंसकेतुं
स्वान्ते तच्छान्तिचिन्तां दधदवनिपतिश्छद्मना पद्मनाभः।

मैत्रीमत्राशु तन्वन् सपरिकरममुं वेशयन् दुर्गमार्गे
वन्यैरन्यैरगण्यैः सह परशुकरैर्नन्दपुर्यां जघान।।"

अतो मल्लकिर्नाम कश्चिद् दिल्लीशस्य सेनानीरश्ववणिग्वेषेण पद्मनाभदेवसमीपम् आगतस्तद्राज्यापहरणतात्पर्येण। मल्लकेर्व्यूहं साधु ज्ञातवान् राजा पद्मनाभदेवः, तेन सह कपटमैत्रीं कृत्वा तेनैव प्रत्ययेन तं केनचिदपदेशेन नन्दपुरारण्यं प्रापय्य तत्रत्यैर्भिल्लैर्घातितवान्।

अधुना को नाम वस्तुतो मल्लकीमर्दनः कृष्णदेवो वा पद्मनाभदेवो वेति विचारणीयम्। गङ्गवंशानुचरितस्य प्रामाण्यमपि अनेकधा सिद्धमेवास्ति[62]। विशाखपट्टनं गेजटियर्ग्रन्थस्य गङ्गवंशानुचरितस्य च एकवाक्यतासम्पादनार्थ-मस्माभिरेवमत्र विभाव्यते। पूर्वमेव ज्ञातम् अस्माभिर्यद् राजा पद्मनाभदेवः कृष्णदेवपूर्वतनं विश्वम्भरनामकं राजानं विजित्यापि पुनः करुणया तस्मिन्नेव पदे प्रत्यतिष्ठिपदिति। अतो विश्वम्भरस्तदनन्तरवर्तिनश्च पद्मनाभदेवस्य सामन्तरूपेण आसन्। उदाहृतश्लोकेऽपि 'नन्दपुर्यां जघान' इति स्पष्टमुक्तत्वात् पद्मनाभदेवः स्वसामन्तकृष्णदेवद्वारा मल्लकिम् अवधीदिति तर्क्यते। तेन च यः साक्षाद् हन्ता यश्च घातयिता उभावपि मल्लकीमर्दनविरुदभाजौ भवत एव। एतेन इदं सिद्ध्यति –

(क) पद्मनाभदेवस्य परिणते वयसि कृष्णदेवः (1676 – 1681 क्रि० प०) नन्दपुरस्य राजा आसीत्[83]।

(ख) पद्मनाभदेवो बडखिमुण्डिवंशे महाप्रभाववान् राजा आसीत्।

(ग) पद्मनाभेन अनेके युद्धाः कृता इति प्रमाणितम् अस्ति।

(घ) कृष्णदेवस्य पूर्वतनो राजा विश्वम्भरः पद्मनाभेन जितः।

(ङ) पद्मनाभेन मल्लकिर्घातितः।

एभिः कारणैरसौ पद्मनाभः 1640 क्रि० प० तः 1685 अथवा 1690 क्रि०· प० पर्यन्तं राज्यम् अकरोदिति ज्ञायते[84]।

उपरि प्रदर्शितैः प्रमाणैर्यः कालः पद्मनाभदेवस्य निश्चितः सः प्रमाणान्तरेणापि उपष्टभ्यते। पद्मनाभदेवस्य अनन्तरं पुनः महाप्रभाववान् राजा पुरुषोत्तमदेव आसीत्, यस्य नामान्तरं भीमधर्मदेव इति। असौ पार्लाखिमुण्डिराज्ञः जगन्नाथनारायणदेवस्य मित्रं बभूव[85]। एतेनैव तत्पुत्रस्य गजपतिनारायणदेवस्य

आङ्ग्लेयैर्विद्रावितस्याश्रयो दत्तः[86]। अस्य राजत्वकालः 1728 – 1776 क्रि० प० इति निश्चितः। गङ्गवंशानुचरितप्रदर्शितबडखिमुण्डिराजवंशावलितोऽस्य च पद्मनाभस्य च अन्तरे द्वौ पीताम्बरवासुदेवौ राज्यम् अकुरुताम् इति। असौ च वासुदेवस्य पुत्र इति च ज्ञायते। पुरुषोत्तमदेवः स्वेन विरचिते 'कृष्णकेलि-तरङ्गिणी' नाम्नि उत्कलभाषायां लिखिते काव्ये[87] आत्मानं वासुदेवस्य पुत्रं स्पष्टं कथयति। युज्यते च एतद् यतोऽयं मध्यवर्ती काल उपचत्वारिंशत्संवत्सरात्मक ऐतिहासिकसिद्धसाधारणप्रमाणेन द्वाभ्यां निर्व्यूढः। तस्माद् यो राजत्वकालः पद्मनाभस्य (1640 – 1690 क्रि० प०) प्रदर्शितः स उपलभ्यमानसर्व-प्रमाणोपपन्नो दृश्यते।

### 1.3.4.5 धर्मसूरिणा उदाहृतो धर्मभूपः कः? इति विचारणम्

अथ पूर्वोक्तेषु धर्मभूपेषु केन तावद् धर्मसूरेर्ज्येष्ठपिता नारायणावधानिः सम्मानित इति निश्चेतव्यं भवति। साहित्यरत्नाकरे–

"चचार बहुशः क्षितौ द्विजरथेन नारायणः" (पृ० 3) इत्युक्तत्वात् पूर्वोक्तराजभिर्नारायणावधानिनः सम्बन्धकल्पनं तु सुशकमेव। वयं तु प्रदर्शयिष्यमाणयुक्तिबलाद् बडखिमुण्डिराज्याधीशेन पद्मनाभ–अनङ्ग – भीमदेवाख्येन धर्मभूपेनैवासौ सम्मानित इति निश्चिनुमः। तथा हि –

(क) धर्मसूरेर्जन्मदेशम् अधिकृत्य कृते विचारे स्पष्टमेवास्माभिः प्रदर्शितं (1.2.5) यद् धर्मसूरेरुत्कलेषु विशेषतो गञ्जांप्रान्ते वर्तते महान् प्रभाव इति। अन्यच्च ये आलङ्कारिका धर्मसूरिं स्मृतवन्त-स्तेष्वधिकसंख्याका भवन्ति पार्लाखिमुण्डिवंशीयस्य जगन्नाथ-नारायणदेवस्य सभायां विराजिताः[88]। उत्कलेतिहासे स्नेहपूर्णः सम्बन्ध आसीद् बडखिमुण्डिपार्लाखिमुण्डिराजवंशयोः[89]। तस्माद् धर्मसूरेर्बडखिमुण्डिधर्मभूपेन सह विद्यमानः सम्बन्ध एव तदनन्तरकालिकैस्तत्प्रान्तदेशीयैरालङ्कारिकैर्धर्मसूरेः स्मरणे कारणतां गत इत्युक्तिः सङ्गच्छते।

(ख) किञ्चोत्कलीयकविपण्डितपोषकेषु राजसु मूर्धन्यभूतौ भवतो गङ्गवंशीयौ पुरुषोत्तमदेवजगन्नाथनारायणदेवौ। वस्तुतः संस्कृत-साहित्येतिहासस्य अभिवृद्धौ एतयोः कालः स्वर्णयुग इति वक्तव्यः।

अनयोर्द्वयो राजत्वकाले तदीयसभाम् अलङ्कृतवद्भिरनेकैः कविपण्डितैः काव्य-नाटक-चम्पू-धर्मशास्त्रादिग्रन्था विरचिताः[90]। पुरुषोत्तमदेवस्य पूर्वतनः पद्मनाभदेवोऽपि एतादृश एव सम्भाव्यते। यतस्तस्य सचिव आसीत् कविकुलतिलको नारायणमङ्गराजः[91]। कृष्णश्रीचन्दनः स्वविरचिते अब्ददूते ग्रन्थान्तपद्ये स्वपितरं नारायणमङ्गराजं सत्कविं कवितिलकसुहृदं च कथयति[92]।

(ग) अद्यापि साहित्यरत्नाकरस्य तालपत्रमातृका अनेका उपलभ्यन्ते उत्कलेषु। ग्रन्थालयेभ्यो बहिरप्यनेकेषां पण्डितानां सविधे एतादृशा मातृका उपलभ्येरन्।

(घ) त्रीणि व्याख्यानानि उत्कलीयैः साहित्यरत्नाकरस्य लिखितानीत्येतत् तस्मिन् देशे पठनपाठनपरम्पराम् अनुमापयति। 1901 तमे क्रिस्ताब्देऽपि व्याख्यानस्य नौकाख्यस्य मधुसूदनतर्कवागीशेन उत्कलीयेन लेखनमपि पूर्वोक्तं विषयं द्रढयति।

एवमेभिः प्रमाणैर्बडखिमुण्डिराजेन पद्मनाभदेवेनैव धर्मभूपेत्य-पराभिधानवता धर्मसूरेर्ज्येष्ठपिता नारायणावधानिः सम्मानित इति वाच्यम्। यदा च नारायणावधानिः सम्मानितस्तदा सः परिणतवयस्को भवितुम् अर्हति। अत एव तद्भ्रातृपुत्रो धर्मसूरिर्मध्यवयस्कश्च भवितुम् अर्हति। एवञ्च 1640 - 1685 क्रि० प० मध्यकाले धर्मभूप आसीदिति हेतोर्धर्मसूरिरपि तस्मिन् काले आसीदिति निश्चप्रचम्।

### 1.3.4.6 साहित्यरत्नाकरस्य प्रथमोदाहर्ता गुरजालरङ्गशायी

धर्मसूरेः साहित्यरत्नाकरस्य उदाहर्तृषु सर्वापेक्षया प्राचीन आमोदकर्ता गुरजालरङ्गशायी। स तु स्वीये रसमञ्जरीव्याख्याने आमोदे[93] न केवलं विरहोत्कण्ठितानायिकाया विविधालङ्कारिकरचितानि लक्षणानि, अपि च साहित्यरत्नाकरं खण्डयति। अयञ्च आमोदग्रन्थभागो भूयसा शब्दसाम्येन तथैव उदाहृतः सन्त-अक्बरषा-विरचितायां शृङ्गारमञ्जर्याम्[94]। शृङ्गारमञ्जरी चेयम् 'आबुल हासन्'- नामकस्य नैजांराजस्य काले ( 1672-1687 क्रि० प०) विरचिता। किञ्च आमोदग्रन्थे अप्पय्यदीक्षितकृतस्य कुवलयानन्दस्य, भट्टोजीकृतस्य मनोरमायाश्च उद्धरणाद् ग्रन्थोऽयं षोडशशताब्देः समाप्त्यनन्तरमेव

लिखितो भवितुम् अर्हति[95]। तस्मात् सप्तदशशताब्देः 1672 क्रि० प० तः प्राग् आमोदग्रन्थो लिखितो भवेदित्यत आमोदः 1660–1670 क्रि० प० तमे मध्यकाले अभवदिति सर्वैरेवोपलभ्यप्रमाणैर्निश्चीयते।

### 1.3.4.7 धर्मसूरिवंशीयानां कथनम्

निश्चिते चैवं धर्मसूरेः साहित्यरत्नाकरस्य च काले यदप्युच्यते पेदपुलिवरुग्रामस्थैर्वारणासिवंशीयैर्यत् ते धर्मसूरेरनन्तरं नवमपुरुषान्तरीया इति तदपि सङ्गच्छते। तथा हि – प्रतिपुरुषान्तरं त्रिंशत्संवत्सरपरिमितः काल ऐतिहासिकैः साधारणनियमरूपेण स्वीकृतः। वेमूरुनरसिंहशास्त्रिणां लघुनिबन्धः 1931 क्रि० प० तमे संवत्सरे प्रकाशितः। तत्रैव शास्त्रिणो वारणासिवंशीयानां नवमपुरुषान्तरत्वोक्तिमुदाजह्रुः (1.3.2.1)। एवञ्चोपर्युक्तप्रमाणेन 270 संवत्सराः 1931 संवत्सरेभ्यः पातनीयाः। तथा च क्रि० प० 1661 तः पूर्वमेव भवति धर्मसूरेः कालः। अयञ्च कालोऽस्मन्निर्णयेन संवदति। तस्मादिदं दृढतरम् अस्माभिर्निर्णीयते धर्मसूरिः सप्तदशक्रैस्तशताब्देः प्रारम्भे सञ्जात इति, साहित्यरत्नाकरश्च 1650 –1660 क्रि० प० मध्यकाले विरचित इति च।

## 1. 4. धर्मसूरेः कृतयः

धर्मसूरिणा सप्त कृतयः प्रणीताः। ताश्च– (1) कृष्णास्तुतिः (2) सूर्यशतकम् (3) बालभागवतम् (4) हंससन्देशः (प्राकृतखण्डकाव्यम्) (5) कंसवधम् (6) नरकासुरविजयव्यायोगः (7) साहित्यरत्नाकरश्चेति।

### 1.4.1. भाष्यरत्नप्रभा–ब्रह्मामृतवर्षिण्योः कर्त्ता कः?

प्रायः सर्व एव संस्कृतसाहित्यैतिहासिका लघुनिबन्धलेखकाश्च ये धर्मसूरिम् अधिकृत्य लिखितवन्तस्तेऽन्यत् कृतिद्वयमपि प्रकृतधर्मसूरिकर्तृकम् अभिप्रयन्ति। तच्च शङ्करभगवत्पादप्रणीतस्य शारीरकमीमांसासूत्रभाष्यस्योपरि व्याख्या भाष्यरत्नप्रभा–नाम्नी एका, पूर्वोक्तभाष्यस्यैव संग्रहीकरणरूपा वृत्ति– ब्रह्मामृतवर्षिणी–नाम्नी च द्वितीया। "साहित्यरत्नाकरकार एव भाष्यरत्नप्रभाकार" इति शीर्षकेण लघुनिबन्धेन वेमूरुनरसिंहशास्त्रिणो विशिष्य पूर्वोक्तग्रन्थद्वयस्य धर्मसूरिकर्तृकत्वस्थापने प्रयतितवन्तः[96]। इतरे तु जनश्रुतिमाधारीकृत्य विशेषपरीक्षणं विना तथेत्यङ्गीचक्रुः।

नरसिंहशास्त्रिणां लघुनिबन्धस्य अयमस्ति सारांशः – 'गुरुवृत्तिः' इत्यपराभिधानेन व्यवह्रियमाणा ब्रह्मामृतवर्षिणी–नाम्नी ब्रह्मसूत्रवृत्तिर्धर्माभट्टेन विरचिता। ब्रह्मामृतवर्षिण्या भाष्यरत्नप्रभायाश्च अनेकशः प्रतिपादनवैखर्यां, सिद्धान्तवर्णने, ग्रन्थनिर्माणे, अक्षरशो वाक्येषु, विशिष्य श्रीरामभक्तौ च साम्याद् उभयमेतद् एककर्तृकमिति सिद्ध्यति। साहित्यरत्नाकरेऽपि श्रीरामभक्ति–ग्रन्थकर्तुरभिमता दृश्यते। तस्मात् श्रीरामभक्तेः साम्यात् नामसाम्याच्च ब्रह्मामृतवर्षिणीकारः साहित्यरत्नाकरकारश्च अभिन्न इति सिद्ध्यति। तद्द्वारा च भाष्यरत्नप्रभाकर्तृत्वमपि श्रीरामभक्तिसाम्येन ब्रह्मामृतवर्षिणीभाष्यरत्नप्रभयोः स्थितेन ग्रन्थसाम्येन च तस्मिन्नेव साहित्यरत्नाकरकर्तरि सिद्ध्यतीति।

**1.4.1.1 ब्रह्मामृतवर्षिण्या भाष्यरत्नप्रभायाश्च कर्ता अभिन्न एव**
उभयोरनयोरभिन्नत्वविषयेऽत्र किञ्चित् प्रस्तूयते–

(क) ब्रह्मामृतवर्षिणीग्रन्थो बादरायणकृतब्रह्मसूत्राणां वृत्त्यात्मकः। स च चतुर्वारं मुद्रितः। प्रथमतस्तावत् 1900 क्रि० प० तमे सवंत्सरे श्री–अन्नवरं – वेङ्कटराघवशर्मणा आन्ध्राक्षरेषु मुद्रितः[97]। अस्मिन् ग्रन्थस्य अस्य 'गुरुवृत्तिः' इति नामान्तरसत्त्वम् उट्टङ्कितम्। ग्रन्थकर्तुर्नाम धर्माभट्ट इत्युल्लिखितम्। एतद्ग्रन्थस्य ग्रन्थान्तगद्याद् इदं ज्ञायते यदसौ धर्माभट्टस्तिरुमलाचार्यस्य सूनुः श्रीमत्परमहंसपरिव्राज–काचार्यश्रीमुकुन्दाश्रमश्रीचरणशिक्षितस्तथा मन्त्रवादिरामचन्द्रार्यस्य प्रियशिष्यश्च[98] इति।

द्वितीयस्तु श्रीहरिनारायण–आप्टेमहोदयैः सम्पादितः पुण्यपत्तनस्थ–आनन्दाश्रम–मुद्रणालयद्वारा 1911 क्रि० प० तमे संवत्सरे प्रकाशितः। अत्र ग्रन्थकर्तुर्नाम रामकिङ्करधर्म इति निर्दिष्टम्। गुरोश्च नाम प० प० श्रीमुकुन्दगोविन्दः[99]। रामकिङ्करपदं विरुदमेव भवितुम् अर्हति न तु नाम्न्यन्तर्गतं स्यात्। रामपदस्य च श्लेषेण श्रीराम इति श्रीमन्त्रवादिरामचन्द्रार्य इति चार्थो भवितुम् अर्हति। अतः पूर्वस्मात् सम्पादनाद् वैशिष्ट्यम् अत्र न वयं गृह्णीमः। अनन्तरे द्वेऽपि सम्पादने क्रमात् 1911 क्रि० प०, 1916 क्रि० प० संवत्सरयोः चौखम्बा–संस्कृतमालाद्वारा सम्पन्ने[100]। अनयोरुभयोरपि श्रीमुकुन्दगोविन्द–

श्रीचरणशिक्षितः श्रीरामानन्दसरस्वती ग्रन्थकर्तृत्वेनोल्लिखितः। वस्तुतः सर्वे एते ग्रन्थास्तुल्यरूपास्तिष्ठन्ति।

(ख) विहाय चैतान् चतुरो मुद्रापितग्रन्थान् G.O.M.L. ग्रन्थालये द्वौ[101], अड्यार्ग्रन्थालये नव[102] च लिखितग्रन्था उपलभ्यन्ते। एषु केचिद् असम्पूर्णाः। बहुषु प्रतिपादं प्रत्यध्यायं च ग्रन्थान्तगद्यानि लिखितानि। सर्वाण्यपीमानि ग्रन्थान्तगद्यानि मया परीक्षितानि। 'धर्मभट्टः' 'धर्माभट्टः' 'रामकिङ्करधर्म' इति च ग्रन्थकर्तुर्नाम उपलभ्यते। एवं 'श्रीमुकुन्दाश्रमः' 'श्रीमुकुन्दः' 'श्रीमुकुन्दानन्द' इति चास्य गुरुर्निर्दिष्टः। कुत्रचित् मन्त्रवादिरामचन्द्रार्योऽपि गुरुरित्याख्यातः। केषुचित् पितुर्नामधेयं तिरुमलाचार्य इति लिखितम् अस्ति। न तु यत्र कुत्रापि 'रामानन्द' इति ग्रन्थकर्तुर्नाम दृश्यते।

(ग) एवं सर्वमातृकाप्रमाणेन धर्माभट्टकर्तृकोऽयमेव ग्रन्थो रामानन्दसरस्वतीकर्तृकत्वेन चौखम्बाप्रकाशनेन प्रकाशितः। अत एक एवायम् आन्ध्रद्राविडमहाराष्ट्रेषु 'धर्माभट्ट' इति नाम्ना, उत्तरदेशे पुनः 'रामानन्दसरस्वती' इति आश्रमनाम्ना च प्रसिद्धिम् अवाप। मन्ये तावद् धर्माभट्टस्यैव आश्रमकृतं रामानन्दसरस्वतीति अन्यत् नामधेयम् आसीत्।

(घ) अन्योऽपि विषयोऽत्र सूच्यते– D 4689 अङ्काङ्किते G.O.M.L ग्रन्थालयीयतालग्रन्थस्य अन्ते लेखकेनैवं लिखितम् अस्ति– "अक्षयसंवत्सरमार्गशीर्षकृष्णाष्टमी–भृगुवासरं यावद् रामानन्दसूत्रवृत्तिम् अवसरालपद्मराजुकृते अहङ्किनागन्नः सम्पूर्णम् अलिखत्" इति। अयम् अवसरालपद्मराजः पीठिकापुरे (गोदावरीमण्डलम्) 1800 क्रि० प० प्रान्तकाले आसीदिति ज्ञायते[103]। किञ्च D इत्यङ्काङ्किता ग्रन्थाः 1910 क्रि० प० तः पूर्वमेव G.M.O.L. ग्रन्थालयेन संगृहीता इति प्रामाणिकतया ज्ञायते। एवञ्च लेखकेन निर्दिष्टोऽक्षयसंवत्सरोऽनन्तरगतो न भवितुम् अर्हति। किन्तु ततोऽनन्तरपूर्वो वा ततोऽपि पूर्वो वा स्यात्। अनन्तरपूर्वस्य ग्रहणेऽपि प्रायः 110 संवत्सरा अतीता भवन्ति। ग्रन्थान्तगद्ये 'धर्माभट्टस्य कृतौ' इति स्वहस्ताभ्यां विलिख्यापि पुनः 'रामानन्दसूत्रवृत्तिः'

इति तेनैव स्वयमुट्टङ्कनं प्रायः 1800 क्रि० प० प्रान्तकाल एव धर्माभट्टस्य रामानन्द इति नामान्तरसत्त्वम् अनुमापयति।

(ङ) यद्यपि भाष्यरत्नप्रभायाः कर्तृविषये महती चर्चा वर्तते, गोविन्दानन्दो वा रामानन्दो वा अन्यो वा अस्याः कर्तेति, तथापि तस्याः पण्डितलोके विद्यमानेन 'रामानन्दीयमिति' प्रचुरतरव्यवहारेण रामानन्दकर्तृकत्वं निश्चित्य कथञ्चिद् भाष्यरत्नप्रभा-ब्रह्मामृतवर्षिणीग्रन्थयोर्नामसाम्याद् विषयैक्याच्च एककर्तृकत्वं साधनीयं भवति।

किञ्च ब्रह्मामृतवर्षिण्यां दृश्यमानानि बहूनि वाक्यानि तथैव दृश्यन्ते भाष्यरत्नप्रभायाम्। एवञ्च प्रथमं विस्तृतव्याख्यां रत्नप्रभां विरचय्य अनन्तरं पठितृजनसौविध्यार्थं वृत्तौ तत्संगृहीतवान् स्वयमेवेति वक्तुं शक्यते। एतदपि भाष्यरत्नप्रभा-ब्रह्मामृतवर्षिणीकारयोरभिन्नत्वे स्पष्टं प्रमाणं भवति[104]।

एवमेतैः प्रमाणैः कथञ्चिद् भाष्यरत्नप्रभा-ब्रह्मामृतवर्षिण्योः कर्ता अभिन्न इति साधयितुं शक्यते। अत एव भाष्यरत्नप्रभापि धर्माभट्टेन लिखितेति भाति; किन्तु भाष्यरत्नप्रभाकारो धर्माभट्टः साहित्यरत्नाकरकारो धर्मसूरिश्च अभिन्नौ वा भिन्नौ वेत्यत्र किञ्चिद् विमृशामः।

### 1.4.1.2 धर्मसूरि-धर्माभट्टौ भिन्नावेव

(क) धर्माभट्टो धर्मसूरिरिति चानयोर्नाम्नोः साम्यं विना किमपि अभिन्नत्वसाधकं प्रमाणं युक्तिसहं न विद्यते। यत्तु कैश्चिद्[105] रामभक्तत्वं रामाय कृतिसमर्पणमित्यादिकमेव हेतुतया निरूपितं तत् सर्वथा व्यभिचरितमित्युपेक्ष्यमेव।

(ख) साहित्यरत्नाकरे नरकासुरविजयव्यायोगे च स्वनाम्नो लेखनावसरे सर्वत्र नियमेन "वारणासि" इति गृहनामापि लिखति। किन्तु ब्रह्मामृतवर्षिण्यां स्वनाम्नः स्मरणावसरे कुत्रचिदपि एकवारमपि गृहनाम नैव स्वीकृतम्। यदि गृहस्य नामग्राहम् अकरिष्यत्, नाभविष्यद् अवसरोऽस्य महतो विचारस्य। ब्रह्मामृतवर्षिण्यां स्वगुरुनाम यत्र यत्र स्मरति तत्र सर्वत्र 'मन्त्रवादि' इति तदीयगृहनामापि नियमेन स्मरति[106]। एवञ्च गृहनाम्नो लेखने अभ्यासवतोऽपि स्वविषये तथाकरणमाश्चर्यमेव जनयति।

(ग) साहित्यरत्नाकरे पितुर्नामधेयं पर्वतेश इति मातुश्च नामधेयं यल्लमाम्बा इति च स्पष्टम् अभिहितम् अस्ति। नरकासुरविजयव्यायोगेऽपि पर्वतेश इत्येव पितुर्नाम स्मृतम्[107]। न तु एकस्मिन्नप्यवसरे तिरुमलाचार्य इति पितुर्नाम तयोर्निर्दिष्टम्। ब्रह्मामृतवर्षिण्यां तु यत्र पितुर्नाम स्मरति तत्र सर्वत्र नियमेन तिरुमलाचार्य इत्येव पितुर्नाम लिखति, न तु कदाचिदपि पर्वतेश इति[108]। मातुर्नामोद्घाटनं तु जातुचित् नास्त्येव। एतेन पितृनाम्नो भेदः संलक्ष्यते।

अथ यदाहू राघवाचार्याः 'तिरुमलाचार्य' इति आन्ध्रशब्दस्य पर्वतेश इति संस्कृतीकरणं जातम्, तच्चिन्त्यम्। तिरुमल इति आन्ध्रपदस्य "श्रीपर्वतः" "श्रीशैल" इत्येव संस्कृतीकरणं भवितुम् अर्हति, न तु पर्वतेश इति। पर्वतेश इति पदस्य गिरीशः, शिव एव अभिधेयोऽर्थः। किञ्च साहित्यरत्नाकरे यत्र अनेकवारं मातुर्नाम स्मृतं तत्र सर्वत्र "यल्लमाम्बा" इति संस्कृताम्बाशब्दयोजन-पूर्वकमान्ध्रनामैव स्मृतम् (पृ० 4, 13), आन्ध्रनामधेयस्मरणेऽभ्यस्तो धर्मसूरिः केवलं पितृनामनि संस्कृतीकरणमाश्रितवानिति न वक्तुं शक्यते।

(घ) ब्रह्मामृतवर्षिण्यां स्वगुरुर्महता आदरेण स्मृतः "श्रीमन्त्र-वादिरामचन्द्रार्यशिष्यस्य" इत्यादिना[109]। अयं मन्त्रवादिरामचन्द्रार्य आश्रमगुरुर्न भवितुम् अर्हति धर्माभट्टस्य। तत्कारणं तु परमहंसपरिव्राजकाचार्य इति विरुदेन सह श्रीमुकुन्दाश्रमश्रीचरणा मन्त्रवादिरामचन्द्रार्यैः सह सर्वत्र गुरुत्वेन स्मृताः। किञ्च धर्माभट्टकर्तृकत्वेन अभिमतायां रत्नप्रभायामाश्रमगुरुपरम्परा स्पष्टम् अभिहिता यत्र न दृश्यते मन्त्रवादिरामचन्द्रार्यनामधेयम्[110]। अतो मन्त्रवादिरामचन्द्रार्यः पूर्वाश्रमगुरुरेव, न त्वाश्रमगुरुः। अतो वस्तुतः श्रीमुकुन्दो वा मुकुन्दगोविन्दो वा आश्रमगुरुरिति वाच्यम्। आश्रमस्वीकारानन्तरमपि पूर्वाश्रमगुरुषु विद्यमानेन भक्तिभावेन तानपि कुत्रचित् स्मरति धर्माभट्टः। तथा च किमिति नाम पूर्वाश्रमविरचितयोः साहित्यरत्नाकरनरकासुरविजयव्यायोगयोरेकवारमपि मन्त्रवादि-रामचन्द्रार्या न स्मृताः, यदि उभावपि धर्माभट्टौ अनन्यौ स्याताम्?

साहित्यरत्नाकरस्य तालपत्रमातृकास्वपि एकत्रापि न दृश्यते मन्त्रवादिरामचन्द्रार्यनाम्नः स्मरणम्।

(ङ) पूर्वलिखितौ साहित्यरत्नाकरनरकासुरविजयव्यायोगौ कुत्रचिद् एकवारमपि न स्मृतौ ब्रह्मामृतवर्षिण्यां भाष्यरत्नप्रभायां वा। अथ यदुक्तम्[111] आश्रमभेदाद् तुरीयाश्रमस्वीकारानन्तरं पूर्वाश्रम-विरचितग्रन्थस्य स्मरणस्य अनुचितत्वात्, विनयाच्च तथा न कृतमिति, एतदपि अयुक्तम्। यथा पूर्वग्रन्थे नरकासुरविजयव्यायोगे कृता सूर्यनमस्क्रिया[112] तथैव अनूदिता साहित्यरत्नाकरे (पृ० 1) तथा देवतानमस्क्रियार्थानां श्लोकानां ब्रह्मामृतवर्षिणी-भाष्यरत्नप्रभयो-रनुवदने विरोधाभावात्।

किञ्च 'शरीररूपकविन्यस्तगृहीतेर्दर्शयति च'[113] इत्यादि सूत्रेष्वपि यत्र आलङ्कारिकाणां मतपरीक्षणस्य अवकाशो वर्तते, तत्रापि भाष्यरत्नप्रभायां ब्रह्मामृतवर्षिण्यां वा न दृश्यते कोऽप्यलङ्कारशास्त्रसम्बन्धी विचारः। नैतदप्रतीक्ष्यमस्ति प्रसिद्धालङ्कारिकस्य धर्मसूरेः। अलङ्कारशास्त्रसम्पर्कादेव तत्रैव सूत्रे अप्पय्यदीक्षिता बहुदीर्घम् अलङ्कारनिर्णयपरं व्याख्यानं कृतवन्तः परिमले[114] न्यायरक्षामणौ[115] च।

### 1.4.1.3 निगमनम्

तिरुमलाचार्यस्य सूनुर्मन्त्रवादिरामचन्द्रार्यस्य प्रियशिष्योऽज्ञातवंशीयः श्री-प० प० मुकुन्दगोविन्दसकाशात् तुरीयाश्रमं प्रविश्य रामानन्द इति आश्रमनाम्ना ख्यातो धर्मभट्टः, प्रकृतधर्मसूरेर्भिन्नः, स एव भाष्यरत्नप्रभा-ब्रह्मामृत-वर्षिणीग्रन्थयोः कर्ता। सः पेदपुलिवर्रुग्रामाभिजन इति वक्तुमपि प्रमाणानि न सन्तीति।

### 1. 4.2 धर्मसूरिकर्तृकत्वेन निश्चितानां कृतीनां परिचयः

अथ धर्मसूरिकर्तृकत्वेन निश्चितानां ग्रन्थानां परिचयोऽधुना सम्पाद्यते। तेषु नरकासुरविजयव्यायोगमेकं विना इतरे सर्वे ग्रन्था अधुना नाममात्रशेषतां गताः। तथापि साहित्यरत्नाकरे तत्र तत्र तेभ्य उदाहरणानि गृहीतवान् इत्यतस्तेषां स्वरूपं यत्किञ्चित् ज्ञायते।

### 1.4.2.1 कृष्णास्तुतिः

कृष्णानद्याः स्तुतिरेषा, न तु भगवतः कृष्णस्य। अधुना अनुपलभ्यमानतां

(ग) साहित्यरत्नाकरे पितुर्नामधेयं पर्वतेश इति मातुश्च नामधेयं यल्लमाम्बा इति च स्पष्टम् अभिहितम् अस्ति। नरकासुरविजयव्यायोगेऽपि पर्वतेश इत्येव पितुर्नाम स्मृतम्[107]। न तु एकस्मिन्नप्यवसरे तिरुमलाचार्य इति पितुर्नाम तयोर्निर्दिष्टम्। ब्रह्मामृतवर्षिण्यां तु यत्र पितुर्नाम स्मरति तत्र सर्वत्र नियमेन तिरुमलाचार्य इत्येव पितुर्नाम लिखति, न तु कदाचिदपि पर्वतेश इति[108]। मातुर्नामोद्घाटनं तु जातुचित् नास्त्येव। एतेन पितृनाम्नो भेदः संलक्ष्यते।

अथ यदाहू राघवाचार्याः 'तिरुमलाचार्य' इति आन्ध्रशब्दस्य पर्वतेश इति संस्कृतीकरणं जातम्, तच्चिन्त्यम्। तिरुमल इति आन्ध्रपदस्य "श्रीपर्वतः" "श्रीशैल" इत्येव संस्कृतीकरणं भवितुम् अर्हति, न तु पर्वतेश इति। पर्वतेश इति पदस्य गिरीशः, शिव एव अभिधेयोऽर्थः। किञ्च साहित्यरत्नाकरे यत्र अनेकवारं मातुर्नाम स्मृतं तत्र सर्वत्र "यल्लमाम्बा" इति संस्कृताम्बाशब्दयोजन-पूर्वकमान्ध्रनामैव स्मृतम् (पृ० 4, 13), आन्ध्रनामधेयस्मरणेऽभ्यस्तो धर्मसूरिः केवलं पितृनामनि संस्कृतीकरणमाश्रितवानिति न वक्तुं शक्यते।

(घ) ब्रह्मामृतवर्षिण्यां स्वगुरुर्महता आदरेण स्मृतः "श्रीमन्त्र-वादिरामचन्द्रार्यशिष्यस्य" इत्यादिना[109]। अयं मन्त्रवादिरामचन्द्रार्य आश्रमगुरुर्न भवितुम् अर्हति धर्माभट्टस्य। तत्कारणं तु परमहंसपरिव्राजकाचार्य इति विरुदेन सह श्रीमुकुन्दाश्रमश्रीचरणा मन्त्रवादिरामचन्द्रार्यैः सह सर्वत्र गुरुत्वेन स्मृताः। किञ्च धर्माभट्टकर्तृकत्वेन अभिमतायां रत्नप्रभायामाश्रमगुरुपरम्परा स्पष्टम् अभिहिता यत्र न दृश्यते मन्त्रवादिरामचन्द्रार्यनामधेयम्[110]। अतो मन्त्रवादिरामचन्द्रार्यः पूर्वाश्रमगुरुरेव, न त्वाश्रमगुरुः। अतो वस्तुतः श्रीमुकुन्दो वा मुकुन्दगोविन्दो वा आश्रमगुरुरिति वाच्यम्। आश्रमस्वीकारानन्तरमपि पूर्वाश्रमगुरुषु विद्यमानेन भक्तिभावेन तानपि कुत्रचित् स्मरति धर्माभट्टः। तथा च किमिति नाम पूर्वाश्रमविरचितयोः साहित्यरत्नाकरनरकासुरविजयव्यायोगयोरेकवारमपि मन्त्रवादि-रामचन्द्रार्या न स्मृताः, यदि उभावपि धर्माभट्टौ अनन्यौ स्याताम्?

साहित्यरत्नाकरस्य तालपत्रमातृकास्वपि एकत्रापि न दृश्यते मन्त्रवादिरामचन्द्रार्यनाम्नः स्मरणम्।

(ङ) पूर्वलिखितौ साहित्यरत्नाकरनरकासुरविजयव्यायोगौ कुत्रचिद् एकवारमपि न स्मृतौ ब्रह्मामृतवर्षिण्यां भाष्यरत्नप्रभायां वा। अथ यदुक्तम्[111] आश्रमभेदाद् तुरीयाश्रमस्वीकारानन्तरं पूर्वाश्रम-विरचितग्रन्थस्य स्मरणस्य अनुचितत्वात्, विनयाच्च तथा न कृतमिति, एतदपि अयुक्तम्। यथा पूर्वग्रन्थे नरकासुरविजयव्यायोगे कृता सूर्यनमस्क्रिया[112] तथैव अनूदिता साहित्यरत्नाकरे (पृ० 1) तथा देवतानमस्क्रियार्थानां श्लोकानां ब्रह्मामृतवर्षिणी-भाष्यरत्नप्रभयो-रनुवदने विरोधाभावात्।

किञ्च 'शरीररूपकविन्यस्तगृहीतेर्दर्शयति च'[113] इत्यादि सूत्रेष्वपि यत्र आलङ्कारिकाणां मतपरीक्षणस्य अवकाशो वर्तते, तत्रापि भाष्यरत्नप्रभायां ब्रह्मामृतवर्षिण्यां वा न दृश्यते कोऽप्यलङ्कारशास्त्रसम्बन्धी विचारः। नैतदप्रतीक्ष्यमस्ति प्रसिद्धालङ्कारिकस्य धर्मसूरेः। अलङ्कारशास्त्रसम्पर्कादेव तत्रैव सूत्रे अप्पय्यदीक्षिता बहुदीर्घम् अलङ्कारनिर्णयपरं व्याख्यानं कृतवन्तः परिमले[114] न्यायरक्षामणौ[115] च।

### 1.4.1.3 निगमनम्

तिरुमलाचार्यस्य सूनुर्मन्त्रवादिरामचन्द्रार्यस्य प्रियशिष्योऽज्ञातवंशीयः श्री-प० प० मुकुन्दगोविन्दसकाशात् तुरीयाश्रमं प्रविश्य रामानन्द इति आश्रमनाम्ना ख्यातो धर्माभट्टः, प्रकृतधर्मसूरेर्भिन्नः, स एव भाष्यरत्नप्रभा-ब्रह्मामृत-वर्षिणीग्रन्थयोः कर्ता। सः पेदपुलिवर्रुग्रामाभिजन इति वक्तुमपि प्रमाणानि न सन्तीति।

### 1. 4.2 धर्मसूरिकर्तृकत्वेन निश्चितानां कृतीनां परिचयः

अथ धर्मसूरिकर्तृकत्वेन निश्चितानां ग्रन्थानां परिचयोऽधुना सम्पाद्यते। तेषु नरकासुरविजयव्यायोगमेकं विना इतरे सर्वे ग्रन्था अधुना नाममात्रशेषतां गताः। तथापि साहित्यरत्नाकरे तत्र तत्र तेभ्य उदाहरणानि गृहीतवान् इत्यतस्तेषां स्वरूपं यत्किञ्चित् ज्ञायते।

### 1.4.2.1 कृष्णास्तुतिः

कृष्णानद्याः स्तुतिरेषा, न तु भगवतः कृष्णस्य। अधुना अनुपलभ्यमानतां

गताया अस्या एक एव श्लोकः साहित्यरत्नाकरे वृत्त्यनुप्रासस्य उदाहरणतया दत्तः।

'यथा ममैव कृष्णास्तुतौ–

कृष्णा मुष्णातु सिष्णास्वभिजनवृजिनान्याशु दुर्वारवारा
वाराशेरादिदारारुचिररुचिरहीभेनभेनाच्छफेना।
शुभ्राशुभ्राम्यदूर्मिभ्रमकरमकरग्रामणीग्रामनीडा
गाधागाधाररोधो विवरभुवि वलद्धीवरौघा वरौघा'।।

(पृ० 87)

स्वभावोक्तिसम्भरिताः श्रवणमात्रेण कृष्णानद्या उत्कूलप्रवाहवेगम् अनुमापयन्तो धर्मसूरेः कृष्णानद्या सह आबाल्यं विद्यमानस्य मधुरमधुरस्य अनुभवस्य दर्पणायमानाः कियन्तोऽप्येतादृशाः श्लोकाः कालगर्भे विलीनाः।

### 1.4.2.2 सूर्यशतकम्

सुप्रसिद्धस्य मयूरकवेः सूर्यशतकम् अनुकुर्वाणेन धर्मसूरिणापि स्रग्धरावृत्ते शतकमिदं विरचितम्। शतकनाम्नः सामर्थ्यादेव शतश्लोकात्मिका एषा स्तुतिः। शतकाद् अस्माद् द्वौ श्लोकौ चित्रबन्धप्रकरणे धर्मसूरिणा उदाहृतौ। उदाहृतयो-र्द्वयोरपि चित्रबन्धोदाहरणरूपत्वाद् इदं ज्ञायते यत् सुबद्धस्य बहुविधबन्धालङ्कृतस्य शतकस्य अस्य अर्थावबोधो व्याख्यानं विना नैव सम्भवति। अथ ग्रन्थगतं बन्धद्वयम् अधो निर्दिश्यते–

नागबन्धस्य उदाहरणम्–

"बिम्बं ध्वान्तव्यधादं कनकधरशिरश्चारिशोणद्युदाप्तं
पद्माधिप्रेमसोमक्षतदमुरुमुदः कर्तृकव्यूहहारि।
शेमुष्या दातृदैत्याधिपतुदतुलकर्मा मयाधानकल्प्या
कस्येह क्षीणतामुत्क्षिपतु पटु परं दैवमर्चिः कदम्बम्।।"

(पृ० 90)

अष्टदलपद्मबन्धस्य उदाहरणम्–

"या दासत्राणरक्ता ततिरिनहरितां ज्ञाभिनव्यास्तमाया
या मास्तव्यानभिज्ञानवतु मरकतग्रामसश्रीरजेया।
याजेरश्रीसमग्रा यदरिततिरसक्तासरच्चाजरा या
या राजच्चारसक्तानिशमियमघमुक्ता रणत्रासदा या।।"

(पृ० 91)

### 1.4.2.3 बालभागवतम्

धर्मसूरिकृतमिदं महाकाव्यम् अधुना नोपलभ्यते। बालभागवतमिति नाम्ना अनेकैः कविभिर्बहूनि काव्यानि लिखितानि। बालभागवतस्य अस्य प्रस्तावो न केवलं साहित्यरत्नाकरे, किन्तु नरकासुरविजयव्यायोगेऽपि दृश्यते। यथा –

"सूत्रधारः –

अस्ति खलु अत्रापि अमृतरसनिष्यन्दी सकलतमस्तोमपरिपन्थी नर-हरेर्नरकासुरनिबर्हणोदाहरणरूपो गुणशिरोमणिः"।

इत्थमेव एतत् कविना अस्मिन् काव्ये बालभागवतेऽप्युदीरितम्-

"विनिन्दिताः केचन पङ्कजन्मना
जडेन दोषोपहिता अपि स्वतः।
ममोक्तयो विष्णुपदस्पृशो बुधैः
कला इव ग्राह्यतमाः कलानिधेः।।"[116]

साहित्यरत्नाकरेऽपि क्रियाफलोत्प्रेक्षाया उदाहरणत्वेन बालभागवताद् अस्मात् कश्चन श्लोक उदाहृतः। यथा –

"निविश्य नीरन्ध्रनिकुञ्जमध्यमा-
नमी समीराः सहसा ससम्भ्रमाः।
न शक्नुवन्तीह पुनर्विनिर्गमे
लताङ्गनालिङ्गनलालसा ध्रुवम्।।"

(पृ० 110)

भगवतः श्रीकृष्णस्य लीलामृतपाययितुरस्य काव्यस्य अनुपलभ्यमानता सहृदयानां दुःखाय कल्पते।

### 1.4.2.4 हंससन्देशः

अनेनापि नाम्ना नैकानि खण्डकाव्यान्युपलभ्यन्ते। धर्मसूरेर्हंससन्देशे सीतां प्रति रामेण प्रेषितः सन्देश उपवर्णित इत्युत्प्रेक्ष्यते। धर्मसूरेः कृतिषु इदमेकमेव काव्यं प्राकृतभाषोपनिबद्धम् अस्ति। एतदेव काव्यं कवेरस्य न केवलं संस्कृते, अपि च प्राकृते कवित्वलेखनपाटवं प्रदर्शयति। साहित्यरत्नाकर एक एव श्लोकोऽस्मात् काव्यात् जागरावस्थाया उदाहरणत्वेन दत्तः। तद्यथा –

"जाअं सीआणअणजुअलं लोहिअं जाअरावा
किं वा तम्मं मअणदहणज्जालजालाहिदावा।
चित्तारद्धे सुरअविहए चुम्बणाणं पहेदे
रत्तं किं वा रहुपइमुहे वीडिआराअजोआ।।" इति।

(पृ० 252)

इदमपि काव्यं नोपलभ्यते।

### 1.4.2.5 कंसवधम्

नाटकमिदं नोपलभ्यते। नाटकाद् अस्मात् त्रयः श्लोका उद्धृताः साहित्यरत्नाकरे। अन्यैरपि कंसवधनाम्ना नाटकानि रचितानि प्रसिद्धानि वर्तन्ते। साहित्यरत्नाकरे यद् स्वभावोक्तेरुदाहरणं दत्तं तत् कविना नाटकादस्मादुदाहृतम्। तद्यथा-

"वक्षोजाङ्गणलम्बितुम्बिरुचिरामाबिभ्रती वल्लकी-
मीषद्दर्शितबाहुमूलसुषमा तन्त्रीस्पृशन्ती नखैः।
मन्दस्पन्दितकुण्डलालकभरा माधुर्यधुर्यस्वरा
किञ्चिद् कुड्मलितेक्षणा स्मितमुखी केयं शनैर्गायति।।"

(पृ० 153)

अथ अद्भुतरसस्य उदाहरणं साहित्यरत्नाकरे कंसवधनाटकाद् उद्धृतम्। यथा -

"आरूढः कुरथं रजोन्धितदृशा सूतेन सञ्चोदितै-
रश्वैराशुविनश्वरैरयुगपत्प्रक्रान्तचक्रं दृढम्।
चापे हीनगुणे विपत्रविशिखं सन्धाय निन्येऽद्भुतं
शूलोत्कम्पिकरो रथी विषमदृक्तिस्त्रः पुरः पञ्चताम्।।" इति।

(पृ० 260)

एवं भावसन्धेरुदाहरणम्-

"रोषाद् दक्षिणमीक्षणं विपुलयन् वामं भयान्मीलयन्
वक्त्रार्धे क्वचिदीरयन् कटुगिरं चाटूक्तिमप्यन्यतः।
एकेनाशु पदा पुरः परिसरन् अन्येन पश्चाद्व्रजन्
काञ्चिज्जातु रणोन्मुखे मयि दशां लेभेऽर्धनारीश्वरः।।"

(पृ० 273)

### 1.4.2.6 नरकासुरविजयव्यायोगः

दशरूपकेष्वन्यतमो व्यायोगः। तस्य च लक्षणमुक्तम् -

"यत्र ख्यातेतिवृत्तं स्यादुद्धतो नायको मतः।
गर्भावमर्शराहित्यं डिमवद्रसपोषणम्।।
एकवासरकार्यं च स व्यायोगो महारणः।।[117]"

इति। अत्र कुमारस्वामी[118] -

"शान्तशृङ्गारहास्यरहिताः रौद्रप्रधानकाः षड्रसाः कैशिकीवर्जमितरवृत्तयश्च इत्येतद् डिमवद्रसपोषणमित्यतिदेशेन लभ्यते"।

अस्त्रीनिमित्तोऽत्र महारणः। तदुक्तम्-

'अस्त्रीनिमित्तसंग्रामो जामदग्न्यजयो यथा' इति।
'व्यायुज्यन्ते अस्मिन् बहवः पुरुषा इति व्यायोगः' इति।

धर्मसूरेरयं नरकासुरविजयव्यायोगः 'नरकासुरवध' इति 'नरकध्वंस' इति च व्यवह्रियते[119]। व्यायोगोऽसावान्ध्रलिप्यां बहोः कालात् प्राक् मुद्रितः[120]। 1961 क्रि० प० तमे संवत्सरे हैदराबादनगरस्थसंस्कृतपरिषद्द्वारा देवनागरिलिप्यामपि मुद्रितः।

अयं व्यायोगो महामहोपाध्यायश्री-कोक्कण्ड-वेङ्कटरत्नं-पन्तुलु-महोदयै-रान्ध्र्याम् अनूदितः[121]। एते पन्तुलुमहोदयाः 1842 क्रि० प० तमे मार्चमासे चतुर्दशे दिने आन्ध्रदेशे विन्नकोण्डग्रामे जनिम् अलभन्त। एतेषां पिता श्रीकोक्कण्ड-नरसिंगरावुपन्तुलुः। माता श्रीमती रामायम्मा। एतैः श्रीबिल्वेश्वरीयादयोऽनेके ग्रन्था निबद्धाः। आङ्ग्लपरिपालकैरेते महामहोपाध्यायविरुदेन सम्मानिताः। 1915 क्रि० प० तमे वत्सरे एते दिवं गताः[122]। एतेषाम् आन्ध्रानुवादस्य इदं वैशिष्ट्यं यत् संस्कृतव्यायोगे यत्र श्लोको यत्र च गद्यम् अस्ति, आन्ध्र्यामपि तत्र तत्र तथैव अनूदितम् अस्तीति।

व्यायोगलक्षणं पूर्वोदाहृतम् अनुसृत्यैव अत्र श्रीकृष्णनरकासुरयोर्मध्ये सम्प्रवृत्तो महारण इतिवृत्तत्वेन स्वीकृतः। रौद्रोऽत्र मुख्यो रसः। वृत्तिः प्रायः आरभटी। नरकासुरस्य श्रीकृष्णस्य च औद्धत्यं ग्रन्थेऽस्मिन् प्रतिपादितम्। नान्द्यां भगवतो नीलाचलनायकस्य जगन्नाथस्य स्मरणात्, तदनन्तरग्रन्थभागे च

नीलाचलस्य विस्तरेण वर्णनात्, जगन्नाथीयशारदोत्सवनिर्देशाच्च पुरुषोत्तमक्षेत्र-भूतायां जगन्नाथपुर्यां भगवतो जगन्नाथस्य शारदोत्सवेषु प्रथमप्रदर्शनम् अस्य व्यायोगस्य सम्पन्नम् इति स्पष्टम्[123]।

### 1.4.2.7 साहित्यरत्नाकरः

धर्मसूरिः स्वेन विरचितस्य अलङ्कारग्रन्थस्य साहित्यरत्नाकर इति अन्वर्थं नाम अकरोत्। यतोऽयं ग्रन्थः साहित्यशास्त्रसम्बन्धिनां रत्नवदत्यन्तोपादेयानां विषयाणामाकरो भवति। रत्नाकर इति नाम्नोऽनुरूपतया अत्रत्या दश अध्याया-स्तरङ्गशब्देन व्यवहृताः। तत्र प्रतितरङ्गं विषयविभागम् अधिकृत्य सङ्क्षिप्त-परिचयोऽधस्ताद् दीयते।

#### प्रथमः – ग्रन्थारम्भसमर्थनतरङ्गः

आदौ पञ्चभिः श्लोकैः क्रमाद् बालगजानन–भारती–विवस्वत्–महेश्वर-महाविष्णूनां स्तुतिरूपं मङ्गलमाचरितम्। षष्ठश्लोकादारभ्य सप्तविंशति-श्लोकपर्यन्तमेकविंशतिश्लोकैर्जगत्सृष्टिक्रमः, स्ववंशोत्पत्तिः, प्रपितामहत्रिपुरारि-सोमयज्वप्रभृतयः पुरुषाश्च वैशद्येन वर्णिताः। ततः 'रसालङ्क्रियासंस्फूर्तिं कर्तुं साहित्यरत्नाकरं समुदञ्चयेयम्' इति प्रतिज्ञाय, स्वालङ्कारग्रन्थस्य क्षोदीयनायकेनानिबद्धत्वं प्रत्युत दिव्येन उत्तमनायकेन श्रीरामेण घटितत्वं चोक्त्वा, अन्यग्रन्थवैलक्षण्यं संसाधितम्। अनन्तरं काव्यम् अमीमांस्यम् इति पूर्वपक्षः पञ्चधा प्रदर्श्य प्रबलयुक्तिप्रमाणप्रदर्शनपूर्वकं निरस्तः। तन्मुखेन च काव्यप्रयोजनानि, काव्यमीमांसाशास्त्रस्य पुरुषार्थपर्यवसानता, निषेधाविषयता, अध्ययनविधिविषयता इत्यादीन् विषयान् समुपन्यस्तवान्। अन्ते च काव्यार्थसम्भिन्नान्यनेकानि श्रुतिवाक्यान्युदाहृतानि।

#### द्वितीयः – वाचकशब्दार्थवृत्तिनिरूपणतरङ्गः

तरङ्गेऽस्मिन् क्रमाद् महाकुलीनतादिसप्तनायकगुणाः, नायकलक्षणं, धीरोदात्तादिचतुर्विधनायकभेदाः, अनुकूलादयश्चत्वारः शृङ्गारनायकाः, पीठमर्दादिचतुर्विधनायकसहायकाः, स्वाधीनपतिकाद्या अष्टौ शृङ्गारनायिकाः, तासां च मुग्धादिरूपेण त्रैविध्यं चोपपादितम्। ततः प्रतिभाया एव प्राधान्येन काव्यहेतुत्वं,

"सगुणालङ्कृती काव्यं पदार्थौ दोषवर्जितौ।"

इति काव्यसामान्यलक्षणं चोक्त्वा वाचकादिभेदेन पदत्रैविध्यं च न्यरूपि। अनन्तरं

"साक्षात्सङ्केतितार्थस्य बोधकं तेषु वाचकम्।"

इति वाचकशब्दलक्षणमुक्त्वा तत्प्रसङ्गेनागतः शब्दार्थसम्बन्धविचारो महता प्रबन्धेन प्राचीनवैयाकरण-मीमांसक-नैयायिकानां मतविवेचनपुरस्सरं प्रत्यपादि। एवमेव समनन्तरं शक्यार्थविषयेऽपि तत्तन्मतविवेचनपूर्वकं जातिशक्तिवादः सम्यग् उदपादि। अन्ते च अभिधां सभेदां लक्षयित्वा तरङ्गम् अमुम् उपसंहृतवान्।

## तृतीयः - लक्षकशब्दार्थवृत्तिनिरूपणतरङ्गः

आदौ लक्षकशब्दलक्षणमुक्त्वा लक्षणा-

वाच्यार्थबोधे तद्योगे रूढितो वा प्रयोजनात्।
ययाऽन्यं बोधयेत् शब्दो व्यापृत्त्या साऽस्य लक्षणा।।"

इति लक्षिता। ततः सम्भवदाक्षेपसमाधानपूर्वकं लक्षणायाः शब्दव्यापारत्वं निराकृत्य अर्थव्यापारत्वमेव स्थिरीकृतम्। वाच्यार्थबाध इति पदस्य सम्बन्धानुपपत्तिरिति, मुख्यार्थस्य स्वीकारे प्रत्यक्षादिप्रमाणविरोध इति वाऽर्थ इति स्वीकरणें सोपपत्तिकं दोषान् प्रदर्श्य वाक्यप्रामाण्यानुपपत्तिरेव विवक्षितोऽर्थ इति सप्रमाणं स्थापितम्। लक्षणा चैवं विभज्य दर्शिता उदाहृता च-




प्रसङ्गाच्च जहत्स्वार्था अप्रस्तुतप्रशंसादेः, विपरीतलक्षणा व्याजस्तुतेः,

अजहत्स्वार्था समासोक्त्यादेः, सारोपे शुद्धागौण्यौ रूपकादेः, साध्यवसाने शुद्धागौण्यौ अतिशयोक्तेश्च बीजभूता इति कथितम्। प्रसङ्गादेव आलङ्कारिकाणां जहदजहल्लक्षणाङ्गीकरणावश्यकता, वेदान्त्यभ्युपगतजहदजहल्लक्षणात आलङ्कारिकाङ्गीकृतायास्तस्या वैलक्षण्यं, तत्र आलङ्कारिकाणां मतस्य खण्डनं, लक्षणातिरिक्ताया गौणीनामकवृत्तेरङ्गीकरणे दोषप्रदर्शनं, प्राभाकराङ्गीकृताया व्यक्तिलक्षणाया अर्थापत्तिप्रमाणेन गतार्थत्वं च निरूपितम्। अन्ते च फलतः सप्तविधाया लक्षणायास्त्रिविधेन सङ्करेण एकविधसंसृष्ट्या च यथायोगं मेलने असंख्येयत्वमुक्त्वा त्रिविधः सङ्करः, एकविधा च संसृष्टिरुदाहृता।

## चतुर्थः - व्यञ्जकशब्दार्थवृत्तिनिरूपणतरङ्गः

आदौ व्यञ्जकशब्दलक्षणमुक्त्वाऽनन्तरम् -

"अन्वितेषु पदार्थेषु योऽस्यार्थान्तरगोचरः।
वाक्यार्थोपस्क्रियायै स व्यापारो व्यञ्जनं भवेत्।।"

इति व्यञ्जनाया लक्षणं प्रतिपादितम्। व्यञ्जनाया विभागश्च इत्थं निरूपितः, उदाहृतश्च-




व्यङ्ग्यमपि गूढम् अगूढं चेति द्विविधं प्रतिपादितम् उदाहृतं च। प्रसङ्गाच्च लक्षणामूलाया व्यञ्जनायाः स्थापनं, तात्पर्याख्यवृत्तेर्निराकरणं, शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतूनां संयोगादीनां चतुर्दशानामुदाहरणं, व्यञ्जनाया उभयशक्तिमूलत्वे शङ्कानिरसनं, सर्वेषाम् अर्थानां व्यञ्जकत्वपक्षे काव्यप्रकाशकाराभिमते स्वासन्तृप्तेः प्रकटनं च कृतम्।

## पञ्चमः - गुणनिरूपणतरङ्गः

काव्यसामान्यलक्षणे 'पदार्थौ' इत्यस्य सगुणालङ्कृती इति विशेषणम् अनुपादेयमिति पूर्वपक्षम् -

"तत् किम् अव्यापकत्वाद् अचारुताहेतुत्वाद् अन्यतरवैयर्थ्याद् वा" इति त्रेधा विकल्प्य, पुनरपि किमुभयोश्चारुताहेतुत्वसाम्याद् अभेदाद् अन्यतर-वैयर्थ्यम् अथवा परस्परव्यावर्तकधर्माभावाद्वा आहोस्वित् कृतकरत्वाद्वा इति तृतीयकल्पं त्रेधा विकल्प्य आहत्य सम्पन्नानां पञ्चविकल्पानां युक्तिप्रमाण-प्रदर्शनपूर्वकं निराकरणमुखेन गुणालङ्कारयोर्वैलक्षण्यं महता प्रबन्धेन भोजादिपर-मतनिराकरणपूर्वकं साधितम्।

समवायवृत्त्या रसोपस्कारकत्वं गुणसामान्यलक्षणम्।
संयोगवृत्त्या रसोपस्कारकत्वम् अलङ्कारसामान्यलक्षणम्।।

इति गुणालङ्कारसामान्यलक्षणमुक्त्वा समवायसंयोगपदाभ्यां तयोः परस्परव्यावृत्तिः साधिता। समवायवृत्तित्वं च गुणानाम् अव्यवधानेन रसपोषकत्वं, संयोगवृत्तित्वं चालङ्काराणाम् अभिधादिव्यापारव्यवधानेन रसपोषकत्वमिति च स्पष्टीकृतम्। गुणानां वर्णधर्मता च आत्मधर्मौपम्येन निरस्ता।

गुणसंख्याविषयकविचारे प्रथमं माधुर्यौजःप्रसादाख्या गुणा लक्षणोदाहरणै-र्निरूपिताः। विद्यानाथोक्तेषु चतुर्विंशतिगुणेषु अर्थव्यक्तेः प्रसादे, औदार्योदात्ततौ-र्जित्यानाम् ओजसि, प्रौढि-सङ्क्षेप-सौक्ष्म्य-विस्तर-सम्मितत्व-प्रेयगति-सम्मतानाम् उक्तौ, सुकुमारताया माधुर्ये चान्तर्भावमाख्याय समाधिश्लेषयोर्गुणत्वं निराकृत्य, कान्ति-सुशब्दता-गाम्भीर्य-भाविक-रीतीनां पृथग्गुणत्वाङ्गीकारेण गुणनवकत्ववादिनां मतं सोदाहरणम् उपक्षिप्य सौशब्द्यसहितानां माधुर्यौजः-प्रसादानां चतुर्णामेव वा सौशब्द्येन विना त्रयाणामेव वा गुणत्वं संस्थापितम्।

## षष्ठः – शब्दालङ्कारनिरूपणतरङ्गः

तरङ्गेऽस्मिन् पञ्च शब्दालङ्काराः, विंशतिश्चित्रालङ्काराश्च निरूपिताः। शब्दालङ्काराः —

(1) छेकानुप्रासः (2) वृत्त्यनुप्रासः (3) लाटनुप्रासः (4) पुनरुक्त-वदाभासः (5) यमकम्।

चित्रालङ्काराः — (1) चक्रबन्धः (2) गोमूत्रिकाबन्धः (3) नागबन्धः (4) अष्टदलपद्मबन्धः (5) षोडशदलपद्मबन्धः (6) मुरजबन्धः (7) क्षुरिकाबन्धः (8) पादार्धभ्रमकम् (9) सर्वतोभद्रबन्धः (10) हलबन्धः

(11) चापबन्धः (12) गुच्छबन्धः (13) मत्स्यबन्धः (14) एकाच्कसर्वलघुनिरोष्ठ्यम् (15) निस्तालव्यम् (16) निष्कण्ठ्यम् (17) निर्दन्त्यमूर्धन्यान्तस्थोष्मकम् (18) द्व्यक्षरम् (19) एकाक्षरम् (20) सर्वश्लोकयमकम्।

## सप्तमः–अर्थालङ्कारनिरूपणतरङ्गः

तरङ्गेऽस्मिन्नादावर्थालङ्कारा अध्यवसाय-विरोध-न्याय-लोकव्यवहार-तर्कन्याय-शृङ्खलावैचित्र्य-अपह्नव-विशेषणवैचित्र्य-साधर्म्यमूलत्वोक्त्या नववर्गतया विभक्ताः। अनन्तरं सम्भवदवान्तरप्रभेदैः कुत्रचिद् इतरालङ्कार-वैलक्षण्यप्रदर्शनपूर्वकञ्च सप्ततिरुपमादयोऽलङ्काराः, चत्वारो रसवदाद्यलङ्काराः, द्वौ संसृष्टिसङ्करौ च निरूपिताः।

(1) उपमा (2) उत्प्रेक्षा (3) अतिशयोक्तिः (4) अनन्वयः (5) रूपकम् (6) परिणामः (7) अपह्नवः (8) सन्देहः (9) भ्रान्तिमान् (10) स्मरणम् (11) उल्लेखः (12) उपमेयोपमा (13) प्रतिवस्तूपमा (14) दृष्यन्तः (15) तुल्ययोगिता (16) दीपकम् (17) निदर्शना (18) व्यतिरेकः (19) सहोक्तिः (20) विनोक्तिः (21) समासोक्तिः (22) श्लेषः (23) परिकरः (24) अप्रस्तुतप्रशंसा (25) पर्यायोक्तिः (26) पर्यायः (27) परिवृत्तिः (28) विशेषः (29) परिसंख्या (30) समुच्चयः (31) तत्करः (32) समाधिः (33) विकल्पः (34) यथासंख्यम् (35) कारणमाला (36) मालादीपकम् (37) सारः (38) एकावली (39) काव्यलिङ्गम् (40) अर्थान्तरन्यासः (41) अनुमानम् (42) अर्थापत्तिः (43) आक्षेपः (44) व्याजस्तुतिः (45) विरोधः (46) विशेषोक्तिः (47) विभावना (48) विषमम् (49) समम् (50) अधिकम् (51) असङ्गतिः (52) व्याघातः (53) युक्तिः (54) भाविकम् (55) अन्योन्यम् (56) विचित्रम् (57) सामान्यम् (58) मीलनम् (59) तद्गुणः (60) अतद्गुणः (61) व्याजोक्तिः (62) स्वभावोक्तिः (63) प्रश्नोत्तरिका (64) उत्तरम् (65) वक्रोक्तिः (66) प्रत्यनीकम् (67) प्रतीपम् (68) सूक्ष्मम् (69) उदात्तम् (70) अनुकल्पः ।

1. रसवदलङ्कारः 2. प्रेयः 3. ऊर्जस्वि 4. समाहितम्।

1. संसृष्टिः 2. सङ्करः।

## अष्टमः— दोषनिरूपणतरङ्गः

तरङ्गेऽस्मिन् सप्तदश पददोषाः, चतुर्विंशतिर्वाक्यदोषाः, अष्टादश अर्थदोषाश्च लक्षिता उदाहृताश्च।

**पददोषाः –**

(1) असमर्थम् (2) अपुष्टार्थम् (3) ग्राम्यम् (4) अप्रयोजनम् (5) व्यर्थम् (6) अश्लीलम् (7) नेयार्थम् (8) क्लिष्टम् (9) असाधु (10) अप्रयुक्तिमत् (11) अप्रतीतम् (12) सन्दिग्धम् (13) विरुद्धमतिकृत् (14) परुषम् (15) अपरामृष्टविधेयांशम् (16) गूढम् (17) अन्यार्थकम्।

**वाक्यदोषाः–**

(1) शब्दहीनम् (2) क्रमभ्रष्टम् (3) विसन्धि (4) पुनरुक्तिमत् (5) व्याकीर्णम् (6) वाक्यसङ्कीर्णम् (7) अपूर्णम् (8) वाक्यगर्भितम् (9) भिन्नलिङ्गम् (10) भिन्नवचनम् (11) न्यूनोपमम् (12) अधिकोपमम् (13) भग्नच्छन्दः (14) यतिभ्रष्टम् (15) अशरीरम् (16) अरीतिकम् (17) विसर्गलुप्तम् (18) अस्थानसमासम् (19) वाच्यवर्जितम् (20) समाप्तपुनरात्तम् (21) सम्बन्धवर्जितम् (22) पतत्प्रकर्षम् (23) अधिकपदम् (24) प्रक्रमभङ्गवत्।

**अर्थदोषाः –**

(1) अपार्थम् (2) व्यर्थम् (3) एकार्थम् (4) ससंशयम् (5) अपक्रमम् (6) भिन्नम् (7) अतिमात्रम् (8) परुषम् (9) विरसम् (10) हीनोपमम् (11) अधिकोपमम् (12) असदृशोपमम् (13) अप्रसिद्धोपमम् (14) हेतुशून्यम् (15) निरलङ्कृतिः (16) अश्लीलम् (17) विरुद्धम् (18) सहचरच्युतम्।

पददोषाणां सप्तदशानामपि एक एव श्लोक उदाहरणतया निबद्ध

इत्ययमेको विशेषोऽस्ति अस्मिन् तरङ्गे। अन्ते धर्मसूरिणा दोषसंख्याविषये मतभेदः प्रादर्शि, किन्तु विशेषव्याख्यानं तु न अकारि। "एतेषां त्रिविधदोषाणां मध्ये केषाञ्चिद् अन्योन्यभेदस्य दुर्घटत्वाद् उक्तसंख्यानियमो न अस्माकं मनसे रोचते। तथापि पूर्वेषां सरणिम् अनुसृत्य अस्माभिस्तावतां लक्षणोदाहरणानि दर्शितानि। कियताम् अन्तर्भावस्तु मतिमद्भिः समर्थयितुं शक्यः। अस्माभिस्तु विस्तरभयाद् विरम्यते।" इति तरङ्गममुमुपसंहृतवान्।

## नवमः – ध्वनिभेदनिरूपणतरङ्गः

द्वितीयतरङ्गे प्रोक्तस्य काव्यसामान्यलक्षणस्य व्याख्यानरूपेणैव अनन्तरग्रन्थो ग्रथितः। अतोऽत्र नवमे तरङ्गे काव्यं गद्यपद्योभयमयत्वेन त्रेधा विभक्तम्। तादृशं च त्रिविधं काव्यं पुनः विधान्तरेण उत्तम-मध्यम-अधमभेदैस्त्रिविधं भवतीति उक्त्वा, तत्र प्रसङ्गाद् आगतो ध्वनेरस्तित्वनास्तित्वविषयको विचारः प्रस्तुतः। अनन्तरं च क्रमाद् ध्वन्यभाववादस्य ध्वनेर्गुणालङ्कारान्तर्भाववादस्य, अनुमानाद् ध्वनिर्नातिरिच्यत इति मतस्य, ध्वनेरभिधेयत्ववादस्य खण्डनं विशदतया कृतम्। अनन्तरं महता ग्रन्थेन ध्वनेर्भेदोपभेदाः सोदाहरणं निरूपिताः। तन्मध्ये च लक्षणामूलव्यङ्ग्यं वस्तुमात्रमेव भवतीति सयुक्तिकं स्थापितम्। ध्वनिप्रभेदपरिगणनानन्तरं मध्यमकाव्यं गुणीभूतव्यङ्ग्यम् अष्टधा विभज्य सोदाहरणं निरूपितम्। तरङ्गस्य अन्ते रीतिवृत्त्योः शय्यापाकादीनां च लक्ष्यलक्षणप्रदर्शनपूर्वकं प्रस्तावः कृतः।

## दशमः – रसनिरूपणतरङ्गः

आदौ रससद्भावे प्रत्यक्ष-अनुमान-उपमान-शब्द-अर्थापत्ति-अनुपलब्धयः षडपि प्रमाणानि न भवन्तीति पूर्वपक्षमुखेन प्रसङ्गाद् 'उत्पद्यते रस' इति भट्टलोल्लटमतम् 'अनुमीयते रस' इति श्रीशङ्कुकमतं च विस्तरेणानूद्य निरस्तम्। रसे प्रमाणाभावादेव लक्षणमपि नास्तीति पूर्वपक्षं समाप्य-

'विभावानुभावसात्त्विकव्यभिचारिसामग्रीसमुल्लसितस्थायिभावो रसः।'

इति लक्षणप्रदर्शनेन पूर्वपक्षः खण्डितः। अनन्तरं विभावानुभावव्यभिचारिसात्त्विकभावान् विभज्य रससूत्रव्याख्यानव्याजेन उत्पत्ति-ज्ञप्ति-भुक्ति-अभिव्यक्तिपक्षा रसविषयका वर्णिताः। अभिव्यक्तिपक्षं च सिद्धान्तयित्वा तस्य व्याख्यानमपि कृतम्।

ततो रससंख्याविषयकविचारे भोजराजीयं शृङ्गारैकरसपक्षं, शान्तरसं पातयित्वा 'अष्ट्यवेव रसा' इति पक्षं, वत्सलादीनां पृथग्रसत्वपक्षञ्च खण्डयित्वा, शान्तस्य रसत्वं स्थापितम्। ततो रसानां मिथः स्नेहविरोधौ प्रदर्श्य, प्रत्येकशो रसानां शृङ्गारादीनां स्वरूपविभागौ सोदाहरणं प्रदर्शितौ। शृङ्गाररसनिरूपणे च शृङ्गारक्रीडाः काश्चित्, चक्षुःप्रीत्यादिदशावस्थाश्च उदाहृताः। तदनन्तरं च विभावानुभावव्यभिचारिसात्त्विकभावाः सोदाहरणं लक्षिताः। अन्ते च रसाद्रसान्तरोत्पत्तिक्रमो भावशान्त्यादयश्च निरूपिताः।

### 1.4.2.8 पञ्चतन्त्रकाव्यम्– दत्तरत्नाकरश्च

एवं प्रदर्शिताभिः सप्तकृतिभिः सह अन्यदपि कृतिद्वयं धर्मसूरिकृतमिति ज्ञायते। तथा हि – 'पञ्चतन्त्रकाव्यम्' इति कश्चन ग्रन्थः Aufracht महाशयेन स्वीये ग्रन्थकोशे उट्टङ्कितो धर्मसूरेः कृतिषु। किन्तु धर्मसूरिणा साहित्यरत्नाकरे एष नोल्लिखितः। न च दृश्यते किमप्यन्यत्प्रमाणं विहाय Aufracht महाशयस्य वचनं कृतेरस्याः प्रकृत–धर्मसूरिकर्तृकत्वे इति, अधुना नाममात्रतां गताया अस्या विषये किमपि निश्चेतुं वयं न प्रभवामः।

एवमेव 'दत्तरत्नाकर' इति धर्मशास्त्रविषयको ग्रन्थः Dr. Hultzch महोदयेन धर्मसूरिकृतिषूल्लिखितः। असौ दत्तरत्नाकरग्रन्थः G.O.M.L. ग्रन्थालये D 3167 अङ्काङ्कित उपलभ्यते। ग्रन्थेऽस्मिन् उपलभ्यमानाद् ग्रन्थान्तगद्यादिदं स्पष्टं ज्ञायते यदसौ माधवाध्वरीन्द्रतनुजेन धर्मराजाध्वरिशिखामणिदौहित्रेण धर्मराजाध्वरिवरेण विरचितः[124]। सम्भवतो वेदान्तपरिभाषाकर्तुर्धर्मराजाध्वरेरसौ दौहित्रः स्यात्। कथमपि नासौ प्रकृतधर्मसूरिर्भवितुम् अर्हतीत्यतः Dr. Hultzch महाशयस्य कथनं भ्रान्तिमूलकमेव।

### 1.4.2.9 इतराः सम्भावितकृतयः

साहित्यरत्नाकरे प्रतितरङ्गमन्ते 'धर्मान्तर्वाणिवर्य' इत्यादिश्लोकः पठ्यते। स यथा–

> धर्मान्तर्वाणिवर्यस्त्रिभुवनविदिते वारणास्यन्वये यः
> सञ्जातः पर्वतेशाच्छुभगुणगणभूर्यल्लमाम्बासुगर्भे।
> काव्यालङ्कारकृष्णास्तुतिरविशतकोन्नाटकादिप्रणेतु-
> स्तस्यालङ्कारशास्त्रे रघुपतिविभुके चादिमोऽयं तरङ्गः।।

यद्यप्यनेकशः सर्वासु मातृकासु प्रदर्शित एव पाठो दृश्यते, तथापि 'A'i अङ्काङ्कितायां मातृकायां तृतीयतरङ्गस्य अन्ते अन्यास्वपि दशमतरङ्गस्यान्ते उत्तरार्धस्य पाठोऽधस्तात् प्रदर्शितक्रमेण विपरिणतो दृश्यते। मुद्रितपुस्तकेष्वपि सर्वेषु प्रदेशभेदेन उभयविधोऽपि पाठो दृश्यते। यथा –

'व्याख्याविख्यातकीर्तेर्विवरणगुरुवाक्सांख्यमुख्यागमानां
तस्यालङ्कारशास्त्रे विलसति दशमो रामवर्ण्ये तरङ्गः।'

एतस्मात् पाठभेदात् स्पष्टमिदं ज्ञायते यद् धर्मसूरिरन्यानपि बहून् शास्त्रग्रन्थान् व्यरचयदिति। तत्र तावद् विवरणशब्दस्य पञ्चपादिकाविवरण-मित्यर्थः। 'गुरुवाक्'-शब्देन प्राभाकरमतं पूर्वमीमांसायां स्वीकृतम्।

एतस्माद् धर्मसूरिवचनात् सिद्धानाम् अनेकेषां व्याख्यानाना-मद्यत्वेऽनुपलभ्यमानत्वेऽपि सत्ता परम् अङ्गीकर्तव्यैव भवति। अत्रेदं बोध्यम्-ग्रन्थान्तगद्ये पाठं विना न कुत्रचिद् एते ग्रन्थाः साहित्यरत्नाकरे उल्लेखिताः। यथा कृष्णास्तुत्यादयस्तत्र तत्र उदाहृतास्तथा न केनचिद् व्याजेन एतानि व्याख्यानानि उट्टङ्कितानि। किञ्चानेकैः कारणैर्ब्रह्मामृतवर्षिणीरत्नप्रभयोः कर्ता धर्मभट्टः प्रकृतधर्मसूरेर्भिन्न इति निश्चितम् अस्माभिः पूर्वमेव। तस्यैव च रामानन्दसरस्वतीत्याश्रमनामधेयम् आसीदिति च प्रपञ्चितम्। 'विवरणोपन्यास' इति कश्चन ग्रन्थो यद्यपि विवरणस्य व्याख्यानात्मको नास्ति, तथापि विवरणस्यैव संग्रहीकरणरूपो वर्तते। तस्मात् कथञ्चित् स ग्रन्थो विवरणव्याख्यानत्वेन ग्रहीतुं शक्यः। अयमपि विवरणोपन्यासग्रन्थो रामानन्दसरस्वत्या रत्नप्रभाकर्त्रा लिखित इति प्रसिद्धिरस्ति। अतो धर्मभट्ट एव विवरणादिव्याख्यानानां कर्ता भवितुम् अर्हति। उभयोरनयोर्विद्यमानयाभेदभावनया अनन्तरकालिकाः 'व्याख्याविख्यातकीर्तेः' इत्यादिपाठं साहित्यरत्नाकरे योजयामासुः। अत एव च साहित्यरत्नाकरव्याख्यानेष्वद्योपलभ्यमानेषु अत्यन्तप्राचीनभूते कृष्णमिश्र-विरचितालङ्कारसुधाकरे यावदुपलभ्यते ग्रन्थभागस्तावति 'काव्यालङ्कार-कृष्णास्तुतिरविशतकोन्नाटकादिप्रणेतुः' इत्येव पाठः स्वीकृतो व्याख्यातश्च।

किन्तु यावद् बलवत्प्रमाणान्तरोपलम्भमयम् अस्माकम् अभिप्रायः उत्प्रेक्षात्मक एव भवितुम् अर्हति। तस्माद् अस्मदुत्प्रेक्षणस्य उपष्टम्भकप्रमाणानि यावता उपलभ्यन्ते तावद् विवरणादिग्रन्थानां व्याख्यानानीमानि प्रकृतधर्मसूरिणैव लिखितानि, किन्तु कालगर्भे विलीनानीत्येव स्वीक्रियते।

## 1.5. धर्मसूरेः पाण्डित्यम्

"आसप्तमाद् वरमगाद् निजवंशजानां
विच्छेदशून्यविमलाखिलशास्त्रबोधम्"।

इति कथनानुसारेणासौ धर्मसूरिर्महेशप्रसादलब्धसर्वशास्त्रविमलबोध इति स्पष्टमेव। षड्दर्शनीजन्मकृतां मुनीनाम् ऐकात्म्यलीलायितस्य वादिकेसरिणो महागुरोः श्रीपर्वतनाथसूरेः स्वपितुः सकाशाद् अधिगतसरहस्यचतुर्दशविद्या-विभूषणवानसौ धर्मसंख्यावान् कवित्वपाण्डित्ययोः सङ्गमस्थानम् आसीत्। साहित्यरत्नाकरग्रन्थ एव निदर्शनं भवति धर्मसूरेः प्रस्फुरत्पाण्डित्यस्य।

(1) अलङ्कारशास्त्रतत्त्वानाम् आविष्करणे तदुचितपूर्वोत्तरमीमांसा-न्यायव्याकरणादिशास्त्रप्रमेयांशानामुदाहरणमेव प्रथयति अस्य सकलशास्त्रसारावबोधम्।

(2) द्वितीय-तृतीय-चतुर्थतरङ्गात्मको वृत्तिविचारग्रन्थः स्वाप्रतिमप्रति-भाया निकषोपलमिव निर्मितोऽनेन।

(3) ग्रन्थारम्भतरङ्गेऽनुबन्धचतुष्टयनिरूपणप्रकारस्तथा काव्यस्य मीमांस्यतां द्रढयन् विचारो धर्मसूरेः शास्त्रग्रन्थानुशीलनाभ्यासं तत्पाटवं च निरूपयतः।

(4) भाट्टमीमांसायां धर्मसूरेरितरापेक्षयाऽधिकोऽभिनिवेशः साहित्यरत्ना-कराध्ययनादवगम्यते।

इमे विषया अस्माभिरुपरिष्यद् तत्तदर्थविचारावसरे सविस्तरं प्रतिपादिता इत्यतः पुनरुक्तिपरिहाराय नेह प्रतन्यते। केवलमिदं तु उदाह्रियते-

"धर्माभिख्यकवेर्गिरां विवरणे कोऽन्यः कृती गौतमात्
शेषाहेर्हयवक्त्रतोऽम्बुजभवाद्वाचस्पतेर्वायुजाद्।।"[125]

धर्मसूरेः पाण्डित्यपक्षपातो नरकासुरविजयव्यायोगस्य भरतवाक्येनापि स्पष्टीभवति। अश्रुतपूर्वमेव एतादृशं भरतवाक्यम्। तथा हि-

"भामत्युल्लसिता रता विवरणे तन्त्रे निरूढिं गताः
सच्चिन्तामणयः समुज्ज्वलयशो लीलावतीवल्लभाः।
सांख्यन्यायविचारचुञ्चुमतयः प्राभाकरप्रक्रिया-
धौरेयस्फुरणा भवन्त्ववनिपा विप्राश्च नित्योत्सवाः।।"[126]

## 1.6 धर्मसूरेः कवित्वम्

"विरिञ्चिवनिताकराञ्चितविपञ्चिकासञ्चरत्
स्वरप्रसरमाधुरीरसरमाधुरीणा गिरः।
जयन्ति मम मन्दरक्षुभितसिन्धुबन्धुभ्रमी-
निरर्गलविनिर्गलद्वहलभङ्गभङ्गीभृतः।।" (पृ० 5)

इयं धर्मसूरेरुक्तिः। स्वकविताम् ईदृशीं विभावयति धर्मसूरिः। नूनं धर्मसूरेः शय्या विलक्षणा निरतिशया च। क्वचित् मृदुलमृदुला क्वचिंद् बहुलाडम्बरा। यथा उदाहृते एव श्लोके पूर्वार्धे माधुर्यम् उत्तरार्धे ओजश्च सम्यगनुभूयेते। एवम् उभयविधरचनायां समशक्तिरसावनेकविधालङ्कारगुणध्वनिरसादीनाम् उचितैरु-दाहरणश्लोकैः साहित्यरत्नाकरं काव्यातिशायितया निर्माय पठितॄणां मनोविनो-दनमपि सम्पादयामास। विद्यानाथ-विद्याधर-जगन्नाथादि- कवि-पण्डितानां कवित्वस्य समतुलाम् अधिरोहत्यस्य कवित्वमपि। अर्वाचीनालङ्कारिकेषु चित्रबन्धादिशब्दालङ्कारसंग्रथनकौशलेनैव स्वीयेन स्वप्रभावम् उपजनयामास धर्मसूरिः। अयञ्च विषयः स्पष्टीभविष्यत्यग्रे।

दोषतरङ्गे सप्तदशपददोषाणाम् एकम् उदाहरणं विलिख्य पुनरपि तमेव श्लोकमपगतदोषं कुर्वन् असौ कवित्वविषये आत्मनः स्वातन्त्र्यं प्रादर्शयत्।

श्रुतिमधुराणां भावगम्भीराणां च श्लोकानाम् अत्र गणना दुष्करैव। साहित्यरत्नाकरात् नरकासुरविजयव्यायोगाच्च स्वयमेव ते तत्र तत्र विभावनीयाः। नरकासुरविजयव्यायोगात् परं श्लोकद्वयं भावगाम्भीर्यभरितम् उदाह्रियते। यथा-

"कोदण्डैः किमु सम्मिता किमिषुधेर्बाणाः स्वतो वा च्युता
निष्पर्यायविनिर्गताः किमथवैकैके बहुत्वं गताः।
संघट्टस्फुरितस्फुलिङ्गपटलैर्निश्शेषपत्रावली-
प्लोषात् पूर्वमहो शरव्यपतनज्ञेयाः पतन्त्यद्भुतम्।।"[127]

वाङ्मनसयोः सरणिम् अतिवर्तमानस्य वासुदेवस्य बाणविमोचने हस्तलाघवस्य वर्णनात्मकमिदं पद्यं धर्मसूरेरपि चित्रितमिव भावप्रकटने हस्तलाघवं प्रमाणीकरोति।

"चाम्पेयसान्द्रवनराजिविराजमान-
पार्श्वद्वयस्तुहिनपाण्डुरतुङ्गशृङ्गः।

निस्स्पन्दमानविततायतहेमपक्ष-
भ्राजद्बलर्क्षमुखताक्ष्यधियं तनोति।।"[128]

अहो! कियदाश्चर्यावहोऽसौ नीलसुन्दरगिरिताक्ष्यर्योरुपमानोपमेयभावः। एवम् अनेकविधासु कवित्वप्रक्रियासु धर्मसूरेः सिद्धहस्ततां द्योतयन्तोऽनेके श्लोका उदाहर्तुं शक्यन्ते।

अयं तु धर्मसूरेः कवित्वेऽनितरसाधारणो विशेषोऽस्माभिः परिगण्यते यदस्य कवित्वे आन्ध्रप्रबन्धकवित्वच्छाया एवम् आन्ध्रकवितासमुदाचाराः स्पष्टरूपेण प्रतिभासन्ते। तथा हि-

(1) सामान्यतः संस्कृतकवय आलङ्कारिकाश्च अल्पाक्षरच्छन्दांसि उपजात्यादीनि प्रयुञ्जते। आन्ध्रकविभिः शार्दूलमत्तेभादि-बहुवर्णघटितानि छन्दांसि उपयुज्यन्ते। धर्मसूरिरपि बहुवर्णछन्दां-स्येवाधिकतया समालिखत्।

(2) आन्ध्रप्रबन्धकवितायां किञ्चिद्दीर्घसमासघटिता भूयोऽनुप्रासादि-शब्दालङ्कारसन्दृब्धा च काचिद् रीतिरवलम्ब्यते यां धर्मसूरिरपि समुददीपयत्।

(3) आन्ध्रैर्यतिप्रासादिषु विशेषनियमावलम्बनेन काचिद् विलक्षणा शय्या आश्रिता। तथा हि - संस्कृतच्छन्दसि प्रासो नास्ति। प्रतिपादं द्वितीयाक्षरं प्रासाक्षरमित्युच्यते यच्चतुर्षु पादेषु स्वरसहितं वा स्वरविरहितं वा एक एव वर्णो भवेदिति प्रासनियम आन्ध्रकवितायाम्। संस्कृते विच्छेदमात्रं यतिः। आन्ध्रे तु न तथा। प्रतिपादं प्रथमाक्षरस्य मित्रभूतः कश्चिद् वर्णो यतिस्थाने भवेत्। यतिस्थानानि तु संस्कृते चान्ध्रे च समानान्येव। यतिमैत्री च बहुनियमोपेता बहुविधा च आन्ध्रच्छन्दोग्रन्थेषु विस्तरेण प्रतिपादिता। प्रासयतिरिति तासु यतिष्वन्यतमा। अस्या लक्षणं तावत् प्रथमवर्णाद् यस्मिन् वर्णे यतिस्थानं भवति तदनन्तरवर्णे प्रासाक्षरस्य प्रासयतिर्भवति। एषा च केवलम् आन्ध्रजातिनामकच्छन्दसि अङ्गीकृता, न तु संस्कृतमूलकवृत्तेषु। तथापि धर्मसूरिः संस्कृतवृत्तेष्वपीमां पद्धतिम् अवलम्ब्य अनेकेषु स्थलेषु प्रास-यति-प्रासयतिनियमान् परिपालयामास। यथा-

"अव्याजं मुहुरावृणोति नगरीमव्याहतो वासवीं
दिव्यानि प्रसभं वनानि हरते भव्यानि कल्पद्रुमैः।
हव्यानि ज्वलने हुतानि मुनिभिः कव्यानि चात्ति स्वयं
क्रव्यादः कनकाद्रिकूटकटकात् स व्याप्य संक्रीडते।।[129]"

शार्दूलविक्रीडितमिदम्। अत्र चतुर्ष्वपि पादेषु द्वितीयं "व्या" इत्यक्षरं प्रयुक्तमिति प्रासनियमः पालितः। किञ्च शार्दूले त्रयोदशाक्षरे यतिः। तत्र विच्छेदोऽपि रक्षित एव। किन्तु "व्या" इत्यस्यानुवृत्तिर्नियमेन क्रियमाणा प्रासयतिर्भवति। एतच्च आन्ध्रकवितासमयम् अनुसृत्यैव। एतादृशाः श्लोका व्यायोगे उपदश विद्यन्ते।

पूर्वोक्तैः कारणैरस्य कवितायामान्ध्रकवितासमुदाचाराणां समुपलम्भो विशेष इति निश्चीयते। अत एवास्य कवितायां या विलक्षणा शय्या रीतिश्चानुभूयते साऽनितरसाधारणा शोभते।

अखण्डपाण्डितीमण्डितस्याप्येतादृशी मधुरा कवित्वधारा आश्चर्यम् उपजनयति। अथवा धर्मसूरिवचनमेवात्र प्रमाणम्–

"तर्के कर्कशतां गतापि नितरां वाग्वैखरी सत्कवे-
र्माधुर्यं प्रकटीकरोति कविता कालेषु किं वाऽद्भुतम्।
पश्यात्यन्तकठोरतामुपगता ग्रीष्मे मयूखावलिः
किं नाविष्कुरुते न वामृतभरं भासां निधेः प्रावृषि।।"

अतोऽयं धर्मसूरिरपि स्वपितृव्य इव –

"आटोपोद्भटनाट्यधूर्जटिजटाकोटीरकोटीनटद्-
गङ्गातुङ्गतरङ्गरिङ्गणभरप्रस्पर्धि वाग्वैभवः।"

एव।

### 1.7 धर्मसूरेरुपरि पूर्वतनालङ्कारिकाणां प्रभावः

न केवलम् अलङ्कारशास्त्रे किन्तु सर्वेष्वपि शास्त्रेषु अर्वाचीनग्रन्थकर्तृषु प्राचीनानां प्रभावो नियमेन भवत्येव। क्रमेण अभिवृद्धिं गच्छन्त्यां तत्त्वविचारणधारायां पूर्वपूर्वविचारफलम् उत्तरोत्तरविचारस्य नियमेन सोपानायते। किञ्च

रसादिप्रमुखतत्त्वानां विचारणं मम्मटपर्यन्तेनैव कालेन समाप्तिम् अगादिति वक्तुं शक्यते। विद्यानाथादिभिर्यशोभूषणाख्यग्रन्थविशेषनिर्माणानन्तरम् अलङ्कारशास्त्रे पूर्वतनसिद्धान्तसारसंग्रहरूपेण स्वकविताकौशलप्रकटनपरः ग्रन्थसमुदायः प्रादुर्बभूव। तस्मात् तादृशेषु ग्रन्थेषु अन्यतमेऽस्मिन् साहित्यरत्नाकरे प्राचीनानां सर्वेषामप्यालङ्कारिकाणां प्रभावस्तत्र तत्र उपलक्ष्यते। विशेषतो विद्याधरकृताया एकावल्याः, मल्लिनाथसूरिकृतस्य एकावलीव्याख्यानस्य तरलस्य, विद्यानाथ-कृतस्य प्रतापरुद्रीयस्य, मम्मटनिबद्धस्य काव्यप्रकाशस्य च प्रभावोऽतितरां प्रतिभासते।

तत्रापि अभिधा-लक्षणा-व्यञ्जनाख्यवृत्तित्रयविचारात्मकतरङ्गत्रये, विंशिष्य च लक्षणातरङ्गे ध्वनिव्यवस्थापने च एकावलीतत्तरलयोः प्रभावः सुमहान् दृश्यते। पूर्वमेवोक्तम् अत्र यदनेके ग्रन्थभागा अक्षरश आभ्यां ग्रन्थाभ्याम् अनूदिता धर्मसूरिणा इति। एवं काव्यलक्षणनिरूपणे रसनिरूपणे मध्यमकाव्यनिरूपणे च काव्यप्रकाशस्य प्रभावः स्पष्टम् अनुभूयते। एषु विषयेषु मम्मटानन्तरकालिकानाम् आलङ्कारिकाणां सर्वेषामपि ग्रन्थेषु काव्यप्रकाशप्रभावोऽपरिहार्य एवासीत्। नायकादिस्वरूपनिरूपणे गुणदोषतरङ्गयोरन्यत्र च प्रतापरुद्रीयस्य प्रभावोऽति-रोहितोऽस्ति। प्रायो लक्षणकारिकाः सर्वा अपि प्रतापरुद्रीया एव स्वीकृता इति वक्तुं शक्यते।

शिष्टे अलङ्कारनिरूपणे तु एतेषां चतुर्णां, तदतिरिक्ततया रुय्यक-जयरथ-शोभाकरमित्रादीनामपि प्रभावः संलक्ष्यते।

प्रतिभायाः केवलायाः काव्यकारणत्वाङ्गीकारे, अलङ्कारतरङ्गे त्रिचतुरेषु स्थलेषु च पण्डितराजजगन्नाथेन समानाभिप्रायो धर्मसूरेः प्रतीयते। असौ जगन्नाथस्य प्रभाव इत्यङ्गीकर्तुं न शक्यते। किन्तु केवलं समकालिकत्वाद् भावसाम्यमित्येव स्वीकरणीयम्। अन्यथा बहुषु इतरेषु विषयेषु दूषणभूषणे कर्तव्ये स्याताम्।

एवं विविधालङ्कारिकाणां प्रभावे निरूपितेऽपि एकावलीतत्तरलयोः प्रतापरुद्रीयस्य च सादृश्यमेव वस्तुतः प्रभावशब्दवाच्यं भवति। लिखितुं शक्ये अपि स्थले शब्दतोऽप्यनुकरणस्य स्पष्टत्वात्। कारणं तु वयमत्र एवम् आकलयामः। उत्कलराजस्य नरसिंहदेवस्य स्तुतौ ग्रथिता एकावली केनापि कारणेन पठनपाठनाद् विलुप्ता कोशगृहेष्वेव गुप्ता आसीत्। उच्चावचभावम्

"अव्याजं मुहुरावृणोति नगरीमव्याहतो वासवीं
दिव्यानि प्रसभं वनानि हरते भव्यानि कल्पद्रुमैः।
हव्यानि ज्वलने हुतानि मुनिभिः कव्यानि चात्ति स्वयं
क्रव्यादः कनकाद्रिकूटकटकात् स व्याप्य संक्रीडते।।[129]"

शार्दूलविक्रीडितमिदम्। अत्र चतुर्ष्वपि पादेषु द्वितीयं "व्या" इत्यक्षरं प्रयुक्तमिति प्रासनियमः पालितः। किञ्च शार्दूले त्रयोदशाक्षरे यतिः। तत्र विच्छेदोऽपि रक्षित एव। किन्तु "व्या" इत्यस्यानुवृत्तिर्नियमेन क्रियमाणा प्रासयतिर्भवति। एतच्च आन्ध्रकवितासमयम् अनुसृत्यैव। एतादृशाः श्लोका व्यायोगे उपदश विद्यन्ते।

पूर्वोक्तैः कारणैरस्य कवितायामान्ध्रकवितासमुदाचाराणां समुपलम्भो विशेष इति निश्चीयते। अत एवास्य कवितायां या विलक्षणा शय्या रीतिश्चानुभूयते साऽनितरसाधारणा शोभते।

अखण्डपाण्डितीमण्डितस्याप्येतादृशी मधुरा कवित्वधारा आश्चर्यम् उपजनयति। अथवा धर्मसूरिवचनमेवात्र प्रमाणम्–

"तर्के कर्कशतां गतापि नितरां वाग्वैखरी सत्कवे-
र्माधुर्यं प्रकटीकरोति कविता कालेषु किं वाऽद्भुतम्।
पश्चात्यन्तकठोरतामुपगता ग्रीष्मे मयूखावलिः
किं नाविष्कुरुते न वामृतभरं भासां निधेः प्रावृषि।।"

अतोऽयं धर्मसूरिरपि स्वपितृव्य इव –

"आटोपोद्भटनाट्यधूर्जटिजटाकोटीरकोटीनटद्-
गङ्गातुङ्गतरङ्गरिङ्गणभरप्रस्पर्धि वाग्वैभवः।"

एव।

### 1.7 धर्मसूरेरुपरि पूर्वतनालङ्कारिकाणां प्रभावः

न केवलम् अलङ्कारशास्त्रे किन्तु सर्वेष्वपि शास्त्रेषु अर्वाचीनग्रन्थकर्तृषु प्राचीनानां प्रभावो नियमेन भवत्येव। क्रमेण अभिवृद्धिं गच्छन्त्यां तत्त्वविचारणधारायां पूर्वपूर्वविचारफलम् उत्तरोत्तरविचारस्य नियमेन सोपानायते। किञ्च

रसादिप्रमुखतत्त्वानां विचारणं मम्मटपर्यन्तेनैव कालेन समाप्तिम् अगादिति वक्तुं शक्यते। विद्यानाथादिभिर्यशोभूषणाख्यग्रन्थविशेषनिर्माणानन्तरम् अलङ्कारशास्त्रे पूर्वतनसिद्धान्तसारसंग्रहरूपेण स्वकविताकौशलप्रकटनपरः ग्रन्थसमुदायः प्रादुर्बभूव। तस्मात् तादृशेषु ग्रन्थेषु अन्यतमेऽस्मिन् साहित्यरत्नाकरे प्राचीनानां सर्वेषामप्यालङ्कारिकाणां प्रभावस्तत्र तत्र उपलक्ष्यते। विशेषतो विद्याधरकृताया एकावल्याः, मल्लिनाथसूरिकृतस्य एकावलीव्याख्यानस्य तरलस्य, विद्यानाथ-कृतस्य प्रतापरुद्रीयस्य, मम्मटनिबद्धस्य काव्यप्रकाशस्य च प्रभावोऽतितरां प्रतिभासते।

तत्रापि अभिधा-लक्षणा-व्यञ्जनाख्यवृत्तित्रयविचारात्मकतरङ्गत्रये, विंशिष्य च लक्षणातरङ्गे ध्वनिव्यवस्थापने च एकावलीतत्तरलयोः प्रभावः सुमहान् दृश्यते। पूर्वमेवोक्तम् अत्र यदनेके ग्रन्थभागा अक्षरश आभ्यां ग्रन्थाभ्याम् अनूदिता धर्मसूरिणा इति। एवं काव्यलक्षणनिरूपणे रसनिरूपणे मध्यमकाव्यनिरूपणे च काव्यप्रकाशस्य प्रभावः स्पष्टम् अनुभूयते। एषु विषयेषु मम्मटानन्तरकालिकानाम् आलङ्कारिकाणां सर्वेषामपि ग्रन्थेषु काव्यप्रकाशप्रभावोऽपरिहार्य एवासीत्। नायकादिस्वरूपनिरूपणे गुणदोषतरङ्गयोरन्यत्र च प्रतापरुद्रीयस्य प्रभावोऽति-रोहितोऽस्ति। प्रायो लक्षणकारिकाः सर्वा अपि प्रतापरुद्रीया एव स्वीकृता इति वक्तुं शक्यते।

शिष्टे अलङ्कारनिरूपणे तु एतेषां चतुर्णां, तदतिरिक्ततया रुय्यक-जयरथ-शोभाकरमित्रादीनामपि प्रभावः संलक्ष्यते।

प्रतिभायाः केवलायाः काव्यकारणत्वाङ्गीकारे, अलङ्कारतरङ्गे त्रिचतुरेषु स्थलेषु च पण्डितराजजगन्नाथेन समानाभिप्रायो धर्मसूरेः प्रतीयते। असौ जगन्नाथस्य प्रभाव इत्यङ्गीकर्तुं न शक्यते। किन्तु केवलं समकालिकत्वाद् भावसाम्यमित्येव स्वीकरणीयम्। अन्यथा बहुषु इतरेषु विषयेषु दूषणभूषणे कर्तव्ये स्याताम्।

एवं विविधालङ्कारिकाणां प्रभावे निरूपितेऽपि एकावलीतत्तरलयोः प्रतापरुद्रीयस्य च सादृश्यमेव वस्तुतः प्रभावशब्दवाच्यं भवति। लिखितुं शक्ये अपि स्थले शब्दतोऽप्यनुकरणस्य स्पष्टत्वात्। कारणं तु वयमत्र एवम् आकलयामः। उत्कलराजस्य नरसिंहदेवस्य स्तुतौ ग्रथिता एकावली केनापि कारणेन पठनपाठनाद् विलुप्ता कोशगृहेष्वेव गुप्ता आसीत्। उच्चावचभावम्

उपगतेषु राजत्वेषु नरसिंहदेवस्यानन्तरमेतत्सम्भाव्यमेव। किन्त्वेकावलीग्रन्थस्य अर्थगाम्भीर्यं प्रौढिमा विषयवैशद्यं च व्याख्यातृशिरोमणेर्मल्लिनाथसूरेरप्याश्चर्यं जनयामासुः। अत एव असौ इमाम् एकावलीं स्वतरलेन योजितवान्। तथापि एकस्य मनुष्यस्य स्तुतौ ग्रथितोऽसौ ग्रन्थः सर्वेषाम् उपादेयो नासीत्। अत एव धर्मसूरिर्ग्रन्थद्वयस्यास्य प्रधानप्रतिपाद्यमर्थं श्रीरामनायके स्वे साहित्यरत्नाकरे सर्वेषामुपकाराय तथैवानूदितवान् इति। एतदेव कारणं भवितुमर्हति सम्पूर्णे साहित्यरत्नाकरे एकवारमपि एकावल्या अनुट्टङ्कने। यस्तु ग्रन्थारम्भे कस्याञ्चित् मातृकायाम् "एकावलीपाठः" इत्यधिकः पाठो लभ्यते, सोऽपि 'पाठ'शब्दयोगात् लेखकेन योजित एव स्यादिति वयं मन्यामहे।

एवं प्रतापरुद्रीयमपि बहोः कालात् पठनपाठनपरम्परायां प्रसिद्धमस्ति। किञ्च स्पष्टरूपेण सिद्धार्थप्रतिपादककारिकानिर्माणे विद्यानाथस्य कौशल-मनुपममिति अवश्यमभ्युपगन्तव्यम्। अत एव धर्मसूरिरनेकेषु स्थलेषुयत्रात्मनो वैमत्यं नास्ति विद्यानाथस्य कारिकाः स्वीकृत्य स्वग्रन्थस्य सारसंग्रहरूपतां द्रढयाञ्चकार।

एवं साधारणरूपेण धर्मसूरेरुपरि पूर्वतनालङ्कारिकाणां प्रभावः प्रस्तुतः। उत्तरत्रापि तत्तद्विषयविचारावसरे शृङ्गग्राहिकतयाऽसौ प्रभावः प्रदर्शयिष्यते।

## 1.8. अर्वाचीनालङ्कारिकाणामुपरि धर्मसूरेः प्रभावः

अनेके आलङ्कारिका धर्मसूरेः साहित्यरत्नाकरात् कतिपयभागान् उदाहृतवन्तः। ते च धर्मसूरेर्देशकालनिर्णयविचारेऽस्माभिः प्रायो नाम्ना निर्दिष्य एव।

### 1.8.1 साहित्यभूषणकारो रघुनाथदासः ( 1690-1750 क्रि० प० )

स्वग्रन्थनिर्माणे धर्मसूरेः प्रभाव इत्येतत् रघुनाथदासविषय एव स्पष्टं प्रतिभाति। असौ रघुनाथदासो नाम्ना दशवारं धर्मसूरिमुदाहृत्य तदीयान् अभिप्रायान् स्वग्रन्थे प्रादर्शयत्।[130] न केवलमेतत्, यथा साहित्यरत्नाकरे एकावली-तत्तरलग्रन्थभागा अक्षरशोऽनेकेषु स्थलेष्वनूदितास्तथा साहित्यरत्नाकराद् विना नामोद्घाटनमनेके ग्रन्थभागा अक्षरशोऽनूदिताः साहित्यभूषणे। तथा हि-

'काव्यम् अमीमांस्यम् इति वदता वक्तव्यम्' इत्यारभ्य 'काव्यमीमांसाशास्त्रम् आरम्भणीयम् इति सर्वमनवद्यम्' इत्येतदन्तं विद्यमानः सुमहान् प्रथमतरङ्गभागस्तथैवाक्षरशोऽनूदितः साहित्यभूषणे[131]। साहित्यरत्नाकरे पीठिकाश्लोकान् परित्यज्य सर्वोऽपि प्रथमतरङ्गोऽनूदित इति यावत्।

एवं 'बीजं हि तस्याः कवितालतायाः' इति श्लोकं तद्व्याख्यां च सर्वात्मना तथैवानूदितवान्[132]। एवम् उत्तरत्राप्यनेकेषु स्थलेषु धर्मसूरेर्वाक्यानि तथैवानूदितानि। साहित्यरत्नाकरस्यैतावान् महाप्रभाव इतरेषु ग्रन्थेषु न सन्दृश्यते।

### 1.8.2 आमोदकर्ता गुरजालरङ्गशायी ( 1660 - 1670 क्रि० प० )

असौ स्वीये रसमञ्जरीव्याख्याने आमोदे साहित्यरत्नाकरीयं विरहोत्कण्ठितानायिकालक्षणम् अनूद्य खण्डितवान्[133]।

### 1.8.3 जगन्नाथमिश्रः ( 1715 - 1721 क्रि० प० )

रघुनाथदास इव जगन्नाथमिश्रोऽपि धर्मसूरिणाऽत्यर्थं प्रभावित आसीत्। स्वेन विरचितस्य रसकल्पद्रुमस्य[134] पूर्वतनश्लोकसंग्रहरूपत्वाद्[135] धर्मसूरिप्रणीता अनेके श्लोकास्तत्तदर्थोदाहरणरूपेण तेनोदाहृताः। अनेकेषु स्थलेषु प्रायः सप्ततिः श्लोका अनेनोदाहृताः[136]। न केवलमेतत्, अनेके श्लोकाः साहित्यरत्नाकर-श्लोकच्छायया उपनिबद्धा अत्रोदाहृता दृश्यन्ते[137]। किञ्च यत्रापि रसादिविषयानधिकृत्य विचारो दृश्यते, तत्रापि बहूनि वाक्यानि साहित्यरत्ना-करादुद्धृतान्येव दृश्यन्ते[138]। लक्षणकारिका अपि बह्व्यो धर्मसूरीया एव। गोपीनाथपात्रादिवद् अनेनापि सर्वोऽपि साहित्यरत्नाकरचित्रबन्धनिरूपणो-दाहरणग्रन्थस्तथैवानूदितः। तस्मात् जगन्नाथमिश्रस्योपरि धर्मसूरेः प्रभाव, इतरालङ्कारिकप्रभावापेक्षया महत्तरोऽनुभूयते।

### 1.8.4 जगन्नाथनारायणदेवः ( 1760 क्रि० प० )

जगन्नाथनारायणदेवनाम्ना लोकनाथत्रिपाठिना विरचिते 'कविकण्ठहार'-नाम्न्यलङ्कारग्रन्थे बन्धनिरूपणात्मके दशमविरचने मत्स्य-गुच्छ-छुरिका-हलबन्धानाम् उदाहरणानि साहित्यरत्नाकरादेव स्वीकृत्योदाहृतानि[139]।

### 1.8.5 कविरत्नगोपीनाथपात्रः ( 1734 – 1763 क्रि० प० )

असौ पञ्चविंशत्यध्यायभूषिते सुमहति 'कविचिन्तामणि'-नाम्नि अलङ्कारशास्त्रग्रन्थे द्वादशे अध्याये "शुम्भच्छुण्डाल" इत्याद्योजोगुणोदाहरणं तथैव उदाजहार। चतुर्दशेऽध्याये छेकानुप्रासस्य लक्षणविवरणोदाहरणानि अक्षरशः साहित्यरत्नाकरात् स्वीकृत्योदाहृतानि। एवं तत्रैव यमकालङ्कारस्य लक्षणं तद्विवरणं च तथैवानूदितम्[140]।

### 1.8.6 अहोबलपण्डितः

असौ "अहोबलपण्डितीयमु" इति नाम्ना प्रसिद्धिं गते स्वे आन्ध्र-व्याकरणनिबन्धे-

"अत्यर्जुनयशोराशिः कृतसंरक्ततर्पणः।
एकवीरोपतापश्च रामो राजति राघवः।।"

इति धर्मसूरेरभिधामूलव्यञ्जनाया उदाहरणं स्वीकरोति।[141]

### 1. 8.7 कविसमयकल्लोलकर्ता अनन्तार्यः ( एकोनविंशशताब्दः )

असौ दशवारं धर्मसूरिग्रन्थम् उट्टङ्कति। अनेकविधानां कविलोकसमयानां परिगणनावसरे तत्तदर्थानां कविलोकप्रसिद्धिं स्थापयितुं धर्मसूरेरपि श्लोकान् तत्र तत्र प्रमाणतया उदाजहार[142]। तथा हि-

(1) प्रतापस्य पीततां समर्थयितुं द्रुतकनकरुचा (7.76) इति पद्यम् उदाहृतवान्[143]।

(2) कीर्तेर्नीलवर्णतां समर्थयितुं 'तमालदलनीलाभिः' (7.221) इत्युदाहृतवान्[144]।

(3) ऐरावतस्य श्वेततां 'ताराहारहरा' (5.13) इत्यादिना प्रत्यतिष्ठिपत्[145]।

(4) 'भुवनानि त्रीणि चतुर्दश वा ब्रूयात्' इत्युक्त्वा उदाहृतमिदं 'नद्यः समुद्रमिव' (7.20) इत्यादि[146]।

(5) दिशां दशसंख्यतां निरूपयितुमुदाहृतम्[147] 'भेरीभूरिनिनादडम्बर' (7.136) इति।

(6) 'नेदं मण्डलमैन्दवम्' (7.69) अत्रापि कीर्तिकुलीनत्वैश्वर्यदान-शौण्डत्वसर्वसाधारणदयादिकं प्रतीयते[148]।

(7) 'सचेतना काञ्चनपुत्रिका वा' (7.72) अत्र लावण्यशृङ्गार-सौभाग्यमन्मथविभ्रमादयः सीतायां प्रतीयन्ते[149]।

(8) 'रामस्योच्चण्डचापात्' (7.50) 'पद्यं पादचतुष्टयीपरिमितं' (9.87) इति श्लोकद्वयमपि प्रसङ्गेणोदाहृतवान्[150]।

एतेन स्पष्टमिदं यद् अनन्तार्येण बहुषु विषयेषु धर्मसूरिः प्रामाणिकतया स्वीकृत इति।

### 1.8.8 कटिकनेनिरामकविः

असौ स्वकृतस्य आन्ध्रकुवलयानन्दस्य पीठिकाश्लोकेषु प्राचीनालङ्कारिकस्तुतिसन्दर्भे धर्मसूरेर्नाम गृह्णाति[151]।

एवम् अर्वाचीनेषु बहुष्वालङ्कारिकेषु विशिष्य च रघुनाथदासे धर्मसूरेः प्रभावः सम्यक् परिलक्ष्यते।

---

### सन्दर्भाः

1. "इति पन्दिह्लान्वयदुग्धपाथोनिधिशरत्प्रकाशनानिधिशाब्दिकचक्रवर्तिपद्मनाभतनयेन धर्मसूरिणा विरचिता परिभाषार्थप्रकाशिका समाप्ता।"
   – ग्रन्थान्तगद्यम्, परिभाषार्थप्रकाशः। G.O.M.L. D 12808
2. "पाणिन्यादिमुनित्रयं गणपतिं दुर्गामहेशौ गिरं
   नामन्नाममुपेन्द्रपादयतिवाग्जालानि संसृ[स्मृ]त्य च।
   भाष्यार्थानखिलान्विलोक्य परिभाषार्थप्रकाशं सुधी-
   धर्माख्यो वितनोति शैलतनयावामार्धजानेर्मुदे।।
   *ibid*. ग्रन्थारम्भश्लोकः।
3. *ibid*
4. N.C.C. vol IX पृ० 274 B.O.R.I. 305 D/A 1882-83.।
5. B.O.R.I 1370/1884/87।
6. अयं च वृत्तान्तो भण्डारकरशोधसंस्थासम्बन्धिभिः श्री G.K. भट्टमहोदयैः कृपया मां प्रति लिखित इति तेभ्यो धन्यवादाः।
7. N.C.C. vol. IX पृ० 274
8. D4689 तथा R 6699
9. 75554, PM 610. PM 611. PM 612. 73148. 74088. 75296. 75542. 75676.
10. (क) 1900 क्रिस्ताब्दे अन्नवरं वेङ्कटराघवशर्मणा परिष्कृतः, कृष्णामण्डलस्थ-पेदकल्लेपल्लिग्रामवास्तव्यैस्तेंजर्लिलक्ष्मीनारायणशास्त्रिभिः प्रोत्साहितैः कृष्णाजिल्ला-

शिरस्तदारपदवीम् अलङ्कृतवद्भिः गोल्लमूडिलक्ष्मीकान्तरायैः प्रकाशितश्च आन्ध्राक्षरेषु।

(ख) 1991 क्रिस्ताब्दे हरिनारायण-आप्टेमहाशयैः सम्पादितः पुनानगरस्थानन्दाश्रममुद्रणालये मुद्रयित्वा प्रकाशितः।

(ग) 1911 क्रिस्ताब्दे प्रज्ञानानन्दसरस्वतीसम्पादितः चौखम्बासंस्कृतसीरिजद्वारा प्रकाशितः।

(घ) 1916 क्रिस्ताब्दे एस० वेङ्कटरमण-अय्यर्महाशयैः सम्पादितः चौखम्बासंस्कृत-सीरिजद्वारैव प्रकाशितः।

11. सन्त अक्बर्षा, शृङ्गारमञ्जरी, भूमिका, पृ० 13
12. Adyar, Library, Paper manuscript No. X J 13
13. अनन्तार्यः, छन्दोदर्पणमु, पृ० 27।
14. "साहित्यरत्नाकारुडे भाष्यरत्नप्रभाककारुडु"
 'भारति' (आन्ध्रसाहित्यमासपत्रिका) 1931।
15. श्रीश्रीरङ्गं सोमेश्वरशास्त्रिणोऽपि अमुमेव पक्षम् अनुमतवन्तः। किन्तु तैः इदम् अपि सूचितं यद् गङ्गांप्रदेशे आन्ध्रब्राह्मणानां मध्ये 'कासलनाडु'-नामकोपशाखीयाः साहित्यरत्नाकरपठने अभ्यस्ता इति। किन्तु तेषां गोत्रं हरितगोत्राद् भिन्नम् इति।
 'आन्ध्रपत्रिका' अक्षयसंवत्सरस्य (1926-27) पृ० 94-102
16. 'आन्ध्रसाहित्यपरिषत्पत्रिका' 17 सम्पुटः 6 अङ्कः।
 तथा New Indian Antiquery Vol. II 1939-40, तथा 'आन्ध्रविज्ञानसर्वस्वमु' 3 सम्पुटः, पृ० 853।
17. Mekenze, Local records. Vol. 14 p 114 G.M.O.L. Madras.
18. M. कृष्णमाचार्याः, नरकासुरविजयव्यायोगसम्पादकः D.G. पाध्येमहाशयांश्च यद् अवोचन् "धर्मसूरिर्वाराणस्याम् उवास; अत एव स वंशः वारणासीति नाम्ना प्रसिद्ध आसीत्" इति तत्प्रामादिकमेव (P. 798)।
 "गोत्रे च तस्य समभूद् अभिजातवंशो वाराणसीत्युपपदेन भुवि प्रसिद्धः" इति वारणासिनामकस्य वंशस्य उत्पत्तेरनन्तरमेव त्रिपुरारिसोमयज्वादीनां ग्रन्थकर्तुः प्रपितामहादीनामुत्पत्तेर्वर्णितत्वाच्च।
19. धर्मसूरिः, नरकासुरविजयव्यायोगः, हैदराबाद् 1961
20. कस्तूरीपरिदिग्धमुग्धकमलावक्षोजबुद्ध्या ध्रुवं
 नीलाद्रेः शिखरेषु नित्यकुतुकी दैत्यारिरव्यात् स नः।
 प्रत्यङ्गाभरणेषु दीप्तवपुषः सेवासु देवः [वाः] स्फुटं
 यस्याशेषसुरात्मता [तां] विदधते चन्द्रार्धचूडादयः।। *Ibid* पृ० 1
21. G.M.O.L. D 2472

22. धर्मसूरिणा कृतस्य नीलगिरेः कमलावक्षोजोत्प्रेक्षणस्य एषैव कारिका मूलभूता भवितुम् अर्हति।
23. G.M.O.L. D 2473
24. श्रीशाङ्करग्रन्थावलिः कुम्भकोणम्, सम्पुटः 189 पृ० 114
25. नरकासुरविजयव्यायोगः, हैदराबाद, 1961 पृ० 3-4
26. A Descriptive Catalogue of Skt. Mss. of Orissa, Vol. II PP CL III, CL VI
27. P.K. Misra, Unpublished thesis Vanivihar University, Chapter IV pp. 1-4
28. A Descriptive catalogue of Skt. mss.in Orissa, Vol. II Introduction P.C. 4X
29. Ibid, P. C XC VII
30. Ibid; P. C XC VI
31. Ibid; P.C XC III
32. Orissa state Museum Manuscripts literary Bhubaneswar AL 32
33. Sudhal press, BAMRA 1901
34. Satyanārāyaṇa Rājaguru, History of Gangas, P. 96
35. कृष्णमिश्रः, अलङ्कारसुधाकरः पृ० 5, 59, 72, G.O.M.L. R 3361
36. वासुदेवरथसोमयाजी, गङ्गवंशानुचरितचम्पूः, पृ० 182
37. P.V. Kāṇe, History of Skt. Poetics. P. 421 Motilal Banarsidas, 1971
38. S.K. De; History of Skt. Poetics. P 284 Firma K.L. Mukhopādhyāya, Calcutta 1960
39. M. Kṛṣṇamācārya, History of Classical Skt. Literature P. 789
40. Dr. P. Srīrāmamūrty, Contribution of Āndhras to the Sanskrit Literature.
41. भारति (आन्ध्रसाहित्यमासपत्रिका) 1931
42. Ibid.
43. सागरिका (संस्कृतपत्रिका) षष्ठवर्षीयप्रथमाङ्कः।
44. A Descriptive Catalogue of the Telugu Mss, Vol. I. G.O.M.L., Madras 'Prabandhas' PP. 43, 52 Also S.V.O. Institute library R. 723, PL 973
45. द्रष्टव्यः-श्रीआरुद्रविरचितः 'समग्रान्ध्रसाहित्यमु' इति ग्रन्थः Vol. 9 P. 27
46. निविश्य नीरन्ध्रनिकुञ्जमध्यमानमी समीरास्सहसा ससम्भ्रमाः।
    न शक्नुवन्तीह पुनर्विनिर्गमे लताङ्गनालिङ्गनलालसा ध्रुवम्।। - क्रियाफलोत्प्रेक्षा, सा० र०, पृ० 110
    विनिन्दिताः केचन पङ्कजन्मना जडेन दोषोपहिता अपि स्वतः।

ममोक्तयो विष्णुपदस्पृशो बुधैः कला इव ग्राह्यतमाः कलानिधेः।।
नरकासुरविजयव्यायोगः, p. 6 Ed; Sanskrit Academy, Hyderabad. 1961

47. P.V. Kaṇe, Op. cit. p. 294
48. S.K.DE. History of Sanskrit Poetics Vol. I p. 209
49. Dr. M. Kṛṣṇamācarya, History of Classical Skt. Litrature pp. 856-58
50. शृङ्गाररसं संक्षिप्तविस्तृतभेदेन विभजन् धर्मसूरिः कथयति–
"तत्राद्यो भूपालेनोक्तः – युवानौ यत्र संक्षिप्तां साध्वसव्रीडितादिभिः।
उपचारान्निषेवेते स संक्षिप्त इतीरितः।।" (सा० र०, पृ० 248) (र० सु०, पृ० 191)
51. अवधानं शेषशास्त्री 'वेलुगोटिवारिवंशचरित्रमु' शारदाम्बा प्रेस्, मद्रास्
52. Summaries of Papers (p.p. 28-29) Mysore Oriental Conference (1935)
53. P.V. Kane, Op. cit., P. 293.
54. *Ibid*. P. 324
55. 'अप्पकवीयमु' प्र० वाविल्लरामस्वामिशास्त्रुलु एण्ड सन्स् – मद्रास् 1922 प्रथमाश्वासे चतुर्थपद्यसमनन्तरभाविनि गद्यभागे।
56. ग्रन्थनिर्माणकालोल्लेखनपरं पद्यम् अप्पकवीये पीठिकायां 33 तमम्।
पृ० 5 (वाविल्ल Ed. 1922)
57. D 12951 तथा D12952 G.O.M.L
58. Veeresalingam Pantulu, Lives of Telugu Poets, Part I, p. 595 (Revised edition) 1996
N.E.C. VI पृ० 234 मध्ये तु अस्य कालः 1390 – 1430 क्रि० प० इति निर्दिष्टः।
59. सं० K.P. त्रिवेदी; Bombay Sanskrit Series, Bombay 1903
60. एकावली तरलसहिता, पृ० 57
61. Ibid पृ० 68
62. प्रतापरुद्रीयं रत्नापणसहितम्, पृ० 34
63. मेघसन्देशः सञ्जीविनीसहितः, श्लो० II 49 पृ० 135
64. D. 12951 G.O.M.L. 1 पत्रम्
"पात्रस्नेहदशालोकप्रदोषतिमिरापहं [हा]।
पदार्थदीपिका सेयं भाति लक्षणदीपिका।।"
65. Ibid
66. D 12951. G.O.M.L. पृ० 7.
"गणदेवता साहित्यरत्नाकरे–
भूजलाग्निमरुद्व्योमसूर्यसोमात्मसंज्ञिकाः।
मूर्तयः शङ्करस्याष्टौ गणानां देवताः स्मृताः।।"
पृ० 8 "गणानां ग्रहाः साहित्यरत्नाकरे–

वह्निक्ष्माखाम्बुमरुतां वदन्तीह मनीषिणः।
गणान् भौमादिकान् तत्तद्गणानां च यथाक्रमम्।।"
पृ० 12 "केचित्तु गणप्रयोगं निन्दन्ति। तथा साहित्यरत्नाकरे-
व्योमशून्यं तनुत इति"
पृ० 15 "तथा च साहित्यरत्नाकरे-
ग्रहावस्थामविज्ञाय कवितां यो वदेत् कविः।
सुदूरतः परित्याज्यो नृपैर्जीवितकाङ्क्षिभिः।।"
पृ० 17 "तथा साहित्यरत्नाकरे-
नित्यं तगणवान्मिथ्यात् सर्वाभीष्टफलप्रदः।
कर्तुः कारयितुश्चैव जगणो भूमदैवतः।।"
पृ० 19 "साहित्यरत्नाकरे-
दिनकरमुखग्रहाणां येन............जना भजते।
गुणगणवर्णास्तद्वद्गणो गणानां च।।"
पृ० 19 "यगणप्रयोगेऽपि साहित्यरत्नाकरे-
प्रकृत्या यगणो नित्यं श्रीकरः कथ्यते बुधैः।
स एव विकृतिं याति तगणानुगतो यदि।।"
पृ० 20 "साहित्यरत्नाकरे-
प्रभूनुद्दिश्य पद्यं वा प्रबन्धं वा कदाचन।
न वक्तव्यं न वक्तव्यं मातृकापूजनं विना।।"

67. 'मगदै'मण्डलस्य उपमण्डले 'अरूरुकुर्रम्' इत्याख्ये विद्यते अयं ग्रामः। मगदैमण्डलं च मलाडु अथवा जननाथवलराडु-प्रदेशे वर्तते। अयं च मलाडुप्रदेशः अद्यतनीनदक्षिण-आर्काडुप्रदेशे अन्तर्भवति।
68. V. Raṅgācārya, A Topographical List of Inscriptions of the Madras Presidency, Vol. II P 1199 (Attur taluk, Salem Distt. 1919)
69. Ibid
70. S. Kṛṣṇaswāmi Iyengar, Sources of Vijayanagara History, P. XII, University of Madras, 1919
71. N.V. Ramaniah, Velugoṭivāri Vaṁśāvalī, p. 62 University of Madras 1939
72. वेल्लालसदाशिवशास्त्री तथा अवधानं शेषशास्त्री, 'वेलुगोटिवारिवंशचरित्रमु', शारदाम्बाविलास् प्रेस्, मद्रास, 1911
73. K.N. Mahapatra, A Descriptive Catalogue of Skt. Mss. of Orissa, Vol. II, Introduction P. cxlv
74. " ............................... सीज्जातभास्वद्विवस्वान्
वीरः श्रीपद्मनाभो नृपकुलतिलको धर्मदेवश्च जीयात्।

तत्साचिव्यात्प्रशस्तः कवितिलकसुहृन्मङ्गराजः कविर्य-
स्तज्जः श्रीचन्दनस्य प्रचरतु भुवने खण्डकाव्यं सदैतत्।।"
"विख्यातो यस्य राजप्रियसचिवतया सत्कविर्मङ्गराजः
श्रीधर्मक्ष्माधिराजः स जयतु नितरां........"
अब्ददूतम् Ed. Bhagavan Panda (Directorate of Tourism and Cultural Affairs, ORISSA, Bhubaneswar, 1980) प्रथमपरिशिष्टम् PP 28-29।

75. इदं तु विजयनगरम् अद्यतनमण्डलमुख्यपत्तनभूताद् विजयनगराद् भिद्यते। S.N. Rājaguru, History of Gangas, pp. 75-76
76. Ibid. 75-76.
77. गुडारिकटकम् इदं प्रसिद्धकटकाद् भिन्नं वंशधरानद्याः तीरे गुणपुरस्य उत्तरतः 18 मैलदूरे वर्तते। द्र०– गङ्गवंशानुचरितम्; Ed. Shrimati Pramila Mishra, (Directorate of Tourism and Cultural Affairs ORISSA, Bhubaneswar, 1979) Intro. pp. 29-30
78. Ibid
79. Gazatiar of Visakhapatnam District p 265
80. Rājaguru op.cit p. 102
81. गङ्गवंशानुचरितम् VIII 86–87
82. द्र० K.N. Mahāpātra, op.cit. Vol. II, pp. CLXXVIII, CLXXIX
83. Rājaguru, op.cit. p 102
84. गङ्गवंशानुचरितम्, Introduction. pp. 31-32
एवञ्च अब्ददूतस्य भूमिकायां द्वितीये पृष्ठे भगवानपण्डमहोदयेन य एव कालः पद्मनाभस्य प्रदर्शितः स विश्वम्भरविजयवृत्तान्तेन विरुध्यत इति, तेनैव प्रदर्शिते आकरग्रन्थे (S.N. Rājaguru, op.cit. part II pp 95-97) पद्मनाभस्य कालमधिकृत्य प्रसङ्ग एव नास्तीति च हेतोरश्रद्धेय एव।
85. Rājaguru, op.cit. pp. 155-156
86. *Malt by*. District Manual of Ganjam, p. 104
87. Pramila Mishra, Gaṅgavaṁśānucarita, introduction p. 32 *cf* Kṛṣṇakeli-Taraṅgiṇī, Ed. Smt Pramila Mishra, [Directrate of Tourism and Cultural affairs, Govt. of Orissa, Bhubaneswar]
88. कविरत्नपुरुषोत्तममिश्रः, गोपीनाथपात्रः, लोकनाथत्रिपाठी इत्यादयोऽनेके च कविपण्डितास्तदास्थान्याम् आसन्।
द्र०– K.Ṇ. Mahāpātra, op.cit. Introduction CXCIV.
89. Rājaguru, op.cit pp 155-156
90. जगन्नाथनारायणदेवस्य आस्थाने स्थितवन्तः कविपण्डिताः केचित् पूर्वमेव परिगणिताः। पुरुषोत्तमदेवस्य सभायां तु–

(1) गङ्गवंशानुचरितचम्वाः कर्ता वासुदेवरथसोमयाजी।

(2) सुलोचनमाधवमहाकाव्यकर्ता व्रजसुन्दरपट्टनायकः।

(3) गुण्डिचाचम्वाः कर्ता वक्रवाक्चक्रपाणिः।

(4) गोविन्दलीलामृतमहाकाव्यस्य व्याख्याता कविरत्नहरिसेवकसामन्तरायः।

(5) अब्ददूताख्यस्य खण्डकाव्यस्य कर्ता कृष्णश्रीचन्दनः, केशवरथः, नारायणमङ्गराज इत्यादयोऽनेके कविपण्डिता आसन्।

भगवान् पण्डा, अब्ददूतस्य भूमिका, पृ० 2, भुवनेश्वर 1980

91. K.N. Mahāpātra, op.cit. Introduction, P.CXLV

92. द्र०– अब्ददूतम् – P. 27 (Bhubaneswar, 1980)

"मन्त्री श्रीरामचन्द्रः खिमुडिनृपमणेर्मङ्गराजो यशोदा
देवी यं मङ्गराजतनयमजनयद् राजनारायणं च।
पद्मावत्याख्यदेव्याः प्रथिततनुभुवा तस्य नाम्नाऽब्ददूतं
कृष्णश्रीचन्दनेन प्रियमिति रचितं खण्डकाव्यं समाप्तम्।।
pp. 28-29................................सीज्जातभास्वद्विवस्वान्
वीरश्रीपद्मनाभो नृपकुलतिलको धर्मदेवश्च जीयात्।
तत्साचिव्यात् प्रशस्तः कवितिलकसुहृन्मङ्गराजः कविर्य-
स्तज्जश्रीचन्दनस्य प्रचरतु भुवने खण्डकाव्यं सदैतत्।।

* * *

विख्यातो यस्य राज्ञः प्रियसचिवतया सत्कविर्मङ्गराजः।

93. Adyar library X.J. 13, paper, Devanāgarī pp. 344-351

94. शृङ्गारमञ्जरी Ed. Dr. V. Rāghavan (Hydarabad Archeological Department, 1951)

95. Ibid, Introduction, pp. 13-14

96. 'भारती' आन्ध्रसाहित्यमासपत्रिका, 1931

97. सरस्वती प्रेस्, नेल्लूरु, 1900

98. "इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमुकुन्दाश्रमश्रीचरणशिक्षितस्य श्रीमहोपाध्याय-श्रीरामचन्द्रार्यप्रेमास्पदशिष्यस्य तिरुमलाचार्यतनूजस्य धर्माभट्टस्य कृतौ ब्रह्मसूत्रवृत्तौ ब्रह्मामृतवर्षिण्यां चतुर्थाध्यायस्य चतुर्थः पादः। Ibid

99. "इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमन्मुकुन्दगोविन्दश्रीचरणशिक्षितश्रीरामकिङ्कर-धर्मकृतौ ब्रह्मसूत्रवृत्तौ ब्रह्मामृतवर्षिण्यां चतुर्थस्य अध्यायस्य चतुर्थः पादः।"

100. उभयोः क्रमाद् श्रीप्रज्ञानानन्दसरस्वती तथा श्री एस्० वेङ्कटरमण-अय्यर इत्येतौ सम्पादकौ। ग्रन्थान्तगद्यं तु "इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमुकुन्दगोविन्द-श्रीचरणशिक्षितश्रीरामानन्दसरस्वतीकृतौ ब्रह्मसूत्रवृत्तौ ब्रह्मामृतवर्षिण्यां चतुर्थस्य अध्यायस्य चतुर्थः पाद" इति।

101.D. 4689, R6699

102. 73148, 74088, 75296, 75542, 75554, 75676, PM 610, PM 611, PM 612

103. M. Kṛṣṇamācarya, History of Skt. Litrature, p. 506

104.इदं त्वत्र अवधेयम् – रामानन्देन रत्नप्रभायां बहूनि वाक्यानि आनन्दगिरिटीकायाः शब्दतो गृहीत्वा अनूदितानि। तान्येव च वाक्यानि ब्रह्मामृतवर्षिण्यामपि दृश्यन्ते। अतो यद्यपि एवमपि वक्तुं शक्यते यद् भिन्नावेव उभयोः कर्तारौ, एकस्माद् आनन्दगिरीयाद् यथोचितं वाक्यानि गृहीतवन्ताविति तथापि तथैव वक्तव्यमिति नियमाभावाद् अभिन्न एव कर्ता एकस्माद् वाक्यानि गृहीत्वा द्वयोरपि ग्रन्थयोर्लिखितवानित्युक्ते बाधकप्रमाणाभावाच्च उभयोरपि ग्रन्थयोरेककर्तृकत्वं यावद्विरोधिप्रमाणान्तरलाभम् अस्माभिरभ्युपगम्यते।

105.द्र० वेमूरिनरसिंहशास्त्रिणां लघुनिबन्धः 'भारति' (आन्ध्रसाहित्यमासपत्रिका) 1931

106.द्र० अड्यारग्रन्थालयीयतालपत्रग्रन्थे (73448) ग्रन्थान्तगद्यम्।

107.नरकासुरविजयव्यायोगः p. 5 हैदराबाद, 1961

108.द्र० ग्रन्थान्तगद्यानि – 1. D 4689 G.O.M.L.
2. Nellore Edition
3. 73148 (Adyar library)

109.द्र० ग्रन्थान्तगद्यम् 73148 (Adyar library)

110.ब्रह्मसूत्रशाङ्करभाष्यं रत्नप्रभासहितम्, P 1
"कामाक्षीदत्तदुग्धप्रचुरसुरनुतप्राज्यभोज्याधिपूज्य–
श्रीगौरीनायकाभित्प्रकटनशिवरामार्यलब्धात्मबोधैः।
श्रीमद्गोपालगीर्भिः प्रकटितपरमाद्वैतभासास्मितास्यः
श्रीमद्गोविन्दवाणीचरणनलिनगो निर्वृतोऽहं यथालिः।।"

111.द्र० वे० नरसिंहशास्त्रिणां लघुनिबन्धः, "भारति" आन्ध्रसाहित्यमासपत्रिका, 1931

112."नमस्तमः कर्दमदुर्दमाम्बुधिप्रणष्टचेष्टाखिलजन्तुसन्ततिम्।
प्रसार्यमाणैः पटुदीर्घरश्मिभिः जगत्त्रयीमुद्धरते विवस्वते।।"

113.ब्रह्मसूत्राणि 1.41

114.ब्रह्मसूत्रशाङ्करभाष्यम्, कल्पतरुपरिमलसहितम्, पृ० 376

115.अप्पय्यदीक्षितः, न्यायरक्षामणिः, पृ० 350

116.नरकासुरविजयव्यायोगः पृ० 6 हैदराबाद, 1961

117.प्रतापरुद्रीयम्, Ed. डा० राघवन्, पृ० 83–84, Madras 1970

118.Ibid पृ० 84

119.'व्यायोगो रसजृम्भितोऽस्ति नरकध्वंसाभिधो नूतनः' न० वि० व्या०, पृ० 5 श्लो० 13

120.तेलगुलिप्यां मद्रास्नगरे 1885 क्रि० प० तमे वर्षे मुद्रितम्।

121.वाविल्लरामस्वामिशास्त्रुलु एण्ड् सन्स् द्वारा 1950 क्रि० प० तमे वत्सरे प्रकाशितः।

122.Ibid टिप्पणी 38 तमे पृष्ठे।

123.नरकासुरविजयव्यायोगः, पृ० 2-4, हैदराबाद, 1961

124."इति श्रीमण्डकुरुं(डा)ग्रहारनायकरत्नभूतमाधवाध्वरीन्द्रतनुजेन जानकीसोम-पीथिनिगर्भशुक्तिमुक्तामणिना त्व(त)त्तादृग्बोधायनधर्मराजाध्वरिशिखामणि(ना)दौहित्रेण धर्मराजाध्वरिवरेण विरचितो दत्तरत्नाकरो विदुषां मुदमादधातु"।।

125.लक्ष्मणसूरिः, मन्दरः, साहित्यरत्नाकरव्याख्या, पृ० 3, हैदराबाद, 1972

126.धर्मसूरिः, नरकासुरविजयव्यायोगः (पृ० 40)।

127.Ibid पृ० 29

128.Ibid पृ० 4

129.Ibid पृ० 8

130.रघुनाथदासः, साहित्यभूषणम्, अद्वैतचरणधलस्य शोधप्रबन्धः (अप्रकाशितः) पृ० 3, 7, 238, 313, 314, 386, 387, 415, 417, 423

131.Ibid पृ० 2-6

132.Ibid पृ० 7

133.रङ्गशायी, आमोदः।

134.रसकल्पद्रुमः, सं० पण्डितबनाम्बर-आचार्यशर्मा, प्र० ओडिसासाहित्य अकाडेमी, भुवनेश्वर, 1965

135.'नानाकविकृतानां च पद्यानां संजिघृक्षया।
आरभ्यते मया ग्रन्थग्रथना स्वल्पबुद्धिना।।' Ibid पृ० 2

136.Ibid pp. 30 (3-27), 39 (1-30) 46 (10-163, 229, 230, 231) 50 (7-10, 9-14) 224 (7-7) 229 (2-3) 230 (2- 9- 7-11) 231 (2-15) 233 (2-25) 234 (2-31) 532 (10-89) 537 (9-19) 539 (3-11, 7-167) 540 (6-5) 547 (7-36) 556 (7-135) 564 (5-10) 565 (2-25) 578 (2-13) 606 (1-37) 607 (1-39, 3-29, 3-30) 609 (7-30) 610 (3-28) 614 (7-217, 2-17 ) 615 (2-18) 617 (1-5) 619 (1.2) 639 (1-20, 21, 23, 24) 640 (1-25, 27) 661 (6-18, 19, 20, 21) 662 (6-22, 23, 24, 26, 27, 28, 29) 663 (6-30, 31) 664 (6-33, 35, 37) 754 (3-31, 30) 769 (10-89, 9-19) 770 (6-31, 10-99) 780 (10-102) 787 (9-76) 789 (10-106) 804 (6-4) 808 (5-16) 824 (9-51)
कुण्डलमध्ये दत्ता संख्या साहित्यरत्नाकरश्लोकसम्बन्धिनी ज्ञेया।

137.Ibid P 553 (दर्पान्धगन्धगजकुम्भ इत्यादि) P. 773 (वेताला यातुधानास्त्यजत इत्यादि)

138.Ibid pp 44, 45, 31

139. Orissa State Museum - Mss Library, Bhubaneshwar S. MS 10

140. Ibid S. Ms 11

141. अहोबलपण्डितः, कविशिरोभूषणमु, पृ० 54

142.कविसमयकल्लोलः R 17815 GOML, मद्रास्

143.Ibid पृ० 10
144.Ibid पृ० 10
145.Ibid पृ० 16
146.Ibid पृ० 16
147.Ibid पृ० 18
148.Ibid पृ० 24
149.Ibid पृ० 25
150.Ibid पृ० 43, 50
151.कटिकनेनि-रामकविः, कुवलयानन्दप्रकाशमु, श्लो. 12।



## ।। अथ द्वितीयोऽध्यायः ।।

# साहित्यरत्नाकरः



### 2.1 साहित्यरत्नाकरस्य वैशिष्ट्यम्

पूर्वतनप्रकरणेषु क्वचिद् उत्तरत्र च साहित्यरत्नाकरे प्राचीनालङ्कारिकाणां प्रभावः प्रतिपादितः। अधुना साहित्यरत्नाकरस्य वैशिष्ट्यम् अधिकृत्य किञ्चित् प्रस्तूयते। यद्यपि एकावल्यादिग्रन्थानामनुकरणमत्र दृश्यते। तथाप्यनेकेषु स्थलेषु धर्मसूरेः स्वाभिप्राया वैलक्षण्येन तत्र तत्र प्रतिपादिता एव। प्रथमं साहित्यरत्नाकरस्य वैशिष्ट्यमधिकृत्य क्रियमाणेऽस्मिन् विचारे धर्मसूरिणा स्वग्रन्थस्य यद्वैशिष्ट्यं प्रतिपादितं तत्प्रथमगणनाम् अर्हति। तथा हि–

"अलङ्क्रियाः पूर्वतरैः प्रणीता
न योजिताः काञ्चन नायकेन।
कैश्चित्तु कुक्षिम्भरिभिर्निबद्धाः
क्षोदीयसा काञ्चन नायकेन।।"

(पृ० 6)

दिव्येनोत्तमनायकेन घटिता सेयं ममालङ्कृतिः
सद्वृत्ता कृतिना विदेहतनयावक्षोरुहस्थायिना।
तत्तादृग्दशकण्ठकीर्तिपयसो नैल्यावहश्रीजुषा
निस्त्रासेन महेन्द्रनीलमणिनोदारेण संशोभते।। (पृ० 6)

एष धर्मसूरेर्निणयः। अलङ्कारशास्त्रग्रन्थेषु उदाहरणतया काव्यादिभ्यो मुक्तकश्लोकानां स्वीकरणमेव सम्प्रदाय आसीत्। क्रमेण अभिवृद्धिं गते शास्त्रे नूतनप्रमेयांशानां वैरल्ये च सम्पन्ने कवितावल्लभानाम् आलङ्कारिकाणां यशोभूषणाख्यपद्धत्या स्वग्रन्थनिर्माणमेव कर्तव्यत्वेन आपतितम् आसीत्। अभिप्रेतं च एतैर्यदनायकग्रन्थेभ्योऽपि सनायकग्रन्था विशिष्टा इति। अत एव विद्यानाथादिभिरसौ मार्ग आश्रितः। उक्तञ्च तेनापि[1]–

"पुण्यश्लोकस्य चरितमुदाहरणमर्हति।
न कश्चित् तादृशः पूर्वैः प्रबन्धाभरणीकृतः।।
प्रबन्धानां प्रबन्धॄणामपि कीर्तिप्रतिष्ठयोः।
मूलं विषयभूतस्य नेतुर्गुणनिरूपणम्।।"

साहित्यरत्नाकरस्य अत्यन्तोपजीव्यभूता एकावल्यपि नरसिंहदेवस्य यशोभूषणतयैव विद्याधरेण ग्रथिता। एतत्प्रक्रियासमुत्पत्तेरनन्तरमनेके ग्रन्था एतादृशा निबद्धा अलङ्कारशास्त्रे। किन्तु कस्यचित् मनुष्यस्य परिमितशक्ति-प्रभाववतः स्तुतौ यद्यपि अर्थादिदृष्टफलसिद्धिरस्ति तथापि आमुष्मिकफल-सिद्धिर्नास्तीत्यतो धर्मसूरिः रघुवंशतिलकं श्रीरामचन्द्रमेव स्वकृतेर्नायकत्वेन वव्रे। अयमेको विशेषो धर्मसूरेः प्रबन्धस्य।

किञ्च धर्मसूरिः स्वयमेव इतरग्रन्थानां सत्त्वात् स्वग्रन्थस्य वैयर्थ्यमा-शङ्क्य-

"एकेन चरितार्थत्वाद् इतरानर्थता तु या।
सा मद्ग्रन्थस्थितावन्यग्रन्थानां किं न जायताम्"।।

(पृ० 6)

इति प्रतीपाशङ्कया समाधत्ते। एवं स्वग्रन्थस्य वैयर्थ्यं परिहृत्य प्रौढोक्त्या यदि सर्वेषाम् उपादेयो न भवति मे ग्रन्थस्तथापि केषाञ्चिद् भवत्येवेत्यपि समाधत्ते-

"काव्यामृताकलनया मृदुशीतलानि
श्रीरामदिव्ययशसा सुरभीकृतानि।
येषां मनांसि घनसारसमानि तेषा-
मेषा कृतिर्वितनुतां कमपि प्रहर्षम्।।"

(पृ० 6) इति।

एतेन श्रीरामचन्द्रनायकत्वरूपम् एकं वैशिष्ट्यं साहित्यरत्नाकरस्य सिद्धम्। अस्मिन् सर्वाण्यप्युदाहरणानि श्रीरामचन्द्रमुद्दिश्यैव कृतानि। अत्र च प्रसङ्गाद् धर्मसूरेः श्रीरामचन्द्रविषयकभक्तिमधिकृत्यापि ईषद्विवेचनीयमस्ति।

### 2.1.1 धर्मसूरेः श्रीरामभक्तिः

सकलगुणोदारत्वात् श्रीरामचन्द्रमेव स्वकृतेरनुरूपनायकं निश्चित्य धर्मसूरिः सर्वाण्युदाहरणानि तत्परतया निर्ममे। तथापि यथा श्रीरामोऽस्याभिमतदैवम् अस्ति तथा इतरेष्वप्यस्य भक्तिः समानैव। बालभागवतकाव्यनिर्माणं, सूर्यशतकग्रथनं

चामुमंशं स्पष्टयतः। किञ्च साहित्यरत्नाकरे मङ्गलश्लोकेष्वनेका देवताः स्तुताः, परन्तु श्रीरामचन्द्रस्य स्तुतिरेव नास्तीत्येतत् महदाश्चर्यं जनयति।

अपि च श्रीरामचन्द्रस्य वर्णनेऽपि भट्टिकाव्यादिष्विव नात्र रामायणकथा अनुसृता। किन्तु सर्वेऽपि मुक्तकश्लोका एव। तेन च श्रीरामचन्द्रस्तुतौ क्रियमाणायामपि प्राकृतस्य कस्यचिद् राज्ञः स्तुतेः साम्यं क्वचिद् अनुभूयते। 'नरसिंहदेव'-'प्रतापरुद्र' इत्यादिपदापनयनेन श्रीरामचन्द्रपदयोजनेन च एकावली-प्रतापरुद्रीयोदाहरणश्लोका उदाहृता इत्यप्यनेकत्र अनुभूयते। एतेन श्रीरामचन्द्रवर्णनकृतो गुणविशेषः किञ्चित् कुण्ठित इवाभाति।

"मालिन्यं यमुने त्यजान्तक कथं जह्यां प्रतापैः पिता
धूतो दाशरथेर्जलेषु जलधेर्हा लज्जितो मज्जति।
शुष्कोऽब्धिर्बलरेणुनास्य यवनासृग्भिः पुनः पूरितः
पीतः प्रेतशतैरपूरि पुनरप्येषां हि योषाश्रुभिः।।"

(पृ० 216)

अस्मिन् श्लोके 'यवनासृग्भिः' इति प्रयोगोऽमुम् अभिप्रायं द्रढयति।

यत्किञ्चिद् अस्तु धर्मसूरेः श्रीरामभक्तिः सुस्पष्टैव। किञ्च रामचन्द्रस्य नायकीकरणेनैव साहित्यरत्नाकरस्य बहुलः प्रचारः समपद्यत, विशिष्य चोत्कलेषु। तथा हि- चैतन्यप्रभोरवतरणानन्तरम् उत्कलेषु विशिष्य च 'बडाखिमुण्डि'-'पार्लाखिमुण्डि'-राजगृहेषु च मधुरभक्तिसम्प्रदायो बद्धरूढ आसीत्। अत एव अलङ्कारशास्त्रे श्रीरामादिदिव्यनायकानां ग्रन्थानाम् अभावात् तादृशेऽस्मिन् तेषां महानादरः समजनि। पद्मनाभ-अनङ्गभीमदेवो जगन्नाथनारायणदेवश्च चैतन्यानुयायिनावित्यत्रैतिहासिकप्रमाणान्यपि सन्त्येव। अत एव च साहित्यरत्नाकरव्याख्याता कृष्णमिश्रो धर्मसूरिम् अनेकवारं वैष्णवं कथयति[2]। एवं रसतरङ्गे शृङ्गारक्रीडानां वर्णनसन्दर्भे या रासकेलिर्बह्वीभिर्नायिकाभिः सह श्रीरामचन्द्रस्य वर्णिता साऽपि मधुरभक्तिसम्प्रदायप्रभावेणैवेति सन्तोष्टव्यम्। अन्यथा श्रीरामस्य बहुभार्यात्वं प्रमाणविरुद्धं कथयन् धर्मसूरिरप्रामाणिको भवितुम् अर्हति।

## 2.1.2 साहित्यरत्नाकरस्यान्ये विशेषाः

(1) साहित्यरत्नाकरे सर्वाण्यप्युदाहरणानि धर्मसूर्युपज्ञानीत्ययं द्वितीयो विशेषः। केवलम् अभिसारिकानायिकाया उदाहरणमेकं कालिदासकृतम् अनेनोद्धृतम्। स चासौ श्लोकः–

"रावणावरजा तत्र राघवं मदनातुरा।
प्रतिपेदे निदाघार्ता व्यालीव मलयद्रुमम्॥[3]"

किन्तु नियमभङ्गपरिहारायैव 'घोटीतीक्ष्ण' इत्यादिना स्वीयमपि द्वितीयमुदाहरणं ददौ।

(2) प्रसिद्धेष्वलङ्कारग्रन्थेषु किञ्चिदिव विचारितः शब्दवृत्तिविचारः साहित्यरत्नाकरे तरङ्गत्रयेण सकलशास्त्रसंग्रहसमन्वयरूपेण महता प्रौढिम्ना तलस्पर्शितया विचारितः। विशिष्य च शब्दार्थसम्बन्ध-विचारो धर्मसूरेः स्वोपज्ञोऽत्यन्तगहनश्च। एतत्त्वनुपदमेव स्पष्टीभविष्यति।

(3) प्रथमतरङ्गे काव्यस्य मीमांस्यत्वमुपस्थापयितुं या आक्षेपसमाधान-प्रणाली आश्रिता सा प्रणाली, स च विचारोऽत्यन्तविलक्षणः प्रौढशास्त्रग्रन्थसुलभोऽन्यो विशेषः।

(4) ग्रन्थे सर्वेषां विषयाणां तरङ्गाणां च परस्परसङ्गतिप्रदर्शनमप्यन्यो विशेषः। एवं ग्रन्थयोजनमपि (Planning and arrangement of text) समीचीनं चकास्ति। तथा हि– प्रथमतरङ्गे काव्यस्य मीमांस्यत्वं प्रतिष्ठाप्य, द्वितीयतरङ्गे काव्यलक्षणमुक्त्वा तदनन्तर-तरङ्गाः सर्वेऽपि काव्यलक्षणान्तर्गतैकैकदलस्य विवरणरूपेण सन्निवेशिताः। अत एव नायकलक्षणादीनां काव्यलक्षण-सम्बन्धाभावात् पीठिकाश्लोकेषु कृतिनायकविषयकप्रसङ्ग-सद्भावाच्च द्वितीयतरङ्गस्य आदावेव काव्यलक्षणनिरूपणात् प्राक् ते निरूपिताः। एवं ग्रन्थस्य सर्वस्यापि सन्निवेशने काचन विशिष्टा रीतिरत्र अवलम्बिता। तरङ्गान्तर्गतविषयाणामपि मध्ये परस्परसङ्गतिरपि प्रदर्शिता। एष च सङ्गतिप्रदर्शनचमत्कारस्तरङ्गान्त-रापेक्षया सप्तमे तरङ्गे स्पष्टतरो भासते।

(5) यदपि साहित्यरत्नाकरस्य एकावल्याद्युपजीवकत्वं पूर्वं प्रतिपादितं तत्राप्येतदवधेयम्। यद्यप्यनेकेषु स्थलेषु धर्मसूरिस्तन्मतान्यनुकरोति तथाप्यनेकेषु स्थलेषु स्वीयं भेदाभिप्रायमपि प्रकटयत्येव। क्वचित्तु पूर्वतनसिद्धान्तानां परिपोषमपि सम्पादयति। किन्तु धर्मसूरेः प्रागेवालङ्कारतत्त्वानां सम्यग्रूपेण विचारितत्वात् तत्र तत्र ईषद्वैलक्षण्यमेव कथयितुं शक्यमासीत्। तथा हि-

तिर्यग्गतरते रसत्वमेवाङ्गीकृतम् एकावलीकृता। धर्मसूरिस्तु रसाभासत्वमेव अङ्गीकृतवान्। एवम् अलङ्कारतरङ्गादिषु प्रभेदपरिगणनादिविषयेषु अनेकत्रासौ भिद्यते। उपरिष्टाद् एतादृशानि वैलक्षण्यानि शृङ्गग्राहिकतया स्वीकृत्य विमृष्टानि।

क्वचित् स्वोपजीव्यग्रन्थानां तत्र तत्रावश्यकव्याख्याकरणद्वारा परिपोषं जनयति। तथा हि- एकावल्यां विभावादीनां रसं प्रति कारकत्वज्ञापकत्वविलक्षणमेव हेतुत्वमिति प्रदर्शितम्। कारकज्ञापकबहिर्भूतानां विभावादीनां कुत्र कथमुपयोग इत्याशङ्क्य चर्वणोपयोगित्वं तेषां प्रतिपादितम्। तरलेऽपि चर्वणास्वरूपम् अभिधाय,

'उक्तरीत्या तन्मात्रोपयोगाद् हेतुत्वम्[4]'

इत्येव प्रतिपादितम्। न तूभयत्रापि चर्वणोपयोगिनां रसहेतुत्वं कथमिति प्रपञ्चितम्। एतद्विभावयन् धर्मसूरिः 'वेदान्तानामावरणभञ्जन इव' इति दृष्टान्तं प्रतिपादयन् पूर्वोक्तामाशङ्कां सम्यक् समाधत्ते। (पृ० 241)

तथा हि- नित्यशुद्धबुद्धमुक्तस्वभावोऽपि हि आत्मा अनाद्यविद्ययाऽऽवृतः स्वप्रकाशोऽपि न प्रकाशते। 'तत्त्वमसि' इत्यादिमहावाक्यानुसन्धानेन नाशिते तदावरणे स्वयमेव स प्रकाशते। एवञ्च तस्य प्रकाशने हेतवोऽपि वेदान्ताः, न सत्यं तत्प्रकाशोत्पादनेनोपयोगित्वं प्राप्नुवन्ति, किन्तु 'तदावरकाविद्यापसारणेन' इति वेदान्तिनां सिद्धान्तः। एवमेवात्रापि स्वप्रकाश एव रसः। तस्योत्पत्तौ ज्ञप्तौ च न कारणत्वं विभावादीनां, किन्तु तच्चर्वणायामिति।

एवमन्यत्रापि 'चर्व्यमाणतैकप्राणः' इति रसलक्षणस्थं पदं "तस्यालौकिकत्वमाह चर्व्यमाणतैकप्राण इति। अनुभवैकजीवित इत्यर्थः" इति व्याख्यातवान् मल्लिनाथः[5]। अत्रानुभवैकवेद्यत्वेन कथम् अलौकिकत्वं सेत्स्यतीति तु जिज्ञासितमेवास्ते। अत्रैवं धर्मसूरिः - "अनुभवस्य स्वप्रकाशकत्वात् तदभिन्नस्य रसस्यापि स्वप्रकाशतयाऽलौकिकत्वसिद्धिरिति भावः" इति जिज्ञासामिमां

पर्यपूरयत् (पृ० 241)। एवम् अनेकेषु स्थलेषु सूक्ष्मेक्षिकया स्वोपजीव्यग्रन्थान् परीक्ष्य तत्र तत्रावश्यकविषयप्रतिपादनेन तत्तद्ग्रन्थानां परिपोषम् अजनयद् धर्मसूरिः।

किञ्च येषु तरङ्गेषु एकावली–तत्तरलयोः प्रभावो महान् दृश्यते, तत्रापि मूलव्याख्यानरूपग्रन्थद्वयसारांशस्यैकत्र स्वतन्त्रतया उपादानात् तत्तद्विषयावगतौ लाघवमुपजायत इत्यतिरोहितमेव।

एवमेव नवमतरङ्गे "अर्थान्तरसङ्क्रमितात्यन्ततिरस्कृतवाच्ययोर्वस्तुमात्ररूपं व्यङ्ग्यं विना लक्षणैव न भवतीति प्राक् प्रतिपादितम्" इति काव्यप्रकाशगतवाक्ये[6] वस्तुमात्ररूपमित्यत्र 'मात्र'पदप्राधान्यं स्वीयेन विचारेण साधु प्रतिपादयामास धर्मसूरिः। तथा हि- लक्षणायाः प्रयोजनमेव खलु व्यङ्ग्यं भवति। प्रयोजनञ्च मुख्यार्थस्यान्यस्य वा धर्म एव भवति। उपमाद्यलङ्कारास्तु न कदापि कस्यचिदपि मुख्यार्थस्य धर्मभावं सहन्त इत्यतो व्यज्यमानं तत्प्रयोजनं नियमेन वस्तुरूपं भवेदिति। (पृ० 208)

एवं साहित्यरत्नाकरस्य वैशिष्ट्यमधिकृत्य स्थालीपुलाकन्यायेन केचिदंशा अत्र प्रस्तुताः। अनेके चेतरे अंशाः साहित्यरत्नाकरस्य विषयानधिकृत्य करिष्यमाणे विचारे तत्र तत्र विशदतया प्रस्तोष्यन्ते।

### 2.2 ग्रन्थारम्भसमर्थनतरङ्गः

साहित्यरत्नाकरे सर्वोऽपि प्रथमस्तरङ्गो विषयविभागदृष्ट्या त्रेधा विभक्तुं शक्यते- (1) मङ्गलाचरणं, स्ववंशकीर्तनं च (2) स्वग्रन्थस्य वैशिष्ट्यम्, वैयर्थ्यशङ्कापरिहारश्च (3) काव्यम् अमीमांस्यम् इति पूर्वपक्षस्य खण्डनम् इति। तत्र प्रथमौ द्वावपि पूर्वमेव (क्रमात् 1.1.8, 2.1) अस्माभिर्विमृष्टौ। अतः प्रथमतरङ्गे अत्यन्तप्रधानभूतोऽवशिष्टश्च काव्यमीमांस्यत्वविचारोऽधुना परीक्ष्यते।

### 2.2.1 काव्यमीमांसाया अनुबन्धचतुष्टयनिरूपणम्

ग्रन्थकर्तुर्धर्मसूरेः साहित्यरत्नाकरग्रन्थप्रणयने सर्वशास्त्रस्वातन्त्र्यच्छाया सर्वत्र अनुभूयते। तथा हि- सर्वेषामपि दर्शनानां शास्त्राणाञ्चादावनुबन्धचतुष्टयं निरूप्यते। विषय–प्रयोजन–अधिकारि–सम्बन्धा अनुबन्धचतुष्टयशब्देन व्यपदिश्यन्ते। तत्र तावद् ब्रह्ममीमांसाया ब्रह्मात्मैक्यं विषयः, अपुनरावृत्तिरूपो मोक्षः प्रयोजनम्,

नित्यानित्यविवेकादिसाधनचतुष्टयसम्पत्तिमान् अधिकारी, सम्बन्धश्च यथायोगम् अभिधीयमानो भवति। एवं काव्यमीमांसाशास्त्रस्यास्यानुबन्धचतुष्टयं निरूपणीयं भवति। निरूपितं चैतत्-

"गवां विलसितैः कर्तुं रसालङ्क्रिया-
संस्फूर्तिं समुदञ्चयेयमधुना साहित्यरत्नाकरम्।।"
"रसालङ्कारादिर्विषयः, तदवबोधः प्रयोजनम्,
तत्कामोऽधिकारी, सम्बन्धश्च यथासम्भवमुन्नेयः"। (पृ० 4, 5)

## 2.2.2 काव्यमीमांसाया आरम्भणीयत्वविचारः

एवं निरूपितेऽप्यनुबन्धचतुष्टये किमप्यवशिष्यत एव जिज्ञासितम्। रसालङ्काराद्यवबोधः प्रयोजनम् इत्युक्तम्। किन्तु किं तेन अवबोधेन? अत्र किमपि सुखादिरूपमेव प्रयोजनम् एष्टव्यम्। तस्य च सुखादिरूपस्य प्रयोजनस्य धर्मादिपुरुषार्थचतुष्टयान्यतमे पार्यन्तिकता च प्रतिपादयितव्या। अन्यथा शास्त्रत्वस्य हानिः स्यात्। किञ्च 'काव्यालापांश्च वर्जयेत्[7]' इति काव्यालापनिषेधपरायाः स्मृतेरुपलम्भात् काव्यस्यैव निषेधे तन्मीमांसात्मकशास्त्रस्य कथापि भवितुं नार्हतीत्यतो निषेधस्मृतेस्तात्पर्यपरिशीलनं कर्तव्यम्। काव्यमीमांसाशास्त्रस्य विधायकं प्रमाणमपि प्रदर्शनीयम्। अन्यथा अप्रामाणिकत्वापत्तेः। सर्वप्रमाण-मूर्धन्यभूताया भगवत्याः श्रुतेः प्रमाणताप्रदर्शनं विना वेदादिशास्त्रान्तरेभ्योऽ-तिशयितत्वं काव्यशास्त्रस्य न स्थिरीभवेद् इत्येतत्सर्वं सम्पिपादयिषुर्धर्मसूरि-र्विकल्पावान्तरविकल्पपुरस्सरं शास्त्रीयेण मार्गेण काव्यमीमांसाया आरम्भणीयत्वविचारम् अकरोत्।

यद्यपि प्रभुसुहृत्कान्तासम्मितत्वेन उपदेशत्रैविध्यं कीर्त्यादीनां काव्य-प्रयोजनत्वम्, अन्ये च केचित् तत्सम्बद्धा विषयाः काव्यप्रकाश-एकावली-प्रतापरुद्रीयादिषु ग्रन्थेषु विमृष्टपूर्वा एव, तथाप्यत्र साहित्यरत्नाकरे तेषां प्रस्तुतीकरणे महद्वैलक्षण्यं सन्दृश्यते। तथा हि-

काव्यम् अमीमांस्यम् इति पूर्वपक्षः पञ्चधा विकल्पितः- (1) किं विषयाभावात् (2) किं प्रयोजनाभावात् (3) किं निषिद्धत्वात् (4) किं पुरुषार्थपर्यवसानाभावात् (5) आहोस्वित् किं तत्कर्तव्यताबोधकप्रमाणाभावाद् इति।

(1) 'सगुणालङ्कृती काव्यं पदार्थौ दोषवर्जितौ' (पृ० 29) इति काव्यं सामान्यतो लक्षयित्वा तद्घटकपदानां प्रत्येकशो विवरणं यतः करिष्यते साहित्यरत्नाकरे, अत एव काव्यमीमांसाया विषयः सिद्ध्यतीति, विषयाभावात् काव्यमीमांसाया अनारम्भणीयत्वं यत् प्रथमविकल्पेन आशङ्कितं तद् दूरत एव निरस्तम्।

(2) काव्यमीमांसायाः प्रयोजनं काव्यस्वरूपावबोध एव। किन्त्वयं काव्यस्वरूपावबोधः स्वतन्त्रतया पुरुषप्रवृत्तिनिवृत्तिप्रयोजको न भवति। अतः काव्यमीमांसाया अङ्गभूताया अङ्गि यत् काव्यं तस्य यानि विविधानि प्रयोजनानि कीर्त्यादीनि तान्येव काव्यमीमांसाया अङ्गभूताया अपि प्रयोजनानीत्यङ्गीकर्तव्यम्। तेषामेव पुरुषप्रवृत्तिनिवृत्तिप्रयोजकत्वात्, स्वर्गादिविविधपुरुषार्थपर्यवसायित्वाच्च। अङ्गानां प्रधानफलेनैव फलवत्त्वम् इति नियमः पूर्वमीमांसाप्रसिद्धः काव्यप्रयोजनानामेव काव्यमीमांसाप्रयोजनत्वेन अङ्गीकरणे प्रमाणतया प्रदर्शितो धर्मसूरिणा। युक्तं चैतत्। तथा हि-दर्शपूर्णमासेष्टेः प्रधानयागस्य पूर्वम् अनुष्ठेयाः पञ्च प्रयाजाः, अनन्तरम् अनुष्ठेयास्त्रयोऽनूयाजाश्च प्रधानयागस्य अङ्गभूता भवन्ति। समित्, तनूनपात्, इद्, बर्हिः, स्वाहाकार इति पञ्चप्रयाजाः। देवं बर्हिः, देवो नराशंसः, देवोऽग्निः स्विष्टकृत्, इति त्रयोऽनूयाजाः। प्रयाजानूयाजयोरुभयोरपि पृथक्फलं तु विधायकवाक्ये न श्रूयते। तर्हि किं तावत् फलं प्रयाजानूयाजयोरित्याकाङ्क्षायां प्रधानस्य दर्शपूर्णमासेष्टेर्यत्फलं तदेव तदङ्गभूतयोः प्रयाजानूयाजयोरिति 'अङ्गफलविरोधे च तादर्थ्यात्[8]' इत्यधिकरणे निर्णीतम्। न्यायस्यैतस्य अतिदेशात् प्रकृते काव्यस्य यानि प्रयोजनानि तान्येव काव्यमीमांसाशास्त्रस्य प्रयोजनानीति सिद्ध्यति।

काव्यमीमांसाशास्त्रात्मकेषु काव्यप्रकाश-एकावलीप्रभृतिषु ग्रन्थेषु काव्यफलान्येव गण्यन्ते न तु काव्यमीमांसाशास्त्रफलानि इत्येषा तत्तद्ग्रन्थगता अनुपपत्तिरपि धर्मसूरिणा सम्यक् परिहृता। 'काव्यं यशस' इत्यादिकाव्यप्रकाशकारिकायां[9] 'विश्वोल्लङ्घनजाङ्घिकीम्' इत्याद्येकावलीकारिकायां[10] 'परिवर्धते विज्ञानम्' इत्यादि-

प्रवरसेनकृतसेतुबन्धकाव्यश्लोके[11] च प्रसिद्धान्येव बहुविधानि काव्यप्रयोजनानि। तस्मात् प्रयोजनाभावात् काव्यशास्त्रं नारम्भणीयम् इत्येतन्न सङ्गच्छते।

(3) अस्तु प्रयोजनवती काव्यमीमांसा; किन्तु सप्रयोजन एव श्येनयागो निषिद्धत्वाद् यथा नानुष्ठेयः, एवं प्रयोजनवत्यपि काव्यमीमांसा 'काव्यालापांश्च वर्जयेत्' इति निषेधविषयीभूतकाव्यविषयकत्वात् नारम्भणीयैवेति तृतीयविकल्पः।

अस्य विकल्पस्य निरासार्थं "निषेधस्य मुद्राराक्षसाद्यसत्काव्यविषयत्वात्। अन्यथा रामायणादेरपि हेयताप्रसङ्गात्" इत्याद्युक्त्वा 'असत्कीर्तनकान्तार' इत्यादिहरिवंशकारिकां[12] "सैवेह वाणी जनताघहारिणी" इत्यादिनारदीयकारिकां[13] च काव्यस्य कर्तव्यत्वे प्रमाणतया प्रादर्शयत्। किन्तु विधिनिषेधपरयोर्द्वयोरपि वाक्ययोः स्मृतित्वात् तुल्यबलत्वात्, अन्यतरस्य स्मृत्यप्रामाण्यहेतुराग-द्वेषादिदोषदूषितत्वम् अङ्गीकरणीयमिति पूर्वपक्षिण आशयं बाधविकल्पव्य-वस्थानाम् उत्तरोत्तरं बलीयस्त्वात्, अत्र च व्यवस्थायाः सुकरत्वाद् बाधो नाङ्गीकर्तव्य इति कथयन् उत्तरग्रन्थेन दूरीकृतवान्। अतो ग्रन्थे तृतीय-विकल्पस्यास्य समाधानप्रकारः पञ्चमविकल्पसमाधानस्थलेऽपि सन्दृश्यते। तथा हि–

स्मृतिः श्रुतिमूलकतयैव प्रामाण्यं भजते। यत्रापि स्मृतौ मूलभूतप्रत्यक्षश्रुतिर्न दृश्यते तत्रापि तादृशश्रुतिकल्पनयैव स्मृतेः प्रामाण्यं वक्तव्यमिति 'धर्मस्य शब्दमूलत्वाद् अशब्दमनपेक्षं स्यात्' इत्यादिना स्मृत्यधिकरणे[14] पूर्वतन्त्रे निर्णीतम्। किन्तु राग–द्वेष–मद–उन्माद–प्रमाद–आलस्य–लुब्धता यस्यां स्मृतौ उपलक्ष्यन्ते सा स्मृतिरप्रमाणं भवति। एवञ्च यथा 'वैसर्जनीयं वासोऽध्वर्युर्गृह्णाति' इति स्मृतिर्लोभप्रयुक्ता अप्रमाणं भवति तथा काव्यकर्तव्यताबोधकस्मृतिवाक्यानि रागादिप्रयुक्तत्वाद् अप्रमाणानि भवन्ति। अतश्च 'काव्यालापांश्च वर्जयेत्' इति स्मृतिरप्रमाणभूतकाव्यकर्तव्यताबोधकस्मृतीनां बाधिकैव भवितुम् अर्हतीति पूर्वपक्षविकल्पस्य आशयः।

यत्रोभयोः स्मृत्योर्विरोधेऽन्यतरयाऽन्यतराया बाधः स्वीक्रियते तत्राऽन्यतराया अप्रामाण्यं सेत्स्यति। अप्रामाण्यकथनं चैतदत्यन्तदोषजुष्टं भवति। अतो

बाधस्तत्राङ्गीक्रियते यत्र विकल्पाङ्गीकारेण वा व्यवस्थाकरणेन वा कथञ्चिदपि प्रामाण्यं तस्याः स्मृतेर्निर्वोढुं न शक्यते। विकल्पः 'उदिते जुहोति' 'अनुदिते जुहोति' इत्यत्र द्रष्टव्यः। किन्त्वयमपि विकल्प उभयोरपि वाक्ययोः प्रामाण्यं सम्पादयतीति यद्यपि विशिष्यते बाधापेक्षया तथाप्यष्टदोषदूषितो भवति[15]। अतो व्यवस्थैव एतदुभयापेक्षया प्रबला विशिष्टा च। प्रकृते च काव्यकर्तव्यता-कर्तव्यताबोधिकानां स्मृतीनां काचिद् व्यवस्था युक्त्या साधयितुं शक्या। 'काव्यालापांश्च वर्जयेत्' इति निषेधो यदि काव्यमात्रं विषयीकुर्यात्, तर्हि रामायणादेरप्युच्छेदः स्यात्। रामायणभागवतादिकं हि कान्तासम्मिततया कर्तव्ये प्रवर्तयन्ति अकर्तव्याच्च निवर्तयन्तीति शास्त्रलक्षणलक्षितं वर्तते, शास्त्रान्तरेभ्यो वेदादिभ्यः सरसतापादनद्वारा प्रवर्तयन्तीत्यतिशयितं च वर्तते। तस्माद् उच्छेदोऽस्तु, इति इष्टापत्तिः स्वीकर्तुं न शक्यते। किञ्च 'काव्यालापांश्च वर्जयेत्' इति निषेधः काव्यसामान्यविषयकत्वात् सामान्यनिषेधोऽसौ भवति। काव्यकर्तव्यता-प्रतिपादकस्मृतयस्तु हरिगुणग्रथनपराणां पुण्यश्लोकोपवर्णनरूपाणां च काव्यानां कर्तव्यतां बोधयन्त्यो विशेषविधिरूपा विलसन्ति। सर्वतन्त्रप्रसिद्ध एवासौ विषयो यद् विशेषविधिः सामान्यविधेर्बलवानिति। तस्माद् विशेषविधिरूपाः स्मृतयः सत्काव्यकर्तव्यतारूपमर्थं बोधयन्त्यः प्रामाण्यं भजन्ते। परिशेषाच्च असत्काव्यकर्तव्यतानिषेधं बोधयन्ती सामान्यस्मृतिरपि प्रामाण्यं भजते। एवं प्रबलयुक्तिसाहाय्येनोभयोरपि स्मृत्योः प्रामाण्यस्थापनद्वारा व्यवस्था अत्र सुसम्पादा। अतः सत्काव्यानामकर्तव्यताबोधकस्मृतिस्पर्शोऽपि नास्तीति निषिद्धत्वादित्यसौ विकल्पः परास्त इति सिद्धान्तपक्षस्याशयः।

(4) किं पुरुषार्थपर्यवसानाभावाद्वेति चतुर्थो विकल्पः।

धर्मसूरिर्द्वितीयविकल्पदूषणावसर एव कीर्त्यादीनां काव्यप्रकाशादि-ग्रन्थप्रतिपादितप्रयोजनानाम्,

'कीर्तिं स्वर्गफलामाहुः आसंसारं विपश्चितः'।

(पृ० 11)

इति वामनाद्युक्तेः[16] स्वर्गाद्यदृष्टपुरुषार्थरूपत्वमपि प्रत्यपीपदत्। तस्मात् चतुर्थ-विकल्पस्य नास्त्येवावसरः। तथापि प्रभुसुहृत्कान्तासम्मितत्वेन उपदेशत्रैविध्यं प्रदर्श्य कान्तासम्मितोपदेशस्योपदेशान्तरादतिशयितत्वं निरूपयितुकामो धर्मसूरिश्चतुर्थ-

विकल्पममुं पुनरपि द्वेधा विकल्प्य प्रसङ्गाद् आगतम् उपदेशविचारं साधु समपादयत्। शब्दप्राधान्यं प्रभुसम्मितत्वमिति, अर्थप्राधान्यं सुहृत्सम्मितत्वमिति च लक्षयित्वा उभयत्र प्राधान्यं प्रवर्तकत्वमेवेति महत्त्वपूर्णमंशं प्रकटीचकार। तथा हि– पुरुषार्थापर्यवसायित्वं किं पुरुषार्थासाधकत्वाद् आहोस्वित् क्लृप्तादेव प्रमाणाद् वेदादेर्हिताहितप्रवृत्तिनिवृत्तिसिद्धेः कल्प्यप्रामाण्यवतः काव्यस्य वैयर्थ्याद् वेति विकल्प्य, कीर्त्यादेरपि अदृष्टस्वर्गादिफलरूपतया पुरुषार्थसाधकत्वं काव्यस्य प्रतिपाद्य काव्यकर्तव्यताबोधकस्मृतिबलेन क्लृप्तप्रमाणतैव काव्यस्येत्यपि सिद्धान्तितम्। काव्यरूपप्रमाणस्यापि क्लृप्तत्वाङ्गीकारान्न वैयर्थ्यमिति भावः।

अनन्तरं काव्यस्य क्लृप्तप्रमाणत्वाविशेषेऽपि वेदादिरूपोपदेशादेव कर्तव्याकर्तव्ययोः प्रवृत्तिसिद्धौ किं पुनः काव्येन? वेदादिभ्योऽतिशयाभावादिति आशङ्क्य, अतिशयसद्भाव एव महता ग्रन्थेन संस्थापितः। तथा हि – उपदेश इति शास्त्रम् इति चानर्थान्तरम्।

'प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा।
पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते।।' (पृ० 8)

इति कुमारिलभट्टपादैः[17] शास्त्रलक्षणम् उक्तम्। एवञ्च कर्तव्यताकर्तव्यत-योरन्यतरबोधकं पौरुषेयम् अपौरुषेयं वा वाक्यम् उपदेश इति उपदेशलक्षणं फलति। स चोपदेशस्त्रिविधः – प्रभुसम्मितः, सुहृत्सम्मितः, कान्तासम्मितश्चेति। सम्मितशब्दस्य साम्यमर्थः। शब्दप्रधानो वेदः प्रभुसम्मित इत्युच्यते। शब्दप्रधान इत्यत्र प्रधानशब्दग्रहणेन इदं ज्ञायते यद् अर्थस्य न स्वरूपतस्त्यागः किन्तु प्राधान्यमात्रत्यागः। प्राधान्यञ्च प्रवर्तकत्वमेवेति ग्रन्थेऽनुपदम् उक्तम्। एवञ्च वेदवाक्येषु शब्दा एव प्रवर्तका न त्वर्थ इति सिद्ध्यति। तथा हि – लिङ्लोट्तव्यप्रत्यया एव शाब्दीभावनां जनयन्तो नियोज्यान् नियोगे नियोजयन्तीति पूर्वमीमांसाराद्धान्तः। अत एव प्रभुसम्मितत्वोक्तिरालङ्कारिकाणां सङ्गच्छते। प्रभुरपि खलु वाङ्मात्रेण स्वानुचरान् कर्तव्येऽर्थे नियोजयति।

तथापि वेदे अर्थस्य न स्वरूपतस्त्याग उचितः। तथा सति वेदमन्त्राणां नियतानुपूर्वीपरित्यागपूर्वकम् अन्यथा पाठे एव दोषः स्यात्, न तु तत्तदर्थान्यथा-करणे। एवञ्च 'यावज्जीवम् अग्निहोत्रं जुहोति', 'स्वध्यायोऽध्येतव्य' इत्यादिवेदविधीनां यथाक्रमपाठेनैव तत्तदपूर्वं सिध्येत्। अग्निहोत्राध्ययनादीनाम्

अकरणेऽपि प्रत्यवायश्च न स्यादित्यत्यन्तवैषम्यापत्तिः। किञ्च स्वरूपतोऽर्थस्य त्यागे वेदवाक्यानां निरर्थकतैव। तेन निरर्थकोन्मत्तप्रलपितस्य यथा प्रवर्तकत्वं न स्यात् तथैव तेषामपि प्रवर्तकत्वहानिः। अतः शब्दप्रधानो वेद इत्युक्ते शब्द एव तत्र प्रवर्तक इत्येवार्थो वर्णनीयः, न त्वर्थस्यात्यन्तानुपयोगिता। अत एव धर्मसूरिरपि किञ्चिदनन्तरम् –

**"अतो वेदवाक्यानाम् अन्यथापाठे अपाठे वा अन्यथानुष्ठाने अननुष्ठाने वा महान् प्रत्यवायः। अध्ययनविधेः फलवदर्थावबोधपर्यन्तत्वात्"।** (पृ० 9)

इति 'अन्यथापाठे अपाठे वा' इत्यनेन सह 'अन्यथानुष्ठाने अननुष्ठाने वा' इत्येतदप्ययोजयत्। अध्ययनविधेः फलवदर्थावबोधपर्यन्तत्वञ्च स्पष्टमकरोत्।

'शब्दप्रधानं शास्त्रं वेद' इत्यत्र शब्दप्रधानम् इत्यस्य शब्देनैव प्रवर्तकम् इत्यर्थो वक्तव्यः। शब्दशब्दस्य यथास्थितार्थग्रहणे लिङ्लोट्तव्यप्रत्ययघटित-विधिवाक्यस्यैव वेदत्वं सिद्ध्यति, न तु प्राशस्त्यरूपार्थबोधनेनोपरतव्यापाराणाम् अर्थवादवाक्यानाम् इत्यव्याप्तिः। अतः शब्द इति शब्देन विधिप्रत्ययोपलक्षितस्य वाक्यस्यैव ग्रहणं कर्तव्यमिति वदति धर्मसूरिः 'शब्दश्चात्र विधिप्रत्ययोपलक्षितं वाक्यम्' इति।

किञ्च लिङ्लोट्तव्यप्रत्यया एव यद्यपि विधिं बोधयन्ति तथापि 'इदं म इष्टम्' इत्याकारकेष्टसाधनताज्ञानं विना न कश्चित् प्रवर्तत इत्यतस्तादृशेष्ट-साधनताज्ञानोत्पत्तावुपकुर्वतां प्रयोजनेतिकर्तव्यताबोधकशब्दानामपि प्रवर्तकत्वम् अङ्गीकरणीयमित्यतो वाक्यमेव प्रवर्तकमित्युच्यते। अत्रैव भट्टपादानुदाहरति धर्मसूरिः –

**किमाद्यपेक्षितैः पूर्णः समर्थः प्रत्ययो विधौ।**
**तेन प्रवर्तकं वाक्यं शास्त्रेऽस्मिंश्चोदनोच्यते।।**[18] इति।

(पृ० 9)

पुराणानि सुहृत्सम्मितानि। वेदेऽर्थवादवाक्यानि यथा युक्तिप्रदर्शनेन कर्तव्यार्थप्राशस्त्यप्रतिपादनद्वारा पुरुषं कर्तव्ये प्रवर्तयन्ति तथा पुराणान्यपि प्राचीनपुरुषकथाशरीरवर्णनादिद्वारा सुहृद इव युक्तिभिरनुनीय पुरुषान् कर्तव्ये प्रवर्तयन्तीत्यतः पुराणानि सुहृत्सम्मितानीत्युच्यन्ते।

धर्मसूरिः कान्तासम्मितत्वस्य लक्षणमेकावल्या एव उद्धृत्योदाहरति-

'ध्वनिप्रधानं शास्त्रं कान्तासम्मितमुच्यते[19]' (पृ० ९) इति। यथा कान्ता हावभावादिचेष्टया प्रथमं पुरुषं स्वाभिमुखं कृत्वा अनन्तरं शब्दोच्चारणमपि विनैव पुरुषान् कर्तव्ये प्रवर्तयन्ति तथा काव्यमपि शब्दार्थतदुभयशक्तिमूलया व्यञ्जनावृत्त्या सरसतापादनद्वारा पुरुषान् कर्तव्ये प्रवर्तयति, निवर्तयति चाकर्तव्यादिति काव्यं वेदाद्युपदेशेभ्योऽतिशयितमेवेति कथञ्चिदपि पुरुषार्थपर्यवसायित्वम् अस्त्येव काव्यस्येति संक्षेपः।

(5) निषिद्धत्वादिति तृतीयविकल्पस्य खण्डनावसरे कियन्त्यः काव्यशास्त्रप्रवर्तकप्रमाणभूताः स्मृतयः प्रदर्शिता एव। तथापि न्यायवैशेषिकव्याकरणादिशास्त्राणां यथा वेदप्रामाण्यमध्ययन-विधिविषयतानिरूपणद्वारा कथञ्चिद् व्यवस्थाप्यते तथा काव्य-शास्त्रस्यापि तद्वक्तुं शक्यम् इत्यतः काव्यशास्त्रम् इदं शास्त्रान्तरसमकक्षम् अस्तीति साधयितुं 'तत्कर्तव्यताबोधक-प्रमाणाभावाद्वा' इति पञ्चमो विकल्पः कृतो धर्मसूरिणा।

न्यायवैशेषिकव्याकरणादिशास्त्राणाम् आरम्भणीयत्वं तत्तच्छास्त्रकारैरेवं प्रतिपाद्यते। "निष्कारणं ब्राह्मणेन षडङ्गो वेदोऽध्येतव्यो ज्ञेयश्च" इति विधिः श्रूयते। 'स्वाध्यायोऽध्येतव्य' इत्यध्ययनविधेश्चास्य फलवदर्थावबोधपर्यन्तता वक्तव्या। नो चेत् केवलवेदपाठदेवापूर्वसिद्धावनुष्ठानवैयर्थ्यापत्तेः। अर्थोऽपि द्विविधः- पदार्थो वाक्यार्थश्चेति। तत्र वाक्यार्थस्यैव प्रवर्तकत्वात् पदार्थं विना वाक्यार्थस्यानुत्पत्तेश्च पदार्थज्ञानम् आवश्यकम्। अतस्तादृशपदार्थज्ञानजननेन पदमीमांसाशास्त्रम् अध्ययनविध्यनुगृहीतं भवति। एवमेव घटपटरूपादीनां तत्तत्पदार्थानां द्रव्यगुणादिरूपाणां भेदज्ञानाभावे सर्वं ज्ञानम् एकरूपं स्यादित्यतः पदार्थविभाजकन्यायवैशेषिकमतयोरपि अध्ययनविधिप्रयोज्यता भवितुमर्हति। एवम् अर्थवादादिवाक्यानां प्राशस्त्याद्यर्थबोधनद्वारा विध्येकवाक्यतायाः सम्पादनार्थं वाक्यार्थमीमांसाशास्त्रम् अप्यध्ययनविधिप्रयुक्तमेवेति तेषु सर्वेषु वेदप्रामाण्यम् अस्ति।

धर्मसूरिरनयैव दिशा काव्यशास्त्रस्याप्यध्ययनविध्यनुगृहीतत्वं स्थापयति। यद्यपि पूर्वमेव स्मृतयः काव्यकर्तव्यतायां प्रमाणतया प्रदर्शितास्तथापि स्मृतीनां

श्रुतिकल्पनाद्वारैव प्रामाण्यम् इत्यतः साक्षाच्छ्रुतेरेव प्रामाण्यतयोपन्यासे अप्रामाण्यशङ्कापि पुनः नोदेतुं प्रभवतीत्येतदपि फलं विचारस्यास्य भवति।

वेदेषु शतशो दृश्यन्ते वाक्यानि गुणालङ्काररसभावभरितानि। तादृशानां वाक्यानाम् अर्थावगमोऽपि काव्यमीमांसाशास्त्रं विना न सम्भवति। अतः काव्यमीमांसामुखदर्शिता वर्तत एव वेदवाक्यानामिति निरतिशयप्रामाण्यसम्भवात् काव्यमीमांसाशास्त्रम् आरम्भणीयम्। अस्मिन्नेवावसरे उदाहृतानि बहूनि वेदवाक्यानि गुणालङ्कारसम्भरितानि धर्मसूरिणा।

अयं काव्यस्य मीमांस्यत्वविचारः साहित्यरत्नाकरे अत्यन्तप्रौढपाण्डित्यपूर्णेषु विचारेषु न केवलम् अन्यतमः, अपि च ग्रन्थस्यास्य शोभातिशयं पुष्णाति। ग्रन्थस्यादावितरग्रन्थविलक्षणतया कृतोऽयं विचारः शास्त्रग्रन्थेष्वभ्यस्तानां परं मोदाय कल्पते।

## अभिधातरङ्गः

### 2.3 द्वितीयो वाचकशब्दार्थवृत्तिनिरूपणतरङ्गः

तरङ्गेऽस्मिन् प्राधान्येन नायकगुणवर्णनम्, काव्यकरणविचारः, पदलक्षणविचारः, शब्दार्थसम्बन्धविचारः, शक्यार्थविचारः, धर्मसूरिणा सुविशदं विमृष्टाः।

### 2.3.1 नायकगुणनिरूपणम्

द्वितीयतरङ्गस्य उपान्ते धर्मसूरिः काव्यसामान्यलक्षणम् अकथयत्–

**"सगुणालङ्कृती काव्यं पदार्थौ दोषवर्जितौ"**। (पृ० 29) इति।

समस्तस्य साहित्यरत्नाकरस्य अयमेव संग्रहेण प्रतिपादनीयो विषयः। यतोऽनन्तरग्रन्थः सर्वोऽपि एतल्लक्षणघटकपदानां विवरणरूपतयैव सन्निवेशितः। अत एव सर्वत्र सङ्गतिः प्रदर्श्यते धर्मसूरिणा। अयम् उत्तमकोटिकः कश्चन शास्त्रीयग्रन्थनिबन्धनप्रकारः। साधारणदृष्ट्या परिशीलने एतादृशो ग्रन्थनिबन्धनप्रकार आलङ्कारिकग्रन्थेष्वत्यन्तविरलायमान एवाभाति।

प्रथमतरङ्गः सर्वोऽपि भूमिकाविरचनपरो दृश्यते। तत्र काव्यमीमांसाया अकर्तव्यत्वं पूर्वपक्षीकृत्य पुण्यश्लोकोपवर्णनरूपस्य सत्काव्यस्य कर्तव्यत्वम्

अनेकैः प्रमाणैः संस्थापितम्। स्वकृतेः साहित्यरत्नाकरस्येतरालङ्कारिकग्रन्थेभ्यो वैलक्षण्यमपि श्रीरामदिव्ययशोसुरभितत्वेन सम्यङ्निरूपितम्। कृतिनायकस्य श्रीरामचन्द्रस्य गुणगणवर्णनम् अधुना प्रसङ्गादेवागतम् इत्यतो नायकादीनां लक्षणान्यपि कुत्रचित् लक्षणीयानीत्यतश्च नायकस्वरूपनिरूपणव्याजेन भगवतः श्रीरामचन्द्रस्य दिव्यगुणान् प्रशंसति धर्मसूरिः। किञ्च काव्यलक्षणग्रथनानन्तरं सर्वस्याप्युत्तरग्रन्थस्य तद्घटकपदव्याख्यानरूपतयैव व्याचिकीर्षितत्वान्न पुनर्भविष्यत्यवसरो नायकलक्षणनिरूपणार्थम्। अत एव "वाचकशब्दार्थवृत्ति-निरूपणम्" इति तरङ्गस्यास्य नाम कृत्वापि नायकस्वरूपप्रभेदादिकं सर्वम् अत्रैव दर्शितं धर्मसूरिणा। शोभतेतमां च ग्रन्थकर्तुर्जीवितसर्वस्वभूतस्य रघुकुलावतंसस्य सगुणस्य परस्य ब्रह्मणो श्रीरामचन्द्रभूमिपालस्य पुरुषोत्तमस्य महाकुलीनता-दिदिव्यपरिपूतगुणानाम् आदौ संस्तवः, अनन्तरं च ग्रन्थस्य प्राधान्येन प्रतिपिपादयिषितार्थस्य विचारः।

महाकुलीनता, उदारता, महाभाग्यम्, वैदग्ध्यम्, तेजस्विता, धार्मिकता, उज्ज्वलत्वम् इत्येते सप्त नायकगुणा लक्षिता उदाहृताश्च। कासुचिन्मातृकासु केषाञ्चिद् गुणानां लक्षणानि न दृश्यन्ते। दृश्यन्ते परं 'महाकुलीनता यथा' इत्यादिवाक्यानि। मातृकाणां तुलनात्मकाध्ययनेन सर्वेषां लक्षणानि लभ्यन्ते। सर्वाणि च तानि प्रतापरुद्रीयान्येव। केवलम् एकं महाभाग्यलक्षणं सर्वासु मातृकासु 'सर्वसर्वंसहैश्वर्यं महाभाग्यमुदीर्यत' इत्येव दृश्यते, यस्य प्रतापरुद्रीये 'विश्वम्भराधिपत्यं यत्तन्महाभाग्यमुच्यते'[20] इति पाठो दृश्यते।

### 2.3.1.1 'आचार्यवान् वररुचिः' इति ग्रन्थस्य समन्वयः

'कीर्तिप्रतापसम्पन्नः पुमर्थत्रयतत्परः।
धुरन्धरश्च गुणवान् नायकः परिकीर्त्यते।।' (पृ॰ 22)

इति नायकलक्षणम् उक्त्वा तद्घटकगुणान् उदाहरणैः स्पष्टीकुर्वन् धर्मसूरि-र्धुरन्धरत्वस्योदाहरणम् एवं निबध्नाति-

'आचार्यवान् वररुचिस्त्रिपुरारिरासीद्
आकल्पवान् शयनवानपि दानवारिः।
दिक्पालका विदधुरुत्तमयानचर्यां
दोर्मण्डले रघुपतौ धरणीं दधाने।।' (पृ॰ 22)

रघुपतौ स्वकीयदोर्मण्डले धरणीं दधाने सति शेषस्य कर्तव्योपरमाद् विक्षेपरहितचित्तो बभूव। अतश्च वररुचिराचार्यवान् बभूवेति श्लोकार्थोऽवगम्यते। किन्तु वैयाकरणानां सम्प्रदाये प्राचीनो वररुचिरेव अर्वाचीनस्य पतञ्जलेः शेषावतारभूतस्य गुरुर्भवति। अतः 'शिष्यवान् वररुचिरासीत्' इत्येव पाठ उचितः, न तु 'आचार्यवान् वररुचिः' इति भासतेऽत्रानुपपत्तिः। अत्र नौका-मन्दर-विवरणव्याख्यानेषु नैषानुपपत्तिः शङ्किता, न वा परिहृता। किन्तु यथाश्रुतार्थवर्णनमेव तैः कृतम्। सुधाकरकारोऽपि प्रथमं वररुचिरादिशेषरूपं गुरुम् अवापेत्येव व्याख्यायार्थेऽस्मिन् विप्रतिपन्न आचार्यशब्दं भावार्थकं स्वीकृत्य वररुचिरेव आदिशेषस्य गुरुरासीद् इति व्याचख्यौ[21]। अत्राचार्यशब्दस्य भावार्थकत्वं च द्विधा प्रत्यपादयत्। आचार्यशब्दाद् आचार्यस्य भाव इत्यर्थे 'गुणवचनब्राह्मणादिभ्यः कर्मणि च[22]' इति ष्यञि, 'यस्येति च'[23] इत्यकारलोपे 'हलो यमां यमि लोपः'[24] इति यलोपे आचार्य इति सिद्ध्यति। तदस्यास्तीत्याचार्यवान् इत्येकः प्रकारः। अथवा आङ्पूर्वकचरेः 'कृत्यल्युटो बहुलम्'[25] इति बहुलग्रहणाद् भावे ण्यति निष्पन्न आचार्यशब्द आचरणक्रियां बोधयति। तथा च आचार्यवानित्यस्य आचारवानित्यर्थ इति द्वितीयः प्रकारः।

वस्तुतस्तु अयं द्विविधोऽपि आचार्यशब्दस्य भावार्थकत्वसाधनप्रकारोऽगतिकगतिकोऽप्रसिद्धश्च। अतोऽत्र या अनुपपत्तिरागता सा एवं परिहर्तुं शक्या। तथा हि। आचार्यशब्दस्य-

"आचिनोति हि शास्त्राणि आचारे स्थापयत्यपि।
स्वयमाचरते यस्मात् तस्मादाचार्य उच्यते।।"

इति यास्कस्य[26] निरुक्तिः। अनेन च शास्त्रार्थसंग्राहकः, तत्प्रचारकः, तदनुष्ठाता तदुपदेष्टा च यः स आचार्यपदेन अभिधीयते। श्लोकेऽस्मिन् आचार्यपदेन पतञ्जलिरेवाभिप्रेतः। वररुचिः स्वप्रणीतस्य शास्त्रस्य प्रवर्तकत्वेनोपदेष्टृत्वेन सिद्धान्तसंग्राहकत्वेन च आचार्यशब्दाभिधेयं पतञ्जलिम् अवाप। यतः पतञ्जलिर्वररुचेः शास्त्रं समाकलय्य स्वव्याख्यानेन महाभाष्येण तच्छास्त्रम् आचारे प्रचारे च स्थापयामास, ततश्च सः पतञ्जलिर्वररुचेराचार्यः। अर्थाद् वररुचिप्रणीतस्य शास्त्रस्य प्रचारकः। विदितचरं चैवैतद् विदुषां यद् यदि पतञ्जलिर्नाभविष्यत्

तर्हि पाणिनीयस्य नामापि नाश्रोष्यत्। अतस्तादृशाचार्यवान् वररुचिरासीदिति सुस्थमेवेति।

### 2.3.2 काव्यकारणविचारः

काव्यहेतुविचारे पक्षद्वयं प्रसिद्धम् अस्ति। तत्र प्रतिभाव्युत्पत्त्यभ्यासानां त्रयाणामपि काव्यकारणतावाद एकः, केवलायाः प्रतिभायाः काव्यकारणतावादो द्वितीयः। तत्र प्रथमपक्षावलम्बिनो दण्डि–रुद्रट–मम्मट–विद्याधर–वाग्भट–केशवमिश्रादयः। भामह–राजशेखर–अलङ्कारतिलककारवाग्भट–हेमचन्द्र–पण्डित–राजजगन्नाथादयो द्वितीयपक्षावलम्बिनः। यद्यपि स्थूलतया सम्भवति पूर्वोक्तो विभागः, तथापि एकपक्षावलम्बिनाम् आचार्याणां मध्ये पुनः सूक्ष्मांशेषु मतभेदा दृश्यन्ते। तथा हि – त्रयाणां कारणत्वं वदतामपि मध्ये केचित् तृणारणिमणिन्यायेन कारणत्वं वदन्ति। केचित्तु समुदितानां त्रयाणां कारणत्वं मन्यन्ते। तत्र प्रथमे यथा दण्ड्याचार्यः–

"नैसर्गिकी च प्रतिभा श्रुतं च बहु निर्मलम्।
अमन्दश्चाभियोगोऽस्याः कारणं काव्यसम्पदः।।"[27]

इति हेतुसम्पत्तिमुक्तवान्। तत्र 'कारणम्' इत्येकवचनं समुदितानां त्रयाणां कारणत्वद्योतनार्थमिति काव्यप्रकाशकारादिविभावितदृशा व्याख्यातुं शक्यते। तथापि स्वयमेव आचार्यः प्रत्येकशः प्रतिभादीनां कारणत्वं वदति। यथा –

"न विद्यते यद्यपि पूर्ववासना
गुणानुबन्धि प्रतिभानमद्भुतम्।
श्रुतेन यत्नेन च वागुपासिता
ध्रुवं करोत्येव कमप्यनुग्रहम्।।"[28] इति।

रुद्रटो मम्मटाचार्यादयश्च समुदितकारणत्रयवादिनः। तद्यथा –

"त्रितयमिदं व्याप्रियते शक्तिर्व्युत्पत्तिरभ्यासः।"[29]

इति रुद्रटेन,

"शक्तिर्निपुणता लोकशास्त्रकाव्याद्यवेक्षणात्।
काव्यज्ञशिक्षयाभ्यास इति हेतुस्तदुद्भवे।।"[30] इति,

"त्रयः समुदिता न तु व्यस्तास्तस्य काव्यस्योद्भवे निर्माणे समुल्लासे च

हेतुर्न तु हेतवः"[31] इति च मम्मटेन स्पष्टम् एव त्रितयसमुदायस्य कारणत्वमुक्तम्। एवं केवलप्रतिभा काव्यकारणमिति वदतामपि मध्ये केचिद् व्युत्पत्त्यभ्यासयोः संस्कारकत्वेन प्रतिभायां हेतुत्वमभ्युपगच्छन्ति। केचित्तु तयोः जनकत्वेनैव प्रतिभायां हेतुत्वं मन्यन्ते। तथा हि भामहः–

"काव्यं तु जायते जातु कस्यचित् प्रतिभावतः।"[32]

इति प्रतिभाया एव काव्यकारणत्वं प्रतिपाद्य,

"शब्दाभिधेये विज्ञाय कृत्वा तद्विदुपासनाम्।
विलोक्यान्यनिबन्धांश्च कार्यः काव्यक्रियादरः।।"[33]

इति व्युत्पत्त्यभ्यासयोः प्रतिभासंस्कारकत्वम् असूचयत्।

एवं हेमचन्द्रः–

"प्रतिभा अस्य (काव्यस्य) हेतुः। व्युत्पत्त्यभ्यासाभ्यां (सा) संस्कार्या।"[34]

इति स्पष्टमेव व्युत्पत्त्यभ्यासयोः प्रतिभासंस्कारकत्वं न्यरूपयत्।

स्पष्टतरमुक्तोऽयमर्थोऽलङ्कारतिलककृता वाग्भटेन–

"प्रतिभैव च कवीनां काव्यकरणकारणम्। व्युत्पत्त्यभ्यासौ तस्या एव संस्कारकारकौ। न तु काव्यहेतू"[35] इति।

एवमेव वाग्भटोऽपि –

"प्रतिभा कारणं तस्य (काव्यस्य) व्युत्पत्तिस्तु विभूषणम्।
भृशोत्पत्तिकृदभ्यास इत्यादि कविसङ्कथा।।"[36]

इति व्युत्पत्त्यभ्यासयोः प्रतिभायाः संस्कारकत्वमुररीचकार।

जगन्नाथपण्डितराजस्तु –

"तस्य (काव्यस्य) च कारणं केवला कविगता प्रतिभा।............ तस्याः (प्रतिभायाः) च हेतुः क्वचिद् देवतामहापुरुषप्रसादादिजन्यम् अदृष्टम्। क्वचिच्च विलक्षणव्युत्पत्तिकाव्यलक्षणाभ्यासौ। न तु त्रयमेव।"[37]

इति स्पष्टम् अभिदधानो व्युत्पत्त्यभ्यासयोः प्रतिभायां जनकत्वरूपमेव कारणत्वं प्रादर्शयत्।

धर्मसूरिस्तु प्रतिभाव्युत्पत्त्यभ्यासानां त्रयाणां काव्यकारणत्वम् अङ्गीकुर्वन्नपि

प्रतिभायाः प्रधानकारणत्वम् इतरयोस्तु सहकारिकारणत्वं स्पष्टं प्रतिपादितवान्। तत्रोदाहरणदानेन च कारणानां मध्ये उपलक्ष्यद्वैलक्षण्यं समुपन्यस्तवान्।

**"बीजं हि तस्याः कवितालतायाः प्राज्ञो वदन्ति प्रतिभाविशेषम्।**
**सत्काव्यशास्त्राद्यवबोधनादि जलावसेकादिकमीरयन्ति।।" इति।**

(पृ० 28)

व्याख्यातं चैतत् स्वयमेव–

**"यथा हि क्षितिपाथपवनादीनां कारणत्वेऽप्यङ्कुरोत्पत्तावन्तरङ्गत्वात् प्राधान्यं बीजस्य, एवं प्रतिभाशक्तेरपि कवितोदयेऽन्तरङ्गत्वाद् व्युत्पत्ति-मान्द्याविर्भूतदोषनिराकरणप्रभविष्णुत्वाच्च प्राधान्यम् इति भावः।।"**

इति। (पृ० 29)

एतेन सिद्ध्यति यत् सत्यपि त्रयाणां काव्यकारणत्वे प्रतिभा अन्तरङ्गं भवति व्युत्पत्त्यभ्यासौ च बहिरङ्गौ इति। अथवा घटादिकार्यस्य यथा मृदादिकम् उपादानकारणं भवति, दण्डचक्रादिकं च निमित्तकारणं भवति तथा काव्यस्योत्पत्तौ प्रतिभा उपादानकारणम्, व्युत्पत्त्यभ्यासौ निमित्तकारणे भवत इति। अत एव प्रतिभाया बीजोपमा घटते। बीजं हि वृक्षस्य उपादानकारणम्।

सूक्ष्मेक्षिकया पर्यालोचने क्रियमाणे समुदितकारणतात्रयवादिनोऽपि मम्मटस्यायमेव अभिमतः सिद्धान्त इति ज्ञायते। सोऽपि 'शक्तिः कवित्वबीजरूपः संस्कारविशेष' इति प्रतिभायाः शक्त्यपरनाम्न्या बीजोपमाम् आदत्ते।

**"यां विना काव्यं न प्रसरेत्, प्रसृतं वा उपहसनीयं स्यात्"**[38]

इति च प्रतिभाया इतरकारणद्वयापेक्षया प्राधान्यं स्पष्टयति।

एवञ्च काव्यप्रकाशकारेण सूचितम् अभिप्रायं विशदयन् परिष्कुर्वंश्च धर्मसूरिः प्रतिभाव्युत्पत्त्यभ्यासानां काव्यकारणत्वे विद्यमाने पारस्परिकभेदं सम्यक् निरूपयामास।

### 2.3.3 पदलक्षणविचारः

धर्मसूरिः 'सुप्तिङन्तं पदम्'[39] इति वैयाकरणानां पदलक्षणं दूषयित्वा 'ते विभक्त्यन्ताः पदम्'[40] इति नैयायिकाभिमतं पदलक्षणं स्वीकरोति। 'सुप्तिङन्तं पदम्' इति सूत्रस्य 'सुबन्तं तिङन्तं च पदसंज्ञं स्यात्' इति वृत्तिः। सुबन्तं पदम्

इत्युक्ते तिङन्ते अव्याप्तिः। तिङन्तं पदम् इत्युक्ते सुबन्ते अव्याप्तिः। सुप्तिङुभयान्तस्य पदत्वे स्वीकृते तु सुप्तिङुभयान्तात्मकस्य शब्दस्य सर्वथाऽनुपलभ्यमानत्वाद् असम्भवो दोष इति दूषणं यद् धर्मसूरिणा कृतं तदपि स्पष्टमेव। किन्तु सुबन्ततिङन्तान्यतरत्वं पदत्वम् इत्युक्ते न कोऽपि दोषगन्धस्सम्भवति। अन्यतरघटितेऽस्मिन् परिष्कारे अन्यतरत्वस्य तद्भिन्नभेदकूटवत्त्वरूपस्य स्वीकार एव गौरवं भवति।

एतद्व्याचक्षाणः सुधाकरकारः विभक्तिपदस्य नैयायिकोक्तं पारिभाषिकम् अर्थं न स्व्यकरोत्[41]। किन्तु 'विभक्तिश्च'[42] इति सूत्रेण सुबन्ततिङन्तयोर्या विभक्तिसंज्ञा वैयाकरणैर्विहिता तामेव स्वीकृतवान्। अर्थाद् 'विभक्त्यन्तं पदम्' इत्यत्र विभक्तिपदस्य वैयाकरणमतेन पारिभाषिको योऽर्थः स एव तस्याभिमतः। एतद्व्याख्यानं मूलाननुगुणं वर्तते। अयमेव यदि मूलकर्तुरभिप्रायः स्यात् तर्हि महान् दोष आपद्येत। 'प्राग्दिशो विभक्तिः'[43] इति सूत्रेण तद्धितस्यापि विभक्तिसंज्ञा विहिता। एवञ्च तदन्तस्यापि पदत्वापत्तिः। एतदापत्तिदूरीकरणार्थं विभक्तिसंज्ञां सङ्कोचयित्वा 'विभक्तिश्च' इति सूत्रेण ययोः सुप्तिङोर्विभक्तिसंज्ञा विहिता तदन्तस्यैव पदत्वम् अङ्गीकर्तव्यम्। तत्रापि चान्यतरघटितपरिष्कारः परिग्राह्य एव। एवञ्च 'विभक्त्यन्तं पदम्' इति वदता किं नाम लब्धम्? वस्तुतस्तद्धितेष्वपि व्याप्नुवन्तीं विभक्तिसंज्ञां तिङन्तसुबन्तयोरेव सङ्कोच्य तयोः पुनः अन्यतरघटित–परिष्कारपूर्वकं पदसंज्ञायाः स्वीकरणापेक्षया साक्षादेव सुबन्ततिङन्तान्यतरत्वस्य पदत्वस्वीकरणम् अत्यन्तलाघवकटाक्षितं भवति। अत एव भगवान् पाणिनिः 'विभक्तिश्च' इति सुबन्ततिङन्तयोर्विभक्तिसंज्ञां विधायापि 'विभक्त्यन्तं पदम्' इत्यनुक्त्वा पुनरपि 'सुप्तिङन्तं पदम्' इत्येव पदसंज्ञां चकार। अतोऽत्र सुधाकरकारस्य व्याख्यानं चिन्त्यमेव।

### 2.3.4 वाचकलक्षणविचारः

"साक्षात्सङ्केतितार्थस्य बोधकं तेषु वाचकम्।
सङ्केतितो गृहीतसम्बन्धः।" (पृ० 29)

इति वाचकशब्दलक्षणग्रन्थः साहित्यरत्नाकरे। साक्षात् = अव्यवधानेन सङ्केतितो योऽर्थस्तस्य बोधकं = बोधजनकं वाचकम् इत्यर्थः। पदार्थान्तरप्रतीतिम्

अद्वारीकृत्य योऽर्थः प्रतीयते तस्य बोधकं पदं वाचकम् इति यावत्। अत्र पदार्थान्तरेत्यादिविशेषणेन लक्षणाव्यञ्जनयोर्निरासः। सङ्केतश्च एतत्पदजन्य-बोधविषयोऽयमर्थ इत्याकारः। एतदर्थविषयकबोधनिष्ठजन्यतानिरूपित-जनकतावद् इदं पदम् इत्याकारश्च। एतादृशसङ्केतेन पदनिष्ठजन-कतानिरूपितजन्यतावद्बोधविषयत्वरूपोऽर्थनिष्ठः, अर्थविषयकबोधनिष्ठजन्यता-निरूपितजनकतावत्त्वरूपः पदनिष्ठश्च सम्बन्धो गृह्यते। तादृशसम्बन्धविशिष्टः शब्दो वाचक इत्येवम् अभिधीयते।

वस्तुतस्तु उक्तसङ्केतेन जायमानो बोधः पदार्थान्तरप्रतीत्यद्वारक एव भवतीत्यतः साक्षात्पदं न सङ्केतितशब्दविशेषणम्, किन्तु बोधनक्रियाविशेषणम्। अनेन च यत्र संयोगादिना अभिधा नियमिता, शक्यान्तरञ्च व्यञ्जनया बोध्यते तत्र वाचकत्वातिव्याप्तिर्वार्यते। काव्यप्रकाशकारस्यापि साक्षात्सङ्केतित-शब्दद्वयघटितलक्षणमेव सम्मतम्। व्याख्यातं चैवमेव तत्र काव्यप्रदीपे[44]।

अत्र चर्ल-वेङ्कटसूरिस्तु साक्षात्सङ्केतितेति पदद्वये अन्यतरस्य वैयर्थ्यम् आशङ्क्य तत्परिहारार्थं लक्षणद्वयमिदं वाचकशब्दस्येति व्याचख्यौ[45]। तथा हि-सङ्केतितार्थो नाम मुख्यार्थ एव भवति। एवञ्च मुख्यार्थस्य बोधकं पदं वाचकम् इति वाचकलक्षणे सिद्धे साक्षात्पदं व्यर्थमेव। लक्षकत्वादीनां शब्दानां मुख्यार्थबोधकत्वाभावात् सङ्केतितपदेनैव तद्व्यावृत्तेः। एवमेव साक्षादिति पदस्य ग्रहणे सङ्केतितपदं व्यर्थम्। तस्मात् लक्षणद्वयमेवैतद् भविष्यति। साक्षादर्थ-प्रतिपादकशब्दत्वं सङ्केतितार्थप्रतिपादकशब्दत्वं वा वाचकशब्दलक्षणम् इति।

एषा व्याख्यानपद्धतिर्न नौकाकारस्य स्वोपज्ञा। किन्तु "यः सङ्केतितम् अर्थं साक्षाद् ब्रूते स वाचकः शब्द" इत्यस्य एकावली-लक्षणस्य व्याख्याने तरले मल्लिनाथेन विनाक्षरभेदं प्रदर्शितपूर्वैव। किञ्च ततोऽपि प्राचीने साहित्यदर्पणे[46] विश्वनाथेन - "तत्र सङ्केतितार्थस्य बोधनादग्रिमा अभिधा" इत्येव वाचकलक्षणम् अभिधालक्षणकथनमुखेन कथितम्। साक्षादिति पदं तु लक्षणे न योजितम्। प्रायो विश्वनाथस्यापि साक्षात्सङ्केतितपदयोरन्यतरवैयर्थ्यम् अभिमतं स्यात्। अपि च-

"साक्षात्सङ्केतितं योऽर्थम् अभिधत्ते स वाचकः।"

इति काव्यप्रकाशलक्षणं व्याकुर्वन् गोविन्दठक्कुरो[47] भास्करमतत्वेन लक्षणद्वयपक्षम् इदम् अनूद्य खण्डयति। एवं साक्षात्सङ्केतितेति पदद्वयघटितवाचकलक्षणस्य लक्षणद्वयव्याख्यानपद्धतिरेषा प्राचीनैव।

काव्यप्रदीपकारेण गोविन्दठक्कुरेण तु विशदतया अयं भास्करीय-लक्षणद्वयपक्षो निराकृतः। तथा हि – साक्षादर्थप्रतिपादकशब्दत्वम् इत्युक्ते माधुर्यादिव्यञ्जकेषु स्पर्शादिवर्णेष्वतिव्याप्तिः। ते खलु साक्षादेव माधुर्यादिगुणानां व्यञ्जकाः। सङ्केतितार्थप्रतिपादकशब्दत्वम् इत्युच्यते चेत् शब्दशक्तिमूलक-ध्वनिस्थलेऽतिव्याप्तिः। तत्र हि संयोगादिना नानार्थशब्दस्य एकस्मिन् वाच्यार्थे नियमनाद् अनन्तरं व्यञ्जनाव्यापारेण ज्ञायमानो द्वितीयार्थोऽपि सङ्केतितार्थ एव भवति। तस्माद् उभयविधातिव्याप्तिपरिहारार्थं दलद्वयसहितम् इदं लक्षणम् एकमेव इति।

एतदेवानुसरन् मन्दरकारो नौकाकारस्य लक्षणद्वयपक्षं खण्डयति[48]। अतोऽत्र नौकामन्दरयोर्व्याख्याने मन्दरकारस्यैव व्याख्यानं रुचिरम् आभासते।

### 2.3.5 शब्दार्थसम्बन्धविचारभूमिका

सर्वैरनुभूयत एव शब्देतरप्रत्यक्षादिप्रमाणान्तरस्थलेऽपि प्रमाणप्रमेययो-रन्योन्यसम्बद्धता। तथा हि – चक्षुः स्वसंयुक्तसमवायरूपसम्बन्धेन स्वसम्बद्धमेव रूपं प्रकाशयति, न त्वसम्बद्धमपि। धूमादिहेतुरपि व्याप्तिरूपसम्बन्धद्वारैव अग्न्यादिकम् अनुमापयति। एवमेव शब्दरूपप्रमाणस्यापि स्वप्रमेयेन अर्थेन साकं नूनं भवितव्यं केनचित्सम्बन्धेन।

किञ्च लोके सर्वेषामेव एतादृशानुभवोऽस्ति यद् घटशब्दे उच्चारिते कम्बुग्रीवादिमान् कश्चनार्थः प्रतीतो भवति। सा च प्रतीतिः शब्दार्थयोः सम्बन्धं विना अनुपपद्यमाना अनयोरस्ति कश्चन सम्बन्ध इति सूचयति। उक्तञ्च वाक्यपदीये[49] –

> "सति प्रत्ययहेतुत्वं सम्बन्धे उपपद्यते।
> शब्दस्यार्थे यतस्तस्मात् सम्बन्धोऽस्तीति गम्यते।।"इति।

"अर्थप्रतीतिनियमहेतुः पदपदार्थसम्बन्धः प्रतीतिकृत इति प्रतीतिलक्षणादुपकारात् तत्सिद्धिः" इति हेलाराजः।[50]

एषैव च क्रिया व्यापार इति पदेन च व्यवह्रियते। अयं व्यापारः किंरूप इति चेत् "अर्थपरामर्शोऽभिधानम्" इति हेलाराजः[51]। 'एतदर्थबोधकम् इदम्' इति विज्ञानमेव व्यापार इति मीमांसकाः[52]। 'पदजन्यपदार्थस्मरणमेव व्यापारः' इति नैयायिकाः[53]। अत्र च यद्यपि व्यापारो नाम किंरूप इति प्रश्नेऽनेके मतभेदा वर्तन्त इव भासन्ते तथापि सर्वेषामेव अभिप्रायः समान इत्येव वक्तव्यम्। अत एव वाचस्पतिमिश्रास्तत्त्वबिन्दौ[54] –

"स्मार्यस्मारकभाव एव शब्दार्थयोः सम्बन्धः" इत्यवोचन्। तथा चार्थस्मृतिव्यापार इति फलितोऽर्थः।

एवं बोधनात्मिकया क्रियया शब्दार्थयोः सम्बन्धज्ञानं भवतीत्यवोचाम। तदेव च सम्बन्धज्ञानं वाचके शब्दे वाच्यार्थावगमनरूपसामर्थ्यं बोधयति। एतदेव सामर्थ्यम् "अयम् अस्य वाचक" इत्यादिशब्दगतव्यवहारैः शब्दगतत्वेन ज्ञायते। एतदेव वाचकत्वं बोधकत्वम् इति च व्यवह्रियते। उक्तं च कुमारिलभट्टपादैः[55] –

"अभिधानक्रियायां हि कर्मत्वं वाच्यसंश्रितम्।
शब्दानां करणत्वं वा कर्तृत्वं वा निरूपितम्।।" इति।

"यदभिधायकशब्दसमवेतं करणत्वं कर्तृत्वं वा तद् वाचकत्वम्।" इत्युम्बेकभट्टाः[56]।

एतादृशसामर्थ्यं विना शब्दोऽर्थमेव न बोधयितुम् अर्हति। सत्यपि आलोके यथा अन्धो न पश्यति तदक्ष्णोस्तादृशसामर्थ्याभावात् तथा।

एतदेव शब्दगतं वाच्यावगमनसामर्थ्यं मुख्यवृत्त्या शक्तिपदाभिधेयं भवति। सा शक्तिः पदार्थान्तरमिति मीमांसकाः। केचिद् आलङ्कारिकास्तावद् एतामेव अभिधा इत्याह्वयन्ति। तथा हि हेमचन्द्रः[57] –

"तत्र समयापेक्षा वाच्यावगमनशक्तिर्मुख्याभिधा उच्यते" इति।

एवञ्च प्राचीनवैयाकरणानां मीमांसकानां च मते सामर्थ्यमेव शक्तिपदबोध्यं भवति। नवीनास्तु 'तद्धेतोरेव तद्धेतुत्वे मध्ये किं तेन' इति न्यायेन शक्तिज्ञानस्यापि सम्बन्धहेतुकत्वेनावश्याभ्युपगम्यस्य सम्बन्धस्यैवार्थधीहेतुत्वकल्पनम् उचितमिति सम्बन्धमेव शक्तिपदेन व्यवहरन्ति। अयञ्च सम्बन्धे शक्तिपदव्यवहारो लाक्षणिकः। आलङ्कारिकास्तु तद्धेतोरेवेति न्यायमनुसरन्त एव सम्बन्धस्यापि कारणभूते व्यापार एव शक्त्यपरपर्यायम् अभिधेति पदं प्रयुञ्जते[58]।

एवं शक्तिपदं तत्तच्छास्त्रकारैर्बोधकत्वसामर्थ्ये, शब्दार्थसम्बन्धे, शब्दगतव्यापारे, तत्र तत्र प्रयुज्यमानं सन्दृश्यते। अत एव शक्तिपदश्रवणमात्रेण कस्तावदर्थोऽत्र विवक्षित इत्यत्र जागरूकता आवश्यकी।

धर्मसूरिस्तु वाचकत्वसामर्थ्यरूपसम्बन्ध एव शक्तिपदं प्रयुङ्क्ते। अस्य मते अभिधा तु शक्तेर्भिन्ना शक्तिग्रहजनितसंस्कारसमुद्बोधकः शब्दगतो व्यापारः[59]।

शब्दार्थयोः सम्बन्धविषयको विचार आलङ्कारिकग्रन्थेषु प्रायो मृग्य एव। किन्तु वैयाकरणैर्मीमांसकैर्नैयायिकैश्च भूयोऽत्र विचारः कृतः। धर्मसूरिः साहित्यरत्नाकरे विषयास्यस्यालङ्कारिकैरवश्यज्ञातव्यत्वं मनसिकृत्य महता प्रबन्धेन तत्तच्छास्त्रकाराणां मतान्यनूद्य स्वकीयं सिद्धान्तं प्रादर्शयत्। स एव हि विषयः सङ्ग्रहेणात्र विमृश्यते।

### 2.3.6 शब्दार्थसम्बन्धविचारः

"अस्यायं वाचको वाच्य इति षष्ठ्या प्रतीयते।
योगश्शब्दार्थयोस्तत्त्वमित्यतो व्यपदिश्यते।।"

इति वाक्यपदीयाद्[60] अस्यायं वाचक इति व्यवहारे षष्ठ्यर्थतया प्रतीयमानः कश्चित् सम्बन्धोऽस्ति शब्दार्थयोरिति ज्ञायते। स च किंरूप इत्यत्र तीर्थङ्कराणाम् अस्ति मतभेदः।

#### 2.3.6.1 भाट्टमीमांसकमतम्

भाट्टमीमांसकाः शब्दार्थयोः स्वाभाविकं सम्बन्धम् अङ्गीकुर्वन्ति। "औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः। तस्य ज्ञानम् उपदेश"[61] इति सूत्रकारो जैमिनिः शब्दार्थसम्बन्धस्य स्वाभाविकत्वम् आप्तोपदेशस्य तज्ज्ञानसाधनत्व-ञ्चोपदिशति। स च सम्बन्धो वाच्यवाचकभावरूपः। स एव बोध्यबोधकभावः प्रत्याय्यप्रत्यायकभावः संज्ञासंज्ञिभाव इत्यादिशब्दैर्व्यवह्रियते। अयञ्च विचार्यमाणे स्मार्यस्मारकभाव एवेति तत्त्वबिन्दौ वाचस्पतिमिश्राः[62]। यद्यपि हस्तिदर्शनाद् हस्तिपकस्मरणे स्मार्यस्मारकभावस्य निमित्तभूतो रक्ष्यरक्षकभावाख्योऽन्यः सम्बन्धः प्रतीयते तथाप्यत्र न सम्बन्धान्तराकाङ्क्षा। अन्यस्य तादृशसम्बन्ध-स्यात्रोपपादयितुमशक्यत्वात्। ततश्च वृद्धव्यवहारोन्नीतया प्रत्यायनशक्त्यैव शब्दोऽर्थं प्रत्याययतीति। प्राभाकरास्तु स्मरणप्रयोजकसम्बन्धम् अन्वयानुभाव-कत्वरूपम् अङ्गीकुर्वन्ति।

## 2. 3.6.2 वैयाकरणानां वेदान्तिनां च मतम्

एष एव वाच्यवाचकभावाख्यः सम्बन्धो वैयाकरणानां वेदान्तिनां चाभिमतः। उक्तञ्च महाभाष्ये[63]–

"येनोच्चारितेन सास्नालाङ्गूलककुदखुरविषाणिनां
सम्प्रत्ययो भवति सः शब्दः" इति।

## 2. 3.6.3 वैयाकरणैकदेशिनां मतानि

(1) वैयाकरणेष्वेव केचित्[64] शब्दार्थयोर्योग्यतारूपं सम्बन्धं स्वीकुर्वन्ति। स च इन्द्रियविषयसम्बन्धवत् प्रकाश्यप्रकाशकभावेन तुल्यः। यथा च चक्षुरादयः सत्यामपि स्वप्रकाशनयोग्यतायामालोकसहायेनैव रूपं प्रकाशयन्ति तथा शब्दाः वृद्धव्यवहाररूपसमयसहायेनैवार्थं प्रकाशयन्तीति वदन्ति।

(2) अथवा शब्दार्थयोः सम्बन्धः कार्यकारणभावः[65]। तथा हि प्रयोक्ता "अर्थं बुद्ध्वा शब्दरचना" इति न्यायमनुसृत्य अर्थं बुद्धिविषयीकृत्य शब्दं प्रयुङ्क्ते। अतश्चात्र शब्दोत्पत्त्यव्यवहितप्राक्क्षणवृत्तित्वाद् अर्थस्य तत्कारणत्वम्। श्रोत्रा श्रुतः स एव शब्दोऽर्थं बुद्धिविषयं करोतीति तद्विषये शब्दस्य कारणत्वम् अर्थस्य कार्यत्वं च। शब्दार्थयोर्बौद्धत्वात् सामानाधिकरण्यादिकमपि तयोरुपपादयितुं शक्यते। बौद्ध एवार्थो बाह्यार्थसादृश्याद् बुद्ध्या आरोपिताभेदो बाह्यत्वेनैव भासते। सोऽप्ययं कार्यकारणभावरूपः सम्बन्धः समयोपाधिक एव।

(3) अन्ये[66] तु वैयाकरणैकदेशिनः शब्दार्थयोरभेदलक्षणं तादात्म्य-सम्बन्धम् अङ्गीकुर्वन्ति। तेषामयम् आशयः – अस्यार्थस्य अयं वाचकः, अस्य वाच्योऽयमर्थ इति ज्ञानं यत्र जायते तत्रैव सोऽयम् इत्यभेदप्रत्ययो भवति। अद्वैतनये पारमार्थिकतत्त्वस्य एकत्वात्। तदेव अद्वयं तत्त्वम् अनादिसिद्धा-विद्यावशाद् अर्थभावेन विवर्तते[67]। तत्र तत्त्वस्य प्रकाशाप्रकाशावेव भेदाभेदप्रतीतिजनकौ। ज्ञानिनो विद्यावशात् नष्टभेदबुद्धयोऽभिन्नं तत्त्वम् अवगच्छन्ति। तदेव तत्त्वं शब्द–अर्थ– सम्बन्धादिरूपेण भासते। तस्माद् वस्तुतः शब्दार्थयोर्भेदाभावात् तादात्म्यादन्यः सम्बन्ध उपपादयितुम् अशक्यः। तस्माद् वास्तविकाभेदे सति आरोपितभेदरूपं तादात्म्यमेव शब्दार्थयोः सम्बन्ध इति सिद्धम्। एवं शब्दार्थयोरभेदेऽपि शब्दगतोच्चारणादेर्विवर्तरूपेऽर्थेऽनङ्गीकारात् न शब्दः कण्ठादुच्चरतीतिवद् घटादर्थ उच्चरतीति व्यवहारापत्तिः। अत एव न

वह्न्याद्युच्चारणेऽपि मुखदाहादिप्रसङ्गः, दाहादेरर्थे स्वीकारात्। कथम् अभिन्नयोर्द्वयोरेकस्मिन् वर्तमानो धर्मोऽन्यस्मिन् नाङ्गीक्रियत इति चेत्, उच्यते- न केवलम् अस्माभिरेव अभिन्नयोरपि द्वयोर्धर्मभेदोऽङ्गीक्रियते किन्तु अन्यैरपि शास्त्रकारैः। प्राभाकरा अभावस्य अधिकरणरूपताम् अङ्गीकुर्वन्तोऽपि भूतले घटाभाव इत्येव प्रतीतिम् उपगच्छन्ति, न तु भूतलमिति प्रतीतिम्। अभाव-प्रतियोगिकाभावाधिकरणिकाभावस्य अधिकरणस्वरूपत्ववादिनः प्राचीन-नैयायिका अपि गगनादौ कर्मभावभेदमेव अङ्गीकुर्वन्ति न गुणभावम्। वेदान्तिनोऽपि चिज्जडयोस्तादात्म्यं स्वीकुर्वन्तोऽपि चित एव भासकत्वं न जडस्येति भेदमभ्युपगच्छन्ति। तथा च स्वभावादेव शब्दस्य भासकत्वं भास्यत्वं चार्थस्य इति सिद्धम्। 'वृद्धिरादैच्' इति सूत्रे महाभाष्ये[68]ऽपि संज्ञासंज्ञिनोः सामानाधिकरण्यमुक्तम्। तच्चाभेदः। तथा च शब्दे यत्र तादात्म्यं नावगतं तस्मात् शब्दात् तदर्थो नावबुध्यत इति।

### 2.3.6.4 नैयायिकानां मतम्

(1) प्राचीननैयायिकास्तु शब्दाद् अर्थसम्प्रत्ययं सामयिकं मन्यन्ते[69]। अस्य शब्दस्य इदम् अर्थजातम् अभिधेयम् इति अभिधानाभिधेयनियमनियोग एव समय इत्युच्यते। नियमश्च गोशब्दस्य सास्नादिमानेवार्थ इत्याकारः। तस्मिन् नियोगश्च बोद्धव्य इति भगवतः परमेश्वरस्य सर्गादौ समयः। एवञ्च 'अस्मात् पदाद् अयम् अर्थो बोद्धव्य' इत्याकारः 'इदं पदम् अमुम् अर्थं बोधयतु' इत्याकारो वा भगवत इच्छाविशेषः। स एव सङ्केतापरपर्यायः पदस्य अर्थेन सह सम्बन्धः। न त्वतिरिक्तो वाच्यवाचकभावः। तत्र प्रमाणाभावाद् इति वदन्ति।

(2) नव्यास्तु[70]- ईश्वरेच्छायाः शक्तित्वे आधुनिकसङ्केते तदिच्छाया अभावाद् आधुनिकसङ्केतस्य शक्तित्वानापत्तिः। किञ्च ईश्वरानङ्गीकर्तॄणां मते शाब्दबोधस्याप्यनापत्तिः। तस्माद् इच्छैव शक्तिरित्यभिदधते।

### 2. 3.6.5 कौण्डभट्टमतम्

वैयाकरणसिद्धान्तभूषणसारग्रथनद्वारा प्रथितयशाः कौण्डभट्टस्तु[71] घटादिविषयकबोधजनने चक्षुरादीनां तज्ज्ञानकारणतारूपयोग्यता इव अर्थविषयकबोधजनने शब्दानां तद्बोधकारणतारूपा योग्यतैव शब्दार्थसम्बन्ध इत्यभिप्रैति। एवं योग्यताया एव शब्दार्थसम्बन्धत्वम् अभ्युपगच्छन्नपि तां योग्यतां

बोधजननसामर्थ्यरूपाम् अङ्गीकरोति, न तु प्रकाश्यप्रकाशकरूपाम्। एवञ्च तन्मते बोधजननसामर्थ्यं बोधजनकत्वं बोधकत्त्वमेव सम्बन्धः। तच्च बोधकत्वं विषयतासम्बन्धेन अर्थेऽपि सङ्गच्छते। एतच्च ज्ञायमानं पदं शाब्दबोधे कारणमिति। यदि च पदज्ञानं शाब्दबोधकारणम् इति मतं तर्हि बोधजनकज्ञानविषयत्वं सम्बन्धः।'इदं पदम् एतदर्थबोधकम्' इति व्यवहारेणैव बोधकत्वग्रह इत्याह।

## 2. 3.6.6 धर्मसूरिणा कृतस्तत्तन्मतनिरासः

एवं स्थितेषु बहुषु मतेषु ग्रन्थोक्तरीत्या तत्तन्मतखण्डनपूर्वकं धर्मसूरे-रभिमतं मतम् अत्र व्यवस्थाप्यते। न हि शब्दार्थयोर्वैयाकरणैकदेशिभिरङ्गीकृत-तादात्म्यलक्षणः सम्बन्धः। शब्दार्थयोर्द्रव्यत्वगुणत्वादिरूपविरुद्धधर्मवत्त्वेन विलक्षणप्रतीतिविषयत्वात्। नापि कार्यकारणभावः। तन्तुपटयोरिव शब्दार्थयोः कार्यकारणभावसम्बन्धस्य वक्तुम् अशक्यत्वात्। शब्दनित्यतावादिमीमांसकमते नित्यस्य शब्दस्य विकार्यत्वासम्भवात् शब्दस्य अनित्यत्वं गगनकार्यत्वं चेति नैयायिकमते अन्यकार्यत्वायोगाच्च। न च प्रकाश्यप्रकाशकभावतुल्यो निमित्तनिमित्तिभावः। भिन्नदेशकालयोस्तयोस्तत्त्वासम्भवात्। नापि बौद्धार्थ-स्वीकारात् तत्सम्भवः। तत्स्वीकारे प्रमाणाभावात्।

नापि अर्थस्मृतिजननशक्तिः सम्बन्धः। तथा हि – किं ज्ञाता शक्तिः कार्ये उपयुज्यते, उत अज्ञाता। न तावद् अज्ञाता। अव्युत्पन्नस्यापि शब्दाद् अर्थप्रतीतिप्रसङ्गात्। न द्वितीया। अन्योन्याश्रयापत्तेः। तथा हि- अहम् अर्थ-स्मृतिमान् अर्थस्मृतिजननशक्तिज्ञानात्। अहम् अर्थस्मृतिजननज्ञानवान् अर्थस्मृते-रित्युभयथाप्यनुमानेनार्थस्मृतिं प्रति विशिष्टशक्तिज्ञानस्य विशिष्टशक्तिज्ञानं प्रत्यर्थस्मृतेश्च साधनत्वमित्यन्योन्याश्रयप्रसङ्गः। न च पूर्वपूर्वा अर्थस्मृति-रुत्तरोत्तरस्मृतिजननशक्तिज्ञाने हेतुरिति नान्योन्याश्रयदोष इति वाच्यम्। एवम् अन्योन्याश्रये परिहृतेऽपि पूर्वस्मृत्या तत्पूर्ववर्तिविशिष्टशक्तिज्ञानानुमानं तस्मिंश्च विशिष्टशक्तिज्ञाने कारणत्वेनान्या पूर्वस्मृतिः, तस्यां च पुनः कारणत्वेन शक्तिज्ञानम् इत्यनवस्था स्यात्।

किञ्च सम्बन्धस्य जनकत्वात्मकत्वं कदापि न सम्भवति। उक्तञ्च भूषणसारव्याख्यायां दर्पणे[72] –

"प्रयोज्यप्रयोजकव्यवहारदृष्टप्रयोज्यप्रवृत्त्यनुमिते प्रयोज्यघटानयनादिज्ञाने उपस्थितत्वात् शब्दस्यैव हेतुतायाम् अवधार्यमाणायाम् असम्बद्धस्य कारणत्वान्यथानुपपत्त्या कल्प्यमानस्य सम्बन्धस्य जनकत्वात्मकत्वासम्भवः। स्वयम् अनुपपद्यमानत्वेन गृहीतस्य ग्रहीतुम् अशक्यत्वात्। तस्मान्न बोधकत्वं शक्तिः" इति।

## 2. 3.6.7 धर्मसूरेरभिमतमतविषये सुधाकरकाराभिप्रायस्य खण्डनम्

एवमितरपक्षान् दूरीकृत्य–"अत्रोच्यते। अस्तु शक्तिरेव सम्बन्ध" (पृ० 30) इत्यादिना सिद्धान्तयति धर्मसूरिः। अयञ्च सिद्धान्तो नैयायिकमतेनेति सुधाकरादयो व्याख्यातारः[73]। तथा हि– अत्र शक्तिपदेन अभिधापरपर्याया सङ्केतपदवाच्या एव शक्तिरभिप्रेता। सा च इच्छारूपा शक्तिः प्रयोज्यप्रयोजकवृद्धव्यवहारं पश्यता बालेन 'अस्य पदस्य अयम् अर्थोऽनुरूप' इति सन्दर्भज्ञानसमय एव गृह्यते। तया च शक्त्या कश्चित् संस्कारो जायते। यथा च हस्तिहस्तिपकयोः साहित्यावगाहिनि प्रथमेऽनुभवे ज्ञातेन सम्बन्धेन जनितः संस्कारस्ततः परं हस्तिहस्तिपकयोरन्यतरस्य दर्शनेन समुद्बुद्ध इतरं स्मारयति तथैव व्यवहारानुगृहीतसन्दर्भसमयज्ञातसङ्केतजनितसंस्कारः शब्दश्रवणसमुद्बुद्धः सन् स्वसत्तयैवार्थस्मृतिं जनयति। संस्कारसमुद्बोधकं च केवलशब्दज्ञानमेव, न तु अर्थनिरूपितसम्बन्धविशिष्टशब्दज्ञानम्। अर्थनिरूपितसम्बन्धस्य शब्देन वैशिष्ट्यसिद्ध्यर्थं सम्बन्धान्तरस्य तस्यापि सम्बन्धसिद्ध्यर्थं सम्बन्धान्तरस्य चाभ्युपगम इत्यनवस्था स्यात्।

किञ्च सम्बन्धस्य अर्थस्मृतौ कारणत्वं वक्तुं न शक्यते। तथा हि – कार्यनियतपूर्ववृत्तिकारणम्। कार्यनियतपूर्ववृत्तित्वं च कार्योत्पत्तिक्षणाव्यवहितप्राक्क्षणवृत्तित्वम्। अत्र च अर्थस्मृतिक्षणाव्यवहितप्राक्क्षणे सम्बन्धरूपसङ्केतग्रहाभावात् तत्त्वं सम्बन्धस्य न घटते। किञ्च यदि सम्बन्धप्रतियोगितया अर्थस्य शब्दश्रवणात् पूर्वमेवावगतिः स्यात्, तर्हि शब्दस्यैव वैयर्थ्यापत्तिः। अर्थनिरूपितसम्बन्धस्य कारणत्वम् अभ्युपगम्यते नार्थस्य इत्यपि वक्तुं न शक्यम्। विशिष्टबुद्धिं प्रति विशेषणज्ञानस्य कारणत्वात्, अर्थज्ञानाभावे सम्बन्धज्ञानस्यैवाभावादिति।

## 2.3.6.8 धर्मसूरेरभिमतमतव्यवस्थापनम्

वस्तुतस्तु– अत्र शक्तिपदेन न नैयायिकाभिमत इच्छारूपः सङ्केतोऽभिमतः। किन्तु–

"शक्तिरेव हि सम्बन्धो भेदश्चास्या न विद्यते।"

इति भट्टपादोक्ता[74] मीमांसकाभिमता वाच्यवाचकभावापरपर्याया शक्तिरेव सम्बन्धत्वेन इष्टा। सा च शक्तिर्वाच्यवाचकोभयवर्तिनी एकैव वाच्यनिष्ठा वाच्यशक्तिरिति वाचकनिष्ठा वाचकशक्तिरिति चोभयथा व्यपदिश्यत इति तरले मल्लिनाथः[75]। स च सम्बन्धः 'अस्मात् पदाद् अयम् अर्थो बोद्धव्यः' 'इदं पदम् एतदर्थबोधकम्' 'इदम् एतद्वाच्यम्' 'इदम् एतद्वाचकम्' इत्यादिव्यवहारैः सङ्केतग्रहणकाल एव गृह्यते। तया शक्त्या कश्चित् संस्कारो जायते। स च संस्कारः समनन्तरकाले शब्दश्रवणेन समुद्बुद्धः सन् स्वसत्तयैवार्थस्मृतिं जनयतीत्यादि सर्वं पूर्ववदेव।

प्राय आलङ्कारिका वृत्तिविषये मीमांसकानुयायिनः। धर्मसूरेर्ग्रन्थदर्शनेन अयं विषयो विशदतमो भवति। अतश्च सर्वत्र मीमांसकानुयायी अयम् अत्र नैयायिकान् अनुसरतीति व्याख्या न हृदयङ्गमा। किञ्चायं धर्मसूरिर्विद्याधरं मल्लिनाथं च भूयोऽनुकरोतीति निश्चितत्वाद् अत्रापि तावेव अनुकरोतीति वचनं युक्तम्। अत एव तरले[76] –

"सम्बन्धस्तु वाच्यवाचकयोः शक्तिरेव।"

इति मल्लिनाथस्य वाक्यम्, "अस्तु शक्तिरेव सम्बन्धः" (पृ० 30) इति धर्मसूरेर्वाक्यं च समानाकारं संदृश्यते। अनयोः शक्तिसम्बन्धवादस्य प्रमाणभूते पूर्वोदाहृते भट्टपादश्लोकेऽपि "शक्तिरेव हि सम्बन्धः" इति समानानुपूर्वी दरीदृश्यमाना अमुमेवाशयं द्रढयति। अतश्च धर्मसूरिरत्रापि मीमांसकानेवानुसरतीति निश्चप्रचम्।

## 2.3.7 वाच्यार्थस्वरूपविचारः

वाचकशब्दस्य लक्षणकथनानन्तरं तस्य विभागः प्रदर्शनीयो भवति। स चायं वाचकपदविभागो वाच्यार्थगतविभागम् आश्रित्य भवति। अतोऽत्र वाच्यार्थस्वरूपमीमांसा क्रियते।

वाच्यार्थस्वरूपविषये शास्त्रकाराः सर्वे एव परस्परं भिद्यन्ते। साधारणतया

शब्दतदर्थविषयकमीमांसायां प्रतिद्वन्द्विनस्त्रयो वैयाकरणा मीमांसका नैयायिकाश्च। तत्र वैयाकरणेष्वपि केचित् केवलव्यक्तिवादिनः, केचिच्च केवलजातिवादिनः, अन्ये जात्यादिचतुष्टयवादिनः, अपरे जातिविशिष्टव्यक्तिवादिनः।

## 2.3.7.1 केवलव्यक्तिवादिनां वैयाकरणानां मतम्

महाभाष्ये सरूपसूत्रे[77] "द्रव्याभिधानं व्याडिः" इति वार्तिकेन व्याड्यभिमतः केवलव्यक्तिवादः प्रपञ्चितः[78]। अयं हि तन्मतसारः–शब्दार्थनिश्चयो व्यवहारादेव भवति। 'गाम् आनय' 'गां नय' इत्यादिवृद्धव्यवहारे सास्नाद्यवयव-विशिष्टव्यक्तावेव व्युत्पित्सुर्बालः शक्तिं गृह्णाति। जातिस्तु नास्त्येव। तथा हि-यदि जातिरङ्गीक्रियते तर्हि सा द्रव्येषु व्यासज्य वा तिष्ठेत् पृथक् पृथग् वा तिष्ठेत्। उभयथापि न सम्भवति। व्यासज्यवृत्तित्वे एकाश्रयनाशे अप्रतीत्यापत्तिः। 'गाम् आलभेत' इत्यादिषु सर्वगवालम्भनापत्तिश्च। प्रत्येकवृत्तित्वे तस्या एकत्वभङ्गः, नित्यताभङ्गश्च।

अथवा अस्तु जातिः। तथापि सा न वाच्या। तथा हि – 'व्रीहीन् अवहन्ति' इत्यादिविधिचोदितानाम् अवहननादिकार्याणां मूर्तिमद्द्रव्यविषयकाणां जातावसम्भवात्। एवं 'ब्राह्मणो न हन्तव्यः' 'न कलञ्जं भक्षयेत्' इत्यादिप्रतिषेधविधानमपि व्यक्तिवाच्यत्वपक्ष एव सार्थकं भवति। किञ्च जातेः पदार्थत्वे प्रत्ययार्थसंख्यान्वयानापत्तिः। तस्या एकत्वातिरिक्त-संख्यान्वयायोग्यत्वात्। तथा पुंस्त्वकर्तृत्वकर्मत्वादिप्रत्ययार्थस्यापि जातावन्वयो न सम्भवति।

नन्वेवं व्यक्तीनाम् आनन्त्याद् अनन्तशक्तिकल्पनापत्तिरिति चेत्, न। एकस्यां व्यक्तौ शक्तिः, अन्यासु लक्षणा इति शक्त्यानन्त्याभावात्। एकस्या व्यक्ते-र्व्यक्त्यन्तरस्य च स्वसमवेताश्रयत्वं सम्बन्धः। अथवा अशक्याम् अपि जातिम् उपलक्षणीकृत्य सर्वव्यक्तिबोध उपपद्यत एवेति।

## 2. 3.7.2 केवलजातिवादिनां वैयाकरणानां मतम्

वाजप्यायनादयो वैयाकरणा भाट्टमीमांसका[79] इव केवलजातिशक्तिवादिनः। इदं च मतं सरूपसूत्र एव वार्तिकमहाभाष्यकाराभ्यां[80] प्रकटितम्। अयं हि तेषाम् आशयः।

गुणैः प्रमाणेन च भिन्नेष्वपि अनेकगोव्यक्तिषु 'गौः गौः' इति एकाकारैव

बुद्धिर्भवति। तदनुरोधात् तत्तद्व्यक्त्यनुगतं किञ्चित् सामान्यम् अस्तीत्यङ्गी-कर्तव्यम्। तत्सामान्यमेव जातिरिति आकृतिरिति च उच्यते। सैव पदशक्या। न व्यक्तिः। यदि व्यक्तिः शक्या स्यात्, व्यक्तेः सर्वदा किञ्चिद्गुणवैशिष्ट्येनैव प्रतीतेः 'गौः' इत्युक्तेऽपि प्रतीयमाना यत्किञ्चिद्गुणविशिष्टा प्रतीयेत। न तथा अस्ति कस्यचिद् अनुभवः। किञ्च 'ब्राह्मणो न हन्तव्य' इत्यादिनिषेधशास्त्राण्यपि जातिपक्ष एवार्थवन्ति भवन्ति। यदि च व्यक्तिः पदार्थः स्यात्, एकं ब्राह्मणमहत्वा अन्यत्र कामचारः स्यात्।

यद्यपि वृद्धव्यवहारे व्युत्पित्सोर्बालस्य प्रथमं व्यक्तिविशेष एव शक्तिग्रहो भवति तथापि आनयनप्रत्यानयनाभ्यां व्यक्त्यन्तरीयानयनादिदर्शनेन पूर्वजातशक्तिग्रहस्य जात्याश्रयमात्र एव व्यवस्थितिर्भवति। तत्रापि जातिं विना जात्याश्रयबोधासम्भवाद् विशेषणे जातौ प्रथमं शक्तिः कल्प्या। ततः 'अनन्यलभ्यः शब्दार्थ' इति न्यायाद् आक्षेपादिना व्यक्तिलाभसम्भवात्,

'विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे।'

इति निषेधाच्च न शब्दस्य व्यक्तिवाचकत्वम्। किञ्च व्यक्तीनाम् आनन्त्यात् सर्वासु व्यक्तिषु शक्तिग्रहोऽपि न सुकरः। प्रतिव्यक्ति शक्तिकल्पने गौरवाच्च।

'गामानय' इत्यादिषु व्यक्तिबोधोऽपि नान्तरीयकत्वेन सम्पद्यते। यथा च 'अग्निरानीयताम्' इत्युक्ते केवलस्याग्नेरानयनासम्भवात् पात्रस्य शब्देन अनुक्तत्वेऽपि पात्रेणैव अग्निरानीयते तथा।

अथवा जातिव्यक्त्योरभेदोपचारात् जातिशक्तिज्ञानमेव जात्यभिन्न-व्यक्तिबोधकमपि भवति। तेन च 'इयं गौः' इत्यादिसामानाधिकरण्यप्रतीतिरप्य-बाधिता भवतीति।

### 2. 3.7.3 जात्यादिचतुष्टयवादिनां वैयाकरणानां मतम्

महाभाष्ये प्रत्याहाराह्निके 'ऋलृक्'-सूत्रे-

"गौः शुक्लश्चलो डित्थ इत्यादौ चतुष्टयी शब्दानां प्रवृत्तिः"

इति वचनेन जातिः, गुणः, क्रिया, द्रव्यं च प्रवृत्तिनिमित्तम् इति ज्ञायते। तेन प्रवृत्तिनिवृत्तिभेदेन शब्दा अपि चतुर्धा भिद्यन्ते। तत्तच्छब्दप्रयोगे तत्तत्प्रवृत्तिनिमित्ताश्रयबोधो भवति। 'नागृहीतविशेषणा विशिष्टबुद्धिः' 'विशेष्यं नाभिधा गच्छेत्' इति पूर्वोक्तन्यायद्वयेन जात्यादिष्वेव शक्तिः। तदाश्रयस्य च

नान्तरीयकतया उपस्थितिः। तत्र जातिर्नाम भिन्नेष्वनुगतत्वबुद्धेरालम्बन-भूतोऽनुगतबुद्ध्यैव ज्ञातश्च वस्तुनो धर्मः। स च धर्म एव व्यवहारयोग्यता-निर्वाहकस्सन् प्राणप्रद इत्युच्यते। गुणादयस्तु वस्तुनि विशेषाधानहेतवः। तत्र गुणो नाम रूपादिर्धर्मः। यद्यपि शुक्लादिगुणानां विभिन्नवस्त्वाश्रितानां भेद एवेति तत्र शक्तावपि आनन्त्यदोषोऽस्त्येव। अतः शुक्लः शुक्ल इत्यनुगतप्रतीत्या सिद्धं शुक्लत्वादिसामान्य एव शक्तिरिति वक्तव्यम्। एवं क्रिया नाम धातुवाच्या आश्रितक्रमरूपा पूर्वापरीभूतावयवरूपा साध्यत्वेनाभिधीयमाना च। यथा अधिश्रयणाद्यधःश्रयणपर्यन्ते क्रियासमूहे क्रियाव्यवहारः। तत्रापि क्रियाणां भिन्नत्वात् तत्तत्क्रियासु वर्तमानं सामान्यम् एव शक्यम्। वक्त्रा स्वेच्छया व्यक्तिविशेषे उपाधिरूपेण सन्निवेशितो यदृच्छाशब्दः। तादृशशब्दानां प्रवृत्तौ तद्द्रव्यमेव प्रवृत्तिनिमित्तम्। तत्रोपाधित्वेन संज्ञाभूतस्य शब्दस्य स्वीकाराद् डित्थादिशब्दानां स्वरूपमेव शक्यम् इति।

### 2. 3.7.4 विशिष्टशक्तिवादिनां वैयाकरणानां मतम्

भाष्यतत्त्वविदस्तु वैयाकरणा विशिष्टशक्तिवादिन एव। तथा हि - पस्पशाह्निके हि भाष्ये आकृतिर्वा द्रव्यं वा पदार्थ इति पृष्ट्वा उभयम् इति समाहितम्[81]। महर्षिणा पाणिनिना च आकृतिं पदार्थं मत्वा "जात्याख्यायाम्"[82] इति, द्रव्यं पदार्थम् इति च मत्वा "सरूपाणाम्"[83] इति च सूत्रितम्। सरूपाणाम् इति सूत्रे भाष्ये[84] च -

**"न हि आकृतिपदार्थकस्य द्रव्यं न पदार्थः। द्रव्यपदार्थकस्य वा आकृतिर्न पदार्थः। उभयोरुभयं पदार्थः। कस्यचित् किञ्चित् प्रधानभूतं किञ्चिद् गुणभूतम्। आकृतिपदार्थकस्य आकृतिः प्रधानभूता, द्रव्यं गुणभूतम्। द्रव्यपदार्थकस्य द्रव्यं प्रधानभूतम्, आकृतिः गुणभूता"।**

इति सुस्पष्टं विशिष्टशक्तिवादोऽभिहितः। एतादृशविशिष्टशक्तिवाद एव 'सरूपाणाम्', 'जात्याख्यायाम्' इत्यादिसूत्रसङ्गतिः। यदि च जातेरेव शक्यत्वं तदा 'जात्याख्यायाम्' इति सूत्रे जात्याख्यायाम् इति पदं व्यर्थम् एव भवति। अत एव लघुशब्देन्दुशेखरादिषु[85] प्रवृत्तिनिमित्तं तदाश्रयश्च प्रातिपदिकार्थ इत्यर्थविवरणं दृश्यते।

यदपि 'चतुष्टयी शब्दानां प्रवृत्तिः' इति ऋलृक्–सूत्रस्थं भाष्यम् उपन्यस्तं जातिवादिभिस्तन्न रुचिरम्। प्रवृत्तिनिमित्तभेदस्य जात्यादिरूपस्य प्रदर्शनस्य तदभिप्रेतत्वात्। प्रवृत्तिनिमित्तत्वञ्च वाच्यवृत्तित्वे सति वाच्यविशेषणत्वम्।

यदप्युक्तं द्रव्यवाचकत्वे 'गौः शुक्लश्चलो डित्थ' इत्यादीनां पर्यायतापत्तिरिति तदपि न मनोरमम्। विशेषणभेदेन विशिष्टभेदस्य सर्वैरपि शास्त्रकृद्भिरङ्गीकृतत्वात्। तथा च जातिविशिष्टव्यक्तिर्व्यक्तिविशिष्टा जातिर्वा उभयम् अपि वाच्यार्थ इति।

### 2. 3.7.5 नैयायिकानां मतम्

"जात्याकृतिव्यक्तयः पदार्थ"[86] इत्यनुशासनात् सर्वत्र जात्याकृतिविशिष्टा व्यक्तिरेव शब्दार्थः। सर्वत्र व्यक्तेरेव विशेष्यत्वान्न नानार्थतापत्तिः। सूत्रेऽस्मिन् जात्याकृतिव्यक्तय इति द्वन्द्वसमासनिर्देशेन द्वन्द्वे समस्यमानपदार्थानां सर्वेषां समप्राधान्यव्युत्पत्तेर्यद्यपि जात्याकृत्योर्व्यक्तिवत् पदार्थत्वं सिद्ध्यति, तथापि व्यक्तेश्चरमोपात्तत्वात् पूर्वयोर्विशेष्यत्वेऽस्वरसाच्च व्यक्तेरेव विशेष्यत्वं तयोर्विशेषणत्वमेवेति चाङ्गीक्रियते। न च विशिष्टव्यक्तौ शक्त्यङ्गीकारे आनन्त्यव्यभिचारौ। तथा हि – प्रथमं व्यक्तावेव शक्तिग्रहः। व्यक्तेरिन्द्रिय-सन्निकर्षदशायां सामान्यलक्षणाप्रत्यासत्त्या व्यक्त्यन्तरोपस्थितिर्भवतीति सर्वासु व्यक्तिषु एकदैव शक्तिग्रहः। सामान्यलक्षणाप्रत्यासत्तिम् अनङ्गीकुर्वाणानाम् अपि गोत्वादिप्रकारकशाब्दबोधं प्रति गोत्वादिप्रकारकशक्तिग्रहः कारणम् इति कार्यकारणभावेन देशान्तरीयगोव्यक्तावपि शक्तिग्रहो भवेदेव। किञ्च गोत्वं शक्यं यदि स्यात् तर्हि गोत्वत्वं शक्यतावच्छेदकं स्यात्। तच्च गोत्वत्वं निखिलगोसमवेतत्वे सति गवेतरासमेवतत्वम् इति शक्यतावच्छेदकगौरवं जातिवादिनां दुर्वारम्। विशिष्टव्यक्तिवाद एव प्रत्ययार्थान्वयोऽपि घटत इति।

### 2. 3.7.6 भाट्टमीमांसकानां मतम्

भाट्टमीमांसका जातिशक्तिवादिनः। तेषाम् अयम् आशयः। तत्र जातिव्यक्त्योर्भेदानङ्गीकारात् लिङ्गसंख्याकारकादिसम्बन्धः सामानाधिकरण्यञ्च साधयितुं शक्यते। अथ यदि जातिव्यक्त्योर्भेद एवाङ्गीकरणीयस्तदा व्यक्तिबोधो लक्षणया भवति।

उक्तञ्च मण्डनमिश्रैः[87] –

"गौः जायते गौः नश्यतीत्यादौ सर्वत्र गोत्वादिजातिशक्तेनैव गवादिपदेन लक्षणया गोत्वविशिष्टा व्यक्तिर्बोध्यते। व्यक्तीनां बहुत्वेनान्य-लभ्यत्वेन च तत्र शक्तेरकल्पनात्। तात्पर्यानुपपत्तेरपि लक्षणाया बीजत्वात्" इति।

जात्या व्यक्तिराक्षिप्यत इत्याक्षेपस्तु नोचितः। आक्षिप्तस्य अर्थस्य प्रकृत्यर्थत्वाभावेन तस्मिन् तदुत्तरप्रत्ययार्थानन्वयापत्तेः। प्रत्ययानां स्वप्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमात्। तस्मात् लक्षणैव। लक्ष्यार्थस्यापि प्रकृत्यर्थत्वान्न पूर्वोक्तदोषः सम्भवति। ननु एकदैव एकस्मिन् शब्दे विरुद्धं वृत्तिद्वयं न भवतीति चेत्, न। सति तात्पर्ये यथा 'गङ्गायां मीनघोषौ स्त' इत्यत्र गङ्गाशब्दे युगपद्वृत्तिद्वयम् अभ्युपगम्यते तथा शब्देष्वपि युगपद्वृत्तिद्वयेन जातिव्यक्तिबोध इति न कश्चिद् दोष इति।

## 2. 3.7.7 प्राभाकरमीमांसकानां मतम्

अन्विताभिधानवादिनः प्राभाकरा अपि जातिशक्तिवादिन एव। तेषां त्वयम् आशयः। गोपदजन्यशाब्दबोधो यद्यपि विशिष्टविषयक एव तथापि तादृशशाब्दबोधे गवादिपदनिष्ठा शक्तिर्जातिनिष्ठतया ज्ञाता कारणं भवति। व्यक्तिभानं तु समानवित्तिवेद्यतया भवति। ननु जातिव्यक्त्योः समानवित्तिवेद्यत्वे 'जातेरेव शक्यत्वं न व्यक्तेः' इत्यत्र किं विनिगमना इति चेत् – 'नागृहीतविशेषणा विशिष्टबुद्धिः', 'विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे' इति न्यायौ लाघवं चेति गृहाण। न च जातिम् उपलक्षणीकृत्य व्यक्तिरेव शक्या अस्तु। तथा च व्यक्तिशक्यतायामपि नानन्त्यादिर्दोष इति वाच्यम्। जातेरुपलक्षणत्वासम्भवात्। तथा हि– 'काकवद् देवदत्तगृहम्' इत्यत्र धर्मिभूते देवदत्तगृहे स्वनिष्ठोत्तृणत्वरूपधर्मेण यज्ञदत्तादिगृहभिन्नतया प्रतीते सति तन्निष्ठः काकः प्रतीयमानं धर्मान्तरं भवतीत्युपलक्षणं भवति। जातिव्यक्त्योस्तु जातेर्व्यक्तेः पृथग्व्यावृत्ततया अप्रतीतेराकृतिधर्मिकतयैव व्यक्तेः प्रतीतेश्च न जातेरुपलक्षणत्वम्। किन्तु विद्यमानत्वे सति व्यावर्तकत्वम् इति लक्षणलक्षितविशेषणत्वमेव। आक्षेपादिना व्यक्तिधीरिति तु न युक्तम्, बुद्धिभेदापत्तेः। न ह्यज्ञाता ज्ञाता वा आकृतिर्व्यक्तिज्ञानकारणम्। किन्तु ज्ञायमानावस्थैव। आकृतेः परतन्त्रत्वात् परतन्त्राणां ज्ञायमानतयैव कारणत्वात्। एवञ्च जातिस्फूर्तेर्व्यक्तिस्फूर्तिं विना पर्यवसानाभावात् जातिव्यक्त्योः समानवित्तिवेद्यत्वं सिद्धम् इति।

## 2. 3.7.8 धर्मसूरिणा कृतं मतान्तरसमीक्षणम्

एवं शक्यार्थविषयेषु समवस्थितेषु बहुषु पक्षेषु धर्मसूरिरितरपक्षनिराकरण-पुरस्सरं मीमांसकमतम् इत्थं समर्थयति।

व्यक्तिरेव शक्या इति मतं न युक्तम्। अनन्तव्यक्तिषु एकैकशः शक्तेः कल्पयितुम् अशक्यत्वात्। नापि तद्व्यक्तिसमुदाये शक्तिकल्पनमपि सुकरम्। तादृशसमुदायस्यैवानुभवाभावात्। एकस्यां व्यक्तौ शक्तिग्रहे तु तेन शक्तिग्रहेण द्वितीयस्या व्यक्तेर्बोधो न स्यात्। परन्तु बोधो दृश्यते। अतो व्यभिचारः। जातिम् उपलक्षणीकृत्य व्यक्तौ शक्तिरित्यपि मतं न युक्तम्। तथाप्यभिधेयानाम् अनन्तत्वेन शक्त्यानन्त्यं दुष्परिहरमेव। किञ्च व्युत्पत्तिकाले हि जातिरुपलक्षणं भवति, न तु व्यवहारकाले। यथा च काकवद् देवदत्तगृहम् इत्यत्र देवदत्तगृहत्वेन अनुभूयमानमेव गृहमुपलक्षणविशिष्टं भवति। आनन्तरिकव्यवहारे तु काकादिरहितस्यैव देवदत्तादिगृहस्य स्वरूपेण अभिधानम्। अथ यदि व्यक्तिवाचकः शब्दो जातिम् उपलक्षणत्वेन स्वीकृत्य तज्जातीयोऽयम् इति बोधयतीत्यङ्गीक्रियते, तदा तत्र जातेर्विशेषणत्वमेव आगतम् इति 'नागृहीत-विशेषणा विशिष्टबुद्धिः, इति न्यायेन जातेरेव प्रथमम् अभिधेयता सिद्ध्यति।

जात्यादिः शक्य इति वैयाकरणमतमपि न हृदयङ्गमम्। बहुप्रवृत्तिनिमित्ता-भ्युपगमेन नानात्वापत्तेर्गौरवात्। यदि च प्रवृत्तिनिमित्तैक्यं न भवति तर्हि अगत्या प्रवृत्तिनिमित्तवैविध्यं स्वीकार्यं भवति। अत्र तु न तथा। एकस्या एव जातेः प्रवृत्तिनिमित्तत्वसम्भवात्। ननु इदम् अयुक्तम्। अनेकव्यक्तिनिष्ठा अनुगताकार-प्रत्यभिज्ञया प्रतीयमाना च जातिः। सा च डित्थादिषु व्यक्तिषु न सम्भवति। अतस्तत्र प्रवृत्तिनिमित्तम् अन्यदभ्युपगन्तव्यमेवेति चेत्, न। डित्थादिसंज्ञा-स्तत्तच्छरीरवाचकाः। तेषां च शरीराणाम् वैशेषिकमतेनाहरहः शरीरभेदसिद्धि-रिति सिद्धं डित्थादिशरीराणाम् अनेकत्वम्। तासु च अनुगतेन आकारेण डित्थत्वरूपो धर्मो जातिरूपः सिद्ध्यत्येवेति सिद्धा तत्रापि जातिः।

अन्यापोहः शब्दार्थ इति बौद्धानां मतम् अप्ययुक्तम्। सोऽयं घट इत्यादिप्रत्यभिज्ञया वस्तुनः स्थायित्वस्य सिद्धेः सर्वस्यापि क्षणिकत्वाभावात्। तत्र प्रमाणाभावाच्च। किञ्चाऽन्यापोहस्य शब्दार्थत्वे अन्योन्याश्रयप्रसङ्गः। तथा हि – घटपदस्यार्थो घटेतरभेदः। तत्र भेदज्ञाने प्रतियोगिज्ञानस्य घटेतरज्ञानस्य

"गौः जायते गौः नश्यतीत्यादौ सर्वत्र गोत्वादिजातिशक्तेनैव गवादिपदेन लक्षणया गोत्वविशिष्टा व्यक्तिर्बोध्यते। व्यक्तीनां बहुत्वेनान्य-लभ्यत्वेन च तत्र शक्तेरकल्पनात्। तात्पर्यानुपपत्तेरपि लक्षणाया बीजत्वात्" इति।

जात्या व्यक्तिराक्षिप्यत इत्याक्षेपस्तु नोचितः। आक्षिप्तस्य अर्थस्य प्रकृत्यर्थत्वाभावेन तस्मिन् तदुत्तरप्रत्ययार्थानन्वयापत्तेः। प्रत्ययानां स्वप्रकृत्य-र्थान्वितस्वार्थबोधकत्वनियमात्। तस्मात् लक्षणैव। लक्ष्यार्थस्यापि प्रकृत्यर्थत्वान्न पूर्वोक्तदोषः सम्भवति। ननु एकदैव एकस्मिन् शब्दे विरुद्धं वृत्तिद्वयं न भवतीति चेत्, न। सति तात्पर्ये यथा 'गङ्गायां मीनघोषौ स्त' इत्यत्र गङ्गाशब्दे युगपद्वृत्तिद्वयम् अभ्युपगम्यते तथा शब्देष्वपि युगपद्वृत्तिद्वयेन जातिव्यक्तिबोध इति न कश्चिद् दोष इति।

## 2. 3.7.7 प्राभाकरमीमांसकानां मतम्

अन्विताभिधानवादिनः प्राभाकरा अपि जातिशक्तिवादिन एव। तेषां त्वयम् आशयः। गोपदजन्यशाब्दबोधो यद्यपि विशिष्टविषयक एव तथापि तादृशशाब्दबोधे गवादिपदनिष्ठा शक्तिर्जातिनिष्ठतया ज्ञाता कारणं भवति। व्यक्तिभानं तु समानवित्तिवेद्यतया भवति। ननु जातिव्यक्त्योः समानवित्तिवेद्यत्वे 'जातेरेव शक्यत्वं न व्यक्तेः' इत्यत्र किं विनिगमना इति चेत् – 'नागृहीतविशेषणा विशिष्टबुद्धिः', 'विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे' इति न्यायौ लाघवं चेति गृहाण। न च जातिम् उपलक्षणीकृत्य व्यक्तिरेव शक्या अस्तु। तथा च व्यक्तिशक्यतायामपि नानन्त्यादिर्दोष इति वाच्यम्। जातेरुपलक्षणत्वासम्भवात्। तथा हि– 'काकवद् देवदत्तगृहम्' इत्यत्र धर्मिभूते देवदत्तगृहे स्वनिष्ठो-त्तृणत्वरूपधर्मेण यज्ञदत्तादिगृहभिन्नतया प्रतीते सति तन्निष्ठः काकः प्रतीयमानं धर्मान्तरं भवतीत्युपलक्षणं भवति। जातिव्यक्त्योस्तु जातेर्व्यक्तेः पृथग्व्यावृत्ततया अप्रतीतेराकृतिधर्मिकतयैव व्यक्तेः प्रतीतेश्च न जातेरुपलक्षणत्वम्। किन्तु विद्यमानत्वे सति व्यावर्तकत्वम् इति लक्षणलक्षितविशेषणत्वमेव। आक्षेपादिना व्यक्तिधीरिति तु न युक्तम्, बुद्धिभेदापत्तेः। न ह्यज्ञाता ज्ञाता वा आकृति-र्व्यक्तिज्ञानकारणम्। किन्तु ज्ञायमानावस्थैव। आकृतेः परतन्त्रत्वात् परतन्त्राणां ज्ञायमानतयैव कारणत्वात्। एवञ्च जातिस्फूर्तेर्व्यक्तिस्फूर्तिं विना पर्यवसा-नाभावात् जातिव्यक्त्योः समानवित्तिवेद्यत्वं सिद्धम् इति।

## 2. 3.7.8 धर्मसूरिणा कृतं मतान्तरसमीक्षणम्

एवं शक्यार्थविषयेषु समवस्थितेषु बहुषु पक्षेषु धर्मसूरिरितरपक्षनिराकरण-पुरस्सरं मीमांसकमतम् इत्थं समर्थयति।

व्यक्तिरेव शक्या इति मतं न युक्तम्। अनन्तव्यक्तिषु एकैकशः शक्तेः कल्पयितुम् अशक्यत्वात्। नापि तद्व्यक्तिसमुदाये शक्तिकल्पनमपि सुकरम्। तादृशसमुदायस्यैवानुभवाभावात्। एकस्यां व्यक्तौ शक्तिग्रहे तु तेन शक्तिग्रहेण द्वितीयस्या व्यक्तेर्बोधो न स्यात्। परन्तु बोधो दृश्यते। अतो व्यभिचारः। जातिम् उपलक्षणीकृत्य व्यक्तौ शक्तिरित्यपि मतं न युक्तम्। तथाप्यभिधेयानाम् अनन्तत्वेन शक्त्यानन्त्यं दुष्परिहरमेव। किञ्च व्युत्पत्तिकाले हि जातिरुपलक्षणं भवति, न तु व्यवहारकाले। यथा च काकवद् देवदत्तगृहम् इत्यत्र देवदत्तगृहत्वेन अनुभूयमानमेव गृहमुपलक्षणविशिष्टं भवति। आनन्तरिकव्यवहारे तु काकादिरहितस्यैव देवदत्तादिगृहस्य स्वरूपेण अभिधानम्। अथ यदि व्यक्तिवाचकः शब्दो जातिम् उपलक्षणत्वेन स्वीकृत्य तज्जातीयोऽयम् इति बोधयतीत्यङ्गीक्रियते, तदा तत्र जातेर्विशेषणत्वमेव आगतम् इति 'नागृहीत-विशेषणा विशिष्टबुद्धिः, इति न्यायेन जातेरेव प्रथमम् अभिधेयता सिद्ध्यति।

जात्यादिः शक्य इति वैयाकरणमतमपि न हृदयङ्गमम्। बहुप्रवृत्तिनिमित्ता-भ्युपगमेन नानात्वापत्तेर्गौरवात्। यदि च प्रवृत्तिनिमित्तैक्यं न भवति तर्हि अगत्या प्रवृत्तिनिमित्तवैविध्यं स्वीकार्यं भवति। अत्र तु न तथा। एकस्या एव जातेः प्रवृत्तिनिमित्तत्वसम्भवात्। ननु इदम् अयुक्तम्। अनेकव्यक्तिनिष्ठा अनुगताकार-प्रत्यभिज्ञया प्रतीयमाना च जातिः। सा च डित्थादिषु व्यक्तिषु न सम्भवति। अतस्तत्र प्रवृत्तिनिमित्तम् अन्यदभ्युपगन्तव्यमेवेति चेत्, न। डित्थादिसंज्ञा-स्तत्तच्छरीरवाचकाः। तेषां च शरीराणाम् वैशेषिकमतेनाहरहः शरीरभेदसिद्धि-रिति सिद्धं डित्थादिशरीराणाम् अनेकत्वम्। तासु च अनुगतेन आकारेण डित्थत्वरूपो धर्मो जातिरूपः सिद्ध्यत्येवेति सिद्धा तत्रापि जातिः।

अन्यापोहः शब्दार्थ इति बौद्धानां मतम् अप्ययुक्तम्। सोऽयं घट इत्यादिप्रत्यभिज्ञया वस्तुनः स्थायित्वस्य सिद्धेः सर्वस्यापि क्षणिकत्वाभावात्। तत्र प्रमाणाभावाच्च। किञ्चाऽन्यापोहस्य शब्दार्थत्वे अन्योन्याश्रयप्रसङ्गः। तथा हि – घटपदस्यार्थो घटेतरभेदः। तत्र भेदज्ञाने प्रतियोगिज्ञानस्य घटेतरज्ञानस्य

कारणत्वं यथा तथा घटेतरज्ञाने प्रतियोगिभूतघटज्ञानस्य कारणता इत्यन्योन्याश्रयः। घटघटेतरज्ञानयोः परस्परापेक्षत्वात्।

एवं विशिष्टशक्तिवादोऽपि न युक्तः। सर्वम् अपि द्रव्यं नैल्यारुण्यादि-विशेषधर्मसहितं वा गोत्वादिसामान्यधर्मसहितं वा प्रतीयते। गोशब्दोच्चारणात् प्रतीयमानाया गोव्यक्तेर्नैल्यादिविशेषधर्मविशिष्टतया अभानात् सामान्यधर्म-विशिष्टैव सा बुध्यत इति वक्तव्यम्। ततश्च विशेषणस्य विशेष्यस्य च बोधोऽनुभूयते।

**'विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे।'**

इति न्यायेन गोशब्दो न द्वे अभिधातुं समर्थः। अभिधा = मुख्यार्थाभिधायिनी शक्तिर्विशेषणे = जातौ क्षीणशक्तिः = समाप्तसामर्थ्या सती न विशेष्यं गच्छेत्= विशेष्यभूतां व्यक्तिं बोधयितुं न शक्नुयादिति तन्न्यायार्थः। किञ्चास्मिन् जातिविशिष्टव्यक्तेः शक्यत्वम्? उत व्यक्तिविशिष्टजातेर्वा? विनिगमनाविरहेण उभयोरपि शक्यत्वम् इति वक्तव्यम्। तथा च शक्तिद्वयाङ्गीकाररूपगौरवम्। अथ जातिव्यक्त्योरुभयोरप्येकवृन्तगतफलद्वयन्यायेन शक्तिः, विशेषणविशेष्यभावस्तु संसर्गमर्यादया लभ्यत इति न शक्तिद्वयकल्पनागौरवम् इति चेत्, न। एकस्मिन्नर्थे शक्तिकल्पनेनैव सिद्धे उभयत्र शक्तिकल्पने गौरवापत्तेः। किञ्चैवं 'गोपदं गवि गोत्वे वा शक्तम्' इत्यपि प्रयोगः स्यात्।

यद्यपि जातिविशिष्टा शक्तिरेव पदार्थ इति नैयायिकमते न पूर्वोक्तशक्ति-द्वयाङ्गीकारप्रयुक्तगौरवदोषापत्तिः। 'जात्याकृतिव्यक्तयस्तु पदार्थ'[88] इति न्यायसूत्रप्रामाण्याद् व्यक्तिविशेष्यबोधस्यैव सर्वत्राङ्गीकाराद् विनिगमना-विरहाभावात् तथापि पूर्वोक्तेनागृहीतन्यायेन विशेषणबोधेन एवाभिधाशक्तेः क्षीणत्वान्न तस्या व्यक्तिपर्यन्तबोधनसामर्थ्यम् इति व्यक्तौ शक्तिरयुक्तैव।

### 2.3.7.9 धर्मसूरेरभिमतमतनिरूपणम्

एवञ्च जातावेव शक्तिः। सा च जातिर्यत आश्रयाविनाभावेन व्यक्तिम् आश्रित्यैव तिष्ठत्यतः परतन्त्रस्वभावा। अत एव च सा शब्दात् स्फुरन्ती अन्तर्भावितधर्मिभूतव्यक्तिकैव स्फुरति। अतश्च शक्यया जात्या ज्ञायमानया तदैव

बुद्ध्या व्यक्तिरपि समानवित्तिवेद्या भवतीति न पुनः व्यक्तौ शक्तिकल्पनम् आवश्यकम् इति प्राभाकराणां मतमेव युक्तम्।

ननु प्राभाकरा अन्विताभिधानवादिनः। ते च शक्तिग्रहम् इत्थम् उपवर्णयन्ति। उत्तमवृद्धेन मध्यमवृद्धम् उद्दिश्य 'घटम् आनय' इति प्रयुक्तम्। तच्छ्रुत्वा मध्यमवृद्धो घटम् आनीतवान्। तदा व्युत्पित्सुः पार्श्वस्थो बाल उत्तमवृद्ध-वाक्यप्रयोगस्य मध्यमवृद्धक्रियायाश्च सम्बन्धम् अनुसन्धाय 'घटम् आनय इति वाक्यं घटानयनबोधकम्' इति निश्चिनोति। पश्चात् 'घटं नय' 'अश्वम् आनय' इत्युत्तमवृद्धवाक्यप्रयोज्याभ्यां मध्यमवृद्धकृताभ्याम् आवापोद्वापाभ्यां घटादिपदानां कार्यान्वितघटादावेव शक्तिं गृह्णाति। कार्यान्वयश्च व्यक्तेरेव भवति। तस्या एव कारकत्वात्। न जातेः। अतश्च तेषां मते कार्यानन्विताया जातेः शक्यत्वमेव न स्यादिति चेत्, न। जातिघटिताया एव व्यक्तेः कार्यान्वितत्वात्। विशेषणज्ञानं विना विशिष्टज्ञानाभावेन विशेषणेऽवश्यं शक्तेः कल्पनीयत्वेन विशेष्ये शक्तिकल्पने सामर्थ्यविरहेण तुल्यवित्तिवेद्यतया व्यक्तेर्भानेन, व्यक्तिलाभस्य अन्यलभ्यत्वाच्च न व्यक्तौ शक्तिः।

यदुक्तम् आकृतेः क्रियासाधनत्वयोग्यताभावान्न शब्दार्थत्वमिति तदपि न युक्तम्। न हि कारणत्वं व्यापारवत्त्वे सत्यसाधारणत्वरूपम्। व्यापारस्यापि जन्यत्वेन तदुत्पत्तिं प्रति व्यापारान्तरं पुनस्तदुत्पत्तिं प्रति व्यापारान्तरमित्येव-मनवस्थाप्रसङ्गान्न व्यापारवत्त्वनियतं कारणत्वम्। किञ्च यत्र यत्र व्यापारवत्त्वं तत्र तत्र कारणत्वम् इति व्याप्तिरपि वक्तुं न शक्यते। कारणत्वेन अभिमतजात्यादौ तदभावात्। अतश्च कार्यनियतपूर्ववृत्तित्वमेव कारणत्वम्। तच्च जातावपि अस्त्येव। ज्ञातया व्यक्त्या क्रिया साध्यत इति व्यक्तिज्ञानस्य कारणत्वम् अस्त्येव। आकृतेर्व्यक्त्यविनाभूतत्वाद् व्यक्तिज्ञानसमय एव सापि बुध्यत इति तस्या अपि कार्यनियतपूर्ववृत्तित्वम् अस्त्येव। अतश्च जातिशक्तिवादे न कापि हानिरिति।

### 2. 3.7.10 धर्मसूरिमतस्य समीक्षणम्

आलङ्कारिका जातिशक्तिवादिन एवेति काव्यप्रकाशादिग्रन्थमर्मज्ञानाम् अपरोक्षमेव। तत्र मम्मटः "चतुष्टयी शब्दानां प्रवृत्तिः" इति भाष्यम् अवलम्ब्य जात्यादिरूपोपाधेरेव वाच्यत्वम् अङ्गीचकार[89]। 'गामानय' इत्यादिषु गोशब्देन जातौ बोधितायां येन विना यदनुपपन्नं तत्तेन आक्षिप्यत इति न्यायेन

व्यक्तिराक्षिप्यते। आक्षिप्तव्यक्तेरानयनक्रियायां कर्मत्वेनान्वय इति तदाशयः। मीमांसकाभिमतकेवलजातिशक्तिवादः, तदभिमतो व्यक्तिलक्षणावादश्च मम्मटेन तिरस्कृतौ[90]। तस्यायम् आशयः। जातिगुणक्रियायदृच्छारूपेण चतुर्धा प्रसिद्धस्य प्रवृत्तिनिमित्तस्य केवलजातिरूपत्वोपपादनम् अयुक्तम्। एवं 'गामानय' इत्यादिषु जातौ शक्त्याऽभिहितायां लक्षणया व्यक्तिबोध इति चायुक्तमेव। लक्षणाप्रयोजक-रूढिप्रयोजनयोरन्यतरस्याभावात्। किञ्चैवं जातिविशिष्टव्यक्तिबोधो न स्यात्। युगपद् वृत्तिद्वयानङ्गीकारात् शक्तिलक्षणयोर्विरोधाच्च। किञ्च सर्वत्र व्यक्ति-लक्षणाऽप्युपपादयितुम् अशक्या। 'गामानय' इत्यादिषु अन्वयानुपपत्तिसत्त्वेऽपि 'गां पश्य' इत्यादौ तदभावात् 'येन इन्द्रियेण' इति न्यायेन जातेरपि चाक्षुषप्रत्यक्षविषयत्वात्। किञ्चैवं 'महान् गौः' इत्यादिषु लक्ष्यार्थे गवि महत्त्वरूपविशेषणानन्वयः। न हि 'गङ्गायां घोष' इत्यादिषु तीरविशेषणं किञ्चित् प्रयुज्यते। प्रत्युत 'गभीरायां नद्यां घोष' इत्यादौ शक्यार्थविशेषणमेव प्रयुज्यते। अतश्च व्यक्तेर्लक्ष्यत्वं वक्तुम् अशक्यम् इति।

मीमांसकानां मते मम्मटेन ये दोषाः प्रदर्शितास्ते दोषाः प्रायो व्यक्त्याक्षे-पवादेऽपि सन्त्येव। मीमांसकास्तावद् व्यक्तेराक्षेपलभ्यत्वे तस्याः शाब्दत्वं न स्यादिति मत्वैव लक्षणाम् अभ्युपगच्छन्ति। यदि च व्यक्तेः शाब्दत्वं न स्यात् तर्हि तस्याः प्रकृत्यर्थत्वाभावेन तस्यां द्वितीयार्थकर्मत्वाद्यन्वयो न स्यात्, प्रत्ययानां स्वप्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमात्। वृत्त्या उपस्थापितस्यैव अर्थस्य प्रकृत्यर्थत्वेन स्वीकरणीयत्वावश्यम्भावाच्च। अन्यथा 'घटं पश्य' इत्यादौ घटपदस्याधिकरणत्वेन स्मृतस्य आकाशस्यापि शाब्दत्वापत्तिः। आक्षिप्तेऽर्थे अपदार्थे विशेषणाद्यन्वयानुपपत्तिश्च।

एतत्सर्वं मनसि कृत्वा धर्मसूरिः शब्दानां जातावेव शक्तिम् अभ्युपगच्छन् तुल्यवित्तिवेद्यतया सिद्धां व्यक्तिम् अपि शक्यार्थतया अङ्गीकरोति (पृ० 32-33)। एतच्च प्राभाकरमीमांसकैरभ्युपगम्यते। ते हि 'यद्धि येन विना न भासते तद्बोधकस्य तद्बोधकत्वम्। जातिश्च व्यक्तिं विना नावभासत इति जातिशक्तिरेव व्यक्तिपर्यन्तबोधिका इति समानवित्तिवेद्यतया व्यक्तिलाभ' इति वदन्ति। कार्यान्विते शक्तिस्वीकर्तॄणां प्राभाकराणां मते तुल्यवित्तिवेद्यतया लभ्यस्यापि व्यक्तिविशेषस्य शाब्दत्वं भवतीति व्यक्त्याक्षेपपक्षे व्यक्तिलक्षणापक्षे वा ये दोषाः पूर्वमुपपादितास्ते न भवन्ति।

किञ्च व्यक्तेः शक्यत्वाभावे शक्यादशक्योपस्थितिरूपायाः शक्यसम्बन्ध-रूपाया वा लक्षणाया उपपत्तिरेव न भवति। आक्षेपपक्षे आक्षिप्तस्य शक्यत्वा-भावात् लक्षणापक्षे तु लक्ष्यस्य शक्यत्वाभावात्। किञ्च जातिशक्तिवादे अन्वयानुपपत्त्या जात्याक्षिप्ताया व्यक्तेर्बोधस्य यदि शाब्दत्वम् अङ्गीक्रियेत तर्हि लक्षणोच्छेदापत्तिः। 'गङ्गायां घोष' इत्यादावपि आक्षिप्तप्रवाहे घोषाधिकरण-त्वान्वयानुपपत्तिं निमित्तीकृत्य प्रवाहेण तत्सम्बन्धितीराक्षेपस्यापि वक्तुं शक्यत्वात्। ततश्च जातिशक्तिवादेषु प्राभाकराणां वाद एव योग्य इति निश्चित्य धर्मसूरिर्मम्मटादिमतं परित्यज्य प्राभाकरं मतमेव अनुसृतवान्।

यद्यपि लक्षणातरङ्गे-

"ननु प्राभाकराः सर्वत्र जातिशब्दार्थवादिनोऽपिव्रीहीन् प्रोक्षति इत्यादावुद्देश्यस्थले व्यक्तिलक्षणाम् आहुः। सा कुत्र अन्तर्भवतीति चेत्, अज्ञान एव अन्तर्भवतीति वदामः।" इत्यादिना ग्रन्थेन व्यक्तिलक्षणावादं काव्यप्रकाशरीत्या निराकरोत् (पृ० 51)। तत्सन्दर्भे व्यक्तेराक्षेपलभ्यत्व-मप्यङ्ग्यकरोत् तथापि तत्सर्वं मम्मटानुरोधेनेति भाव्यम्।

## 2. 3.7.11 अस्मदभिप्रायः

वस्तुतस्तु जातिविशिष्टा व्यक्तिरेव वाच्यार्थ इत्येव युक्तम्। जातौ शक्तिं परिकल्प्य तुल्यवित्तिवेद्यत्वम् आधारीकृत्य व्यक्तिबोधापेक्षया विशिष्टार्थस्वीकार-स्यैव लघुत्वात्। किञ्च तुल्यवित्तिवेद्याया व्यक्तेर्वाच्यत्वम् अभ्युपगम्यते वा? न वा? अभ्युपगम्यते चेत्, सिद्ध एव अस्मत्पक्षः। नाभ्युपगम्यते चेत् तस्या वृत्त्या उपस्थितत्वाभावात् प्रत्ययार्थाद्यन्वयानुपपत्तिरूपा दोषाः पूर्वोक्ता अपरिहार्या एव। तथा च लक्षणालक्षणोच्छेदः। किञ्च जातिव्यक्त्योस्तुल्यवित्तिवेद्यत्वमपि दुरुपपादम्। संशयस्थले प्रत्यक्षे व्यक्तिग्रहेऽपि जात्यग्रहात्। एवम् 'इदं रजतम्' इति भ्रमे जातिग्रहेऽपि व्यक्त्यग्रहात्। नापि शाब्दे तदुपपादयितुं शक्यम्। 'द्रव्यम्' इति पदेन व्यक्तिग्रहेऽपि जात्यग्रहात्। 'जातिः' इति पदेन जातिग्रहेऽपि व्यक्त्यग्रहात्।

जातिशक्तिवादे केवलव्यक्तिशक्तिवादे च दुष्टताम् अभिलक्ष्यैव सरूपाणाम् इति सूत्रे भाष्ये भाष्यकारेणोक्तम्[91] -

"न हि आकृतिपदार्थकस्य द्रव्यं न पदार्थः। द्रव्यपदार्थकस्य वा

आकृतिर्न पदार्थः। उभयोरुभयं पदार्थः। कस्यचित् किञ्चित् प्रधानभूतम्, किञ्चिद्गुणभूतम्। आकृतिपदार्थकस्य आकृतिः प्रधानभूता। द्रव्यं गुणभूतम्। द्रव्यपदार्थकस्य द्रव्यं प्रधानभूतम्। आकृतिः गुणभूता" इति।

अनेन च महाभाष्यकारस्य विशिष्टशक्तिवाद एव सम्मत इति तदनुयायिनां वैयाकरणानाम् अपि स एव सम्मतः।

'प्रथमे विद्वांसो वैयाकरणा' इति वदद्भिरालङ्कारिकैरप्ययमेव पक्ष उपादेयः।

यदपि 'चतुष्टयी शब्दानां प्रवृत्तिः' इति भाष्यम् उपादाय जातिशक्तिवाद एव भाष्यतात्पर्यवर्णनं तदपि भाष्यापर्यालोचनमूलकम् एव। प्रवृत्तिनिमित्तभेदस्यैव तत्र प्रतिपादितत्वात्। विशिष्टशक्तिवादेऽपि धर्मस्यैव प्रवृत्तिनिमित्तताभ्युपगमे बाधकाभावात्। अतश्च जातिविशिष्टव्यक्तावेव पदानां शक्तिः। सा एव च शक्यार्थ इति सुवचम्। अनेनैव 'व्यक्तीनां प्रत्ययस्तु आक्षेपात् लक्षणया वा' इति जगन्नाथपण्डितराजोक्तिरपि[92] परास्ता वेदितव्या।

## 2. 4 लक्षणाविचारः

लोके तावत् 'गङ्गायां घोषः' 'काकेभ्यो दधि रक्ष्यताम्' इत्यादिव्यवहारेषु गङ्गादिशब्दाः स्वमुख्यार्थातिरिक्तम् अर्थं प्रत्याययन्तीत्यपरोक्षमेव सर्वेषाम्। 'गङ्गायां घोष' इत्यत्र गङ्गापदं गङ्गापदशक्यार्थसम्बन्धिनं तीरं बोधयति। 'काकेभ्यो दधि रक्ष्यताम्' इत्यत्रापि काकपदं न काकमात्रं बोधयति, किन्तु दध्युपघातुकजन्तुविशेषान् सर्वानपि बोधयतीत्यनुभवोऽप्यपलपितुं न शक्यः। एतादृशेऽमुख्यार्थबोधेऽपि शब्दस्य सामर्थ्यम् अस्तीति तदेव सामर्थ्यं मुख्यार्थबोधनसामर्थ्यापेक्षया विलक्षणं लक्षणा इति भक्तिरिति च तान्त्रिकै-र्व्यवह्रियते।

### 2.4.1 लक्षणास्वरूपविषये मतभेदाः

अथात्र लक्षणाया अस्याः स्वरूपं तत्तच्छास्त्रकाराभिमतं संगृह्यते।

#### 2. 4.1.1 प्राचीननैयायिकानां मतम्

अत्र प्राचीना नैयायिकाः[93] - शक्याद् अशक्योपस्थितिर्लक्षणा। 'गङ्गायां घोष' इत्यत्र घोषपदसन्निहितगङ्गापदश्रवणे शक्यस्य प्रवाहस्य स्मृतिर्भवति। तस्मिंश्च स्मृते प्रवाहे घोषाधारत्वान्यथानुपपत्त्या पुनः स्मृतात् शक्यप्रवाहात्

शक्यसम्बन्धिनस्तीरस्य या स्मृतिः सैव लक्षणा। न हि गङ्गापदमेव शक्यसम्बन्धेन तीरस्मारकम्, गौरवापत्तेः। गङ्गापदप्रवाहाभ्यामेव तीरोपस्थितेः सम्भवात्। अत एव 'लाक्षणिकं पदं नानुभावकम्' इति वृद्धप्रवादः सङ्गच्छते। अनुभावकत्वं नाम साक्षात्स्मारकत्वम्। शाब्दबोधविषयसंसर्गप्रतियोग्यर्थस्मारकत्वम् इति यावत्।

## 2. 4.1.2 नव्यनैयायिकमतम्

नव्यास्तु[94]– 'गङ्गायां घोष' इत्यादौ गङ्गापदं केनचित्सम्बन्धेन मुख्यार्थप्रवाहातिरिक्तं तत्सम्बन्धिनं च तीरं बोधयति। स च तीरबोधः प्रवाहतीरयोः सम्बन्धज्ञानं विना न भवतीति सः शक्यसम्बन्ध एव लक्षणा इति व्यवह्रियते। 'गङ्गायां घोष' इत्यत्र गङ्गापदस्य तीरेण सह स्वशक्यप्रवाहसामीप्यं सम्बन्धः। सैव लक्षणा। उक्तञ्च मुक्तावल्यां विश्वनाथेन– "शक्यसम्बन्धो लक्षणा" इति।

शक्याद् अशक्योपस्थितिर्लक्षणा इति न युक्तम्। उपस्थितेर्वृत्तित्वायोगात्। शाब्दबोधानुकूलोपस्थित्यौपयिकः पदपदार्थसम्बन्धो वृत्तिरित्युच्यते। तथा च उपस्थितिहेतुर्वृत्तिः, न तूपस्थितिरेव। एवञ्चोपस्थितेर्लक्षणात्वं न युज्यते। किञ्च शाब्दबोधे यद्यद् भासते तस्य सर्वस्यापि पदादुपस्थितत्वमवश्यमभ्युपगन्तव्यम्। अन्यथा प्रत्यक्षादिमानान्तरोपस्थितस्यापि शाब्दबोधे भानप्रसङ्गात्। एवञ्च गङ्गापदात् तीरस्यानुपस्थितौ तीरविषयकः शाब्दबोध एव न स्यात्। किञ्च गङ्गापदात् तीरानुपस्थितौ तस्य प्रकृत्यर्थत्वाभावेन तीरे सप्तम्यर्थाधिकरण-त्वान्वयानुपपत्तिः। प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकताव्युत्पत्तेः।

तथा च गङ्गापदस्य तीरे शक्यसम्बन्धरूपलक्षणासम्बन्ध इति, तेन सम्बन्धेन 'एकसम्बन्धिज्ञानम् अपरसम्बन्धिस्मारकम्' इति न्यायेन गङ्गापदं तीरं स्मारयति। यद्यपि गङ्गापदस्य यया यया वृत्त्या येन येनार्थेन सम्बन्धो गृहीतः स सर्वोऽप्यर्थः स्मृतो भवति। तथापि स्मृतस्य शक्यार्थस्यान्वयानुपपत्तिप्रतिसन्धानेन घोषादिपदसान्निध्यात् लक्षणावृत्त्युपस्थापिततीर एव तात्पर्यज्ञानं भवतीति तीरविषयकः शाब्दबोध एव भवति। स च गङ्गापदात् जायमानस्तीरबोधस्तीरत्वेनैव भवति, न तु गङ्गात्वेन। समानप्रकारतया पदार्थोपस्थितिशाब्दबोधयोः कार्यकारणभावस्य क्लृप्तत्वात्। न चैवं गङ्गागतशैत्यपावनत्वाद्यप्रतीतिरिति वाच्यम्। तीरस्य गङ्गापदप्रतिपाद्यत्वज्ञानादेव तत्प्रतीतिसम्भवात्।

न्यायसूत्रकारोऽपि 'सहचरणे'त्यादिन्यायसूत्रेण[95] अतच्छब्दार्थस्य तेन शब्देनाभिधानमेवोपचार इति सूचयति। व्याख्यातं च न्यायभाष्यकारेण-

"सहचरणात्- यष्टिकान् भोजय इति
यष्टिकासहचरितब्राह्मणोऽभिधीयते" इति।

"शक्यादन्येन रूपेण ज्ञाते भवति लक्षणा।"

इत्यभियुक्तव्यवहारान्न शक्यतावच्छेदकावच्छिन्नो लक्ष्यार्थबोध उचित इति ज्ञायते। तस्मात् शक्यसम्बन्धो लक्षणा। सम्बन्धश्च साक्षात्परम्परासाधारणः। 'गङ्गायां घोष' इत्यत्र तीरे शक्यस्य प्रवाहस्य सामीप्यादिः साक्षात्सम्बन्धः। इन्द्राः स्थूणा इत्यादौ तत्कर्मकपूजाप्रयोजनकत्वादिकं परम्परासम्बन्ध इति कथयन्ति।

### 2. 4.1.3 भाट्टमीमांसकमतम्

वाक्ये लक्षणाम् अङ्गीकुर्वन्तो भाट्टास्तु[96] शक्यसम्बन्धं लक्षणात्वेन नाङ्गीकुर्वन्ति। किन्तु स्वज्ञाप्यसम्बन्धो लक्षणा इति कथयन्ति। स्वं पदादिः। स्वज्ञाप्यो योऽर्थस्तत्सम्बन्धेन यः शक्तिजन्यः संस्कार उद्‌बुद्धो भवति ततो बोधे लक्षणा इति व्यवहारः। 'शक्यसम्बन्धो लक्षणा' इति लक्षणम् अव्याप्तिदोषग्रस्तत्वान्न युक्तम्। तथा हि – 'गभीरायां नद्यां घोष' इत्यस्ति किञ्चित् लक्षणाया उदाहरणम्। अत्र हि न तावद् गभीरपदं तीरलक्षकम्। नद्याम् इत्यनेन विशेष्येणाभेदान्वयानापत्तेः। अत एव न नदीपदमपि तीरलक्षकम्। विशेषणस्य गभीरपदार्थस्यानन्वयापत्तेः। नापि पदद्वये प्रत्येकं लक्षणा। तथा सति गभीरतीराभिन्ने नदीतीरे घोष इत्येव बोधः स्यात्। न तु गभीराभिन्ना या नदी तत्तीरे घोष इति। न च नदीपदस्यैव गभीरनदीतीरलक्षकत्वम्, गभीरपदस्य तात्पर्यग्राहकत्वमिति वाच्यम्। कस्य लक्षकत्वं कस्य तात्पर्यग्राहकत्वम् इत्यत्र विनिगमनाविरहादुभयत्र लक्षणापत्तेः। न च नदीपदस्य द्रव्यवाचकतया तस्यैव लक्षकत्वं गभीरपदस्य विशेषणतया तात्पर्यग्राहकत्वमिति वाच्यम्। गभीरपदस्यापि नित्यं गुणिवाचकतया द्रव्यवाचकत्वेन नदीशब्दसाम्याद् विनिगमनाविरहता- दवस्थ्यात्। ततश्च 'स्वज्ञाप्यसम्बन्धो लक्षणा' इत्येव लक्षणं युक्तम्। स्वं गभीरायां नद्यामिति पदसमूहः। तज्ज्ञाप्या गभीराभिन्ना नदी। तत्सम्बन्धस्य तीरे सत्त्वान्न दोषः। अत एव अर्थवादवाक्यानां प्राशस्त्ये लक्षणा सिद्ध्यति। नैयायिकैरपि इदं लक्षणम् अङ्गीकार्यमेव भवति। ते हि प्रकृतौ प्रत्यये च पृथक् पृथगेव शक्तिं

स्वीकुर्वन्ति, न समुदाये। एवञ्च 'छत्रिणो यान्ति' इत्यत्र छत्र इन् प्रत्ययसमुदाये शक्तेरभावात् शक्यसम्बन्धरूपा लक्षणा अपि न सम्भवत्येव। ज्ञाप्यसम्बन्धलक्षणास्वीकार एव छत्रीति समुदायज्ञाप्यच्छत्रविशिष्टरूपार्थस्य सार्थवाहे स्वघटितत्वरूपसम्बन्धसत्त्वात् लक्षणा सिद्ध्यतीत्याहुः।

## 2.4.1.4 वैयाकरणानां मतम्

वैयाकरणास्तु गङ्गादिपदानां तीरेऽपि शक्तिम् अङ्गीकुर्वन्ति। सा च शक्तिरप्रसिद्धा सती अन्वयाद्यनुपपत्तिज्ञानपूर्वकं शक्यत्वेन गृहीतार्थसम्बन्धज्ञानेन उद्बुद्धा भवति। न सर्वत्र। तादृशशक्तावेव लक्षणेति व्यवहारः। स्पष्टं चेदं लघुमञ्जूषायाँ[97] तद्व्याख्याने च। 'गङ्गायां घोष' इत्यत्र गङ्गात्वावच्छिन्नत्वेन तीरबोधः। कमलानि कमलानि इत्यादौ कमलत्वावच्छिन्नत्वेन सौरभविशिष्टव्यक्तिविशेषबोध इत्युभयत्र लक्षणाव्यवहारः।

## 2. 4.1.5 प्राचीनालङ्कारिकमतम्

शक्यसम्बन्धेन अशक्यप्रतिपत्तिर्लक्षणेति प्राचीनालङ्कारिकाः[98]। 'गङ्गायां घोष' इत्यादौ गङ्गापदात् शक्यार्थप्रवाहस्मृतिः, ततः शक्यसम्बन्धज्ञानेन तत्सम्बन्धिलक्ष्यार्थस्मृतिः, ततश्च शाब्दबोध इत्यनुभवः। अत्र चान्वयबोध-रूपप्रतिपत्तौ हेतुभूता शक्यसम्बन्धज्ञानजन्या लक्ष्यार्थस्मृतिरेव लक्षणावृत्ति-रित्यभिधीयते। अत्र च लक्षणे शक्यसम्बन्धज्ञाने तात्पर्यविषयेतरपदार्थे मुख्यार्थतावच्छेदकावच्छिन्नबाधज्ञानकालिकत्वं विशेषणं देयम्। एवं निर्हेतुकलक्षणाभासेऽतिव्याप्तिवारणाय रूढिप्रयोजनान्यतरहेतुकत्वमपि प्रतिपत्तौ विशेषणीयम्। एवञ्च तात्पर्यविषयेतरपदार्थे मुख्यार्थतावच्छेदकावच्छिन्नबाध-ज्ञानकालीना रूढिप्रयोजनान्यतरहेतुका शक्यसम्बन्धज्ञानजन्या अशक्यार्थस्मृति-र्लक्षणेति लक्षणं पर्यवसितम्। प्रपञ्चितं चैतत् काव्यप्रकाशकारेणापि[99] "मुख्यार्थबाधे तद्योगे" इत्यादिना। यद्यप्यत्र प्रवाहादिरूपपदार्थस्यैव तीरादिस्मारकत्वं न तु साक्षाद् गङ्गादिपदस्य, तथापि प्रवाहादिषु वर्तमाना शक्तिर्गङ्गादिपदे आरोप्यते। अन्यथा 'गङ्गायां घोष' इत्यादौ तीरस्य गङ्गापदबोध्यत्वाभावेन प्रकृत्यर्थत्वानापत्तौ तादृशे तीरे तदुत्तरसप्तम्य-र्थाधिकरणत्वस्य अनन्वयापत्तिः। प्रत्ययानां स्वप्रकृत्यर्थान्वितस्वार्थबोध-कत्वव्युत्पत्तेः। किञ्च शैत्यपावनत्वादिरूपप्रयोजनप्रसिद्धिर्गङ्गादिशब्दैस्तीरादिबोध

एव भवति न तु प्रत्यक्षानुभूतप्रवाहसम्बन्धितीरोपस्थितौ, न वा तीरपदोपस्थाप्यतीरोपस्थितौ। ततश्च तादृशबोधे गङ्गापदस्यापि किञ्चित् सामर्थ्यमस्तीत्यपि वक्तुं शक्यते।

'गङ्गायां घोषः' 'गौर्वाहीकः' इत्यादौ प्रथमं लक्षणया गङ्गासम्बद्धतीरवृत्तिर्घोषः, गोसदृशाभिन्नो वाहीक इति लक्ष्यार्थबोधो भवति। ततश्च गङ्गापदेन गोपदेन च लक्ष्यार्थप्रतिपादनाद् हेतोः शक्यार्थलक्ष्यार्थयोरभेदावगतिर्भवति। अनेन चाभेदेन गङ्गागतशैत्यपावनत्वादिप्रतीतिस्तीरे गोगतजाड्यादिगुणप्रतीतिश्च वाहीके सिद्ध्यति। उक्तं च काव्यप्रकाशे[100] 'सर्वथैवाभेदावगमोऽत्र प्रयोजनम्' इति।

## 2. 4.1.6 नव्यालङ्कारिकमतम्

नव्यास्तु आलङ्कारिकाः[101] – सर्वत्रैव लक्षकज्ञानस्य लक्ष्यतावच्छेदकशक्यतावच्छेदकोभयप्रकारकशाब्दत्वं कार्यतावच्छेदकतया अनुभवबलात् स्वीक्रियते। एवञ्च शैत्यपावनत्वादिप्रतीतये मध्ये शक्याभेदविषयकस्य ज्ञानान्तरस्यानङ्गीकरणरूपं लाघवमपि भवति। व्यञ्जनया तु प्रयोजनस्य शैत्यपावनत्वादेः प्रतीतिः सिद्ध्यति। यद्यपि गङ्गात्वावच्छिन्नं तीरं न भवतीति बाधज्ञानं गङ्गात्वावच्छिन्नतीरवृत्तिर्घोष इति ज्ञानस्याप्रामाण्यं जनयति तथापि तादृशाप्रामाण्यजनकत्वं तस्य शक्तिजन्यशाब्दबोधविषय एव, न तु लक्षणाजन्यशाब्दबोधे इति स्वीक्रियत इत्याहुः।

## 2. 4.1.7 पण्डितराजजगन्नाथस्य मतम्

जगन्नाथस्तु[102] शक्यतावच्छेदकावच्छिन्नत्वेन लक्ष्यार्थमात्रविषयकशाब्दत्वमेव लक्षणाज्ञानकार्यतावच्छेदकतयाऽङ्गीकरोति। लक्ष्यतावच्छेदकभानस्य निष्प्रयोजनत्वात्। एवञ्च लक्षणया आरोपितशक्यतावच्छेदकावच्छिन्नस्य लक्ष्यार्थस्य बोधो भवतीति फलितम्। आरोपितशक्यतावच्छेदकरूपेण तत्पदार्थत्वेन प्रसिद्धान्यव्यक्तिबोधे व्यक्तिविशेषबोधे वा लक्षणेति सिद्धम्। "पुंयोगादाख्यायाम्" इति सूत्रे महाभाष्येऽपि[103] अतस्मिन् तद्बुद्धिरेव लक्षणेति ध्वनितम्। तद्व्याख्याता कैयटोऽपि[104] "मञ्चाः क्रोशन्ति" इत्यादौ लक्ष्येषु बालेषु मञ्चत्वम् आरोप्यत इति लिखितवान्। अमुख्येऽर्थे मुख्यार्थतावच्छेदकावच्छिन्नत्वरूपस्य आहार्यज्ञानस्य बाधज्ञानं न प्रतिबन्धकम्। बाधज्ञाने सत्यपि तत्र किञ्चित् प्रयोजनमुद्दिश्य आरोपस्य क्रियमाणत्वात्। एवं लक्ष्यार्थस्यापि

शक्यतावच्छेदकावच्छिन्नत्वेन स्वीकारादेव 'गङ्गायां मीनघोषौ स्त' इत्यादिप्रयोगाः सङ्गच्छन्ते। मीनघोषाविति द्वन्द्वः। स च इतरेतरयोगः। इतरस्य इतरस्य च यत एकस्मिन् योगः, अतोऽयमितरेतरयोग इत्युच्यते। इतरेतरयोगद्वन्द्वनिर्दिष्टयोर्द्वयोरप्येकस्मिन्नेवार्थेऽन्वयोऽभ्युपगन्तव्यः। अन्यथा सामर्थ्याभावात् समुच्चयान्वाचययोरिव द्वन्द्वो न स्यात्। मीनघोषाविति द्वन्द्वसमासनिर्दिष्टयोरेकस्मिन्नर्थेऽन्वयश्च लक्ष्यार्थस्यापि गङ्गात्वावच्छिन्नत्वेन बोध एव सम्भवति। न चैष प्रयोगोऽप्रामाणिकः। बोधसम्भवे गतिसम्भवे च प्रयोगाप्रामाणिकत्वस्य दुरुपपादत्वात्।

लक्षणापि न शक्यादशक्योपस्थितिरूपा। किन्तु शक्यसम्बन्धरूपैव। अत्र च युक्तयः सर्वा अपि नव्यनैयायिकैः प्रदर्शितपूर्वा एव। 'गङ्गायां घोष' इत्यादौ स्वशक्यप्रवाहसामीप्यसम्बन्धेन गङ्गापदम् आरोपितगङ्गात्वावच्छिन्नं तीरं बोधयति। अत एव च गङ्गापदं लक्षकं, लक्षणा पदवृत्तिरिति व्यवहारोऽपि सङ्गच्छत इत्याह।

### 2. 4.1.8 धर्मसूरेर्मतम्

धर्मसूरिस्तु प्राचीनालङ्कारिकानेव विशिष्य काव्यप्रकाशकारमेव लक्षणाविषयेऽनुसरति। तथा हि –

"वाच्यार्थबाधे तद्योगे रूढितो वा प्रयोजनात्।
ययान्यं बोधयेत् शब्दो व्यापृत्या सास्य लक्षणा।।" (पृ० 44)

इति कारिकया "मुख्यार्थबाधे तद्योगे" इति काव्यप्रकाशकारिकार्थमेवानुवदतीति स्पष्टम्। यथा तत्र मम्मटेन मुख्यार्थबाधस्य सम्बन्धस्य प्रसिद्धिप्रयोजनयोरन्यतरस्य च लक्षणाहेतुत्वमुक्तं तथैवात्रापि। किञ्चायम् अन्यार्थबोधनव्यापारो वस्तुतोऽर्थनिष्ठ एव। शब्दस्य स्वार्थप्रकाशनमात्रेणैव उपरतव्यापारत्वादिति धर्मसूरिमम्मटयोः सिद्धान्तः। वस्तुतोऽर्थगतस्यैव व्यापारस्य शब्दे आरोपेण लक्षणायाः शब्दव्यापारत्वेन शब्दस्य च लक्षकत्वेन व्यवहारः। अर्थधर्मस्य शब्दाध्यारोपे च शब्दप्रतिपादितस्यैवार्थस्य लक्षकत्वं निमित्तम्। उक्तं च धर्मसूरिणा –

"न हि शब्दव्यापारसंस्पर्शमन्तरेण अर्थोऽर्थान्तरं लक्षयितुमीष्टे। अन्यथा प्रमाणान्तरोपनीतानाम् अर्थानां लक्षकत्वप्रसङ्गात्। अतोऽर्थव्यापारोऽपि शब्दमहिम्ना प्राप्तत्वात् शब्दव्यापार इत्युच्यते" । (पृ० 44-45)

अत एव सान्तरार्थनिष्ठः शब्दव्यापारो लक्षणा इत्याश्रीयते।

### 2. 4.1.9 सिंहावलोकनम्

एवं सन्ति लक्षणाविषये पञ्च सिद्धान्ता दार्शनिकानाम्। तत्र–

1. शक्याद् अशक्योपस्थितिरिति जरन्नैयायिकाः।
2. स्वशक्यसम्बन्धो लक्षणेति नव्यनैयायिकाः।
3. सति प्रयोजने शक्यार्थसम्बन्धं निमित्तीकृत्य शक्याद् अशक्योपस्थितिर्लक्षणेति प्राचीनालङ्कारिकाः।
4. शक्यतावच्छेदकारोपविषयनिष्ठः शक्यसम्बन्धो लक्षणेति जगन्नाथादयो नव्यालङ्कारिकाः।
5. स्वज्ञाप्यसम्बन्धो लक्षणेति मीमांसकाश्च लक्षणां लक्षयन्ति।

तत्र प्राचीननैयायिकमते प्राचीनालङ्कारिकमते चोपस्थितिरूपस्य व्यापारस्यैव लक्षणात्वम्। अन्येषां मते तु सम्बन्धस्यैव लक्षणात्वमिति विशेषः। यद्यपि प्राचीनानां नैयायिकानां प्राचीनानाम् आलङ्कारिकाणां लक्षणाविषये ऐकमत्यमिव भासते तथापि सति प्रयोजन एव शक्यादशक्योपस्थितिर्लक्षणेत्यालङ्कारिकाणां मतम्। नैयायिकानां तु लक्षणायां प्रयोजनापेक्षा नास्ति। वस्तुतः सति प्रयोजन एव लक्षणाश्रयणमित्यालङ्कारिका एव केवलम् अभ्युपगच्छन्ति, नान्ये दार्शनिकाः। अन्येषां तु वाक्यात् तात्पर्यविषयीभूतस्यार्थस्य उपपत्तिरेव लक्षणायाः प्रयोजनम्। यदि च शैत्यपावनत्वादिप्रतीतिरपेक्षिता तर्हि तस्या अनुमानादिप्रमाणान्तरगम्यतैव न तु शाब्दतेति।

### 2. 4.1.10 समीक्षणम्-स्वमतोपस्थापनम्

वयं त्वत्रैवं मन्यामहे – यद्यपि वैयाकरणैः पदार्थोपस्थितिं प्रति शक्तिज्ञानत्वेन लक्षणाज्ञानत्वेन च हेतुत्वकल्पने कारणद्वयकल्पनारूपगौरवापत्त्या लक्षणास्थलेऽपि बोधजनकत्वाख्या शक्तिरेवाभ्युपेयते तथाप्यनेकेषु तीरादिषु लक्ष्यार्थेषु नानाशक्तिकल्पने तद्ग्रहार्थं वृद्धव्यवहारान्तरापेक्षायां च महद्गौरवम् अस्तीति तदपेक्षया लक्षणावृत्तिस्वीकार एव उचितः[105]। किञ्च हर्यादिष्विव तीरादिषु शक्तिकल्पनापि न सुलभा। लक्ष्यार्थानां स्वारसिकत्वेनानन्तत्वात् तेषु स्वरूपेणानिर्धारितेषु शक्तिकल्पनायोगात्। किञ्च शक्तिग्रहप्रमाणेषु मुख्यस्य

वृद्धव्यवहारस्य सर्वेषु लक्ष्यार्थेषूपपत्तिरप्यशक्या। अपि च तीरस्यापि गङ्गापदशक्यत्वमेव यदि स्यात् तर्हि 'गङ्गायां घोष' इत्यस्य गङ्गातीरे घोष इति वाक्यपर्यायरूपत्वेन प्रतिपिपादयिषितस्य शैत्यपावनत्वादिरूपस्य प्रयोजनस्या-सिद्धिः। अतः सर्वैरेवेयं लक्षणाख्या जघन्यवृत्तिरवश्यम् अभ्युपगन्तव्यैव।

अस्या लक्षणायाः स्वरूपविचारे आलङ्कारिकेषु मतद्वयमस्तीत्यवोचाम। तत्र धर्मसूरिः प्राचीनालङ्कारिकमतमेवानुसरतीत्यप्यवादिष्म। अथेदानीं तयोः पक्षयोर्युक्तायुक्तत्वं किञ्चिद् विमृशामः।

प्राचीनास्तु शक्याद् अशक्योपस्थितिं, ततः शक्यलक्ष्ययोरभेदं परिकल्प्य प्रतिपिपादयिषितं प्रयोजनं साधयन्ति। एवञ्चात्रावस्थात्रयं कल्पनीयं भवति। नव्यमते तु शक्यसम्बन्धरूपलक्षणया लक्ष्ये शक्यार्थतावच्छेदकमारोप्यते। ततश्च 'गङ्गायां घोष' इत्यादिवाक्यानां गङ्गात्वावच्छिन्नतीरवृत्तिर्घोष इत्येव शाब्दधीर्भवति। ततश्च प्रयोजनप्रतिपत्तिर्भवति। पक्षेऽस्मिन् अवस्थाद्वयमेवेत्यव-स्थाकृतं लाघवं त्वस्त्येव।

विमृश्यमाने नव्यमतमेव साधीयः। तथा हि – लक्षणाया उपचरितवृत्तिरिति व्यवहारो दरीदृश्यते। उपचारश्च तात्स्थ्यादिनिमित्तकोऽतस्मिन् तत्त्वारोपः। उक्तञ्च न्यायसूत्रकारेण गौतमेन[106] –

**"शब्दाद् अशक्यार्थप्रतीतिः कथमिति जिज्ञासायां सहचरणस्थान-तादर्थ्यवृत्तमानधारणसामीप्ययोगसाधनाधिपत्येभ्यो ब्राह्मणबालकटराज-सक्तुचन्दनगङ्गाशकटान्नपुरुषेष्वतद्भावेऽपि तदुपचारः" इति।**

अत्र अतद्भावेऽपीत्यस्य तद्भावाभावेऽपीत्यर्थः। अर्थात् लक्ष्यार्थे शक्यतावच्छेदकावच्छिन्नत्वाभावेऽपीत्यर्थः। तदुपचारस्तस्य धर्मस्य आरोप इत्यर्थः। न्यायवार्तिककारोऽपि[107] 'यष्टिकाः प्रविशन्ति' इत्यत्र यष्टिकाशब्दः स्वसंयुक्तसमवेताया जातेर्ब्राह्मणेऽध्यारोपेण ब्राह्मणं बोधयतीति लक्ष्यार्थे शक्यतावच्छेदकारोपम् अङ्ग्यकरोत्। महाभाष्यकारोऽपि "पुंयोगादाख्यायाम्" इति सूत्रे चतुर्भिः प्रकारैरतस्मिन् स इत्येतद्भवति। तात्स्थ्यात् ताद्धर्म्यात् तत्सामीप्यात् तत्साहचर्याच्च ।'मञ्चा हसन्ति' 'सिंहो माणवकः' 'गङ्गायां घोषः' 'यष्टीः प्रवेशय' इति कथयन् लक्ष्ये शक्यतावच्छेदकारोपम् अङ्गीकरोति। व्याख्यातं च तत्र कैयटेन–

"बालेषु मञ्चत्वारोपात् मञ्चपदप्रवृत्तिर्हसन्तीति पदान्तरप्रयोगाद् विज्ञायते" इति।

एवञ्च स्पष्टं 'मञ्चाः क्रोशन्ति' इत्यादिषु लक्ष्येषु शक्यतावच्छेदकारोपो गौतमपतञ्जल्यादिमुनिसम्मत इति। अत एव तच्छब्देन तदर्थबोधनं सङ्गच्छते। अन्यथा प्रवृत्तिनिमित्तस्यैवाभावेन लक्ष्यार्थे शब्द एव न प्रवर्तेत। तच्च प्रवृत्तिनिमित्तं मुख्यं यथा शब्दप्रयोगहेतुस्तथाऽऽरोपितमपीति व्यवहारेणैव ज्ञातुं शक्यम्। एतादृशारोपस्याङ्गीकारादेव प्रयोजनमपि झटित्यवगन्तुं पार्यते। अतः सति प्रयोजन एव लक्षणा इति वदद्भिरालङ्कारिकैरवश्यम् अयमारोपोऽभ्युपेय एव।

यदप्युक्तं गौतमसूत्रव्याख्याने अतद्भावेऽपि तदुपचार इत्यस्य तदर्थत्वाभावेऽपि तेन शब्देन व्यवहार इति, तत्तु न हृदयङ्गमम्। न्यायवार्तिक-महाभाष्यादिग्रन्थैस्सह आनुकूल्यसम्पादनायापि तत्र तद्भावशब्दस्य तद्धर्मपरतयैव व्याख्यानस्य युक्तत्वात्। एवं शक्यतावच्छेदकारोपस्वीकारेणैव 'गङ्गायां मीनघोषौ स्त' इत्यादिप्रयोगा अप्युपपद्यन्त इति पूर्वमेव निरूपितम्।

किञ्च अस्मिन्नेव पक्षे 'मुखमिव चन्द्रः' 'मुखचन्द्र' इत्यनयोर्बोधे वैलक्षण्यमपि सिद्ध्यति। तथा हि - 'मुखमिव चन्द्र' इत्यादौ चन्द्रादेः केवलस्वरूपमात्रपरत्वमेव। 'मुखचन्द्र' इत्यादौ तु विषये मुखादौ ताद्रूप्यस्य विषयितावच्छेदकस्य चन्द्रत्वादेर्बोधकत्वम्। तथा च लक्षणायां नव्यमतमेव मुनिसम्मतत्वाद् युक्तमिति बोद्धव्यम्।

### 2. 4.2 लक्षणायाः शब्दनिष्ठत्वसमर्थनम्

पर्यालोचितेषु पूर्वोक्तेषु विविधेषु पक्षेषु लक्षणायाः पदनिष्ठत्वं वाऽर्थनिष्ठत्वं वेत्यत्राप्यस्ति महान् मतभेदः शास्त्रकाराणां मध्ये। यद्यपि शक्यार्थसम्बद्ध एवार्थो लक्षणया बोध्यत इति लक्षणाऽर्थनिष्ठैवेत्यापाततो बुद्धिर्भवति, तथापि तस्य पदवृत्तित्वाभावे लक्ष्यार्थस्य पदार्थत्वानापत्त्या तस्मिन् विभक्त्यर्थान्वयानुपपत्तिः। अतश्च शब्द एव स्वशक्यसम्बन्धेन लक्ष्यार्थं बोधयतीति तस्य पदार्थत्वम् अङ्गीक्रियते नैयायिकैः। नैयायिकमते लक्षणा पदवृत्तिरेव। प्राचीना आलङ्कारिकास्तु लक्षणाम् अर्थनिष्ठामेवाङ्गीकृत्य लक्ष्यार्थस्य शाब्दत्वानुप-पत्तिभिया तस्याः शब्दे आरोपम् अभ्युपगच्छन्ति। एवञ्चैतेषां मते वस्तुतोऽर्थव्यापार एव लक्षणाशब्दे आरोपितत्वाच्छब्दव्यापार इति व्यवह्रियते। प्रपञ्चितं चैतद् धर्मसूरिणा-

"वाच्यार्थव्यापार एव लक्षणा वाचके समारोप्यते। न च शब्दव्यापारताङ्गीकारविरोधः। आरोपितः शब्दव्यापारो लक्षणेत्यभ्युपगमात्।

* * * *

न हि शब्दव्यापारसंस्पर्शमन्तरेणार्थोऽर्थान्तरं लक्षयितुम् ईष्टे। अन्यथा प्रमाणान्तरोपनीतानाम् अर्थानां लक्षकत्वप्रसङ्गात्। अतोऽर्थव्यापारोऽपि शब्दमहिम्ना प्राप्तत्वाच्छब्दव्यापार इत्युच्यते। अत एव सान्तरार्थनिष्ठः शब्दव्यापारो लक्षणेत्याश्रीयते" इति। (पृ० 44-45)

मीमांसका अपि लक्षणाम् अर्थनिष्ठामेवाङ्गीकुर्वन्ति। तेषां मते लक्षणा द्विविधा- पदार्थलक्षणा वाक्यार्थलक्षणा चेति। 'गङ्गायां घोष' इत्यादौ तीरोपस्थितिः पदार्थलक्षणया। 'वायुर्वै क्षेपिष्ठा देवता' इत्यादौ प्राशस्त्यबोधो वाक्यार्थलक्षणया। लक्ष्यार्थसम्बद्धशक्यार्थबोधकपदस्य लक्ष्यार्थानुभावकत्वात् लक्षकत्वव्यवहारः।

## 2. 4.3 लक्षणायां बीजं किम्?

अथ लक्षणायां किं बीजम् इति विविच्यते किञ्चित्। आलङ्कारिकाणां मते मुख्यार्थबाधो मुख्यार्थलक्ष्यार्थयोः सम्बन्धो रूढिप्रयोजनयोरन्यतरश्च हेतुः। तत्र रूढिप्रयोजनयोरन्यतरस्य हेतुत्वं तावत् केवलम् आलङ्कारिकैरेवाभ्युपगतम्, न तु मीमांसकैः, न वा नैयायिकैः। मुख्यार्थलक्ष्यार्थयोः सम्बन्धो लक्षणायां हेतुः प्राचीनालङ्कारिकाणां मते। नव्यालङ्कारिकाणां नैयायिकानां मीमांसकानां च मते सम्बन्धरूपैव लक्षणेति भेदः। मुख्यार्थबाधो लक्षणाहेतुरित्यत्र सर्वमतानाम् ऐकमत्यं प्रतिभाति। किन्तु मुख्यार्थस्य शक्त्या प्रतिपादितस्यार्थस्य बाधो नाम क इत्यत्र प्रसिद्धतया व्याख्यानद्वयं दरीदृश्यते। तत्रान्वयानुपपत्तिर्बाध इत्येकः पक्षः। तात्पर्यानुपपत्तिरित्यन्यः पक्षः। एतावुभावपि पक्षौ प्रत्येकं नैयायिक-मीमांसकालङ्कारिकैर्विमृष्टौ। त्रिभिरपि शास्त्रकारैस्तात्पर्यानुपपत्तिरेव बाध इति सिद्धान्तितं च।

तथा हि - अन्वयानुपपत्तिर्लक्षणाबीजम् इत्युक्ते 'गङ्गायां घोष' इत्यादौ लक्षणा भवत्येव। गङ्गायामिति सप्तम्यन्तगङ्गापदार्थस्य प्रवाहाधिकरणत्वस्य घोषपदार्थे आभीरपल्ल्यामन्वयाभावात्। किन्तु 'छत्रिणो यान्ति' इत्याद्-

जहत्स्वार्थलक्षणोदाहरणेष्वन्वयानुपपत्तिर्नास्ति। छत्रिपदार्थस्य छत्रवत्पुरुषरूपस्य याधात्वर्थे गमने कर्तृत्वोपपत्तेः। अतोऽन्वयानुपपत्तिर्लक्षणाबीजमित्युक्तेऽ-जहत्स्वार्थायां लक्षणा नैव भवेत्। अतस्तात्पर्यानुपपत्तिर्लक्षणाबीजमित्यङ्गीक्रियते। 'छत्रिणो यान्ति' इति वाक्यस्य वक्त्रा छत्र्यच्छत्रिसमुदायकर्तृकगमनरूपार्थविवक्षया प्रयुक्तत्वात् केवलछत्रिबोधने तात्पर्यानुपपत्तिर्भवति। 'गङ्गायां घोष' इत्यादिवाक्यानामपि गङ्गातीरे घोष इति विवक्षया प्रयुक्तत्वात् प्रवाहरूप-मुख्यार्थस्वीकारे तात्पर्यानुपपत्तिस्तत्रापि सूपपादा। किञ्च 'गङ्गायां घोष' इत्यादौ गङ्गापदमेव लक्षकं, न घोषपदमित्यत्रापि तात्पर्यानुपपत्तिरेव हेतुः। यद्यन्वयानुपपत्तिर्हेतुः स्यात् तर्हि घोषादिपदे मीनादिलक्षकत्वमपि सम्भाव्येत, तावताऽप्यन्वयानुपपत्तिपरिहारात्। अतस्तात्पर्यानुपपत्तेरेव लक्षणाबीजत्वमङ्गी-कर्तव्यमिति सर्वसम्मतं मतम्।

धर्मसूरिरप्यमुमेव पक्षं सिद्धान्ततया स्वीकृत्योपपादितवान्। तथा हि–

"वाच्यस्यार्थस्य वाक्यार्थे सम्बन्धानुपपत्तितः।
तत्सम्बन्धवशप्राप्तस्यान्वयात् लक्षणोच्यते।।"[108]

इति प्रकरणपञ्चिकायां शालिकनाथोक्तं लक्षणं दूषयित्वा –

"वाक्यप्रामाण्यभङ्गः स्यात् स्वाभिधेयपरे पदे।
लक्षणा तत्र विज्ञेया वाक्ये वैदिकलौकिके।।"[109]

इति तन्त्रवार्तिककारसम्मतं वाक्यप्रामाण्यभङ्गस्य लक्षणाबीजत्वकथनं समर्थितवान्। उभयोरपि कारिकयोः केवलमीमांसाशास्त्रसिद्धत्वाद् अन्वयानुपपत्तितात्पर्यानुपपत्तिशब्दयोस्तत्राभावाच्च मतान्तरबुद्धिः झटिति जायते। किञ्च विमृश्यमाने प्रथमकारिकयाऽन्वयानुपपत्तिरूपः पक्ष उपक्षिप्तः। द्वितीयकारिकया तात्पर्यानुपपत्तिरूपपक्ष एव सिद्धान्तित इति स्पष्टमेव।

इदं त्वत्र प्रतिभाति। तात्पर्यानुपपत्तिर्लक्षणाबीजम् इत्यनुक्त्वा वाक्यप्रामाण्यानुपपत्तिरिति कथनेन तात्पर्यानुपपत्तेरपि फलभूतस्य दोषस्य बीजत्वमुक्तं भवति। यस्य वाक्यस्य तात्पर्यं नोपपद्यते तद्वाक्यम् अप्रमाणमेव भवति। शोभते चैतादृशं कथनं मीमांसकानाम्। यतस्तेषाम् अत्यन्तपरिहार्यो दोषो वेदवाक्यानां प्रामाण्यभङ्गः। तस्मात् फलतोऽयं पक्षस्तात्पर्यानुपपत्ति-रूपपक्षाद् अव्यतिरिक्त एवेति।

यच्चैतस्य विचारस्य मध्य एव –

"मानान्तरविरोधे तु मुख्यार्थस्य परिग्रहे।
मुख्यार्थेनाविनाभूते प्रतीतिर्लक्षणोच्यते।।"

इति कारिकयोपस्थापितं लक्ष्यार्थपरिग्रहे प्रत्यक्षादिप्रमाणान्तरविरोधस्य बीजत्वप्रतिपादकं मतम् उपन्यस्तं तदपि 'छत्रिणो यान्ति' इत्याद्यजहत्स्वार्थ-लक्षणोदाहरणेषु मुख्यार्थपरिग्रहे प्रत्यक्षादिप्रमाणान्तरविरोधस्य अदृष्टत्वाद् अव्यापकमिति निरस्तम्।

तस्मात् सिद्धं तात्पर्यानुपपत्तेरेव लक्षणाबीजत्वं सर्वेषां मते।

## 2. 4.4 व्यक्तौ लक्षणाङ्गीकारपक्षनिरासः

धर्मसूरिर्लक्षणाप्रभेदान् निरूपयन् मध्ये प्राभाकराभिप्रेतव्यक्तिलक्षणाविषये इत्थम् आशङ्क्य समाधत्ते (पृ० 51)–

"ननु प्राभाकराः सर्वत्र जातिशब्दार्थवादिनोऽपि 'व्रीहीन् प्रोक्षति' इत्यादौ उद्देश्यस्थले व्यक्तिलक्षणाम् आहुः। सा कुत्रान्तर्भवतीति चेद् अज्ञान एवान्तर्भवतीति वदामः। न ह्यत्र लक्षणाप्रयोजकं रूढिप्रयोजन-योरन्यतरत्सम्भवति" इत्यादि।

अस्यायम् आशयः – 'व्रीहीन् प्रोक्षति' इत्यादिषु व्रीह्यादिशब्दानां जातिमात्राभिधायकत्वे तद्बोध्यजातेः प्रोक्षणक्रियायां कर्मत्वेनान्वयानुपपत्त्या सा शक्यार्था जातिः स्वसम्बन्धिनं व्यक्तिविशेषं लक्षयति। लक्षितस्य च तस्य कर्मत्वेन प्रोक्षणेऽन्वय इत्यभ्युपगच्छन्ति प्राभाकराः। यद्यपि जात्या व्यक्तिराक्षिप्यते, आक्षिप्तायाः क्रियायां कर्मत्वेनान्वय इति भाट्टरीत्या वक्तुं शक्यते परन्तु तस्या व्यक्तेरुपस्थितिर्वृत्तिप्रयोज्या न भवतीति तस्याः प्रकृत्यर्थत्वानापत्त्या द्वितीयार्थकर्मत्वान्वयानुपपत्तिभिया लक्षणा आश्रीयते। एताम् अनुपपत्तिं मनसिकृत्यैव अनन्तरा भाट्टाः खण्डदेवादयो व्यक्तौ लक्षणामेवाङ्गीकुर्वन्ति। परन्तु तां लक्षणां निरूढलक्षणेति व्यवहरन्ति[110]। एतादृशे सन्दर्भे स्थिताया अस्या लक्षणायाः कस्मिन् प्रभेदेऽन्तर्भावः इति प्रष्टुः आशयः। धर्मसूरिस्तु प्राभाकरैरङ्गीकृताया व्यक्तिलक्षणायाः रूढिप्रयोजनयोरन्यतरस्य लक्षणाप्रयोजकस्यासम्भवाद् अयुक्ततां प्रतिपादयति। आक्षिप्तव्यक्तेरेव क्रियायाम् अन्वयः। अतोऽत्र लक्षणाया आवश्यकतैव नास्तीति तस्याशयः।

अत्रेदं समालोचनीयम्। व्यक्तेर्लक्ष्यत्वाभावे तस्याः प्रातिपदि-

कार्थत्वानापत्त्या तदुत्तरप्रत्ययार्थत्वाद्यन्वयानुपपत्तिः। अतो लक्षणा तैर्वक्तव्यैव। अत एव खण्डदेवादिभिर्निरूढलक्षणा तत्राश्रितेति पूर्वमेवोक्तम्। अतो निरूढलक्षणेति वक्तव्ये केवलं लक्षणेति कथनं प्राभाकराणामयुक्तमिति धर्मसूरेराशयः स्यात्।

वस्तुतस्तु लक्षणायां प्रयोजकत्वेन रूढिप्रयोजनयोरन्यतरस्यापेक्षा केवलम् आलङ्कारिकाणां मत एव। मीमांसकास्त्वनयोरन्यतरस्य प्रयोजकत्वं नाङ्गीकुर्वन्त्येवेति वक्तव्यम्। अन्यथा 'सोमेन यजेत' इत्यादिषु लक्षणैवायुक्ता स्यात्। न ह्यत्र रूढिर्वा प्रयोजनं वा किञ्चित् प्रयोजकत्वेन दृश्यते। अतः प्राभाकराङ्गीकृतव्यक्तिलक्षणा न दुष्टा। प्रत्युत आलङ्कारिकाभिमतलक्षणास्वरूपम् आश्रित्य मीमांसकव्यक्तिलक्षणाखण्डनमेव धर्मसूरेश्चिन्त्यमिति।

### 2. 4.5 लक्षणाप्रभेदनिरूपणम्

यद्यपि लक्षणालक्षणे "रूढितो वा प्रयोजनात्" इति रूढिप्रयोज-नयोरन्यतरस्य लक्षणाहेतुत्वकथनात् प्रथमं लक्षणा रूढा प्रयोजनवतीति द्विधा प्रतिपादिता, तथापि निरूढलक्षणायां धर्मसूरेर्नैर्भर्यं नास्तीत्येव "अथ निष्प्रयोजनलक्षणाभावात्" (पृ० 66) इति व्यञ्जनातरङ्गावतरणिकया ज्ञायते। हेमचन्द्राद[111]योऽपि आलङ्कारिका निरूढलक्षणां शक्तावेवान्तर्भावयन्ति। कुशलादिपदेषु वाच्यार्थव्यवधानेन चतुराद्यर्थबोधोऽप्युपपादयितुम् अशक्यः। अवयवार्थम् अजानतामपि कुशलादिपदैश्चतुरादिबोधस्यानुभविकत्वात्। अतश्च सति प्रयोजन एव लक्षणा इत्येवोचितम्।

सा प्रयोजनवती लक्षणा प्रथमं द्विधा-शुद्धा, गौणी चेति। गुणकृतसादृश्य-सम्बन्धं निमित्तीकृत्य प्रवर्तमाना लक्षणा गौणी। तद्भिन्नसम्बन्धनिमित्तिका शुद्धा। सा शुद्धा पुनर्द्विविधा-उपचारमिश्रिता उपचारामिश्रिता चेति। अत्रोपचारो नामातत्त्वे तत्त्वव्यपदेशः। स च कार्यकारणभावतादर्थ्यस्वस्वामिभावावयविभाव-तात्कर्म्यरूपनिमित्तानां पाञ्चविध्येन पञ्चविधः। सा च उपचारमिश्रिता लक्षणा पुनर्द्विविधा-सारोपा साध्यवसाना चेति। उपचारामिश्रिता च लक्षणा त्रिविधा-जहत्स्वार्था, अजहत्स्वार्था, जहदजहत्स्वार्था चेति। एवं शुद्धा पञ्चविधा। गौणी पुनः सारोपा साध्यवसाना चेति द्विविधा। एवं सप्तविधा लक्षणा सिद्ध्यति।




## 2. 4.6 उपचारशब्दार्थविचारः

काव्यप्रकाशे मम्मट[112] उपादानलक्षणाम् (अजहत्स्वार्थां) लक्षणलक्षणां (जहत्स्वार्थां) च सोदाहरणं निरूप्य-

**"उभयविधा चेयं शुद्धा। उपचारेणामिश्रितत्वात्।"**

इत्युपचारेणामिश्रितत्वमेवानयोः शुद्धात्वमिति प्रतिपादितवान्। एवम् इन्द्रार्था स्थूणा इन्द्र इत्यत्र 'तादर्थ्यादुपचार' इति शुद्धां सारोपामुदाहृतवान्। अत्र स्थलद्वये प्रयुक्त उपचारशब्दः किमेकार्थ उत नेति जिज्ञासा। प्रथमे उद्धरणे उपचारशब्दस्य सादृश्याख्यसम्बन्धेन प्रवृत्तिरुपचार इति व्याख्या दृश्यते[113]। द्वितीये चोपचारो लक्षणा लक्षणया सामानाधिकरण्येन प्रयोगो वेत्युपचारपदव्यांख्या कृता तद्व्याख्यातृभिः[114]।

एकावलीव्याख्याने तरले[115] शुद्धसारोपालक्षणव्याख्यायाम् अतत्त्वे तत्त्वव्यपदेश उपचार इति उपचारपदव्याख्या संदृश्यते। धर्मसूरिणा च शुद्धागौण्यो-र्भेदप्रदर्शनसमये "उपचारेणामिश्रितत्वात् शुद्धात्वम्" (पृ० 50) इति प्रतिपादनसन्दर्भे उपचारो नाम गुणयोग इत्युपचारपदार्थो निरुक्तः। शुद्धसारोपा-गौणसारोपयोर्भेदप्रतिपादनसमये (पृ० 51) सादृश्येतरकार्यकारण-भावादिसम्बन्धनिबन्धनायाः शुद्धसारोपात्वमुपपाद्य कार्यकारणभावादिरूपेणो-पचारः पञ्चविध इति तद्भेदान् प्रदर्शयति।

एतादृशानां विविधानां व्याख्यानानां दर्शनेन वस्तुत आलङ्कारिकाभिमत

उपचारपदार्थः क? इति जिज्ञासा उदेति। पूर्वोदाहृतकाव्यप्रकाशोद्धरणद्वय-सन्दर्भपरिशीलनेनास्माभिरवगन्तुं पार्यते यद् उभयत्र प्रवृत्त उपचारशब्द एकार्थक एवेति। उपादानलक्षितलक्षणयोर्लक्ष्यस्य शक्यत्वेन व्यपदेशो न भवति। 'आयुर्घृतम्' इत्यादिषु तु लक्ष्यस्य घृतादेरायुरादिशब्दैर्व्यपदेशः क्रियते। अतश्चात्यन्तशुद्धयोः सारोपासाध्यवसानाशुद्धयोश्च भेदको धर्म उपचार एवेति मम्मटाशयः। एतादृश उपचार एवात्यन्तशुद्धयोर्गौणीसारोपासाध्यवसानयोश्च भेदक इत्यपि तस्याशयः। अयमेवाशय एकावलीव्याख्यायां तरले मल्लिनाथेनापि व्यञ्जितः।

धर्मसूरिस्तूपचारो गुणयोग इत्युपचारं लक्षयित्वा शुद्धागौण्योर्भेदकं तम् अङ्गीचकार। शुद्धसारोपानिरूपणप्रसङ्गे कार्यकारणभावादिरूपेणोपचारस्य पाञ्चविध्यम् उपपाद्य तादृशसम्बन्धनिबन्धनां शुद्धसारोपां लक्षितवान्। एवञ्चोपचारनिबन्धना शुद्धसारोपा इति लक्षणं पर्यवसितम्। अत्रोपचारपदार्थः क इति नैव तेन विवेचितम्। न ह्यत्रोपचारशब्दो गुणयोगबोधकः। तथा सति सादृश्येतरसम्बन्धनिबन्धना शुद्धसारोपा इति लक्षणस्यासङ्गत्यापत्तिः। अतश्चात्र उपचारपदार्थो मल्लिनाथेन निरुक्त एव धर्मसूर्यभिप्रेत इति स्वीकर्तव्यं भवति। "उपचारो नाम गुणयोग" इति धर्मसूरेर्निर्वचनं तु मम्मटतात्पर्यानभिज्ञानां व्याख्यातृणामनुरोधेन। अत एवैकावलीकारेण केवलशुद्धागौण्योर्भेदकत्वेन अयमुपचारो नोक्तः।

" भिन्नत्वेन प्रतीयमानयोरैक्यारोपणमुपचारः।"

(पृ० 51)

इति प्राचीनं लक्षणं धर्मसूरिणाऽनूद्य खण्डितम्। साध्यवसानभेदे गौणे विषयस्य विषयिनिगीर्णत्वेन भिन्नत्वेन प्रतीत्यभावात् तत्रोपचारस्यासिद्धया शुद्धत्वापत्तिरिति तदुपचारलक्षणे दोषोऽपि प्रदर्शितः। युक्तं चैतत्।

अतश्च 'अतत्त्वे तत्त्वव्यपदेश उपचार' इति मल्लिनाथलक्षणमेव मम्मटाशयानुगुणत्वात् स्वीकर्तुं योग्यम्।

### 2. 4.7 जहदजहल्लक्षणाविचारः

काव्यप्रकाशकारः शुद्धाया लक्षणाया उपादानलक्षणा (अजहल्लक्षणा)

लक्षणलक्षणा (जहल्लक्षणा) इति प्रभेदद्वयमेव पर्यगणयत्। साहित्यदर्पणकारः प्रतापरुद्रीयकारोऽप्येवमेव। एवञ्च प्रसिद्धालङ्कारिकैर्मम्मटादिभिरनुक्तो जहदजहल्लक्षणेति शुद्धलक्षणायास्तृतीयः प्रभेदो धर्मसूरिणा प्रदर्शितः (पृ० 49)। न केवलं प्रदर्शितः किन्तु समर्थितो महता प्रबन्धेन। इदं त्वत्रावधेयं यत् जहदजहल्लक्षणासमर्थनरूपोऽसौ सर्वोऽपि ग्रन्थभाग एकावलीतत्तरलानुवादरूप एव। एवञ्च विद्याधर एव ऐदम्प्राथम्येनामुं प्रभेदं स्वीचकारेति ज्ञायते। मल्लिनाथेन तु युक्तिप्रदर्शनपूर्वकं प्रभेदस्यास्य स्वीकरणस्य आवश्यकता सम्यगुपपादिता। तेन वेदान्त्यभ्युपगतजहदजहत्स्वार्थाया आलङ्कारिकाभ्युपगतायास्तस्याश्च मध्ये विद्यमानः शाब्दबोधे विशेषोऽपि उट्टङ्कितः[116]। धर्मसूरिस्त्वालङ्कारिकाभ्युपगतायां जहदजहल्लक्षणायां दोषानुद्भाव्य वेदान्तिनां पक्षमेव सिद्धान्तितवान् इत्ययमेव विशेषस्तरलात् साहित्यरत्नाकरस्य।

अयम् एतेषाम् आशयः। 'सोऽयं देवदत्त' इत्यादिप्रत्यभिज्ञास्थले तदिदंशब्दवाच्ययोर्देवदत्तयोरभेदो भासते। किन्तु स इति शब्दस्य तद्देशतत्कालविशिष्टदेवदत्तोऽर्थोऽयमिति शब्दस्यैतत्कालैतद्देशविशिष्टदेवदत्तोऽर्थः। अत्र च तत्तेदन्तयोर्विशेषणयोर्विरुद्धत्वात् तद्विशिष्टयोरभेदस्तु न घटते। अतो भासमानाभेदसिद्ध्यर्थं तत्तांशपरित्यागपूर्वकं तत्तोपलक्षितेदन्ताघटितदेवदत्तपरत्वं सोऽयम् इत्यस्य स्वीकर्तव्यम्। तच्च शक्त्या न सम्भवति। 'यावता शब्देन यावानर्थः प्रतीयते तावानेव तस्य स्वार्थो न न्यूनो नाधिकश्च' इति व्युत्पत्त्याश्रयणात् तत्तांशपरित्यागे स्वार्थस्य न्यूनतेति शक्त्या तादृशार्थग्रहणासम्भवात्। अतस्तत्तोपलक्षितेदन्ताघटितदेवदत्तव्यक्तिमात्रबोधो लक्षणयैव। तत्रापि स्वार्थस्य सर्वस्यापरित्यागाद् अंशेन स्वार्थं जहाति अंशेन न जहातीति जहदजहत्स्वार्थता। स्वार्थस्य सर्वस्यापरित्यागादेव न जहत्स्वार्थता। स्वसिद्धये पराक्षेपाभावाच्च न अजहत्स्वार्थतेति तदुभयविधानन्तर्भूतत्वे सति लक्षणास्वीकारावश्यम्भावाद् विलक्षण एवासौ तृतीयः शुद्धलक्षणाप्रभेद इति।

एवञ्चालङ्कारिकास्तच्छब्दलक्ष्यकेवलदेवदत्तस्येदंशब्दवाच्येदन्ताविशिष्टदेवदत्तेना-भेदान्वयबोधमङ्गीकुर्वन्ति।

दार्शनिकेषु वेदान्तिन एवेमां जहदजहल्लक्षणाम् अङ्गीकुर्वन्ति। किन्तु दार्ष्टान्तिकभूततत्त्वमस्यादिमहावाक्यानुरूप्यार्थं 'सोऽयं देवदत्त' इत्यत्रापि

तत्तेदन्तयोस्तदिदंशब्दवाच्ययोरुभयोरपि परित्यागपूर्वकमुभयत्र शिष्टस्य केवलस्वरूपस्य अभेदबोधमभ्युपगच्छन्ति। सङ्गच्छते चैतत् तेषां मते।

तथा हि – 'तत्त्वमसि' इति महावाक्ये सर्वज्ञत्वादिधर्मविशिष्टं चैतन्यं तत्पदवाच्यार्थः। किञ्चिज्ज्ञत्वादिधर्मविशिष्टञ्च चैतन्यं त्वंपदवाच्यार्थः। उभयोरनयोः सामानाधिकरण्यसिद्धाभेदान्वये बाधादुभयत्र लक्षणया सर्वज्ञत्व-किञ्चिज्ज्ञत्वादिविशेषणत्यागपूर्वकं चैतन्यमात्रं लक्ष्यते। एवं सिद्धयोर्लक्ष्यकेवलस्वरूपयोरभेदबोध इति। यदि च तच्छब्दे इव त्वंशब्देऽपि लक्षणा नोच्यते तर्ह्यभेदबोधाद् ब्रह्मणः सधर्मकत्वापत्तिः। एवं वेदान्तिनाम् उभयत्र विशेषणांशपरित्यागस्तेषां मते आवश्यकः।

धर्मसूरिस्तु जहदजहल्लक्षणास्थले वेदान्तिमतमेव समर्थयति (पृ० 50)। यथा 'तत्त्वम् असि' इत्यादौ तत्त्वंपदसमुदायबोध्यसर्वज्ञत्वकिञ्चिज्ज्ञत्वादेर्विरुद्धविशेषणांशद्वयस्य परित्यागेनाविरुद्धस्वरूपमात्रापरित्यागेन च बोधो वर्ण्यते तथैव 'सोऽयं देवदत्त' इत्यादावपि सोऽयंपदबोध्ययोर्विरुद्धयोस्तत्तेदन्तयोरुभयोरपि परित्यागेन केवलस्वरूपमात्रापरित्यागेन च बोधो वर्णनीयः। आलङ्कारिकोक्तप्रकारस्तु न साधीयान्। तथा हि – तत्तोपलक्षितस्येदन्ताविशिष्टेनाभेदश्च द्विधा उपपादनीयः। पूर्वकालोपलक्षितस्य धर्मिण एतत्कालविशिष्टेन धर्मिणा साक्षादभेदप्रतिपादनमित्येकः प्रकारः। पूर्वकालोपलक्षिते धर्मिणि वर्तमानकालवैशिष्ट्यलक्षणधर्मप्रतिपादनेनार्थाद् धर्मिणोरभेदप्रतिपादनमिति द्वितीयः प्रकारः।

अनेन प्रकारद्वयेनाप्यभेदप्रतिपादनं न भवत्येव। तत्र प्रथमप्रकारेण विशिष्टस्वरूपयोरभेदः 'विशिष्टं शुद्धान्नातिरिच्यते' इति न्यायेनोपपादनीयः। स च न्यायो न सर्वत्राश्रयितुं शक्यः। अस्य न्यायस्य सार्वत्रिकत्वे तु शुद्धाग्नेः पथिकृदग्नेश्च भेदाभावप्रसङ्गेन पथिकृदग्निवैयर्थ्यापत्तिः। ततश्च तन्न्यायस्य असार्वत्रिकत्वेन तस्यात्रापि स्वीकारो नोचितः। अथ कथञ्चित् नैयायिकरीत्या स्वीक्रियेत तर्हि वर्तमानविशिष्टस्य तत्तोपलक्षितेन सहाभेदबोधनात् प्रागपि वर्तमानकालविशिष्टसद्भावापत्तिः। नाप्यत्र द्वितीयः प्रकारो युक्तः। उभयत्र विशेषणांशपरित्यागेन बोद्धुमिष्टस्याभेदस्य साक्षादेव प्रतिपादनसम्भवे परम्परयाभेदप्रतिपादनस्यायुक्तत्वात्।

एवं वेदान्तिसम्मतामेव जहदजहल्लक्षणामालङ्कारिकमतेऽप्यङ्गीकृत्य मम्मटादीनामेतद्भेदाप्रदर्शनमज्ञानविलसितमेवेत्युपसंहरति वादम् अमुं धर्मसूरिः।

अत्रेदं समालोचनीयम्। किं 'तत्त्वमसि' इत्यादिवाक्येष्विष्टो बोध एतां लक्षणां विना भवति न वेति। यद्यपि वेदान्तिभिस्तत्त्वमस्यादिवाक्येषु जहदजहल्लक्षणेयं स्वीकृतैव तथापि लक्षणयैव स बोधो निर्वाह्य इत्यत्र नास्ति तेषां नैर्भर्यम्। उक्तञ्च वेदान्तपरिभाषायाम् धर्मराजाध्वरिणा[117] –

**"सोऽयं देवदत्तः, तत्त्वमसि इत्यादौ विशिष्टवाचकानां पदानामेकदेश-परत्वेऽपि न लक्षणा। शक्त्युपस्थितविशिष्टयोरभेदान्वयानुपपत्तौ विशेष्ययोः शक्त्युपस्थितयोरेवाभेदान्वयबोधाविरोधात्"**। इति।

अस्यायमाशयः – 'तत्त्वमसि' इत्यादिवाक्ये लक्षणा नास्त्येव। किन्तु तत्र शक्त्यैव स्वातन्त्र्येणोपस्थितयोस्तत्त्वंपदार्थयोरभेदेनान्वयः। अत्र तच्छब्दस्त्वंशब्दश्च सर्वज्ञत्वादिधर्मान् परित्यज्य शक्त्यैव केवलव्यक्तिं बोधयतः। द्वयोर्धर्मयोर्विरुद्धत्वेन तद्विशिष्टयोर्बोधेऽभेदान्वयानुपपत्तिरेव विरुद्धोभयधर्म-परित्यागे बीजम्। यद्यप्यत्र धर्मरहितस्य धर्मिण एव बोधः, तथापि तस्य शक्यार्थत्वमेव। अन्यथा 'घटोऽनित्यः' इत्यादिष्वपि लक्षणापत्तिः। न हि घटत्वविशिष्टस्य घटस्यानित्यता उपपादयितुं शक्या। अतस्तत्र घटपदं केवलव्यक्तिमेव बोधयतीत्यङ्गीकर्तव्यम्। नात्र लक्षणा केनचिद् उपपादयितुं शक्या, न वा अभ्युपगता। एवञ्च यथा 'घटोऽनित्यः' इत्यादिषु सति बाधे विशेषणांशपरित्यागस्तथैव 'तत्त्वमसि' इत्यादिष्वपीति लक्षणा तत्र नैवावश्यकी इति।

एवं वेदान्त्येकदेशिभिरेव अभ्युपगमवादेन स्वीकृता एषा जहदजहल्लक्षणा परीक्षाक्षमा न भवतीत्येव हेतोरितरैरपि तान्त्रिकैरनुदाहृता। अत एव च मम्मटादयोऽप्यालङ्कारिका इमां न परिगणितवन्त इति तेषु दोषदर्शनं धर्मसूरे-श्चिन्त्यमेव। तस्माद् 'घटोऽनित्यः' इत्यादिषु केवलघटादिधर्मिण एव यो बोधः स शक्य एवेति सर्वैरवश्याभ्युपगन्तव्यत्वात् जहदजहल्लक्षणाव्यवस्थापने हेतुतया प्रदर्शिता "यावता शब्देन यावानर्थः प्रतीयते तावानेव तस्य स्वार्थो न न्यूनो नाधिकश्च" इति वाचोयुक्तिर्निरस्ता ज्ञेया। प्रदर्शितक्रमेण घटत्वविशिष्टबोधकस्य घटशब्दस्य केवलघटवाचकत्वाङ्गीकारात्।

संमानजातीयपैङ्गल्यादियोगं निमित्तीकृत्य पैङ्गल्यादिगुणविशिष्टं माणवकं बोधयति। नात्र गुणा लक्ष्या भवन्ति। गुणानां लक्ष्यत्वं न कुमारिलाभिमतम्। उदाहृते श्लोके "यत्पैङ्गल्यादि गम्यते" इति तेषां गुणानां गम्यत्वोक्तेः। एवञ्च "लक्ष्यमाणगुणैर्योगात्" इत्यत्रापि न कर्मधारयः किन्तु लक्ष्यमाणे गुणाः = लक्ष्यमाणनिष्ठा गुणा इति सप्तमीतत्पुरुषः। सम्बन्धसामान्यविवक्षया षष्ठीतत्पुरुषो वा। तथा च लक्ष्यमाणव्यक्तिनिष्ठगुणसादृश्याद् अन्यार्थो बोध्यत इत्यत्र गौणीति व्यवहारः। लक्षणाया गौण्याश्चायमेव भेदो यत् लक्षणायां हेतुभूतसम्बन्धेन सह मुख्यार्थलक्ष्यार्थयोरविनाभावित्वमपि भवति। गौण्यां तु न तथा। वाहीकस्य गव्यविनाभूतत्वाभावादिति।

## 2. 4.8.3 नैयायिकानाम् आलङ्कारिकाणां च मतम्

नैयायिका[123] आलङ्कारिकाश्च लक्षणाहेतुभूतानां सम्बन्धतात्पर्यानुपपत्ति-रूढिप्रयोजनान्यतराणां च गौण्यामप्यावश्यकत्वेन केवलाविनाभावतदभावौ निमित्तीकृत्य द्वयोर्भिन्नता न युज्यत इति गौणीम् अपि लक्षणायामेव अन्तर्भावयन्ति। अनेन कार्यकारणभावे लाघवं सिद्ध्यति। तथा हि - तद्धर्मावच्छिन्नविषयकशाब्दबुद्धित्वावच्छिन्नं प्रति तद्धर्मावच्छिन्ननिरूपित-शक्तिविशिष्टज्ञानं तद्धर्मावच्छिन्ननिरूपितलक्षणाविशिष्टज्ञानं वा हेतुरिति कश्चित् कार्यकारणभावोऽङ्गीकर्तव्यः। गौण्या वृत्यन्तरत्वस्वीकारे तद्धर्मावच्छिन्न-निरूपितगौणीविशिष्टज्ञानस्यापि हेतुत्वं कल्पनीयमिति गौरवम्। अस्या लक्षणान्तर्गतत्वे त्वेतद्विषयककार्यकारणभावाकल्पनरूपं लाघवम् अस्त्येव। ततश्च गौणीलक्षणयोर्यत्किञ्चिद् अवान्तरवैषम्यं पुरस्कृत्य गौण्याख्यवृत्ति-भेदाङ्गीकारोऽयुक्त एवेति तेषाम् आशयः। उक्तञ्च धर्मसूरिणा -

> "एवञ्च सति अन्वयानुपपत्त्या परत्र परशब्द-
> प्रयोगसाम्ये विद्यमानेऽपि यत्किञ्चिदवान्तर-
> वैषम्यावलम्बनेन पदार्थजातिभेदाङ्गीकारे
> अतिप्रसङ्गः स्यादिति यत्किञ्चिदेतत्"। इति।।
>
> (पृ० 53)

## 2. 4.8.4 शुद्धागौण्योर्भेदः

ननु 'गङ्गायां घोष' इत्यादावपि गङ्गातीरयोरभेदप्रत्ययेन लक्ष्यार्थे तीरे

यथा शैत्यपावनत्वादिगुणप्रतीतिः प्रयोजनं तथा 'गौर्वाहीक' इत्यादावपि गोवाहीकयोरभेदप्रतिपत्त्या जाड्यादिगुणप्रतीतिः प्रयोजनमिति नास्ति भेदः शुद्धागौण्योः। अतश्च द्विधा लक्षणाया विभागोऽयुक्त इति चेत्, न, अभेदप्रत्ययरूपप्रयोजने साम्ये सत्यपि शक्यलक्ष्यार्थयोः सम्बन्धभेदेन तद्भेदोपपत्तेः।

तदुक्तं धर्मसूरिणा –

"शुद्धा तु सादृश्येतरकार्यकारणभावादिसम्बन्धनिबन्धना। गुणसादृश्यनिमित्ता गौणी" इति। (पृ० 51)

## 2. 5 व्यञ्जनावृत्तिविचारः

संस्कृतदर्शनवाङ्मये व्यञ्जनायाः शक्तिलक्षणातिरिक्तवृत्तित्वव्यवस्थापनम् इत्येतद् आलङ्कारिकाणां महत्त्वपूर्णम् असाधारणं च योगदानम् अस्ति। आलङ्कारिकैः प्रवर्तितेनानेन विचारेण नैकानि दर्शनान्युपकृतानि, प्रभावितानि चेत्यत्र सन्देहस्य नास्त्यवसरः। दार्शनिकदृष्ट्या परिशील्यमानेऽस्मिन्नर्थे वैयाकरणा व्यञ्जनाम् अङ्गीकृतवन्त एवेति वक्तुं सुशकम्। भाट्टाः, प्राभाकराः, वेदान्तिनश्च स्वशास्त्रोपयोगाभावाद् व्यञ्जनावृत्तिविषये न सम्मतिं नाप्यसम्मतिं प्रादर्शिषुः। एवञ्च ते तटस्था अस्मिन् विषये भवन्ति। असम्मतिं कण्ठत उक्त्वा व्यञ्जनानिरसने प्रवृत्तास्तु दार्शनिकाः केवलं नैयायिका एव। तेषां तु युक्तय एकैकशः शृङ्गग्राहिकतया स्वीकृत्य निराकृता आलङ्कारिकैः। अस्मिन् विषये मम्मटो नितरां प्रशंसाम् अर्हति। धर्मसूरिरपि तमेवानुसरन् आलङ्कारिकमतं सम्यग् अन्ववादीत्।

### 2. 5.1 व्यञ्जनालक्षणविचारः

व्यञ्जना त्रिविधा–शब्दशक्तिमूला, अर्थशक्तिमूला, उभयशक्तिमूला चेति। तत्र शब्दशक्तिमूला द्विधा–अभिधामूला, लक्षणामूला चेति। एवं फलतश्चतुर्विधाया अप्युभयमूलाया उभयोरन्तर्भाव इति त्रैविध्यं सिद्ध्यति। त्रिविधाया अप्येतस्या व्यवस्थापनं पृथक् कृतं काव्यप्रकाशे। यथा –

अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते।
संयोगाद्यैरवाच्यार्थधीकृद्व्यापृतिरञ्जनम्।।[124]

इत्यनेन अभिधामूला व्यञ्जना,

यस्य प्रतीतिम् आधातुं लक्षणा समुपास्यते।
फले शब्दैकगम्येऽत्र व्यञ्जनान्नापरा क्रिया।।[125]

इत्यनेनलक्षणामूला,

वक्तृबोद्धव्यकाकूनां वाक्यवाच्यान्यसन्निधेः।
प्रस्तावदेशकालादेर्वैशिष्ट्यात् प्रतिभाजुषाम्।।
योऽर्थस्यान्यार्थधीहेतुर्व्यापारो व्यक्तिरेव सा।।[126]

इत्यनेनार्थशक्तिमूला च सा व्यवस्थापिता। किन्तु लक्षणत्रयानुस्यूततया सामान्यलक्षणमेकं व्यञ्जनायाः काव्यप्रकाशे नैव प्रतिपादितम्। एषा च न्यूनता विद्यानाथेन परिहृता। स तु-

"अन्वितेषु पदार्थेषु वाक्यार्थोपस्कारार्थम् अर्थान्तरविषयः शब्दव्यापारो व्यञ्जनावृत्तिः।[127]

इति प्रथमं व्यञ्जनासामान्यलक्षणमभिधायानन्तरं तां विभक्तवान्-

"सा त्रिविधा - शब्दार्थोभयशक्तिमूलत्वेन"। इति।

एतच्च व्यञ्जनासामान्यलक्षणकथनं विद्यानाथस्य व्यञ्जनाविचारेऽत्यन्तं प्रमुखं स्थानं वहति। किञ्च सामान्यलक्षणकथनं विना व्यञ्जनाविभागनिरूपणं, विशेषलक्षणकथनञ्चासङ्गतं भवति। अतो विद्यानाथेन प्रथमं विभागत्रयानुगतं सामान्यलक्षणं प्रणीतम्, अपनोदितश्च पूर्वोक्तासङ्गतिदोषः। अत एव धर्मसूरि-स्त्रिविधव्यञ्जनाया व्यवस्थापनविचारे भूयशो मम्मटम् अनुसरन्नप्यग्रे सामान्यलक्षणं परं विद्यानाथात् स्वीकृत्य न्यरूपयत्। प्रतापरुद्रीयेऽदृश्यमानं व्यञ्जनावृत्तिसाधनविचारं पुनर्मम्मटमनुसृत्यैव कृतवान्। तथा चेदं धर्मसूरे-र्व्यञ्जनासामान्यलक्षणम्-

अन्वितेषु पदार्थेषु योऽस्यार्थान्तरगोचरः।
वाक्यार्थोपस्क्रियायै स व्यापारो व्यञ्जनं भवेत्।। (पृ॰66)

पदैरुपस्थापितानां पदार्थानां परस्परान्वयबोधानन्तरं = वाक्यार्थबोधानन्तरं तस्यैव वाक्यार्थस्य चमत्काराधानार्थं पूर्वोक्तवाक्यार्थभिन्नार्थविषयको यः शब्दव्यापारः स एव व्यञ्जनेति लक्षणार्थः। अर्थशक्तिमूलिकायां पदबोधितानां

पदार्थानाम् आकाङ्क्षादिवशात् परस्परसंसर्गमर्यादया बुद्धं वाक्यार्थम्, अभिधामूलिकायां नानार्थबोधकपदैर्नानार्थेषु शक्त्या समर्पितेषु संयोगादिना नियमितं प्राकरणिकं वाक्यार्थम्, लक्षणामूलिकायां च गङ्गादिशब्दैरुपस्थापितानां प्रवाहाद्यर्थानां घोषाद्यधिकरणत्वान्वयानुपपत्त्या लक्षिततटाद्यर्थघटितवाक्यार्थं च स्वीकृत्य लक्षणसमन्वयः। सर्वत्र तादृशवाक्यार्थज्ञानानन्तरं तस्यैव वाक्यार्थस्य चमत्काराधानार्थं पुनर्योऽन्योऽर्थो वाच्यलक्ष्यभिन्नो व्यङ्ग्यार्थो भासते तत्र व्याप्रियमाणो व्यापारो व्यञ्जनेति। वाक्यार्थोपस्क्रियायै इति कथनेन 'पीनो देवदत्तो दिवा न भुङ्क्ते' इति वाक्यप्रयोगानन्तरं वाक्यार्थबोधे जाते अर्थापत्तिप्रमाणेन रात्रिभोजनरूपार्थस्य यत्र प्रतीतिस्तस्यां नातिव्याप्तिः। तत्राक्षिप्तार्थेन वाक्यार्थोपस्काराभावात्। किञ्च 'अन्वितेषु पदार्थेषु' इति भावलक्षण-सप्तमीप्रयोगात् समन्वयशक्तिसहकृतयाऽभिधया लक्षणया वा वाक्यार्थबोधोदयानन्तरं पुनरपि प्रतीयमानेऽर्थान्तरेऽभिधालक्षणयोरुभयोरपि पुनरप्रवृत्त्याऽवश्यं व्यापारान्तरमङ्गीकर्तव्यमिति व्यञ्जनायां प्रमाणमपि सूचितं भवति। एतेनाभिधासमन्वयशक्त्योः सति सम्भवे लक्षणाया अप्यनन्तरभावी व्यञ्जनाव्यापारस्तेभ्यो भिन्न एव। तेषु नान्तर्भवति चेति फलितोऽर्थः। लक्षणे 'अस्य' इति पदस्य शब्दस्य इत्यर्थः। किन्तु शब्दस्य इत्येतद् अर्थस्याप्युपलक्षणम्। अज्ञातार्थस्य शब्दस्य, विशिष्टस्य शब्दानभिधेयस्य चार्थस्य व्यञ्जकत्वायोगाद् उभयव्यापारत्वाभ्युपगमात्। किन्तु शब्दार्थशक्तिमूलत्वकथनम् एकस्य प्राधान्यम् इतरस्य सहकारित्वमिति विवक्षया। उभयशक्तिमूलेऽपि तत्तदंशयोः प्राधान्येनैव तथा विभाग इति द्रष्टव्यम्।

### 2. 5.2 व्यञ्जनास्थापने प्रमाणम्

एवं लक्षितायां व्यञ्जनायां प्रमाणमपि प्रदर्शनीयं भवति। यतः 'लक्षणप्रमाणाभ्यां खलु वस्तुसिद्धिः'। तत्र व्यञ्जनाव्यवस्थापने यानि प्रमाणानि मम्मटेन संगृह्य प्रोक्तानि तदतिरिक्तानि न केनचिद् अर्वाचीनालङ्कारिकेण प्रोक्तानि। अतः स एव तत्र धर्मसूरेः प्रमाणम् आसीत्। इदमप्यत्रावधेयं यद् ध्वन्यपराभिधानस्य व्यङ्ग्यार्थस्य व्यवस्थापनं, तस्य च व्यङ्ग्यार्थस्य व्यापारभूतव्यञ्जनायाः स्थापनं च परस्परं मिलितेनैव रूपेण भवितुम् अर्हति। उभयत्र प्रदर्श्यमानानि प्रमाणानि प्राय उभयोरपि साधकानि भवन्ति। अत एव

मम्मटोऽपि द्वितीयोल्लासे अभिधामूलव्यञ्जनाविषये प्राकरणिकार्थबोधानन्तरम् अप्राकरणिकार्थबोधस्यान्यथानुपपन्नत्वरूपं, लक्षणामूलकव्यञ्जनाविषये प्रयोजनस्याभिधालक्षणाभ्याम् अबोध्यत्वरूपं च प्रमाणं विशदतया निरूपितवान्। शिष्टानि च बहूनि प्रमाणानि पञ्चमोल्लासशेषे व्यङ्ग्यार्थव्यवस्थापनावसरे निरूपितानि। एतान्येव काव्यप्रकाशपञ्चमोल्लासशेषे प्रतिपादितानि ध्वनिरूप-व्यङ्ग्यार्थव्यवस्थापकप्रमाणान्येकावल्यां ग्रन्थादावनूदितानि। धर्मसूरिणापि तथैव प्रपञ्चितानि नवमे ध्वनितरङ्गे।

अस्माभिरपि साहित्यरत्नाकरे प्रकृते चतुर्थे तरङ्गे प्रदर्शितानां प्रमाणानां सारांशोऽधस्तात् प्रदर्श्यते। नवमतरङ्गे प्रोक्तानि तु तत्रैव विवेचयिष्यन्ते।

### 2.5.3 अभिधामूलव्यञ्जनाव्यवस्थापनम्

"वयस्या नागरासङ्गाद् अङ्गानां हन्ति वेदनाम्।"

इत्यादौ प्रकरणवशाद् वयस्यानागरशब्दयोर्नानार्थयोरप्योषधिविशेषे शक्तिनिश्चयेन प्रकृतार्थबोधानन्तरम् अप्रकृतोऽर्थः 'युवतिर्नागरपुरुषसङ्गमाद् अङ्गानां वेदनां हन्ति' इत्येवंरूपः कश्चिद् अवगम्यते। अस्मिंश्चाप्रकृतार्थबोधे अन्वयव्यतिरेकाभ्यां वयस्यानागरशब्दयोरेव हेतुत्वं सिद्ध्यति। एवं 'गतोऽस्तमर्क' इति वाक्यं श्रोतृवैलक्षण्येन विविधम् अर्थं प्रत्याययतीत्यनुभवः। तद्यथा श्रोता ब्राह्मणः 'अनेन वाक्येन वक्ता सन्ध्योपासनं कर्तुं मां प्रेरयति' इति चिन्तयति। वाणिजकश्च 'पण्यवस्तूपसंहरणसमयोऽयम् इति ज्ञापयति' इति चिन्तयति। अभिसारिका तु 'अभिसरणसमयोऽयम् इति ज्ञापयति' इति चिन्तयति। एतादृशानां श्रोतृवैलक्षण्येनावगम्यमानानामर्थानां श्रोतृप्रतिभोन्नीतानां वक्तृतात्पर्यविषयत्वं वक्तुं न शक्यम्। अत्र च 'गतोऽस्तमर्क' इति वाक्येन योऽर्थो बुध्यते स एव विविधानां श्रोतृणां विविधम् अर्थं ज्ञापयति। एतादृशेषु प्रयोगेषु बोध्यमानस्य अर्थस्य शक्यत्वं वा लक्ष्यत्वं वा उपपादयितुम् अशक्यम्। तथा हि- वयस्येत्यादिषु नानार्थस्थले यावत्स्वर्थेषु शक्तिर्गृहीता तावतां सर्वेषाम् अर्थानाम् उपस्थितावपि प्रकरणादिभिरर्थविशेषे तात्पर्यनिर्णये सति तात्पर्यविषयार्थस्यैव अन्वयबोधो नान्यार्थस्य। शक्तिप्रयोज्यशाब्दबोधे तात्पर्यज्ञानस्य हेतुत्वाङ्गीकारात्। ततश्च प्राकरणिकार्थबोधानन्तरं तस्मादेव शब्दाज्जायमानोऽप्राकरणिकार्थबोधो न शक्तिसाध्यः। नाप्ययं लक्ष्यः। लक्षणाबीजाभावात्। तथा हि - तात्पर्यानुपपत्ति-

मुख्यार्थसम्बन्धो रूढिप्रयोजनयोरन्यतरच्च लक्षणाबीजानि। तेषां त्रयाणामप्यत्रा-भावान्न सोऽर्थो लक्ष्यः। अतश्च शक्यलक्ष्यभिन्नः शक्तिलक्षणागम्यश्च अयमर्थो व्यङ्ग्य इति, तद्बोधकशब्दव्यापारो व्यञ्जनेति चावश्यम् अभ्युपगन्तव्यम्। उक्तञ्च काव्यप्रकाशकारेण-

> अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते।
> संयोगाद्यैरवाच्यार्थधीकृद्व्यापृतिरञ्जनम्।।[128]

इति। अनूदितञ्चाक्षरशस्तथैव धर्मसूरिणापि। (पृ० 68)

## 2. 5.4 लक्षणामूलव्यञ्जनास्थापनम्

'गङ्गायां घोष' इत्यादिलक्षणास्थले प्रतिपिपादयिषितस्य शैत्यपावनत्वादि-प्रयोजनस्य प्रतीतिर्व्यञ्जनाव्यापारगम्यैव। तथा हि – न हि गङ्गापदस्य शैत्यादिकं शक्यार्थः। तत्र गङ्गापदस्य सङ्केतितत्वाभावात्। नापि लक्षणा। गङ्गाशब्देन हि तटलक्षणायां मुख्यार्थप्रवाहस्य घोषान्वयानुपपत्तिः, तटस्य मुख्यार्थप्रवाहसम्बन्धः, गङ्गागतशैत्यपावनत्वादिविशेषप्रतिपादनं प्रयोजनं चेति त्रयं कारणम्। न च शैत्यपावनत्वादिलक्षणायां तन्निमित्तं दृश्यते। तटस्य मुख्यार्थत्वाभावात्। गङ्गागतशैत्यपावनत्वादिविशेषस्य तटसम्बन्धित्वाभावात्। शैत्यपावनत्वादि-प्रतिपादनस्य प्रयोजनान्तराभावाच्च। यदि च वैयात्यात् शैत्यपावनत्वादिप्रतिपादन-स्यापि प्रयोजनान्तरम् उच्यते तदा प्रयोजनस्य प्रयोजनं लक्षणया बोधनीयम्। तस्यापि पुनः प्रयोजनमित्यनवस्था स्यात्। 'मूलक्षयकरीं प्राहुरनवस्थां हि दूषणम्' इति न्यायेनानवस्थाया मूलस्यैव नाशकत्वाङ्गीकारात् प्रथमप्रयोजनप्रतीतिरेव न स्यात्। अथ स्वस्यैव प्रयोजनत्वं स्वीक्रियते तर्हि आत्माश्रयत्वं दोषः। प्रथमप्रयोजनस्य द्वितीयं प्रयोजनं, द्वितीयप्रयोजनस्य प्रथमं प्रयोजनमिति स्वीकारे अन्योन्याश्रयत्वम्। तदर्थं तृतीयप्रयोजनस्याङ्गीकारे पुनस्तत्प्रयोजनजिज्ञासायां प्राचीनप्रथमप्रयोजनापेक्षायां चक्रकापत्तिः। एवञ्च प्रयोजनस्य लक्ष्यत्वं न शक्यम्।

अथ गङ्गापदमेव शैत्यपावनत्वादिविशिष्टतटमेव लक्षयत्वित्यपि वक्तुं न शक्यम्। गङ्गागतशैत्यपावनत्वादिविशिष्टं तटं यदि लक्ष्यं भवेत् तदा तद्विशिष्टत्वं लक्ष्यतावच्छेदकं भवेत्। न ह्येवं सम्भवति। गङ्गागतशैत्यपावनत्वादिवैशिष्ट्यस्य तटे प्रमाणान्तरागोचरत्वात्। यथा च घटादिप्रत्यक्षे ज्ञाततारूपफलस्य न विषयत्वं तथा 'गङ्गायां घोष' इत्यादौ पावनत्वादिकस्य न विषयत्वम्।

नापि प्रयोजनं तात्पर्यवृत्त्या गम्यते। तात्पर्यवृत्तिर्नाम पदार्थावगमसमनन्तरभाविनी समन्वयशक्तिः पावनत्वादेरन्योन्यान्वयरूपत्वाभावात् तात्पर्यार्थत्वाभावेन न तात्पर्यवृत्तिगम्यत्वम्। किञ्च तात्पर्यं नाम न वृत्त्यन्तरम्। वृत्तित्रयानुस्यूतस्य तस्य वृत्त्यन्तरत्वानुपपत्तेः। क्लृप्तेनैव हि वृत्तित्रयेण सकलव्यवहारोपपत्तेः। यथा च वेदान्तिनो बाह्येन्द्रियसहकारिणो मनस इन्द्रियान्तरत्वं नाभ्युपगच्छन्ति तथा शक्त्यादिवृत्तित्रयसहकारिण्यास्तात्पर्यवृत्तेः पृथग्वृत्तित्वं नाङ्गीकुर्मः। एवञ्च लक्षणास्थले प्रयोजनप्रतीतेरभिधालक्षणातात्पर्यवृत्त्यनिर्वर्तनीयत्वेन तदर्थं यो व्यापारोऽवश्यं स्वीकर्तव्यः स एव व्यञ्जनाव्यापारः। एष च ध्वननशब्देनाप्युच्यते। उक्तञ्च काव्यप्रकाशकारेण–

> यस्य प्रतीतिमाधातुं लक्षणा समुपास्यते।
> फले शब्दैकगम्येऽत्र व्यञ्जनान्नापरा क्रिया।।[129] इति।

अनूदितं च धर्मसूरिणा–

> तत्र यः पूर्वोदाहृतप्रयोजनलक्षणानां प्रयोजनप्रतीतिकृद् व्यापारः स लक्षणामूलो व्यञ्जनव्यापारः। इति। (पृ० 66)

### 2. 5.5 अर्थशक्तिमूलव्यञ्जनाव्यवस्थापनम्

नानार्थकशब्दानां लक्षकशब्दानां चाभाववति स्थले वाक्यार्थबोधानन्तरं वक्तृबोद्धव्यकाकुवाक्यवाच्यान्यसन्निधिप्रस्तावदेशकालादेः कारणाद् यत्रार्थान्तरं भासते तत्राकामेनापि व्यञ्जनाव्यापार एवाभ्युपगम्यः। तादृशव्यङ्ग्यार्थे शब्दानां सङ्केताभावात् नाभिधा, मुख्यार्थबाधादिलक्षणाबीजाभावान्न लक्षणा प्रगल्भते। यथा प्रदर्शिते 'गतोऽस्तमर्कः' इत्यादौ तद्घटकशब्दानां निरूपितविविधव्यङ्ग्यार्थेषु सङ्केतो नास्ति। न वा पदोपस्थापितपदार्थानां परस्परान्वये तात्पर्यानुपपत्तिर्वा। तस्मात् सहृदयजनप्रसिद्धानां विविधव्यङ्ग्यार्थानां 'गतोऽस्तमर्कः' इत्यादिवाक्यप्रयोगसमनन्तरमेवानुभूयमानानां प्रतीताववश्यम् अङ्गीकरणीयायां, तस्याश्च व्यापारद्वारकत्वावश्यम्भावात् क्लृप्ताभिधालक्षणाव्यापाराणाम् अप्रसक्तौ व्यापारान्तरं किमप्यपरिहार्यरूपेण स्वीकरणीयम्। तदेव व्यापारान्तरं व्यञ्जनेति व्यवह्रियते।

अथ विस्तरभयाद् धर्मसूरिणा चतुर्थे नवमे च तरङ्गे कानिचित् प्रमाणानि अनुट्टङ्कितानि। तानि पुनः काव्यप्रकाशकारेण प्रतिपादितानि यानीह विविच्यन्ते।

व्यङ्ग्यार्थप्रतीतिर्नैव तिरोधातुं शक्या। स तादृशो व्यङ्ग्यार्थोऽभिधालक्षणाभ्यां क्लृप्तव्यापाराभ्यां यतो न प्रतीयते, अतो व्यापारान्तरं व्यञ्जनाख्यम् अङ्गीकर्तव्यमिति सारांशः। तथा हि – काव्ये जीवितभूतस्य रसस्य प्रतिपत्त्यर्थमपि व्यञ्जना अवश्यमभ्युपेया। तथा हि – रस इति शृङ्गार इति वा पदेनाभिधानेऽपि विभावानुभावादीनां यद्यप्रतीतिस्तर्हि चमत्कारो न भवति। विभावादीनां प्रतीतौ तु रसशृङ्गारादिशब्दैरनभिधानेऽपि चमत्कारोऽनुभूयते। एवञ्चान्वयव्यतिरेकाभ्यां विभावादिमुखेन रसप्रतीतिरेव चमत्कारकारिणीति निश्चीयते। अत एवोक्तमभियुक्तैः – 'रसः स्वप्नेऽपि न वाच्यः।[130]' न च विभावादिभी रसो लक्ष्यत इति वाच्यम्। मुख्यार्थबाधादिलक्षणानिमित्तानाम् अभावात्। रसादीनाम् आनन्दमयसंविद्विश्रान्तिरूपतया प्रयोजनान्तरस्य सुतराम् असम्भवेन लक्षणा दुर्वचैव। किञ्च व्यञ्जनावृत्त्यस्वीकारे कष्टत्वादयोऽनित्यदोषा असाधुत्वादयो नित्यदोषा इति विभागो न स्यात्। व्यञ्जनाभ्युपगम एव व्यङ्ग्यस्य बहुविधत्वेन रौद्रादौ व्यङ्ग्ये कष्टत्वस्यानुकूलता शृङ्गारादौ व्यङ्ग्ये प्रतिकूलतेति व्यवस्था उपयुज्यते। व्यङ्ग्यार्थस्याभावे तु वाच्यार्थस्याविशेषेण सर्वत्र कष्टत्वादीनां दुष्टत्वं वाऽदुष्टत्वं वा स्यात्। एवं 'गतोऽस्तमर्क' इत्यादावपि वाक्यार्थः सर्वान् प्रत्यविशिष्ट एक एव। व्यङ्ग्यार्थस्तु तत्तत्पुरुषभेदेनानेकः प्रतीयते तत्र व्याकरणकोशादिभिर्वाच्यार्थ एवावगम्यते। व्यङ्ग्यार्थस्तु प्रतिभयैव बुध्यते। वाच्यार्थेन सामान्यपुरुषस्य प्रतीतिमात्रमेव भवति। व्यङ्ग्येन तु विदग्धस्य चमत्कारोऽपि भवतीति वाच्यव्यङ्ग्ययोरत्यन्तविविक्तस्वरूपतायां सिद्धायां तत्र व्यङ्ग्यार्थस्य प्रतीत्यर्थं व्यञ्जनाव्यापारोऽवश्यमेव सर्वैरभ्युपगन्तव्य इति।

### 2. 5.6 मम्मटग्रन्थपरिष्कारः

धर्मसूरिः शब्दशक्तिमूलाम् अर्थशक्तिमूलाम् उभयशक्तिमूलां च व्यञ्जनां सोदाहरणं निरूप्यान्ते काव्यप्रकाशकारस्य व्यञ्जनाविभागप्रदर्शनम् अधिकृत्य एवम् उल्लिलेख –

काव्यप्रकाशकारस्तु सर्वेषाम् एतेषाम् अर्थानां व्यञ्जकत्वम् अभिदधौ।

वक्तृबोद्धव्यकाकूनां वाक्यवाच्यान्यसन्निधेः।

प्रस्तावदेशकालादेर्वैशिष्ट्यात् प्रतिभाजुषाम्।।
योऽर्थस्यान्यार्थधीहेतुर्व्यापारो व्यक्तिरेव सा।।

* * * *

अस्माभिस्तु तत्सर्वम् अर्थशक्तिमूलध्वनावन्तर्भवतीति न पृथक् सम्भ्रमः क्रियते।" (पृ० 71) इति।

इदम् अत्र धर्मसूरेर्हृदयम्। अनुभूयते काव्यप्रकाशे सुमहदस्पष्टता अर्थशक्तिमूलकव्यञ्जनाविचारे। तथा हि – द्वितीयोल्लासप्रारम्भ एव वाचकलक्षकव्यञ्जकान् त्रिविधान् शब्दान् वाच्यलक्ष्यव्यङ्ग्यरूपान् त्रिविधान् अर्थांश्चोद्दिश्य, उद्देशक्रमेण लक्षणविभागप्रदर्शनं परित्यज्य –

सर्वेषां प्रायशोऽर्थानां व्यञ्जकत्वमपीष्यते।

इति प्रथमवारम् अर्थव्यञ्जना उट्टङ्किता उदाहृता[131] च। शिष्टेन द्वितीयोल्लासभागेन अभिधालक्षणे तन्मूलिका व्यञ्जना च निरूपिता। पुनस्तृतीयोल्लासप्रारम्भे–

'अर्थव्यञ्जकता उच्यते'[132]

इत्यवतार्य वक्तृबोद्धव्येत्यादिना अर्थशक्तिमूलव्यञ्जना लक्षिता। उदाहृता च सकलेन तृतीयोल्लासेन। अत्र च वक्त्रादिसहकारिकारणानां व्यङ्ग्यार्थप्रतीतौ सहकारिता सम्यगुपपादिता। एवं द्वितीयवारम् अर्थशक्तिमूलाया विस्तरेण प्रतिपादनं संवृत्तम्। पुनश्च चतुर्थोल्लासे विवक्षितान्यपरवाच्यध्वनिं संलक्ष्या-संलक्ष्यक्रमभेदेन विभज्य संलक्ष्यक्रमध्वनिनिरूपणावसरे–

अनुस्वानाभसंलक्ष्यक्रमव्यङ्ग्यस्थितिस्तु यः।
शब्दार्थोभयशक्त्युत्थस्त्रिधा स कथितो ध्वनिः।।

इति तं त्रेधा विभज्य पुनरपि–

अर्थशक्त्युद्भवोऽप्यर्थो व्यञ्जकः सम्भवी स्वतः।
प्रौढोक्तिमात्रात्सिद्धो वा कवेस्तेनोम्भितस्य वा।।
वस्तु वाऽलङ्कृतिर्वेति षड्भेदोऽसौ व्यनक्ति यत्।
वस्त्वलङ्कारमथवा तेनायं द्वादशात्मकः।।[133]

इत्यर्थशक्त्युद्भवो ध्वनिर्द्वादशविधः समुदाहृतः।

एवं त्रिवारम् अर्थशक्तिमूलध्वनेरुट्टङ्कनेन तेषां परस्परवैलक्षण्यम् आपाततो भासते। तेन चार्थशक्तिमूलकव्यंञ्जनाया स्वरूपे विभागे चास्पष्टता स्पष्टं भासते।

अत एव धर्मसूरिस्तादृशास्पष्टतानिवारणार्थं त्रिविधस्यापि वाच्यलक्ष्य-व्यङ्ग्यरूपव्यञ्जकप्रतीतस्यार्थशक्तिमूलकध्वनावन्तर्भावात्, तस्य च नवमे तरङ्गे सप्रभेदं निरूपयिष्यमाणत्वान्नात्र तद्विभागप्रदर्शनं वा उदाहरणं वा चकार।

## 2. 6 गुणविचारः

गुणविषये प्राधान्येन त्रयो विचारा आलङ्कारिकैः कृता दृश्यन्ते। ते च (1) गुणस्वरूपविचारः (2) गुणालङ्कारवैलक्षण्यविचारः (3) गुणसंख्या-विचारश्च।

यथासम्प्रदायं धर्मसूरिरपि त्रीनपि विषयान् अधिकृत्य विचारयामास। अत्राप्येषः स्वोपजीव्यग्रन्थभूते एकावलीतत्तरलेऽन्वकरोत्। अथापि प्रतिपादनवैखरी अत्यन्तं विलक्षणा सती स्वोपज्ञत्वमेव विचारस्य प्रकटयति। कुत्रचित् सिद्धान्तेष्वप्यल्पीयान् भेदश्च प्रकट्यते। क्वचित्तूपजीव्यग्रन्थयोरनुक्ता अपि प्रधाना विषया अत्र प्रतिपादिताः।

### 2. 6.1 गुणस्वरूपम्, तदाश्रयश्च

गुणस्वरूपविवेचनदृष्ट्या गुणसंख्यापरिगणनदृष्ट्या च परिशील्यमाणे आलङ्कारिकाः सर्वेऽपि द्वेधा विभक्तुम् अर्हा भवन्ति। तत्र प्राचीना भरतदण्ड्याचार्यादयस्तदनुयायिनश्च गुणानां वर्णधर्मत्ववादिनो दशसंख्याकत्व-वादिनश्च। वामनोऽपि तादृश एव परन्तु स ऐदम्प्राथम्येन गुणानाम् अर्थधर्मत्वम् अप्यङ्गीकृत्य दशार्थगुणानपि योजयामास। आनन्दवर्धनाभिनवगुप्तौ तदनुयायिनश्च मम्मटविश्वनाथादयो गुणानां रसधर्मत्ववादिनो गुणत्रयवादिनश्च। प्राचीनेष्वपि भामहः केवलं त्रीनेव माधुर्यादीन् गुणान् अङ्गीचकार। परन्तु रसधर्मत्वं तु तादात्विकालोचनामाश्रित्य निराकरोत्। भोजराजस्तु सर्वेभ्य एभ्यो भिद्यते। स चायं द्विसप्ततिगुणवादी। तदङ्गीकृतानां तेषां लक्षणस्वरूपादिविवेचनेन चेदं ज्ञायते यद् एषु केचन रसधर्माः, अन्ये शब्दधर्माः, अपरेऽर्थधर्माश्चेति। एवञ्च विना भोज–वामन–भामहान् इतरे तावत् स्थौल्येन द्वैविध्यमाप्नुवन्तीति निश्चप्रचम्। एतेषाम् अवान्तरमतविभेदास्तु प्रतन्यन्ते।

तत्र गुणानां रसधर्मत्ववादी गुणत्रयवादी च धर्मसूरिः "समवायवृत्त्या रसोपस्कारकत्वं" गुणानां सामान्यलक्षणम् अकथयत् (पृ० 76)। वृत्तिर्नाम वर्तनमित्यर्थः। एवञ्च समवायसम्बन्धेन विद्यमानत्वे सति रसोपस्कारकत्वमित्यक्षरार्थः। किन्तु समवायसम्बन्धेन कुत्र वर्तन्त इति प्रश्ने रसोपस्कारकत्वमित्यत्र विद्यमानो रसशब्द आश्रयत्वेनान्वेति। एवञ्च समवायसम्बन्धेन रसनिष्ठत्वे सति रसोपस्कारकत्वं गुणानां सामान्यलक्षणमिति फलितम्। एतेन रस एव गुणाश्रय इति स्वसिद्धान्तः प्रकटितो भवति। केवलविशेष्यदलोपादाने अलङ्कारेष्वतिव्याप्तिः। तेषामपि रसोपस्कारकत्वस्य धर्मसूरिणाऽङ्गीकृतत्वात्। केवलविशेषणदलोपादाने रसत्वेऽतिव्याप्तिः। स्पष्टं चोक्तं धर्मसूरिणा गुणानां रसनिष्ठत्वम् –

ननु गुणाः समवायवृत्त्या अङ्गिनि रसे स्थिताः।

इत्युत्तरग्रन्थे (पृ० 78)।

गुणलक्षणमेवमेव स्पष्टतरमुक्तं विद्याधरेण–

अङ्गिनि रसे स्थिता ये बिभ्रत्युत्कर्षहेतुतां सततम्।
आत्मनि शौर्यादय इव ते नामैते गुणाः कथिताः।।[134]

इति। मल्लिनाथोऽपि तरले–

काव्यात्मरससमवेतास्तदुत्कर्षहेतवो धर्मा गुणाः।[135]

इति व्याचख्यौ। एकावलीलक्षणे – "अङ्गिनि रसे सततं स्थिता" इत्युक्तेर्गुणानां रसानां च नित्यसम्बद्धत्वं प्रतीयते। अत एव च शौर्यादिगुणैर्माधुर्यादिगुणा उपमीयन्ते। एवञ्च शौर्याद्युपमानबलात् सातत्यस्थितत्वोक्तेश्च मल्लिनाथः "रससमवेता" इति तत्कारिकां व्याचख्यौ।

भट्टोद्भटेऽपि गुणानां समवायवृत्त्या स्थितिम् अङ्गीकृतवान्। परं स अलङ्काराणामपि समवायवृत्तित्वमेवाङ्गीकृतवानिति, अतश्च तस्य मते गुणालङ्कारयोर्नास्ति भेद इति चानुपलभ्यमानेऽपि भट्टोद्भटविरचिते भामहविवरणे माणिक्यचन्द्र–हेमचन्द्रादीनाम् अनुवादेभ्यो ज्ञायते[136]। अयम् अलङ्काराणां समवायवृत्तित्वपक्षोऽनन्तरकालीनैर्माणिक्यचन्द्रादिभिर्निरस्त इत्यन्यदेतत्। एवम् आनन्दवर्धनाचार्यानुयायिनः सर्वेऽपि प्रतिपादनविधाभेदेऽपि समवायेन रसवृत्तित्वं गुणानाम् अङ्गीचक्रुः। तथा हि मम्मटः –

ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः।
उत्कर्षहेतवः स्युरचलस्थितयो गुणाः।।[137]

इति गुणलक्षणम् अकथयत्।

तथापि किं नाम एतत् समवायेन वृत्तित्वं नाम इति तु विषयो न कैश्चिदपि विमृष्टः। एवमेव गुणलक्षणवैलक्षण्येन संयोगवृत्तित्वमलङ्कारलक्षणे एकावल्यादिषु निवेश्यते। किन्तु तत्रापि संयोगेन वृत्तित्वं नाम किमिति नैव विमृष्टम्। धर्मसूरिस्त्वत्र विषये अतिस्पष्टतया निर्णयम् अकरोत्। तथा हि। शास्त्रान्तरेषु तावत् समवायसम्बन्धो नित्यसम्बन्धत्वेन प्रसिद्धः। अत्र तु समवायेन रसोपस्कारकत्वं नामाव्यवधानेन रसोपस्कारकत्वम्। संयोगेन रसोपस्कारकत्वं नामाभिधादिव्यवधानेन रसोपस्कारकत्वमित्यर्थो ग्राह्यः।

उक्तञ्च धर्मसूरिणा –

"माधुर्यादीनां वर्णैर्व्यज्यमानानां यदेवाव्यवधानेन रसपोषकत्वं तदेव तेषां रसे समवायवृत्तित्वम्। उपमादीनां तु वाच्यवाचकोपस्कारकाणां यदेव अभिधादिव्यापारव्यवधानं तदेव तेषां संयोगवृत्तित्वमिति रहस्यम्" (पृ० 78)इति।

## 2. 6.2 अलङ्कारसामान्यलक्षणम्

गुणालङ्कारवैलक्षण्यं वैशद्येन प्रतिपिपादयिषुर्धर्मसूरिस्तस्य सामान्य-लक्षणमुखप्रेक्षित्वाद् गुणसामान्यलक्षणकथनानन्तरम् अलङ्कारसामान्यलक्षणमपि ग्रथितवान्–

"संयोगवृत्त्या रसोपस्कारकत्वम् अलङ्कारसामान्यलक्षणम्" इति।

गुणलक्षणे समवायेन वृत्तित्वस्य आश्रयजिज्ञासायां यथा रस एव आश्रय इति वाक्यसामर्थ्यबलात् निश्चितम्, एवमेवात्राप्यलङ्काराणामप्याश्रयो रस एवेति यथाश्रुतार्थः सम्पद्यते। एवञ्च संयोगसम्बन्धेन रसनिष्ठत्वे सति रसोपस्कारकत्वम् अलङ्कारसामान्यस्य लक्षणमिति फलति। न च एतल्लक्षणम् अनुमतं स्वोपजीव्याचार्याणाम्। तथा हि विद्याधरः –

"अलङ्कारास्तु हारादय इव कण्ठादीनां संयोगवृत्त्या वाच्यवाचक-रूपाणाम् अङ्गानाम् अतिशयम् आदधाना रसम् उपस्कुर्वन्ति"[138] इत्युक्तवान्। ध्वनिकारोऽपि–

"अङ्गाश्रितास्त्वलङ्कारा मन्तव्याः कटकादिवत्।"[139]

इत्यवोचत्। एवं मम्मटः –

उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित्।
हारादिवदलङ्काराः तेऽनुप्रासोपमादयः।।[140] इत्यभिहितवान्।

नापि स्वस्यापि सम्मतम् इदं लक्षणम्। यत उत्तरग्रन्थे स्वयमेवालङ्काराणां वाच्यवाचकाश्रितत्वं स्पष्टं कथयति। तथा हि –

"न हि आत्मधर्माः शौर्यादय इव शरीरमात्रसंसर्गिणोऽलङ्कारा गुणत्वेन व्यपदिश्यन्ते। ते हि हारादय इव कण्ठादिषु संयोगितयैव शब्दार्थरूपेषु अवयवेषु उत्कर्षाधानद्वारा आत्मन इव रसस्य उपकारिणः" (पृ० 78) इति। नवमे तरङ्गेऽपि–

"अलङ्काराः पुनः वाक्यार्थोपस्कारकतया उपसर्जनत्वेन प्रसिद्धाः" (पृ० 205) इति च पुनरनुस्मारितवान्।

गुणालङ्कारलक्षणयोर्धर्मसूरिकृतयोः समवायसंयोगशब्दौ विहाय सर्वम् अन्यत्समानम्। तथापि गुणलक्षणे वाक्यसामर्थ्यबलात् सिद्ध आश्रयो विवक्षितः। अलङ्कारलक्षणे पुनर्न विवक्षित इति स्वीकर्तव्यम्। अत एव गुणानाम् अलङ्काराणां च आश्रयम् अधिकृत्य उत्तरग्रन्थे विभज्य प्रदर्शनं कृतम्। गुणानां रस आश्रयः। अलङ्काराणां च वाच्यवाचकावेव।

अथवा समवायसंयोगशब्दयोर्विवक्षितार्थोऽव्यवधानव्यवधानरूपः स्वयमेव धर्मसूरिणा व्याख्यातः। एवञ्च लक्षणशरीरात् समवायवृत्त्या संयोगवृत्त्या इति शब्दावपनीयाव्यवधानेनाभिधादिव्यापारव्यवधानेनेति शब्दयोर्निवेशे पूर्वोक्तदोषो न सम्भवति। वृत्तिशब्दापनयनेन आश्रयविवक्षाया उभयत्रानुदयात्। आश्रयविचारोऽनन्तरग्रन्थेन पृथगेव कृत इति स्वीकर्तव्यम्। एवञ्च "अव्यवधानेन रसोपस्कारका गुणाः", "अभिधादिव्यापारव्यवधानेन रसोपस्कारका अलङ्काराः" इति गुणालङ्कारलक्षणे पर्यवसिते इति न कश्चिद् दोषः।

किञ्च धर्मसूरिणा स्वालङ्कारसामान्यलक्षणे 'रसोपस्कारकत्वम्' इत्यपि दलं न्यवेशि। एतेन सत्येव रसे सत्येव च तत्परिपोषणे चालङ्काराणाम् अलङ्कारत्वम् अन्यथा त्वकाव्यत्वमेव अनलङ्कारत्वमेव तयोः शब्दार्थयोरित्ययम्

आलङ्कारिकपरमसिद्धान्तः सूचितो भवति। परन्तु क्वचित्तु नीरसेऽपि काव्ये अलङ्कारान् अभ्युपगच्छन्ति प्रामाणिकाः प्राचीमालङ्कारिकाः। तथा हि मम्मटः -

"यत्र तु नास्ति रसस्तत्रोक्तिवैचित्र्यमात्रपर्यवसायिनः। क्वचित्तु सन्तमपि नोपकुर्वन्ति"[141] इत्युक्तवान्।

एतदप्यङ्गीकृत्य तत्र काव्यत्वव्यवहारे हेतुमाह धर्मसूरिः-

"तथाविधस्थले रसशब्दस्य व्यङ्ग्यव्यञ्जकजातीययो-रभेदाध्यवसायेन प्रवृत्तत्वात्" (पृ० 79) इति।

एवं नीरसकाव्यगतेष्वलङ्कारेष्वलङ्कारव्यवहारस्यौपचारिकत्वाङ्गीकारेण तत्रैवालङ्कारलक्षणस्याव्याप्तिरपि परिहृता भवति।

## 2. 6.3 गुणालङ्कारयोर्वैलक्षण्यप्रतिपादनम्

प्रदर्शितक्रमेणैव धर्मसूरेर्मते गुणालङ्कारवैलक्षण्यं साधु प्रतिपादितम्। समवायसंयोगपदाभ्यां गुणालङ्कारयोर्भेदोऽनेन साधितः। स च एकावली-तत्तरलानुसृत एव।

अथाप्येतद्वैलक्षण्यप्रतिपादने काचन वादवैखरी धर्मसूरिणा प्रदर्शिता या खलु विषयैक्येऽपि केवलं वाङ्मात्रेण गुणालङ्कारवैलक्षण्यं प्रतिपादयन्त्या एकावल्या भिन्न इव प्रकाशते। एतदधिकृत्यापि यत्किञ्चिदत्र वक्तव्यं भवति। काव्यलक्षणे प्रथमविशेषणीभूतस्य सगुणालङ्कृतीत्यस्यानुपादेयत्वशङ्कापरिहार-व्याजेन बहुविधविकल्पकल्पनापुरस्सरं शास्त्रीयेण मार्गेण मनोहरतया गुणालङ्कारयोः स्वरूपपरस्परवैलक्षण्यादिविषया निरूपिता धर्मसूरिणा।

तथा हि - 'सगुणालङ्कृती' इति पदार्थयोर्विशेषणम् अनुपादेयमिति पूर्वपक्षः। अस्य चानुपादेयत्वस्य कारणं त्रेधा विकल्प्य दूषितम्। 'अव्यावर्तकत्वाद् अनुपादेयता' इति प्रथमो विकल्पः। एतन्मुखेन च गुणालङ्काररहीनशब्दार्थेभ्योऽ-नयोर्व्यावर्तकत्वं साधितम्। गुणालङ्कारसहितावेव शब्दार्थौ काव्यं नेतराविति च स्फोरितम्। 'अचारुताहेतुत्वात्' इति द्वितीयविकल्पश्चारुताहेतुत्वेन प्रामाणिकाभ्युपगमप्रदर्शनेन दूरीकृतः। एतेन चान्यदिदं फलं सिद्ध्यति। प्रदर्शितप्रथमविकल्पनिराकरणेन निर्गुणालङ्कारशब्दार्थयोः काव्यत्वम् अपनुदता

कारणं तावत् तत्र वक्तव्यम्। स एव च चारुताहेतुत्वाभावः। एवञ्च चारुताहेतुत्वादेव सगुणालङ्कारशब्दार्थयोः काव्यत्वं, तदभावादेव चान्ययोरकाव्यत्वमिति परिशील्यमाणे प्रथमस्मादपि विकल्पादन्तरङ्गोऽयं द्वितीयः कल्पः। 'अन्यतरवैयर्थ्यत्वाद्वा' इति तृतीयो विकल्पः। एतन्मुखेनैव प्रधानो गुणालङ्कारभेदो महता प्रबन्धेन संसाधितः।

अन्यतरवैयर्थ्यस्यापि कारणं त्रेधा आशङ्कितम्। उभयोरपि चारुताहेतुत्वसाम्यादभेदाद्वा, परस्परव्यावर्तकधर्माभावाद्वा कृतकरत्वाद् वेति। वस्तुतस्तु द्वावेव विकल्पौ भवितुम् अर्हत इति प्रतीयते। तथा हि – कृतकरत्वादिति विकल्पनिरसनावसरे–

"नापि कृतकरत्वादिति तृतीये द्वितीयः। गुणकृतचारुताया अलङ्कारकृतचारुताविलक्षणत्वेन कृतकरत्वाभावात्"। (पृ० 78)

इत्युक्तं तेनैव। एवमेव विचारस्यास्योपसंहारावसरेऽपि–

"इत्थं गुणालङ्कारयोश्चारुताहेतुतायां वैलक्षण्यात् कृतकरत्वाभावेन द्वयोरपि उपादेयत्वं सिद्धम्" इति। (पृ० 79)

एवञ्चेदं ज्ञायते। कृतकरत्वं नाम स्वरूपप्रयोजनाभ्यां भेदशून्यत्वम्। तत्राभेद एव पर्यवस्यति। तथा च 'चारुताहेतुत्वसाम्यादभेदः' इत्यस्त्येव कश्चिद् विकल्पः। तेन चायं नैव भिद्यते। ग्रन्थे त्वभेदनिरसनावसरे–

सत्यपि चारुताहेतुत्वसाम्ये यत्किञ्चिद्धर्मसाम्यस्याभेदाप्रयोजकत्वात् इति। (पृ० 77)

कृतकरत्वनिरसनावसरे च–

"गुणालङ्कारयोश्चारुताहेतुतायां वैलक्षण्यात्"।

(पृ० 79)

इति च समाधानद्वयं प्रतिपादितम्। भासते चोभयोरपि समाधानयोर्व्याघातः। यदि च 'चारुताहेतुत्वसाम्याद् अभेदः' इत्येक एव विकल्पोऽङ्गीक्रियेत, तस्यैव चाभ्युपगमवादरीत्या निराकरणरीत्या च समाधानद्वयमित्यङ्गीक्रियेत, तर्ह्ययं दोषः परिह्रियेत। अपि चैकस्यैव चारुताहेतुत्वसाम्यनिराकरणस्य स्थलद्वये वारद्वयं विधाद्वयेन प्रतिपादनरूपोऽपि दोषोऽपगच्छति। अनुभूयते चायं दोषः पठनावसरे।

अतश्चारुताहेतुत्वसाम्याद् अभेदाद्वा, परस्परव्यावर्तकधर्माभावाद्वा इति द्वावेव विकल्पावित्येव शोभते।

'परस्परव्यावर्तकधर्माभावाद्वा' इति तु द्वितीयविकल्पः –

"समवायवृत्त्या रसोपस्कारकत्वं गुणसामान्यलक्षणम्, संयोगवृत्त्या रसोपस्कारकत्वम् अलङ्कारसामान्यलक्षणम्" (पृ० 77)

इत्यनेन ग्रन्थेन खण्डितः।

धर्मसूरिरेवं स्वमतेन गुणालङ्कारयोर्वैलक्षण्यं प्रतिपाद्यास्मिन् विषये वामनादिप्राचीनालङ्कारिककृतवैलक्षण्यप्रतिपादनं न्यरास्यत्। एतद्विवेचनात् पूर्वमेवावश्यमवगन्तव्यं किञ्चिदन्यद् विद्यते।

### 2. 6.3.1 भोजवामनमतनिराकरणम्

साहित्यरत्नाकरे–

"अत्र केचन भोजराजादयः काव्यव्यवहारप्रवर्तका गुणाः। तच्चारुताहेतवोऽलङ्कारा इति व्यावर्तकधर्ममाहुः। तन्नोपपद्यते।

* * * * *

रीतिरात्मा काव्यस्य इति हि तन्मतम्" (पृ० 77)

इति गुणालङ्कारवैलक्षण्यविचारे तद्बोधकं भोजराजस्य मतं खण्डितं दृश्यते। नैतद्युक्तमाभासते। तथा हि – भोजराजकृतयोः सरस्वतीकण्ठभरणशृङ्गारप्रकाशयोरुभयोरपि कुत्रचिदपि नैवंविधो गुणालङ्कारभेदः कृत उपलक्ष्यते। सरस्वतीकण्ठभरणे तु वामनीयं पद्यद्वयमुदाहृतं भोजराजेन, यथा –

युवतेरिव रूपमङ्गकाव्यं स्वदते शुद्धगुणं तदप्यतीव।
विहितप्रणयं निरन्तराभिस्सदलङ्कारविकल्पकल्पनाभिः।।

यदि भवति वचश्च्युतं गुणेभ्यो वपुरिव यौवनवन्ध्यमङ्गनायाः।
अपि जनदयितानि दुर्भगत्वं नियतमलङ्करणानि संश्रयन्ते।।[142]

इति। सूक्ष्मेक्षिकया परिशील्यमाणे यद्यपि पूर्वोक्तं वैलक्षण्यं भोजेनानुमतम् इत्येव भाति तथापि भोजः केवलम् अनुवक्ता स्याद् अस्य मतस्य। इदंप्रथमतया प्रतिपादकस्तु वामन एव। अतस्तस्यैवैतन्मतप्रतिपादकत्वोक्तिः शोभते न भोजराजस्य। किञ्च 'रीतिरात्मा काव्यस्य' इति हि तन्मतम् इति तच्छब्देन

भोजराजं परामृश्य रीत्यात्मवादं प्रास्तौत्। इयञ्च साक्षाद् वामनस्यैवोक्तिः। अत इदम् अवगम्यते यद् गुणालङ्कारवैलक्षण्यविषये यद्यपि भोजोऽपि वामनानुयायी तथापि धर्मसूरेः 'भोजराजादय आहुः' इत्युक्तिर्न तन्मूलिका, किन्तु भ्रममूलिकैवेति।

अत एवान्यत्रापि 'तांश्च (माधुर्यौजःप्रसादान्) अन्यान् सप्त भोजाद्या' इति भोजीयत्वेन दशगुणवादः प्रस्तुतः। वस्तुतस्तु भोजराजश्चतुर्विंशतिगुणवादी। विद्यानाथमतत्वेन ये तावच्चतुर्विंशतिगुणाः प्रदर्शिताः साहित्यरत्नाकरे ते भोजेन प्रतिपादिता एव। एवञ्च दशगुणवादी वामन एव न भोजः। अपि च 'शृङ्गारमेव रसनाद् रसमामनाम' इति भोजसम्मतस्य तस्य भावम् अनवगाहमानाः सुदीर्घेण प्रबन्धेन एतत्तिरस्कुर्वाणा भ्रान्ता एव सर्वेऽप्यर्वाचीनालङ्कारिकाः। धर्मसूरिरप्यत्र स्वीयं भ्रान्तिभागं जग्राह। तदेतदधिकृत्य यत्किञ्चित् तत्रैव विवेचयिष्यते।

अथ पूर्वोक्तवामनमतानुवदनेऽप्यस्ति कश्चिद् अवधेयोंऽशः। तथा हि -

"काव्यशोभायाः कर्तारो धर्मा गुणाः। तदतिशयहेतवस्त्वलङ्काराः"[143]

इत्येते वामनसूत्रे। न तु 'काव्यव्यवहारप्रवर्तका गुणाः। तच्चारुताहेतवोऽलङ्काराः' इति। परन्तु मम्मटेन काव्यप्रकाशे मतस्यास्य खण्डनावसरे एतादृशो वामनसूत्रानुवादः सूचितः। वामनसूत्रं यथायथम् अनूद्य-

> किं समस्तैर्गुणैः काव्यव्यवहारः, उत कतिपयैः।.....इत्यादौ विशेषोक्तिव्यतिरेकौ गुणनिरपेक्षौ काव्यव्यवहारस्य प्रवर्तकौ"[144]

इत्यादिकथनात्। स्पष्टञ्चाभिहितं काव्यप्रदीपकारेण-

"काव्यशोभा काव्यव्यवहारनिमित्तं कश्चिद् अतिशयः।"[145]

इति। एवमेव 'तदतिशयहेतवस्त्वलङ्काराः' इत्यस्यैवार्थतोऽनुवादः 'तच्चारुताहेतवस्त्वलङ्काराः' इति। एवम् एकावलीकारोऽपि वामनसूत्रे यथायथम् अनूद्याप्यन्ते-

"तस्माद् अलङ्कार एव काव्यव्यवहारप्रयोजकः"।[146]

इति निरणयत्।

एवं वामनाभिमतमततया अनूदितम् इदं मतं "तत् किं सर्वे गुणास्तत्प्रवर्तका उत कतिपये" इत्यादिना विकल्प्य दूषितम्। तदेतद् एवमेव दृश्यते एकावल्यामपि। परन्तु द्वावंशावत्र धर्मसूरिणा नूत्नतया न्यरूपिषाताम्।

**तत्र प्रथमः।** सर्वेषां गुणानां काव्यव्यवहारप्रयोजकत्वे गौडीपाञ्चाल्योर-व्याप्तिः। तयोरसमग्रगुणत्वात्। अथ कतिपयानां तर्हि 'अद्रावत्र प्रज्वलत्यग्निरुच्चैः' इत्यादिषु केवलौजोघटितेष्वतिव्याप्तिश्च भवतीत्यभिधीयते। तदेतौ विकल्पौ स्वीये गुणसामान्यलक्षणेऽतिदिश्य खण्डितौ 'रसातिरिक्ते गुणानाम् अवर्तनेनातिव्याप्तेरभावात्' (पृ० 77) इति।

इदमत्र हृदयं धर्मसूरेः। 'रीतिरात्मा काव्यस्य' इति वामनादीनां मतम्। आत्मनश्चाभावे नास्ति व्यवहारस्तस्य पदार्थस्य। मरणानन्तरमपि देवदत्तकायस्य यो व्यवहारः 'देवदत्त' इति स त्वौपचारिक एव। एवञ्च व्यवहारप्रवर्तकत्वम् आत्मन एवोच्यमानं युज्यतेतराम्। तिस्रश्च रीतयः। तिस्रोऽपि न समानगुणाः। गौडीपाञ्चाल्योः परिमितन्यूनगुणवत्त्वात्। एवञ्च केवलैकगुणककाव्ये कस्या अपि रीतेरनवकाशाद् आत्मनोऽभावात् काव्यव्यवहारस्याकाव्यभूते पद्येऽतिव्याप्तिः सम्भवति। सिद्धान्तमते तु नैवं दोषो विद्यते। रसोपस्कारकत्वमेव गुणानां प्रतिपाद्यते न तु काव्यव्यवहारप्रवर्तकत्वम्। रसश्चैकैकेनापि गुणेन प्रत्येतुं शक्यत एव। किञ्च रसगुणयोः समवायसम्बन्धाङ्गीकाराद् विना रसं गुणानाम् अवस्थितिरेव न सम्भवति। अतश्च 'अद्रावत्र' इत्यादिकाव्ये यदि कश्चन गुणोऽङ्गीक्रियेत, अवश्यमेवाङ्गीक्रियेत कोऽपि रसो गुणेन नित्यसम्बद्धः। अतश्चातिव्याप्तिर्नीरसे काव्ये न भवत्येव। स एव च रसः काव्यव्यवहारप्रयोजको भवतीत्यन्यदेतत्।

**अथ द्वितीयः।** एवं रसस्यैव काव्यव्यवहारप्रवर्तकत्वसम्मत्यैव गुणानाम् अलङ्काराणाञ्चैकरूप्येण काव्यव्यवहारप्रवर्तकत्वं निरस्तं धर्मसूरिणा। एकावल्यां तु गुणानां काव्यव्यवहारप्रवर्तकत्वं निरस्य-"तस्माद् अलङ्कार एव काव्यव्यवहारप्रयोजकः" इत्यलङ्काराणां काव्यव्यवहारप्रवर्तकत्वं प्रतिपादितम्[147]। इदमत्रावधेयम्। रसकाव्ये काव्यव्यवहारः सर्वेषामपि सम्मत एव। तथा च निरलङ्कारस्थले काव्यव्यवहाराङ्गीकरणाय रसस्य तावत् तत्प्रवर्तकत्वम् अवश्यमेव अङ्गीकरणीयम् एकावलीकारादिभिरपि। परन्तु नीरसालङ्कारकाव्येऽपि काव्यव्यवहारोपलब्धेरलङ्कारस्य तत्प्रवर्तकत्वं तेनाभिहितमिति भाति। वस्तुतस्तु तादृशपद्ये काव्यव्यवहारस्य गौणत्वं ध्वनिकारादिभिरप्यङ्गीकृतमिति साधीय एव धर्मसूरेर्मतं यदलङ्कारोऽपि न काव्यव्यवहारप्रवर्तक इति।

इदं तु तावदत्र चिन्त्यं भवति। 'एवमेवालङ्कारलक्षणमपि दूषणीयम्' इति विद्यते साहित्यरत्नाकरे (पृ० 77)। एवञ्च यथा गुणानां सम्भूय प्रवर्तकत्वेऽव्याप्तिः कतिपयैस्तत्प्रवर्तकत्वेऽतिव्याप्तिश्च निरूपिते, एवमेव अलङ्कारा अपि किं सम्भूय तत्प्रवर्तका उत प्रत्येकमिति विकल्प्य दूषणीयमित्येतदतिदेशस्यार्थः फलति। न तावत् शक्यमेवं दूषयितुम्। सर्वेषाम् अलङ्काराणां सम्भूय तत्प्रवर्तकत्वेऽसम्भवस्य युक्तत्वेऽप्येकस्यैवालङ्कारस्य तत्प्रवर्तकोक्तावतिव्याप्तेरभावात्। यतोऽलक्ष्यत्वेन निरूपितेऽपि स्थले यद्यलङ्कारो भवति तर्हि तस्य काव्यत्वस्यैवाङ्गीकारात्। यत्र तु 'गौरिव गवय' इत्यादिष्वतिप्रसङ्गः पृच्छ्येत तत्रापि सर्वालङ्कारिकाङ्गीकृतालङ्कारलक्षणान्तर्भूतस्य चमत्कारवत्त्वरूपलक्षणांशस्यैवाभावाद् अलङ्कारत्वमेव तस्य न सिद्ध्यति, कुतः काव्यत्वप्रसक्तिः। अतः कथं नामैतदतिदेशदूषणं सङ्गच्छत इति।

वस्तुतस्तु न रसो न गुणा नाप्यलङ्काराः काव्यव्यवहारस्य प्रवर्तकाः। परन्तु समेषा मूलभूतश्चमत्कार एव। लौकिका एवार्थाः कविप्रतिभाविषयीभूता अलौकिकतां यदापद्यन्ते तदलौकिकत्वसम्पादितातिशयितत्वमेव तयोः शब्दार्थयोः काव्यव्यवहारे प्रयोजकं भवति। सत्येव चास्मिन्नतिशयितत्वे रसो वा गुणो वाऽलङ्कारो वा तत्र भवितुमर्हति। नान्यथा।

इदं त्वत्रान्ते वक्तव्यमवशिष्यते यदेतद् वामनमतखण्डनं मम्मटादीनां तन्नैव युक्तिसहमिति।

**'काव्यशोभायाः कर्तारो धर्मा गुणाः'**

इति वामनसूत्रस्य-

**'काव्यव्यवहारप्रवर्तका गुणाः'**

इति स्वयं व्याख्यामुपकल्प्य तत्र विकल्प्य खण्डनं न तावद् अङ्गीकारक्षमं सहृदयानाम्। मम्मटानन्तरकालिकानां तथैव तदनुसरणं तु तेषां पक्षैकप्रवणतां ध्वनयति, न तु प्राथमिकविमर्शनीयांशपरिग्रहणैकप्रवणतामिति।

### 2. 6.4 गुणसंख्याविचारः

मम्मटादयो माधुर्यौजःप्रसादा इति त्रीनेव गुणान् अङ्ग्यकुर्वन्। वामनो दण्डी च दशगुणान् स्वीचक्रतुः। ते च श्लेषः, प्रसादः, समता, माधुर्यम्,

सुकुमारता, अर्थव्यक्तिः, उदारत्वम्, ओजः, कान्तिः, समाधिरिति। विद्यानाथस्तु चतुर्विंशतिगुणान् पर्यजीगणत्। यथा –

श्लेषः प्रसादः समता माधुर्यं सुकुमारता।
अर्थव्यक्तिरुदारत्वं तथा कान्तिरुदात्तता।।
ओजः सुशब्दता प्रेयानौर्जित्यमथ विस्तरः।
समाधिस्सौक्ष्म्यगाम्भीर्ये संक्षेपो भाविकं तथा।।
सम्मितत्वं तथा प्रौढी रीतिरुक्तिर्गतिस्तथा।
चतुर्विंशतिरेते स्युर्गुणाः काव्यप्रकाशकाः।।[148] इति।

एते त्रयः पक्षा गुणसंख्याविषये नितान्तं प्रधानाः। एतदतिरिक्ता अनेके वादा अनेकैरालङ्कारिकैः प्रस्तुता वर्तन्ते। गुणसम्बन्धिविचारेषु महत् स्वातन्त्र्यम् अवलम्बितं तत्तदाचार्यैः। धर्मसूरिरपि गुणसंख्याविषये मतानेतान् उपस्थाप्य स्वमतप्रकटने प्रथमं किञ्चिद् अस्पष्टनिर्णयो भूत्वा अप्यन्ते गुणत्रयवादं निरचिनोत्।

धर्मसूरिरस्मिन् विचारे मध्ये गुणनवकत्ववादं प्रस्तौति। स तु वादः कैरङ्गीकृत इति न ज्ञायते। तथा हि – विद्यानाथप्रतिपादितान् चतुर्विंशतिगुणान् परिगणय्य कांश्चिद् दोषाभावरूपतया कांश्चित्त्वितरगुणालङ्कारान्तर्भावाच्च पातयित्वा–

ओजःप्रसादमाधुर्याण्युक्तिकान्तिसुशब्दताः।
गाम्भीर्यं भाविकं रीतिमूचुः केचिद् गुणान् नव।। (पृ० 81)

इत्यकथयत्। यद्यप्यरीतिमदाख्यदोषप्रस्तावे भोजराजो विशिष्य नवगुणान् सम्भूय प्रास्तौत्, तथापि ते नवगुणा धर्मसूरिणा प्रदर्शितकारिकायां पठितेभ्यो भिन्नाः। भोजेन प्रतिपादितास्ते समाधिहीना वामनीया दश। पूर्वं पठितास्त्वंशतस्ततो भिद्यन्ते। प्राचीनालङ्कारिकेष्वन्यैः कैरपि न तावत् नव गुणाः प्रतिपादिताः। तदेतन्मतं धर्मसूरेः किं मूलकम्? केचिद् इत्युक्तम्, के ते? इति प्रश्नोऽनुत्तरित एव भवति।

एवमेव विद्यानाथमतत्वेन चतुर्विंशतिगुणान् पठित्वा तत्र माधुर्यौजःप्रसादानां त्रयाणां भावरूपत्वमितरेषु केषांञ्चिद् भावरूपत्वं केषाञ्चित्त्वभावरूपत्वमिति गुणविभजनमपि कृतं साहित्यरत्नाकरे (पृ० 80)। समर्थितं चैवंविधमुभयरूपत्वं गुणानाम्–

"उभयेषामपि गुणत्वं युक्तम्। न हि काणादतन्त्र इव गुणत्वं भावत्वनियतम् अलङ्कारशास्त्रे सर्वसम्प्रतिपन्नम्। उपस्कारकत्वमात्रेण गुणत्ववादात्।। इति। (पृ० 80)

तदेवं माधुर्यौजःप्रसादातिरिक्तगुणानां भावरूपत्वाभावरूपत्वेन विभजनम् अभावरूपत्वेऽपि गुणत्वसमर्थनञ्च धर्मसूरेः स्वोपज्ञमेव। न तु प्राचीनैः कैश्चिदपि कृतपूर्वमित्याभाति।

एवञ्चतुर्विंशतिगुणानां केषाञ्चिद् अन्येष्वन्तर्भावकथनावसरे धर्मसूरिणा प्रतिपादितम्–

"अनेकपदानामेकपदप्रतीतिविषयत्वं श्लेषः। अयं तु शब्दश्लेषेऽन्तर्भाव्यत इति न गुणः" (पृ० 80) इति।

श्लेषस्य प्रतापरुद्रीयोदाहरणन्तु–

श्रीमत्काकतिवीररुद्रमखिलक्ष्मापालमौलिस्फुर–
न्माणिक्यद्युतिरञ्जिताङ्घ्रिमखिलप्रख्यातशौर्योदयम्।
विश्वत्राणविनिद्रमक्षयगुणज्योत्स्नावितानावृत–
व्योमागारमनल्पवैभवममुं स्तोतुं वयं नेश्महे।।[149] इति।

समन्वितं च –

"अत्र पाठसमये पदानामेकपदवदवभासमानत्वात् श्लेषः"[150] इति। दण्ड्याचार्योऽपि – "शिलष्टम् अस्पष्टशैथिल्यम्" इति श्लेषलक्षणम् अभ्यधात्[151]। एवञ्च नानार्थकपदशून्यस्य भङ्गेनाप्यर्थान्तरप्रतिपादकशब्दशून्यस्य, पाठधर्मत्वेन उदाहृतस्यास्य गुणस्य शब्दश्लेषे कथम् अन्तर्भावः शक्यवचनः? एवञ्चा-विमृश्योक्तिरेषा धर्मसूरेरिति प्रतिभाति। अत एव एकावल्याम् –

'श्लेषः समाधिरौदार्यमपि स्वीकृतमोजसा'[152]। इति।

काव्यप्रकाशे च–

'बहूनामपि एकपदवद्भासनात्मा यः श्लेषः..... तेषाम् ओजसि अन्तर्भावः।'[153]

इति च ओजस्येवास्यान्तर्भावः प्रतिपादितः। स इतोऽपि श्रेयान्।

एवं विद्यानाथप्रोक्तेषु चतुर्विंशतिगुणेषु कांश्चिद् यथोचितं गुणान्तरे-

ष्वन्तर्भाव्य कांश्चिच्च पातयित्वा नवगुणपक्षम् उपस्थाप्य तन्मतेन तान् नवगुणान् उदाजहार। अनन्तरं तु स्वीयं मतमत्रैवमुपसंहृतम् –

एवं सूक्ष्मधियां मार्गमाश्रित्योदाहृतं मया।
माधुर्यौजःप्रसादास्तु सौशब्द्येन समन्विताः।।

गुणाश्चत्वार एवेति मम सूक्ष्मतरेक्षितुः।
त्रय एवेति वात्यर्थं मनसे रोचते मतम्।।

(पृ०82)

## 2.7 शब्दालङ्कारविचारः

अत्र एकावल्याम् अलङ्कारसर्वस्वम् अनुसृत्य पञ्च शब्दालङ्कारा अधो निर्दिश्यमानेन क्रमेण निरूपिताः[154]। पुनरुक्तवदाभासः, छेकानुप्रासः, वृत्त्यनुप्रासः, यमकम्, लाटानुप्रासश्च। प्रतापरुद्रीये तु एत एवालङ्कारा भिन्नेन क्रमेण निरूपिताः[155]। स च क्रमः छेकानुप्रासः, वृत्त्यनुप्रासः, यमकम्, पुनरुक्तवदाभासः, लाटानुप्रासश्चेति।

अत्रेदमवधेयम्–पञ्चानामेषां शब्दालङ्काराणां पौनरुक्त्यरूपं साधर्म्यं वर्तते। पौनरुक्त्यमेतत् प्राधान्येन त्रेधा विभक्तुं शक्यते। शब्दपौनरुक्त्यम्, अर्थपौनरुक्त्यम्, शब्दार्थोभयपौनरुक्त्यं चेति। तत्र प्रथमस्यापि प्रभेदस्य द्वौ प्रकारौ केवलव्यञ्जनपौनरुक्त्यं, स्वरसहितव्यञ्जनपौनरुक्त्यं चेति। केवलस्वर-पौनरुक्त्यस्य चमत्काराभावान्न तद्गण्यते। केवलव्यञ्जनपौनरुक्त्यस्यापि स्थाननियमतदभावाभ्यां द्वौ प्रकारौ। एवञ्च –




एवञ्च प्रतापरुद्रीयादृतः क्रमः पौनरुक्त्यविभागम् आश्रित्य कृत इति

समुचितो भाति। सर्वस्वकारस्त्वर्थपौनरुक्त्यात् शब्दपौनरुक्त्यस्य पूर्वनिरूपणस्य उचितत्वेऽप्यर्थपुनरुक्तिमूलकं पुनरुक्तवदाभासमेवोद्धयदिचिरन्तनप्रसिद्धिम् अनुरुध्य न्यरूपयत्। ततः शब्दपौनरुक्त्यमूलकान्, अनन्तरं च शब्दार्थोभयमूलकं न्यरूपयत्। शब्दालङ्कारविभागविषये लक्षणादिप्रणयनविषये च एकावलीकारः सर्वस्वकारमेवानुसरति। पुनरुक्तवदाभासस्य प्रथमनिरूपणे एकावलीकृत औचित्यन्तु वर्तते। शब्दालङ्कारनिरूपणपरात् सप्तमोन्मेषात् पूर्वं षष्ठोन्मेषे तेन दोषा विविधा लक्षिताः प्रदर्शिताश्च। तथा च प्ररूढायाः पुनरुक्तेः पौनरुक्त्ये एव विश्रान्तिं गच्छन्त्या दोषत्वं यथा न तथा आमुखमात्रावभासमानपुनरुक्तिकस्य पुनरुक्तवदाभासस्य दोषत्वं किन्त्वलङ्कारत्वमेव। तथा च दोषप्रकरणानन्तरं शब्दालङ्कारान् निरूपयिष्यतो विरोधसङ्गत्या पुनरुक्तवदाभासस्यैवोपस्थितिः। अत एव विरोधसङ्गतेः प्रशमनानन्तरं शब्दपौनरुक्त्यमूला एव शब्दालङ्कारास्त्रयो निरूपिताः प्रकरणसङ्गत्या। प्रतापरुद्रीये साहित्यरत्नाकरे च पूर्वप्रकरणस्य गुणनिरूपणपरत्वात् नास्ति पुनरुक्तवदाभासस्य प्रथमं निरूपणे सङ्गतिस्तयोः। अत एव प्राय एकावलीकारम् अनुसरतोऽपि धर्मसूरेस्तदीयक्रमविपर्यय आश्रयणीयः संवृत्तः।

साहित्यरत्नाकरे आश्रितस्तु क्रमोऽत्यन्तं विलक्षणः। तत्र क्रमेण छेकवृत्त्यनुप्रासौ, लाटानुप्रासः, पुनरुक्तवदाभासः, यमकम् इत्येते अलङ्कारा निरूपिताः। एवञ्च पौनरुक्त्यप्रयुक्तः प्राचीनानां शब्दालङ्कारविभागो धर्मसूरिणा नाङ्गीकृत इति भाति। अङ्गीकरणे वा सङ्गतिप्रदर्शनादिष्वत्यन्तं जागरूको धर्मसूरिः क्रमम् अमुं किमिति परिजह्यात्।

अत इदम् अत्र विभाव्यते–

"वृत्तिस्तु रसविषयो व्यापारः। तद्वती पुनः वर्णरचना इह वृत्तिः। तदुपलक्षितोऽयमनुप्रासः" इत्यलङ्कारसर्वस्वकारेणाभिधानात्[156] तथा प्रसिद्धेश्च वृत्त्यनुप्रासस्य रसप्रतीतौ यमकाद्यपेक्षयाऽन्तरङ्गत्वं निर्विवादम्। तथैव छेकानुप्रासस्यापि रसाद्यनुगतत्वं प्रसिद्धमेव। तदुक्तं विद्याचक्रवर्तिना–

> प्रकृष्टो वर्णविन्यासो रसाद्यनुगतो हि यः।
> सोऽनुप्रासः स च छेकवृत्त्युपाधिवशाद् द्विधा।।[157] इति।

अतो रसप्रतीतावन्तरङ्गत्वाद् वृत्त्यनुप्रासः प्रथमं लिलक्षयिषितः। तत्रापि संख्यानियमवतः छेकानुप्रासस्य भावरूपत्वात् प्रथमं, तदभाववतो वृत्त्यनुप्रासस्य

तदनन्तरम् अनुप्रासरूपत्वसाम्यात्, विधान्तरेणात्यन्तं विप्रकृष्टस्यापि लाद्यनुप्रासस्य तदनन्तरं च निर्देशो युज्यते। रसप्रतीतावत्यन्तानुपयोगित्वज्ञापनाय यमकस्यान्ते निरूपणम्।

"प्रायशो यमके चित्रे रसपुष्टिर्न दृश्यते"।[158]

इत्याद्येकावलीकारादिवाक्यैरानन्दवर्धनाचार्यनिषेधेन च यमकस्य रसप्रतीताव-नुपयोगित्वं प्रत्युतान्तरायजनकत्वं प्रसिद्धमेव। अनुप्रासानाम् अनन्तरं यमकात् पूर्वं च पुनरुक्तवदाभासस्योक्ती रसप्रतीतावपि तस्य माध्यस्थ्यमेव सूचयतीति।

पूर्वोक्तानां पञ्च शब्दालङ्काराणां निरूपणानन्तरं धर्मसूरिरनेकविधान् चित्रालङ्कारान् न्यरूपयत्, ते च–

1. चक्रबन्धः
2. गोमूत्रिकाबन्धः
3. नागबन्धः
4. अष्टदलपद्मबन्धः
5. षोडशदलपद्मबन्धः
6. मुरजबन्धः
7. छुरिकाबन्धः
8. पादार्धभ्रमकम्
9. सर्वतोभद्रबन्धः
10. खड्गबन्धः
11. हलबन्धः
12. चापबन्धः
13. गुच्छबन्धः
14. मत्स्यबन्धः
15. एकाच्कसर्वलघुनिरोष्ठ्यम्
16. निस्तालव्यम्
17. निष्कण्ठ्यम्
18. निर्दन्त्यमूर्धन्यान्तस्थोष्मकम्
19. द्व्यक्षरम्
20. एकाक्षरम्
21. सर्वश्लोकयमकम्

## 2.8 अर्थालङ्कारविचारः

सप्तमे तरङ्गे धर्मसूरी रसवदाद्यलङ्कारान् विना सप्तत्यलङ्कारान् निरूपयामास। तन्मध्ये द्वावलङ्कारौ ऐदम्प्राथम्येनानेनैव प्रतिपादितौ। तौ च युक्त्यलङ्कारः, अनुकल्पालङ्कारश्च। द्वयोरनयोः सुगमं स्वरूपं ग्रन्थ एव स्पष्टीकृतम् अस्ति। इतरेष्वलङ्कारेषु प्रायो विचारः स्वरूपमात्रावबोधको भवति, न तु विस्तृतविमर्शनारूपः। एवञ्च संग्रहेण सिद्धविषयसंग्रथनदृष्टिरेवात्रापि धर्मसूरे-र्भूयोऽनुभूयते। एकस्यालङ्कारस्येतरालङ्कारवैलक्षण्यनिरूपणादिषु तु भूय एकावलीम् अनुसरति। कुत्रचित्तु भिद्यते ततः। एवं पूर्वाचार्यानुसरणेऽप्यात्मनः स्वातन्त्र्यं परीक्षणकुशलत्वञ्चाप्रतिबन्धं तेन रक्षितम् इति वक्तव्यं भवति।

परिशीलनसौविध्यार्थम् अलङ्काराणामेषां त्रेधा विभागः कृतोऽस्माभिः। तत्र प्रथमतः केवलस्वरूपनिरूपणोदाहरणैकप्रयोजनाः सम्भवत एकोनत्रिंश-दलङ्कारा भवन्ति यत्र खलु एकावलीप्रतापरुद्रीयानुसारेण लक्षणानि निबध्यन्ते

उदाह्रियन्ते च। द्वितीयतः क्रियमाणोऽपीतरालङ्कारवैलक्षण्यादिविषयकः प्रभेदविषयकश्च विचारः सर्वात्मना एकावल्या अनुवादात्मको भवति। अत्र च सम्भवतः षोडशालङ्कारा भवन्ति।

एतौ द्विविधावप्यलङ्कारावधिकृत्य न किञ्चिद् वक्तव्यं विद्यते। तथा हि- प्रथमसमूहे नैवास्ति विचारस्यावकाशः। एवं द्वितीये सन्नप्यवकाश एकावल्यनुवदनात्मकत्वात् सुलभावगम इति न विमृष्टव्यमस्ति।

तृतीयस्तु- एकावल्यामनुक्ता अप्यंशा विमृष्टाः। यत्र च एकावल्या भिद्यतेऽयं तत्र सर्वस्वं तद्व्याख्यां विमर्शिनीं, काव्यप्रकाशं, प्रतापरुद्रीयं वा अनुसरति। अत्र सम्भवतः षड्विंशतिरलङ्कारा अन्तर्भवन्ति। अत्रापि स्वरूपविचारादपीतरालङ्कारवैलक्षण्यप्रतिपादन एव मतभेदानाम् आधिक्यं द्योतते। कुत्रचित्तु प्रभेदपरिगणने। एतत्प्रभेदान्तर्गतानप्यलङ्कारेषु सम्यक् परीक्ष्या-त्यन्तविलक्षणविचारसहितान् कांश्चिदलङ्कारान् स्थालीपुलाकन्यायेन विमृशामः।

इदं त्वत्रावधेयं यद् धर्मसूरेर्विविधग्रन्थशिक्षणकौशलं लाघवपरि-ज्ञानचातुर्यं चात्र स्पष्टं भासते। अत्यन्तसङ्कीर्णेऽलङ्कारतत्त्वे स्वविवेचनपाटवेन सम्यक् परीक्ष्य बहुतरविचारान् विना वक्तव्यमर्थं साक्षाद्वक्ति धर्मसूरिरस्मिन् तरङ्गे।

## 2.8.1 अलङ्कारपेटिकाः

धर्मसूरिः सप्तमे तरङ्गेऽर्थालङ्कारान्निरूपयिष्यन् आदौ तानलङ्कारान् नवधा विभजते-

"इह केचिद् उत्प्रेक्षादयोऽलङ्कारा अध्यवसायमूलाः। विभाव-नादयो विरोधमूलाः। परिसंख्यादयो न्यायमूलाः। परिवृत्त्यादयो लोकव्यवहारमूलाः। तर्कन्यायमूलाः काव्यलिङ्गादयः। शृङ्खलावैचित्र्यमूलाः कारणमालादयः। अपह्नवमूला व्याजोक्त्यादयः। विशेषणवैचित्र्यमूलाः परिकरादयः। साधर्म्यमूला उपमादयः।" (पृ० 100)

साधर्म्यमूलादयोऽपि पुनस्त्रिधा विभक्ताः -

"तत्साधर्म्यं त्रिविधम्-भेदप्रधानम्, अभेदप्रधानम्, भेदाभेदप्रधानं चेति। तत्र भेदप्रधानसाधर्म्यगर्भा व्यतिरेकादयः। अभेदप्रधानसाधर्म्यगर्भा रूपकादयः। भेदाभेदप्रधानसाधर्म्यगर्भास्तूपमादयः"। इति। (पृ० 100)

साधर्म्यगतावान्तरप्रभेदैः सह एकादशालङ्कारविभागाः सिद्ध्यन्ति। एतद्विभागानेव 'पेटिका' इति पदेन धर्मसूरिर्व्यवहरति। प्रतापरुद्रीयेऽप्येत एवैकादशविभागाः सन्ति। तत्र भेद-अभेद-भेदाभेदसाधर्म्यमूलास्त्रयः प्रभेदा आदौ प्रदर्शिताः। अनन्तरम् अध्यवसायमूलादिकमारभ्य साहित्यरत्नाकरोक्तक्रमेणैव प्रदर्शिताः[159]।

अलङ्काराणां परस्परसादृश्यप्रयुक्तोऽवान्तरविभागविचार ऐदम्प्राथम्येन रुद्रटेन कृतः। सः स्वाभिमतान् सप्तपञ्चाशदर्थालङ्कारान् वास्तव-औपम्य-अतिशय-श्लेषाख्येषु चतुर्षु वर्गेष्वन्तर्भावितवान्[160]। अनन्तरं रुय्यकः स्वाभिमतान् एकोनसप्तत्यर्थालङ्कारान् प्राधान्येन सप्तधा विभज्य केषुचिद् विभागेष्ववान्तरविभागान् प्रादर्शयत्[161]।

साहित्यरत्नाकरे सर्वेषु प्रभेदेषु प्रतिनिधित्वेन एकम् अलङ्कारं नाम्ना निर्दिश्य इतरे तत्प्रभेदान्तर्गता अलङ्कारा आदिशब्देन संगृहीताः। तत्रादिशब्दसंगृहीता अलङ्कारा ये प्रतापरुद्रीये पठितास्त एव धर्मसूरिणा सञ्जिहीर्षिता इति निश्चप्रचम्। ते अलङ्कारा अधस्तात् नामग्रहणपूर्वकं निरूप्यन्ते।

(1) अध्यवसायमूलाः - उत्प्रेक्षा, अतिशयोक्तिः।

(2) विरोधमूलाः - विभावना, विशेषोक्तिः, विषमः, चित्रम्, असङ्गतिः, अन्योन्यम्, व्याघातः, अतद्गुणः, भाविकम्, विशेषः।

(3) (वाक्य)न्यायमूलाः - परिसंख्या, यथासंख्यम्, अर्थापत्तिः, विकल्पः, समुच्चयः।

(4) लोकव्यवहारमूलाः - परिवृत्तिः, प्रत्यनीकम्, तद्गुणः, समाधिः, समः, स्वभावोक्तिः, उदात्तम्, विनोक्तिः।

(5) तर्कन्यायमूलाः - काव्यलिङ्गम्, अनुमानम्, अर्थान्तरन्यासः।

(6) शृङ्खलावैचित्र्यमूलाः - कारणमाला, एकावली, मालादीपकम्, सारः।

(7) अपह्नवमूलाः - व्याजोक्तिः, वक्रोक्तिः, मीलनम्।

(8) विशेषणवैचित्र्यमूलाः - परिकरः, समासोक्तिः।

(9) भेदप्रधानसाधर्म्यमूलाः - व्यतिरेकः, तुल्ययोगिता, निदर्शना, दृष्टान्तः, प्रतिवस्तूपमा, सहोक्तिः, प्रतीपम्, दीपकम्।

(10) अभेदप्रधानसाधर्म्यमूलाः - रूपकम्, परिणामः, सन्देहः, भ्रान्तिमान्, उल्लेखः, अपह्नवः।

(11) भेदाभेदप्रधानसाधर्म्यमूलाः-उपमा, अनन्वयः, उपमेयोपमा, स्मरणम्।

एवं पञ्चपञ्चाशदर्थालङ्कारा यथायोगम् एकादशसु विभागेष्वन्तर्भाविताः। पेटिकारूपेणालङ्काराणां विभागः, तत्स्वरूपं, तत्क्रमिकैतिहासिकविकासं, तेषां परस्परसाधर्म्यवैधर्म्यमित्येतत् सर्वमालङ्कारिकाणामुपकाराय कल्पते।

षट्षष्ट्यर्थालङ्कारान् निरूप्यापि विद्यानाथः केवलं पञ्चपञ्चाशदलङ्काराणामेव विभागं पूर्वोक्तप्रकारेणाकरोत्। एकादशालङ्कारा विद्यानाथेन न कुत्रचिदन्तर्भाविताः। ते च-(1) सामान्यम् (2) अधिकम् (3) श्लेषः (4) अप्रस्तुतप्रशंसा (5) पर्यायोक्तम् (6) उत्तरम् (7) पर्यायः (8) सूक्ष्मः (9) आक्षेपः (10) व्याजस्तुतिः (11) विरोधः।

धर्मसूरिः प्रदर्शितैकादशालङ्काराः प्रतापरुद्रीयानुक्तावपि एकावलीप्रतिपादितौ द्वौ प्रश्नोत्तरिकातत्करनामकावलङ्कारौ, स्वेन चैदम्प्राथम्येन कल्पितौ द्वौ युक्ति-अनुकल्पालङ्कारावित्याहत्य पञ्चदशालङ्कारान् पूर्वोक्तेषु एकादशप्रभेदेषु नान्तर्भावितवानिति स्वीकर्तव्यम्। उभयोरपि धर्मसूरिविद्यानाथयो- रयमभिप्रायः स्याद् यदेतेऽलङ्काराः परस्परसाधर्म्यवन्तो न भवन्तीति स्वतन्त्रतयैव स्वीकर्तव्या इति।

## 2.8.2 उपमा

धर्मसूरेरुपमालक्षणम्-

> साधर्म्यं लोकसिद्धेन भिन्नेन कविसम्मतम्।
>
> यदैकवाक्यवाच्यं स्यात् प्रकृतस्य तदोपमा।। (पृ० 100)

विद्यानाथलक्षणाद्[162] अस्मिन् 'धर्मत' इति दलस्य परित्याग एव विशेषः। विद्यानाथलक्षणे धर्मत इति पदस्य व्यावर्त्यः श्लेषालङ्कारः। धर्मश्च गुणक्रियारूपः। यत्र तु श्लिष्टविशेषणस्थले उपमानोपमेययोर्गुणक्रियारूपधर्मसाम्यं विना केवलं

शब्दसाम्यं भवति तत्र श्लेषालङ्कार इति विद्यानाथमतम्। मङ्खकादीनामप्यय-मेवाभिप्रायः। यथा -

नीराजयन्त्यन्ध्रपुरीरमण्यः प्रदीपजालैर्वरवीररुद्रम्।
चन्द्रानना गोत्रपतिं रमण्यस्तारागणैर्मेरुमिव स्फुरद्भिः ।।[163]

इत्यत्र विशेषणार्थस्य गुणरूपस्य न साम्यमस्ति। गोत्रशब्देन राजपक्षे कुलप्रतीतिः, मेरुपक्षे पर्वतप्रतीतिः। तथा चन्द्रानना इति स्त्रीपक्षे चन्द्र इव आननं यासामिति समासः। रात्रिपक्षे चन्द्र एव आननं यासामिति शब्दमात्रसाम्यमेवास्ति, न तु गुणसाम्यम्। अतोऽत्र श्लेष एवालङ्कार इति तन्मतम्।

विद्याधरस्तु गुणक्रियासाम्यं यत्र श्लिष्टशब्देन सम्पाद्यते तत्राप्युपमा-लङ्कारमेवाङ्गीकरोति। प्रदर्शितक्रमेण गोत्रपतिमित्यादिशब्देषु यद्यपि नास्ति गुणसाम्यं तथापि भेदेऽभेदरूपातिशयोक्त्या तत्सुसम्पादमिति तदाशयः। उक्तञ्च-

"श्लिष्टशब्दोपादानेऽप्यत्र न श्लेषः। तस्य धर्मरूपतयाङ्गत्वात्। श्लिष्टशब्दोपात्तयोर्वस्तुतो भिन्नयोरेव धर्मयोरिहैकरूपतयाऽवगतिर्भेदे सत्यभेद इत्येवंरूपातिशयोक्तिमहिम्ना इति श्लेषप्रतिभोत्थापिता-तिशयोक्त्यनुप्राणिता इयमुपमेति मन्तव्यम्"[164] इति।

मल्लिनाथोऽपि तरले श्लेषोपमयोरङ्गाङ्गिभावम् अत एव चाप्रधानप्रधान-भावञ्च सम्यक् समर्थितवान्। विद्याधरस्य धर्मरूपतया इत्यमुं शब्दं च रुचिरं व्याख्यातवान् -

"धर्मः समानधर्मं रूपयति=सम्पादयतीति धर्मरूपः। तस्य भावस्तत्ता। तयेत्यर्थः"। इति।

एवञ्च श्लिष्टविशेषणस्थलेऽप्यङ्गत्वात् श्लेषोऽप्रधानम्, अङ्गित्वाच्चोपमा प्रधानमिति तयोराशयः[165]।

धर्मसूरिरपि लक्षणप्रणयने विद्यानाथम् अनुसरन्नप्यस्मिन्नंशे एकावली-तरलाभिप्रायम् अनुसृत्यैव स्वलक्षणे 'धर्मत' इति दलं न निवेशितवान्।

इदं त्वत्रावधेयम् - श्लिष्टविशेषणस्थले श्लेषालङ्कारेण सह प्रायोऽलङ्का-राणामप्युपमादीनां प्रतिभानमस्ति। तत्र कोऽलङ्कारः प्रधानः, कश्चाप्रधान इत्यस्मिन् विषये विद्यानाथविद्याधरयोरपि प्राचीनात् कालात् मतद्वयमस्ति। तत्र केचित् 'येन नाप्राप्त' इति न्यायेनावश्यप्राप्तेष्वलङ्कारान्तरेष्वारभ्यमाणः श्लेषो

निरवकाशत्वाद् इतरेषां बाधको भवति। इतरेषां त्वलङ्काराणां प्रतिभानमात्रमिति वदन्ति। अन्ये च श्लेषप्रतिपादितयोरुभयोरप्यर्थयोः प्राकरणिकत्वस्थलेऽलङ्कारान्तरप्रतिभानाभावात् तादृशस्थले 'येन ध्वस्तमनोभवेन' इत्यादावलङ्कारान्तरविविक्तश्लेषस्य सावकाशत्वात् निरवकाशत्वाभावात् श्लेषोऽलङ्कारान् न बाधितुं प्रभवतीत्यतस्तत्र तत्र ते ते अलङ्कारा एव प्रधानाः श्लेषस्तु अप्रधान इत्यभिप्रयन्ति। एतौ द्वावपि पक्षौ अलङ्कारसर्वस्व एव प्रतिपादितौ[166]। तत्र विद्यानाथः प्रथमपक्षावलम्बी, विद्याधरः, मल्लिनाथः, अप्पय्यदीक्षितः, धर्मसूरिश्च द्वितीयपक्षावलम्बिनः। युज्यते चैतत् – सिद्धे श्लेषस्य निरवकाशत्वे तस्येतरालङ्कारबाधकत्वं युक्तम्। तदेव तु न सिद्धम्। तस्मान्न बाधत इति। अत एव धर्मसूरेरुपमालक्षणे इतरविशेषणस्थले विद्यानाथम् अनुसरतोऽपि 'धर्मत' इति विशेषणपरित्यागस्तस्य परीक्षणात्मिकां दृष्टिं प्रकटयति।

साधर्म्यं नाम केवलम् उपमानोपमेययोरेव भवतीति प्राचां सिद्धान्तः। अत एवोपमालक्षणे 'उपमानोपमेययोः' इति दलस्य व्यावर्त्याभावात् मम्मटेन 'साधर्म्यमुपमा भेदे' इत्येव लक्षणं ग्रथितम्[167]। न तु 'उपमानोपमेययोः साधर्म्यमुपमा भेदे' इति। यद्यपि 'उपमानोपमेययोः साधर्म्ये भेदाभेदतुल्यत्वे उपमा' इत्यङ्कारसर्वस्वकृता उपमानोपमेययोरिति दलं लक्षणे प्रवेशितं तथापि नेदमुपमानोपमेययोरन्यत्र साधर्म्यं सम्भवतीत्यभिप्रायेण तद्व्यावृत्त्यर्थम्, किन्त्वप्रतीतोपमानोपमेयनिषेधार्थम्। स्पष्टीकृतं चैतज्जयरथेन –

"ननु उपमानोपमेययोरेव साधर्म्यं सम्भवति। न कार्यकारणादिकयोरिति किं तदुपादानेन इत्याशङ्क्याह – उपमानेति। तत्रोपमानस्य अप्रतीतत्वं लिङ्गभेदादिना प्राच्यैरुक्तम्"[168] इति। तस्माद् उपमानोपमेयभिन्नानां कार्यकारणादीनां साधर्म्यं नास्तीति प्राचां सिद्धान्तः। विद्याधरस्तु –

'विलसति सति साधर्म्ये स्यादुपमानोपमेययोरुपमा'।

इति लक्षणे 'उपमानोपमेययोः' इति दलं निवेश्यापि 'कुमुदमिव मुखं' 'कारणमिव कार्यम्' इत्यादिकविसमयबहिर्भूतोपमानोपमेयनिरासं तस्य फलम् अभिप्रैति। अत एव विद्याधरलक्षणे 'कविसम्मतम्' इति दलं न दृश्यते। उपमानोपमेयभिन्नयोरपि कार्यकारणयोः साधर्म्यं त्वङ्गीकरोति। 'कारणगुणा हि कार्ये सङ्क्रामन्ति' इति न्यायात् कार्यकारणयोर्गुणसाम्यस्यावश्यवक्तव्यत्वात्[169]।

धर्मसूरिस्तु लक्षणग्रथने विद्यानाथम् अनुसरन्नप्युपमानोपमेयभिन्नकार्य-कारणस्थलेऽपि साधर्म्यम् अङ्गीकृत्य व्यावर्त्त्याभावाद् 'उपमानोपमेययोः' इति दलं न स्वीचकार। कविसमयबहिर्भूतोपमा तु कविसम्मतमिति पदेन निरस्ता। विद्याधरेणोपमानोपमेययोरिति दलेन कविसमयबहिर्भूतोपमानिरासो यः कृत-स्तदपेक्षया 'कविसम्मतम्' इति पदेन धर्मसूरिणा कृतस्तन्निरासो रुचिर आभाति। एते च धर्मसूरिणा परिगणिता उपमाप्रभेदाः-




## 2.8.3 रूपकम्

अर्थालङ्कारेषूपमाया अनन्तरं रूपकस्यैव प्रमुखं स्थानं संदृश्यते। रूपकस्वरूपविषये प्राचीनार्वाचीनालङ्कारिकाणां सुमहद्वैमत्यं न संदृश्यते। यद्यपि तत्तदाचार्यलिखितेषु लक्षणेषु तत्र तत्र वैलक्षण्यमुपलभ्यते तथापि तत्त्वतः साम्यम् अनुभूयत एव।

तत्र धर्मसूरेरभिमतं रूपकलक्षणम् –

"विषयानिह्नवेनान्यस्यारोपे रूपकं मतम्। अन्यस्य अप्रकृतस्य। प्रकृतं विषयम् अनपह्नुयैव यदारोपणं तद्रूपकम्। रूपयति विषयी तदन्यम् आत्मना रूपवन्तं करोतीति रूपकशब्दप्रवृत्तिः। अत्र चाभेदस्य प्राधान्यमात्रम्। वस्तुतोऽस्त्येव भेदः"। इति। (पृ० 113)

अयमर्थः-विषयविषयिणोः स्वशब्दोपात्तयोरभेदप्रतिपत्तिरारोपः। स्वशब्दोपात्तस्याप्रकृतस्योपमानस्य स्वशब्दोपात्ते प्रकृते उपमेये आरोपो रूपकमित्यर्थः। यथा महारञ्जनरागः स्वरूपेण पटं रूपवन्तं करोति तथा विषयी उपमानं स्वरूपेण विषयम् उपमेयं रूपवन्तं करोति यत्र तत्र रूपकालङ्कार इत्यर्थः। एतेन विषयस्य स्वशब्दोपात्तस्यांप्युपमानाद् भेदेन नास्ति भानं रूपक इति फलति। एतादृशस्य रूपकालङ्कारस्वरूपस्य विषये प्रायः सर्वेषामालङ्कारिकाणामैकमत्यमेव।

अस्य च रूपकस्यानन्वयात् सन्देह-भ्रान्तिमद्-अपह्नवेभ्य उत्प्रेक्षोपमादेः परिणामाच्च भेदः स्पष्टमभिहितः प्रतापरुद्रीये[170]। साहित्यरत्नाकरेऽपि तेभ्य एवालङ्कारेभ्यस्ताभिरेव युक्तिभिः स एव भेदस्तथैवानूदितः। एकावल्यां त्वयमलङ्कारान्तरवैलक्षण्यविचारो नास्त्येव। एवञ्च धर्मसूरिर्विचारम् अमुं प्रतापरुद्रीयादेवानूदितवान्। एवम् एकावल्यां समासस्थले उपमारूपकयोरङ्गीकारे साधकबाधकप्रमाणानि सुविशदं प्रदर्शितानि। तानि साहित्यरत्नाकरे नैवोक्तानि। तस्माद् रूपकालङ्कारे एकावल्यनुसरणं साहित्यरत्नाकरस्य नास्तीति वक्तुं शक्यम्।

अनन्वये रूपके चोपमानोपमेययोरभेदप्रतीतिः समाना। अतः किं तावद् उभयोर्वैलक्षण्यमिति जिज्ञासा जायते। तत्रेदम् अवगन्तव्यम्। रूपके यद्यप्यभेदप्रतीतिर्भवति, तथापि तिरोहितोऽपि भेदो वर्तत एव। स्वस्वशब्दोपात्तयोरुपमानोपमेययोः सामानाधिकरण्यबलाद् अभेदभानेऽपि पृथक्शब्दोपस्थापितरूपेण भेदेन स्वतन्त्रप्रतीतिरप्यस्त्येव। किन्तु विद्यमाना सा भेदप्रतीतिः सामानाधिकरण्यप्रयोगसिद्धाभेदप्रतीत्या तिरोधीयते। अत एव स्पष्टम् उक्तम् –

'उपमैव तिरोभूतभेदा रूपकमिष्यते'।[171]

इति। तिरोहितत्वादेवाप्राधान्यं भेदस्य, प्राधान्यं चाभेदस्य। एतदेव वैलक्षण्यम् उपमायाः। उपमायां भेदाभेदयोस्तुल्यप्राधान्यम्, रूपके त्वभेदस्य प्राधान्यं

भेदस्याप्राधान्यमिति। अनन्वये तात्पर्यभूतद्वितीयसब्रह्मचारिव्यवच्छेदसिद्ध्यर्थम् उपमानस्यैवाभावद्योतनार्थमुपमेयस्योपमेयेनैव सादृश्यं निबध्यते इत्यत उपमानोपमेययोर्भेदप्रतीतिलवोऽपि न भवति। तस्माद् तिरोहितत्वात् अप्रधानतया भासमानभेदप्रतीतिमतो रूपकस्य सर्वात्मना भेदप्रतीतिरहितेनानन्वयेन वैलक्षण्यं सिद्ध्यति।

रूपके सामानाधिकरण्यप्रयोगबलाद् उपमानोपमेयगतभेदप्रतीतेरेव तिरोहितत्वम्, न तूपमेयस्वरूपस्यापि। अत एव मुखचन्द्र इत्यत्र मुखशब्देनोपमेयस्य मुखस्य प्रतीतिरतिरोहिता वर्तत एव। सन्देह–भ्रान्तिमद्–अपह्नवेषु तूपमेयस्वरूपस्यापि तिरोहितत्वमेव। अत एव तेभ्यो रूपकस्य भेदः। इदमत्रावगन्तव्यम् – विषयविषयिणोः स्वशब्दोपात्तयोरभेदप्रतिपत्तिरारोपः। विषयनिगरणेन विषयिणस्तदभेदप्रतिपत्तिरध्यवसाय इत्यारोपाध्यवसाययोर्भेदः। तत्र रूपक–सन्देह–भ्रान्तिमद्–अपह्नवाः सर्वेऽप्यारोपमूला एव, न त्वध्यवसायमूलाः। अत एतेषूपमेयस्य शब्दोपस्थाप्यत्वम् अवश्यम्भावि, अन्यथा आरोपमूलकत्वहानिः। उत्प्रेक्षातिशयोक्त्यादिष्वेव विषयस्य निगरणं भवति। एवञ्च सन्देहादिषूपमेयस्य तिरोधानम् अतिशयोक्त्यादिषूपमेयनिगरणाद् विलक्षणमेवावगन्तव्यम्। स्वस्वशब्दैरुपस्थापितानामप्युपमेयानां सन्देह–भ्रान्तिमद्–अपह्नव–प्रभावात् तिरोहितत्वं भवति। यथा चक्षुस्संयुक्ता अपि शुक्तिस्थाण्वादयो भ्रान्ति–सन्देहाभ्यां स्वस्वरूपेण तिरोहिता एव भवन्ति, न प्रकाशन्ते। अन्यथा भ्रमसन्देहज्ञानानामुत्पत्तिरेव न भवेत् तथा अत्रापीत्यवगन्तव्यम्। अपह्नवे तु शब्दोपस्थापितस्योपमेयस्य तिरोधानं सन्देहभ्रान्तिमतोरिव स्वतो न भवति किन्तु कविना प्रौढोक्त्या तिरोधीयत इति विशेषः। एवञ्चोपमेयस्वरूपस्य तिरोहितत्वातिरोहितत्वाभ्यां रूपकात् सन्देह – भ्रान्तिमद्–अपह्नवानां भेद इति। मूले –

'आरोप्येणेत्यनेन उत्प्रेक्षादेरुपमादीनां च व्यावृत्तिः'।

इत्यत्रोत्प्रेक्षादेरित्यादिशब्देनातिशयोक्तेः, उपमादीत्यादिशब्देन प्रतीपस्य च ग्रहणम्। सारोपा साध्यवसाना चेति लक्षणाया भेदद्वयमाश्रित्य रूपकम् अतिशयोक्त्युत्प्रेक्षे च भवतः। अत आरोपाध्यवसानाभ्यां रूपकस्योत्प्रेक्षातिशयोक्तिभ्यां भेदोऽवगन्तव्यः। आरोपाध्यवसानयोः स्वरूपं तु निरूपितमेव।

अभेदप्राधान्ये सत्येव आरोपो भवति। यथा महारङ्गरागस्य पटे आरोपस्तयोरुभयोरभेदमेव सम्पादयति। एवञ्च यत्र भेदाभेदयोः समप्राधान्यं भवति तत्रारोपो न भवति। अत एव उपमाप्रतीपयोर्भेदाभेदतुल्यत्वाद् आरोपकथापि नास्तीत्यतस्तयो रूपकाद् भेदः सिद्ध्यति।

धर्मसूरिः परिणामालङ्काराद् रूपकस्य वैलक्षण्यकथनावसरे–

> 'उपरक्तत्वमित्यनेन परिणामालङ्कारव्यवच्छेदः। तत्रारोप्यमाणस्य प्रकृतोपयोगितया विषयपरिणामरूपत्वेन प्रकृतोपरञ्जकत्वाभावात्'। इति लिखति। (पृ० 114)

अस्यायमाशयः – पटे योजितो महारङ्गरागः पटं रञ्जयति = पटं स्वेन रूपेण रूपवन्तं करोति, न तु पटात्मना परिणतिं भजते, न वा तदात्मतापत्तिद्वारा किञ्चित् कार्योपयोगी भवति। तन्तवस्तु पटात्मना परिणतिं प्राप्य धारणादिक्रियोपयोगिनो भवन्ति। एवमेव यत्रोपमानपदार्थः स्वेन रूपेणोपमेयं रञ्जयति तत्र रूपकालङ्कारः। यत्र तूपमानपदार्थ उपमेयपदार्थात्मना परिणतिं प्राप्य कार्योपयोगी भवति तत्र परिणामालङ्कार इत्यनयोर्भेदः सुस्पष्टः। पदार्थारोपपर्यन्त आरोपो रूपकमिति, वृत्तान्तारोपपर्यन्तमारोपः परिणाम इत्यपि रूपकपरिणामयोर्भेदं वदन्ति[172]। तस्माद् रूपसमारोपे समानेऽपि कार्योपयोगतदभावाभ्यां परिणामरूपकयोर्भेदः सिद्ध्यति।

धर्मसूरिप्रदर्शितो रूपकालङ्कारविभागो निर्दिश्यते–




आहत्याष्टौ भेदाः। एकावल्यामप्येत एव एतावन्त एव भेदाः प्रदर्शिताः। दण्ड्याचार्यास्त्वष्टविधस्यास्य समस्तव्यस्तरूपेण द्वैविध्ये षोडशभेदान् प्रादर्शयन्[173]। तत्र च वैचित्र्यविशेषाभावात् सर्वैस्तदर्वाचीनालङ्कारिकैः परित्यक्तोऽयं विभागः। एकावलीकारोऽपि–

'व्यस्तसमस्तत्वादिकथने वैचित्र्याभावात्।'

इति तन्निषिषेध[174]। धर्मसूरिस्तु विभागावसरे–

'तस्य समस्तव्यस्तत्वभेदेन द्वैविध्ये षोडशविधत्वम्।'

इति विभज्य प्रसिद्धानाम् अष्टानाम् उदाहरणप्रदर्शनानन्तरम्–

"एवम् अष्टविधमपि रूपकं निरूपितम्। अन्येऽष्टौ भेदाः पृथग्वैचित्र्याभावान्न निरूपिताः"। (पृ० 116) इति लिखित्वा एकावलीम् अनुससार। कुतो वा विभागकरणावसर एव न प्रत्युक्ता एते प्रभेदा इति तु नावगम्यते। किञ्च दण्डिमतमिव वाक्योक्तसमासोक्तत्वेन भेदद्वयम् अङ्गीकुर्वतो रुद्रटस्यापि मतं प्रत्युक्तम् एकावलीकृता। धर्मसूरिस्तु नामुं विषयम् अस्पृशत्।

2. 8.4 परिणामः

"आरोपमूर्त्या विषयः परिणामं भजेद् यदि।
प्रकृतार्थोपयोगाय परिणामः स तु द्विधा।।" (पृ० 116)

इदं धर्मसूरेः परिणामालङ्कारलक्षणम्। वृत्तिरपि तत्रैव–

'यत्र विषयः प्रकृतकार्योपयोगायारोप्याकारेण परिणमते तत्र परिणामालङ्कारः' इति। उदाहरणमपि–

बोधाय विबुधलक्ष्म्या नष्टाया दशमुखाहिदष्टायाः।
भवतो गारुडमन्त्रा विजयन्ते रामचापटङ्काराः।।"(पृ० 117)

इति। एतेन चेदं स्पष्टं भवति यद् यत्र विषयः = उपमेयम्, विषयिणः = उपमानस्य आकारेण परिणमनद्वारैव प्रकृतकार्योपयोगि भवति तत्र परिणामालङ्कारः। तथा चोदाहरणे उपमेयभूताश्चापटङ्कारा उपमानभूतगारुडमन्त्रात्मना परिणमय्यैव रावणाहिदष्टाया अत एव नष्टाया देवश्रियः प्रतिबोधनरूपप्रकृतकार्योपयोगिनो भवन्ति। न तु स्वतन्त्रतया। चापटङ्काराणां मोहप्रतिबोधनरूपकार्यानुपयोगित्वात्। प्रतापरुद्रीये एकावल्यामपि लक्षणोदाहरणे एतत्समाने सन्दृश्येते[175]। एवञ्चैतेषां सर्वेषामपि मते प्रकृतस्याप्रकृतात्मना परिणाम एव परिणामालङ्कारः।

योऽपि परिणामस्यैदम्प्राथम्येन पृथगलङ्कारत्वस्थापको रुय्यकस्तस्यापि मते प्रकृतस्याप्रकृतात्मना परिणाम एव परिणामालङ्कार इति तद्ग्रन्थपरिशीलनेन ज्ञायते। तथा हि –

'आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणामः'।

इति तदीयं सूत्रम्।

> 'आरोप्यमाणं रूपके प्रकृतोपयोगित्वाभावात् प्रकृतोपरञ्ज-कत्वेनैव केवलेनान्वयं भजते, परिणामे तु प्रकृतात्मतया आरोप्यमाणस्योपयोग इति प्रकृतमारोप्यमाणरूपत्वेन परिणमति' इति तत्रैव वृत्तिः[176]।

अत्र यद्यपि 'परिणामे तु प्रकृतात्मतयारोप्यमाणस्योपयोग' इत्यत्रारोप्यमाणस्य प्रकृतात्मताद्वारैव क्रियोपयोग इत्यर्थच्छयादर्शनाद् अप्रकृतस्य प्रकृतात्मना परिणाम एव परिणामालङ्कार इत्यर्थो भायात्, तथापि पूर्वोत्तर-ग्रन्थविरुद्धं तद् भवति। प्रधानवाक्ये 'प्रकृतमारोप्यमाणरूपत्वेन परिणमति' इति प्रकृतस्याप्रकृतात्मना परिणामः स्पष्टम् अभिहितः। किञ्च 'परिणामे तु' इत्यत्र तुशब्दः पूर्ववैलक्षण्यबोधकः। पूर्ववाक्येन च 'रूपके आरोप्यमाणं प्रकृतोपरञ्जकत्वेनैवान्वेति, न तु तस्य प्रकृतक्रियोपयोगोऽस्ति' इत्येवार्थो विवक्षितः। एवञ्च तद्वैपरीत्यं परिणामस्य वक्तव्यं चेद् भवति तर्हि (1) 'परिणामे आरोप्यमाणं केवलमुपरञ्जकत्वेन नान्वेति, किन्तु प्रकृततादात्म्यापन्नो भूत्वा अन्वेति (2) तथा प्रकृतकार्योपयोगी च भवति' इत्येव वक्तव्यम्, न तु परिणामे प्रकृतमप्रकृतात्मना परिणमते वा, अप्रकृतमेव प्रकृतात्मना परिणमते वेत्यपि। किञ्चेति शब्दो हेत्वर्थकः, तस्मात् तत्पूर्वतनवाक्येन तदुत्तरवाक्यार्थसिद्धौ हेतुरेवो-पस्थापयितव्यो भवति। तदुत्तरवाक्ये च प्रकृतस्य आरोप्यमाणात्मना परिणामः स्पष्टम् अभिहित इति तत्र हेतुरेव पूर्ववाक्येन प्रदर्शनीयो भवति, न तु तद्विरुद्धोऽर्थः। तस्माद् अयमर्थो रूय्यकवाक्यसन्दर्भस्य–परिणामे तु आरोप्यमाणस्य प्रकृतात्मतया = प्रकृततादात्म्यापन्नतया रूपके इव केवलोपरञ्जकत्वाभावादित्यर्थः। उपयोगः– प्रकृतकार्योपयोग इति – इत्यस्माद् हेतोः प्रकृतं = उपमेयम् आरोप्यमाणरूपत्वेन =उपमानरूपत्वेन परिणमति–परिणमत इति। एवञ्च रुय्यकस्यापि मते प्रकृतस्याप्रकृतात्मना परिणाम एव परिणामालङ्कारः। अत एव– "सौमित्रिमैत्रीमयमुपकृतवानान्तरं नाविकाय" "वचोभिरुपायनं चकार" इति सामानाधिकरण्यवैयधिकरण्यपरिणामोदाहरणयोरुभयोरपि प्रकृतस्याप्रकृतात्मना परिणतिरेव स्पष्टा।

विद्याचक्रवर्तिनः परिकरश्लोकेष्वप्ययमेवार्थो वर्णनीयः[177]। तेन सर्वस्वमतस्य कुत्राप्यखण्डनात्।

एवं रुय्यक-विद्याचक्रवर्ति-जयदेव-विद्याधर-विद्यानाथ-धर्मसूरि-प्रभृतिभी रुय्यकानन्तरवर्त्याचार्यैः प्रकृतस्य अप्रकृतात्मना परिणाम एव परिणामालङ्कारोऽङ्गीकृत इति स्पष्टम्। सत्यप्येवं नवीनालङ्कारिका अप्पय्यदीक्षित-जगन्नाथादय एतद्वैपरीत्येनाप्रकृतस्य प्रकृतात्मना परिणतावेव परिणामालङ्कार इति स्पष्टम् अङ्गीकुर्वन्ति। तथा हि कुवलयानन्दकारिकायाम् -

परिणामः क्रियार्थश्चेद्विषयी विषयात्मना।
प्रसन्नेन दृगब्जेन वीक्षते मदिरेक्षणा।।[178] इति।

चित्रमीमांसायाम् -

'यत्रारोप्यमाणं किञ्चित्कार्योपयोगित्वेन निबध्यमानं स्वतस्तस्य तदुपयोगित्वासम्भवात् प्रकृतात्मतापत्तिम् अपेक्षते तत्रैव परिणामाङ्गीकारात्'[179] इति।

रसगङ्गाधरे च -

'विषयी यत्र विषयात्मतयैव प्रकृतोपयोगी न स्वातन्त्र्येण सः परिणामः'[180] इति च स्पष्टम् अभिधानाद् एतेषां मते अप्रकृतस्य प्रकृतात्मना परिणतावेव परिणाम इति स्पष्टम्। किन्त्वेतैरेषा परम्परा कस्मात् मूलात् प्रारब्धा इति न ज्ञायते। न चैते वाचा सर्वस्वकारादीनां पक्षं खण्डयन्ति।

किञ्च काव्यप्रदीपोद्योते नागेशभट्टेन 'दाक्षिणात्य' इति नाम्ना परिणामस्यायमेव पक्षो निराकृतो न तु प्राचीनः। नागेशेन जगन्नाथस्य लक्षणं तथैव अनूदितं खण्डितं च। तथा हि -

"यत्तु आरोप्यमाणो यत्र विषयात्मतयैव प्रकृतकार्योपयोगी न स्वातन्त्र्येण सः परिणामः। अत्र च विषयाभेद आरोप्यमाण उपयुज्यते। रूपके तु नैवमिति विशेषः।

'वदनेनेन्दुना तन्वी स्मरतापं विलुम्पति।'

इत्युदाहरणम्। अत्र हि स्मरतापनाशनसामर्थ्यं मुखात्मनैवेन्दोः। ग्रीष्मसन्तापहारकत्वाद् रमणीयशोभाधारत्वाच्च इन्दुर्विषयतयोपात्त इति

दाक्षिणात्याः। तन्न। इन्दौ वदनतादात्म्यप्रतीतेर्वर्णनीयमुखाद्यनुत्कर्षत्वेन अलङ्कारत्वाभावादिति दिक्"[181] इति।

प्राचीनमतेन वदने इन्दुतादात्म्यप्रतीतिस्तया प्रकृतस्य वदनस्य गुणातिशयो भवत्येवेति नवीनमतमेतद्दोषावहं न प्राचीनमतम् इत्यतः प्राचीनमेव मतं समीचीनमिति तदनुसरणं धर्मसूरेः प्रशंसनीयमित्यस्माकं भाति।

रूपकादस्य वैलक्षण्यं स्पष्टमुक्तम् एकावल्याम्[182]–

"एष न रूपकम्। आरोप्यमाणस्य प्रकृतोपरञ्जकत्वे रूपकस्य जागरूकत्वात्। यत्रारोपविषयः प्रकृतकार्यसिद्ध्यर्थम् आरोप्यमाणात्मतया परिणमति तत्र यथार्थाभिधानः परिणामः"।

इति। एतदनुवदन् धर्मसूरिरपि–

"इदमुदितं भवति। यत्रारोप्यमाणस्य प्रकृतोपरञ्जकत्वमात्रं तत्र रूपकम्। यत्र प्रकृतकार्योपयोगाय आरोप्यात्मना विषयस्य परिणतिस्तत्र परिणामः"। (पृ० 117)

इति रूपकपरिणामयोर्भेदमुररीचकार। विवृतं चैतद् रूपकालङ्कारेऽस्माभिः। साहित्यरत्नाकरेऽनन्तरं समासोक्तेरपि यद्वैलक्षण्यं परिणामस्य निरूपितं तदेकावल्यां नास्ति किन्तु प्रतापरुद्रीये संदृश्यते[183]। इदमत्रावधेयम् –

उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम्।
यथा समस्तं तिमिरांशुकं तया पुरोऽपि रागाद्गलितं न लक्षितम्।।

इत्यादिसमासोक्तौ विशेषणमहिम्नाऽप्रकृतनायिकानायकवृत्तान्तो योऽवगम्यते तत्रोपोढरागविलोलतारकत्वादयोऽप्रकृतधर्मा मुखग्रहणगलदंशुकलक्षणरूप-प्रकृतकार्येऽप्यनुयान्तीत्यारोप्यमाणस्य प्रकृतकार्योपयोगित्वम् अस्तीति परिणाम-समकक्षोऽसौ समासोक्त्यलङ्कारः। प्रकृतवृत्तान्तेऽप्रकृतवृत्तान्तारोपसद्भावाद् आरोपिताप्रकृतवृत्तान्तस्य प्रकृतक्रियान्वयोऽवश्यम्भाव्येव। तथाप्यप्रकृतवृत्तान्तः समासोक्तौ विशेषणमहिम्ना गम्य एव भवति। परिणामे च वाच्य एव भवतीत्ययमेव भेदः समासोक्तेः परिणामस्येति।

सर्वैरेवासौ परिणामालङ्कारः सामानाधिकरण्यवैयधिकरण्याभ्यां द्विविधोऽङ्गीकृतः। उदाहृत एव 'बोधाय विबुधलक्ष्म्याः' इत्यादिश्लोकः 'चापटङ्काराः'

इति प्रथमान्तपदस्य 'चापटङ्कारैः' इति तृतीयान्तत्वेन विपरिणामे वैयधिकरण्य-स्याप्युदाहरणं भवति।

## 2. 8.5 उत्प्रेक्षा

धर्मसूरेरुत्प्रेक्षालक्षणम्–

अन्यत्वाध्यवसायो यः प्रकृतस्य गुणादिना।
उत्प्रेक्षा कथिता सा स्याद् द्रव्यादिभ्यश्चतुर्विधा।। (पृ० 107)

प्रकृतस्य = उपमेयस्य, गुणादिवशाद् अप्रकृतत्वाध्यवसायो यः सोत्प्रेक्षा"। इति। उत्प्रेक्षालक्षणमिदं प्रतापरुद्रीयेऽप्येवमेव सन्दृश्यते[184]। एकावल्या लक्षणं तु प्रसङ्गाद् धर्मसूरिणापि पठितमेव –

अप्रकृतत्वेनाध्यवसायोऽथ गुणादिसम्बन्धात्।
साध्यः प्रकृतस्य यदा कथितोत्प्रेक्षा तदा तज्ज्ञैः।।[185] (पृ० 108)

इति। एवम् उत्प्रेक्षास्वरूपविषये न दृश्यते महान् भेद आलङ्कारिकाणां मध्ये।

अलङ्काराणां वर्गीकरणावसरेऽध्यवसायमूलत्वेन द्वावलङ्कारौ निर्दिष्टौ-उत्प्रेक्षा, अतिशयोक्तिश्चेति। एतयोरुभयोर्मध्ये वैलक्षण्यं त्वध्यवसायस्य सिद्धत्वसाध्यत्वाभ्यां भेदेनोच्यते। तथा हि –

"यत्र प्रकृतस्याप्रकृतधर्मसम्बन्धात् तदध्यवसायः साध्यस्तत्रोत्प्रेक्षा। ......यत्र पुनर्गुणसम्बन्धानास्थया प्रौढोक्तिमात्राद् विषयिणो विषयगतत्वेनारोपणे भिन्नस्यापि विषयनिगरणेन प्रवृत्तत्वादभेदप्रतीतेर-ध्यवसायः सिद्धस्तत्रातिशयोक्तिरिति विवेकः"। इति। (पृ० 108)

अत्र अध्यवसायशब्दार्थे, सिद्धसाध्यव्यपदेशे चास्पष्टता अनुभूयते। अत इदमत्र विचारयितव्यं भवति यत् कोऽयम् अध्यवसायो नाम। तत्र साध्यवसानलक्षणाया निरूपणावसरे तल्लक्षणमुक्तं मम्मटेन –

"विषय्यन्तःकृतेऽन्यस्मिन् सा स्यात् साध्यवसानिका।

विषयिणा = आरोप्यमाणेन अन्तःकृते निगीर्णेऽन्यस्मिन्नारोपविषये सति सा साध्यवसाना स्यात्"[186] इति।

उदाहृतं च – आयुरेव इदमिति।

"विषयिणा आरोप्यमाणेनान्यस्मिन् आरोपविषयेऽन्तःकृते

निगीर्णे। भेदेनानुपस्थित इति यावत्। विषयिमात्रं यत्र निर्दिश्यते न तु विषयोऽपि सा साध्यवसाना। विषयिणा विषयतिरोभावस्य अत्र अध्यवसानपदार्थत्वात्"[187] इति तत्रैव तद्व्याख्याता गोविन्दठक्कुरः।

एवमेतत्सिद्ध्यति यद् विषयानुपादानेन विषयविषयिणोरभेदप्रतिपत्तिरध्यवसाय इति। तथा चोक्तं सर्वस्वकृता–

'विषयनिगरणेनाभेदप्रतिपत्तिर्विषयिणोऽध्यवसायः'।[188]

इति। किन्त्वध्यवसायमूलकत्वेन सर्वैरालङ्कारिकैरभ्युपगते उत्प्रेक्षालङ्कारे विषयस्याप्युपादानमेव अस्ति न त्वनुपादानम् इति तस्याध्यवसायमूलकत्वं बाध्येत।

तस्मात् काव्यप्रकाशकारिकायाम् 'अन्तःकृते' इति शब्दस्य 'निगीर्णे' इति योऽर्थः प्रतिपादितस्तन्निगरणं नाम न शब्देनानुपात्तत्वं किन्तु शब्देनोपात्तस्य अनुपात्तस्य वा विषयस्य विषयितादात्म्यसम्भावनया तन्निश्चयेन वा पृथक्त्वेनाप्रतीयमानत्वमेव। एतादृशं चान्तःकरणं = निगरणं निगीर्यमाणावस्थं निगीर्णावस्थं चेति द्विप्रकारमप्यध्यवसायत्वेनाङ्गीक्रियते। तत्र निगीर्यमाणावस्थत्वमेवाध्यवसायस्य साध्यत्वं नाम। निगीर्णावस्थत्वमेव च तस्य सिद्धत्वं नामेत्यध्यवसायः साध्यसिद्धभेदेन द्विप्रकारो भवति। तत्र साध्याध्यवसायेऽध्यवसायव्यापारस्य प्राधान्यं सिद्धाध्यवसायेऽध्यवसितप्राधान्यमिति च साध्यसिद्धयोर्भेदोऽवगन्तव्यः। किञ्च साध्याध्यवसाये विषयिणोऽसत्यत्वं सिद्धाध्यवसाये वस्तुतोऽसत्यस्यापि विषयिणः सत्यताप्रतीतिः। तदुक्तम् अलङ्कारसर्वस्वे–

"स च द्विविधः – साध्यः सिद्धश्च। साध्यो यत्र विषयिणः असत्यतया प्रतीतिः। सिद्धो यत्र विषयिणो वस्तुतोऽसत्यस्यापि सत्यताप्रतीतिः"[189] इति।

सत्यत्वासत्यत्वयोः पूर्वोक्तयोर्व्याख्यानं यद्यपि तत्रैवालङ्कारसर्वस्वे प्रपञ्चितं तथापि प्रतापरुद्रीयरत्नापणे कुमारस्वामिना सुस्पष्टमिदम् अनूदितम्–

"तथा हि – यदा चन्द्रादिविषयिगतं माधुर्यादिकं विषयभूते

मुखादावुपनिबन्धुं मुखं मुखत्वेन जानन्नेव नूनमिदं चन्द्र इति प्रयुङ्क्ते तदा विषयी चन्द्रो मुखत्वेनासत्यो निगीर्णः प्रतिभाति, विषयस्तु परमार्थतः सत्य एव। एवं सत्यासत्ययो-रभेदप्रतिपत्तेरसम्भवात् नूनम् आदिशब्दैर्विषयिणोऽपि सत्यत्वसमर्थनाद् अध्यवसायः साध्य इत्यत्राध्यवसाय-प्राधान्यम्। यदा तु मुखपदम् अनुक्त्वा चन्द्रोऽयमिति प्रयुङ्क्ते तदा वस्तुतोऽसत्यस्यापि विषयिणः सत्यता प्रतीयते। सत्यत्वनिमित्तस्य मुखपदप्रयोगस्याभावात्। विषयस्य वस्तुतः सत्यस्याप्यत्यन्तालापात् असत्याभिमतस्य निगीर्णत्वाद् अध्यवसायः सिद्ध इत्यत्राध्यवसितप्राधान्यम् इत्यादि सर्वम् अलङ्कारसर्वस्वे तद्व्याख्यायां च सञ्जीविन्यां प्रपञ्चितम्"[190]।

तदेतत्सत्यत्वासत्यत्वविचारं सर्वमपि सम्यगाकलय्य तत्फलभूतं यत् साध्ये विषयिनिगरणं सिद्धे च विषयनिगरणं तत्कृतमेवाध्यवसायस्य द्वैविध्यमुक्तं प्रतापरुद्रीये विद्यानाथेन। साध्यत्व-सिद्धत्व-सत्यत्व-असत्यत्वपरिभाषया सञ्जनितः सुमहान् कोलाहलो दूरीकृतः स्वप्रतिभया विद्यानाथेन। तथा च विभक्तं तेन –

"विषयविषयिणोरन्यतरनिगरणेनाभेदप्रतिपत्तिरध्यवसायः। स द्विविधः-विषयनिगरणेन विषयिनिगरणेन च"।[191] इति।

तदेवम् अध्यवसायस्य सिद्धे सिद्धसाध्यत्वाभ्यां द्वैविध्ये, तत्र सिद्धाध्यवसायमूलाऽतिशयोक्तिः, साध्याध्यवसायमूलोत्प्रेक्षेत्यध्यवसाय-मूलकत्वे समानेऽपि सिद्धत्यत्येवोभयोर्भेदः। तदयं निर्गलितोऽर्थः-

| अतिशयोक्तौ | उत्प्रेक्षायाम् |
|---|---|
| सिद्धत्वम् अध्यवसायस्य | साध्यत्वम् अध्यवसायस्य |
| अध्यवसितप्राधान्यम् | अध्यवसानव्यापारप्राधान्यम् |
| विषयिणः सत्यत्वम् | विषयिणोऽसत्यत्वम् |
| विषयनिगरणम् | विषयिनिगरणम् |
| विषयस्य अनुपात्ततैव | विषयस्यानुपात्तता उपात्तता च |
| वयन्त्वत्रैवं मन्यामहे | — |

"विषयिणा=आरोप्यमाणेन, अन्तःकृते=निगीर्णे अन्यस्मिन्=आरोपविषये सति सा साध्यवसाना स्यात्" इति।

"विषयनिगरणेनाभेदप्रतिपत्तिर्विषयिणोऽध्यवसायः" इति चाध्यवसायं सम्यक् लक्षयित्वा उत्प्रेक्षायां विषयोपादानात् तत्राध्यवसायमूलकत्वसमर्थनार्थम् अध्यवसायं सिद्धसाध्यभेदेन विभज्य तत्र साध्यदशायां निगरणपदस्य स्वारसिकार्थं परित्यज्य विषयिणोऽसत्यत्वरूपमर्थं च तस्य कल्पयित्वा निगीर्यमाणावस्थकोऽध्यवसायं उत्प्रेक्षायाम्, निगीर्णावस्थकोऽध्यवसायोऽतिशयोक्तावित्युभयोरध्यवसायमूलकत्वम् अव्याहतमिति व्याख्यानं क्लिष्टकल्पनापूर्णं वर्तते।

कृतायामप्येतादृशक्लिष्टकल्पनायां सिद्धाध्यवसाये ज्ञानस्य निश्चयात्मकत्वं साध्याध्यवसाये तस्यानिश्चयात्मकत्वम् इत्ययथार्थज्ञाने तस्मिन् वैलक्षण्यम् अनपलपनीयमेव। किञ्च –

'विषयविषयिणोः सामानाधिकरण्येनोपात्तयोरभेदप्रतिपत्तिरारोप' इत्युक्तत्वाद् आरोपात् साध्याध्यवसायस्य वैलक्षण्यमपि दुस्सम्पादं भवति। उभयत्र विषयविषयिणोरुपात्तत्वात्। तस्माद् अध्यवसायमूलकत्वं मा भूद् उत्प्रेक्षायाः। अस्तु सम्भावनामूलकत्वम्। सम्भावना चोत्कटकोटिकः संशयस्तर्कात्मकज्ञानरूपा वा। न तु निश्चयज्ञानरूपा। एवञ्चाध्यवसायमूलाऽतिशयोक्तिरेव। तत्र निश्चितत्वमेव ज्ञानस्य। अत एव –

**'अध्यवसाये व्यापारप्राधान्ये उत्प्रेक्षा'।**

इत्यध्यवसायमूलकत्वं सूत्रयित्वापि सर्वस्वकारः–

"तदेवम् अप्रकृतगतगुणक्रियाभिसम्बन्धात् अप्रकृतत्वेन प्रकृतस्य सम्भावनमुत्प्रेक्षा।" इति न्यगमयत्। उत्प्रेक्षाया अध्यवसायमूलकत्वाङ्गीकारेण खलु सम्भावनाया अध्यवसायप्रभेदत्वकथनमापतितम्। तदर्थं न महती क्लिष्टकल्पना। तस्माद् अयमेव लघीयान् पन्था यत् सम्भावनामूला उत्प्रेक्षा, अध्यवसायमूला च अतिशयोक्तिरिति। अत एव मम्मटाचार्योऽपि "सम्भावनम् अथोत्प्रेक्षा"[192] इत्युत्प्रेक्षां लक्षयामास।

## 2. 8.6 व्यतिरेकः

अलङ्कारशास्त्रग्रन्थेषु व्यतिरेकालङ्कारम् अधिकृत्य सुमहती चर्चा कृता दृश्यते। विभिन्नमतानां परिशीलने कृते मतानां द्वैराश्यं व्यतिरेकव्युत्पत्तिसिद्धम्

अनुभूयते। 'वि' 'अति' इत्युपसर्गद्वयार्थस्यापि प्राधान्यस्वीकारे भेदो वैलक्षण्यम् इत्यादिरूपोऽर्थो निष्पद्यते। अस्मिंश्च पक्षे उपमानादुपमेयस्याधिक्य एव व्यतिरेकालङ्कारः, इतरथा तु नेति सिद्ध्यति। स्पष्टं चेदं वामनसूत्रे[193] –

'उपमेयस्य गुणातिरेकित्वं व्यतिरेकः'

इत्यत्र। 'वि' इत्युपसर्गार्थस्य परिगणनेऽपि विशेषेणातिरेकोऽतिशयो व्यतिरेक इति व्यतिरेकशब्दव्युत्पत्तिमेते मन्यन्ते। अत एव भामहः[194] –

"यद् विशेषनिदर्शनम्" इति लक्षयाञ्चकार।

अत्र च प्रथमराशौ रुद्रटः, रुय्यकः, विद्यानाथः[195], अप्पय्यदीक्षितश्चा-न्तर्भवन्ति। द्वितीयराशौ च भामहः, वामनः, उद्भटः, मम्मटः, विद्याधरः, जगन्नाथः, धर्मसूरिश्चान्तर्भवन्ति।

उपमानादुपमेयस्याल्पत्वेऽपि व्यतिरेकमङ्गीकुर्वतो रुद्रटस्येदमुदाहरणम् –

"क्षीणः क्षीणोऽपि शशी भूयो भूयोऽभिवर्धते सत्यम्।
विरम प्रसीद सुन्दरि! यौवनमनिवर्ति यातं तु।।"[196] इति।

रुय्यकोऽप्यमुमेव श्लोकमुदाहृत्य एवं समन्वितवान्–

"चन्द्रापेक्षया च यौवनस्य न्यूनगुणत्वम्।
शशिवैलक्षण्येन तस्य अपुनरागमात्"।[197] इति।

मम्मटस्तु प्रभेदम् अमुम् असहमानः "क्षीणः क्षीणोऽपि...... इत्यादा-वुपमानस्योपमेयादाधिक्यमिति केनचिद् उक्तं तदयुक्तम्। अत्र यौवनगता-स्थैर्याधिक्यं हि विवक्षितम्"[198] इत्युदाहरणममुं दूषयामास। एवं मम्मटेन प्रभेदस्यास्य खण्डनानन्तरं विद्याधरादयोऽनेके आलङ्कारिकास्तमेवानुसृतवन्तः। पण्डितराजजगन्नाथोऽपि रुय्यकमतप्रतिष्ठापने प्रवृत्तस्य जयरथस्य व्याख्यानं दूषयन् उपात्तगुणेनापुनरागमनरूपेणानुपात्तगुणेन सकलसुखनिधानत्वादिना चोपमेयस्य यौवनस्योत्कर्ष एवात्र वाक्यार्थः।

"अन्यथा किमित्यस्य कदर्यस्य यौवनस्य कृते मया मानाद्विरंस्यते? यातु नाम यौवनमिति प्रतिकूलेनार्थेन प्रकृतार्थस्यापुष्टतापत्तेः।"

इति स्थापयित्वा–

"विषयिणा=आरोप्यमाणेन, अन्तःकृते=निगीर्णे अन्यस्मिन्= आरोपविषये सति सा साध्यवसाना स्यात्" इति।

"विषयनिगरणेनाभेदप्रतिपत्तिर्विषयिणोऽध्यवसायः" इति चाध्यवसायं सम्यक् लक्षयित्वा उत्प्रेक्षायां विषयोपादानात् तत्राध्यवसायमूलकत्वसमर्थनार्थम् अध्यवसायं सिद्धसाध्यभेदेन विभज्य तत्र साध्यदशायां निगरणपदस्य स्वारसिकार्थं परित्यज्य विषयिणोऽसत्यत्वरूपमर्थं च तस्य कल्पयित्वा निगीर्यमाणावस्थकोऽध्यवसाय उत्प्रेक्षायाम्, निगीर्णावस्थकोऽध्यवसायोऽतिशयोक्तावित्युभयोरध्यवसायमूलकत्वम् अव्याहतमिति व्याख्यानं क्लिष्टकल्पनापूर्णं वर्तते।

कृतायामप्येतादृशक्लिष्टकल्पनायां सिद्धाध्यवसाये ज्ञानस्य निश्चयात्मकत्वं साध्याध्यवसाये तस्यानिश्चयात्मकत्वम् इत्ययथार्थज्ञाने तस्मिन् वैलक्षण्यम् अनपलपनीयमेव। किञ्च –

'विषयविषयिणोः सामानाधिकरण्येनोपात्तयोरभेदप्रतिपत्तिरारोप' इत्युक्तत्वाद् आरोपात् साध्याध्यवसायस्य वैलक्षण्यमपि दुस्सम्पादं भवति। उभयत्र विषयविषयिणोरुपात्तत्वात्। तस्माद् अध्यवसायमूलकत्वं मा भूद् उत्प्रेक्षायाः। अस्तु सम्भावनामूलकत्वम्। सम्भावना चोत्कटकोटिकः संशयस्तर्कात्मकज्ञानरूपा वा। न तु निश्चयज्ञानरूपा। एवञ्चाध्यवसायमूलाऽतिशयोक्तिरेव। तत्र निश्चितत्वमेव ज्ञानस्य। अत एव –

'अध्यवसाये व्यापारप्राधान्ये उत्प्रेक्षा'।

इत्यध्यवसायमूलकत्वं सूत्रयित्वापि सर्वस्वकारः–

"तदेवम् अप्रकृतगतगुणक्रियाभिसम्बन्धात् अप्रकृतत्वेन प्रकृतस्य सम्भावनमुत्प्रेक्षा।" इति न्यगमयत्। उत्प्रेक्षाया अध्यवसायमूलकत्वाङ्गीकारेण खलु संभावनाया अध्यवसायप्रभेदत्वकथनमापतितम्। तदर्थं न महती क्लिष्टकल्पना। तस्माद् अयमेव लघीयान् पन्था यत् सम्भावनामूला उत्प्रेक्षा, अध्यवसायमूला च अतिशयोक्तिरिति। अत एव मम्मटचार्योऽपि "सम्भावनम् अथोत्प्रेक्षा"[192] इत्युत्प्रेक्षां लक्षयामास।

## 2. 8.6 व्यतिरेकः

अलङ्कारशास्त्रग्रन्थेषु व्यतिरेकालङ्कारम् अधिकृत्य सुमहती चर्चा कृता दृश्यते। विभिन्नमतानां परिशीलने कृते मतानां द्वैराश्यं व्यतिरेकव्युत्पत्तिसिद्धम्

अनुभूयते। 'वि' 'अति' इत्युपसर्गद्वयार्थस्यापि प्राधान्यस्वीकारे भेदो वैलक्षण्यम् इत्यादिरूपोऽर्थो निष्पद्यते। अस्मिंश्च पक्षे उपमानादुपमेयस्याधिक्य एव व्यतिरेकालङ्कारः, इतरथा तु नेति सिद्ध्यति। स्पष्टं चेदं वामनसूत्रे[193] –

'उपमेयस्य गुणातिरेकित्वं व्यतिरेकः'

इत्यत्र। 'वि' इत्युपसर्गार्थस्य परिगणनेऽपि विशेषेणातिरेकोऽतिशयो व्यतिरेक इति व्यतिरेकशब्दव्युत्पत्तिमेते मन्यन्ते। अत एव भामहः[194] –

"यद् विशेषनिदर्शनम्" इति लक्षयाञ्चकार।

अत्र च प्रथमराशौ रुद्रटः, रुय्यकः, विद्यानाथः[195], अप्पय्यदीक्षितश्चान्तर्भवन्ति। द्वितीयराशौ च भामहः, वामनः, उद्भटः, मम्मटः, विद्याधरः, जगन्नाथः, धर्मसूरिश्चान्तर्भवन्ति।

उपमानादुपमेयस्याल्पत्वेऽपि व्यतिरेकमङ्गीकुर्वतो रुद्रटस्येदमुदाहरणम् –

"क्षीणः क्षीणोऽपि शशी भूयो भूयोऽभिवर्धते सत्यम्।
विरम प्रसीद सुन्दरि! यौवनमनिवर्ति यातं तु।।"[196] इति।

रुय्यकोऽप्यमुमेव श्लोकमुदाहृत्य एवं समन्वितवान्–

"चन्द्रापेक्षया च यौवनस्य न्यूनगुणत्वम्।
शशिवैलक्षण्येन तस्य अपुनरागमात्"।[197] इति।

मम्मटस्तु प्रभेदम् अमुम् असहमानः "क्षीणः क्षीणोऽपि...... इत्यादावुपमानस्योपमेयादाधिक्यमिति केनचिद् उक्तं तदयुक्तम्। अत्र यौवनगतास्थैर्याधिक्यं हि विवक्षितम्"[198] इत्युदाहरणममुं दूषयामास। एवं मम्मटेन प्रभेदस्यास्य खण्डनानन्तरं विद्याधरादयोऽनेके आलङ्कारिकास्तमेवानुसृतवन्तः। पण्डितराजजगन्नाथोऽपि रुय्यकमतप्रतिष्ठापने प्रवृत्तस्य जयरथस्य व्याख्यानं दूषयन् उपात्तगुणेनापुनरागमनरूपेणानुपात्तगुणेन सकलसुखनिधानत्वादिना चोपमेयस्य यौवनस्योत्कर्ष एवात्र वाक्यार्थः।

"अन्यथा किमित्यस्य कदर्यस्य यौवनस्य कृते मया मानाद्विरंस्यते? यातु नाम यौवनमिति प्रतिकूलेनार्थेन प्रकृतार्थस्यापुष्टतापत्तेः।"

इति स्थापयित्वा–

"किञ्च यत्र क्वापि शाब्द उपमेयस्यापकर्षस्तत्रापि स तस्य वाक्यार्थ- पर्यवसायितया उत्कर्षात्मना परिणमति।"[199]

इत्युदाहरणं सयुक्तिकं सिद्धान्तयामास।

युज्यते चैतत्। व्यतिरेक इति पदस्य वैलक्षण्यमात्रमित्यर्थस्वीकारेऽप्यु-पमानादुपमेयस्याधिकगुणत्व एव सार्थकस्तद् भवति। उपमानं नाम अधिकगुणं वस्तु, उपमेयं नाम न्यूनगुणं वस्त्वित्यालङ्कारिकसमयः। अन्यथा उपमितिक्रिया-मात्रस्याचमत्कारापत्तेः। एवं सिद्धस्योपमानोपमेयभावस्य वैलक्षण्यमुपमेयाधिक्य एव खलु घटेत।

अत एव धर्मसूरिरपि-

"व्यतिरेकस्तूपमानादुपमेयेऽतिशायिनि" इति मम्मट-दीनामेव पक्षमाश्रितवान्।

व्यतिरेकालङ्कारप्रभेदपरिगणनविषये किञ्चिद् बोद्धव्यम् अस्ति। वामनेन चत्वारः, उद्भटेन अष्टौ, रुद्रटेन चत्वारः, मम्मटमल्लिनाथाभ्यां चतुर्विंशतिः, जगन्नाथेन ततोऽप्यधिका अस्य भेदाः परिगणिताः। जगन्नाथेनोपमाप्रभेदानां सर्वेषाम् अत्र सम्भव उक्तः, उदाहृतश्च। धर्मसूरिस्तु सम्भवदनेकप्रभेदस्या-स्यालङ्कारस्य प्रभेदपरिगणने ग्रन्थगौरवम् आशङ्क्य प्रभेदपरिगणनमेवं न चकार।

### 2. 8.7 दीपकम्

दीपकालङ्कारविषये धर्मसूरिः पूर्वालङ्कारिकेभ्योऽनेकेषु विषयेषु भिद्यते। दीपकालङ्कारस्वरूपविचारे, तत्प्रभेदपरिगणने च धर्मसूरिः स्वातन्त्र्यम् अवलम्ब्य मौलिकविषयेषु स्वमतिभेदं प्रादर्शयत्।

दीपयतीति दीपकम्, दीप इव दीपकमिति दीपकशब्दस्य व्युत्पत्तिद्वयं प्रसिद्धम्। एतद् व्युत्पत्तिद्वयसिद्धार्थम् अवलम्ब्यैव दीपकालङ्कारस्वरूपं व्याख्यातं प्राचीनैः। यथा –

"प्राकरणिकाप्राकरणिकयोर्मध्याद् एकत्र निर्दिष्टः समानो धर्मः प्रसङ्गेनान्यत्रोपकाराद् दीपनाद् दीपसादृश्येन दीपकाख्यालङ्कारोत्थापकः" इति सर्वस्वकारः[200]। एवमेवैकावलीकारोऽपि[201] –

"प्रकृताप्रकृतसमुदाये यस्य कस्यापि सन्निहितं साधारणधर्मप्रति-पादकं क्रियापदं गुणपदं वा यदान्यदपि दीपयति साधारणंधर्मसम्बन्धित्वेन द्योतयति तद् दीपकम्" इति व्याचख्यौ।

एवञ्च दीपसाम्यात् प्राकरणिकेऽप्राकरणिके वा एकत्रैव वस्तुतो भवन् एको धर्मोऽन्यस्यापि दीपको यदि तत्र दीपकमित्युक्तं भवति। यथैकत्र स्थितो दीपोऽन्यत्र स्थितमपि वस्तु दीपयति तद्वत्। एवमेव बिन्दुलङ्कारे कविचक्रवर्ती हरिहरः[202] –

यः प्रस्तुताप्रस्तुतयोः वर्गे कुत्रापि सङ्गतः।
समानो धर्म एकोऽन्यद्दीपयेत् तत्तु दीपकम्।।

इति दीपकं लक्षयाञ्चकार।

धर्मसूरिरत्र भिद्यते। 'न परीक्षाक्षमम्' इति पूर्वोक्तं व्याख्यानमिदं दूषयाञ्चकार। धर्मस्य वस्तुत एकत्रावस्थानमन्यप्रकाशकत्वञ्च तेन निरकारि। धर्म उभयवस्तुगत एव स्यात्। तर्हि दीपकशब्दस्य प्रवृत्तिः कथमिति चेत्, उभयानुगत एव धर्म उभयोरौपम्यं दीपयति = प्रकाशयतीति दीपकशब्दप्रवृत्ति-रित्यकथयत्–

"प्रकृताप्रकृतसमुदायसम्बन्धी समानो धर्मो यत्रौपम्यं दीपयति तत्र दीपकम्।"

एवंविधं दीपकशब्दव्याख्यानं विद्यानाथेनैव प्राथम्येन प्रदर्शितम्, स्वीकृत-श्चाप्पय्यदीक्षित-जगन्नाथाभ्याम्। तथा हि विद्यानाथः–

"यत्र प्रस्तुताप्रस्तुतानां समस्तानामेव समानधर्मसम्बन्धेनौपम्यं गम्यते तद्दीपकम्"[203] इति व्याचख्यौ। एवम् –

"वदन्ति वर्ण्यावर्ण्यानां धर्मैक्यं दीपकं बुधाः।"[204]

इत्यप्पय्यदीक्षितः, तथा –

"प्रकृतानाम् अप्रकृतानाञ्चैकसाधारणधर्मान्वयो दीपकम्।"[205]

इति च जगन्नाथपण्डितराजश्च व्याचख्यतुः।

भामहमारभ्य सर्वैरप्यालङ्कारिकैर्दीपकस्य समानधर्मस्य आदिमध्यान्त-

गतत्वेन त्रैविध्यं प्रत्यपादि। मम्मटाचार्यः पुनर्नैवंविधं विभागम् अकार्षीत्, परन्तु तन्निरसनमपि नाकार्षीत्। धर्मसूरिः पुनः –

"तद्विचारचारुचेतसां नान्तरङ्गमालिङ्गति। धर्मस्य आदिमध्यान्तगतत्वभेदेन काव्यचारुतायां विशेषादर्शनात्। अन्यथा प्रथमद्वितीयादिपादगतत्वप्रकारैर्भेदान्तराण्यपि किमिति नाजीगणन्"। (पृ० 123)

इति स्पष्टोक्त्या त्रैविध्यमेतन्निराचकार। अर्वाचीनेषु जगन्नाथपण्डित एव केवलम् अनयैव युक्त्या एतत्त्रैविध्यं तिरश्चकार।

युज्यते चैतत्। गम्यौपम्यकृतश्चमत्कार एव दीपकस्यालङ्कारत्वप्रयोजकः। तस्य च धर्मस्यादिमध्यान्तगतत्वेन विशेषाभावात् तत्प्रयुक्तस्त्रेधा विभागो गड्डुरिकाप्रवाहजनित एव।

किञ्च भामहलक्षणे "एकस्यैव त्र्यवस्थत्वात्"[206] इति समानधर्मस्य सामान्यतः कथनेन गुणरूपत्वं वा क्रियारूपत्वं वा न प्रतिपादितम्। वामनाचार्यस्तु "एका क्रिया"[207] इत्यनेन समानधर्मं क्रियारूपम् अमन्यत। उद्भटभट्ट एव ऐदम्प्राथम्येन "अन्तर्गतोपमा धर्मा"[208] इति दलेन प्रकृताप्रकृतानाम् एकधर्मान्वयरूपं दीपकस्वरूपं निरूपयामास। स चैष धर्मशब्दो गुणक्रियावाचक इति एकावलीकारस्तुल्ययोगितालङ्कारे व्याचख्यौ। एवं धर्मशब्दव्याख्यानमाकलयन् धर्मसूरिर्गुणक्रियेतरस्य द्रव्यस्यापि धर्मत्वदर्शनाद् द्रव्यगुणक्रियाणां तत्तदभावानां च आहत्य षण्णामपि समानधर्मत्वं तुल्ययोगितायां दीपके चाभ्युपागच्छत्।

एवं प्राचीनालङ्कारिककृतं प्रभेदत्रयं निरस्य भेदषट्कनिरूपणं धर्मसूरेः परीक्षणकौशलं स्पष्टयति।

अपि च रुद्रटः कारकदीपकमैदम्प्राथम्येन निरूपयामास। "तद्वत्कारकपदमपि" इति कथनाद् बहूनां क्रियापदानामेकं कारकपदमपि दीपकमेवेति तस्याशयः। उदाजहार च –

निद्रामपहरति जागरमुपशमयति मदनदहनसन्तापम्।
जनयति कान्तासङ्गमसुखं च कोऽन्यस्ततो बन्धुः।।[209] इति।

तदनु मम्मटादय आचार्याः प्रभेदम् अमुम् अङ्गीकृतवन्तः। धर्मसूरिस्तु प्रभेदममुं निरकार्षीत् –

"केचित्तु एकस्य कारकस्य अनेकक्रियासम्बन्धेऽपि दीपकमाहुः - - - न परीक्षाक्षमम्।" (पृ० 124) इति। स्वपक्षस्यानुकूलां युक्तिं न प्रादर्शयत्।

अत्र धर्मसूरेर्हृदयमेवं वयं तर्कयामः। क्रियायाः समानधर्मतायोग्यतायाः सत्त्वात् प्रकृताप्रकृतधर्मिणोर्यदैकक्रियान्वयो भवति तदा समानधर्मरूपिणी सा क्रिया प्रकृताप्रकृतधर्मिणोरौपम्यं दीपयति। किन्तु कर्त्रादिकारकमेकं यदा नानाक्रियास्वन्वेति तदैककर्तृकत्वरूपेण तेन समानधर्मेण तासां मध्ये औपम्यं दीप्तं न भवति। सर्वैरेतदङ्गीकृतमेव यद् दीपके गम्यमौपम्यमेव चारुत्वहेतुरिति। तादृशचारुत्वहेतोरभावात् कारकदीपकम् अलङ्कारो भवितुं नार्हतीति। स्पष्टमेतदुक्तं जगन्नाथेन मम्मटीयकारकदीपिकोदाहरणम् –"खिद्यति कूणतीत्यादिकं खण्डयता यत् स्वेदनकूणनादि- क्रियाणां मध्ये औपम्यं नास्ति"[210] इति।

यद्यपि तदुदाहृते 'वासयति हीनसत्त्वान्' इत्यादौ हीनसत्त्ववासनादीनां राजकर्तृकाणां क्रियाणां सहृदयहृदयं प्रमाणीकृत्य तेनौपम्यसत्त्वं स्थापितं[211] तथापि वयं तत्राप्यौपम्याभावमेव प्रतीमः। तस्मात् कारकदीपकस्य अलङ्कारत्वकथनम् अविचारितरमणीयमेवेति।

## 2. 8.8 अर्थान्तरन्यासः

अर्थान्तरन्यासे प्रभेदपरिगणनविषय एव एकावल्यादिग्रन्थेभ्यः साहित्य-रत्नाकरे ईषद्वैलक्षण्यम् अनुभूयते। तथा हि – एकावल्यां सामान्येन विशेषस्य विशेषेण सामान्यस्य च समर्थनरूपं द्वैविध्यमेवास्यालङ्कारस्य परिगणितम्[212]। धर्मसूरिस्तु –

"अयं द्विविधोऽपि साधर्म्यवैधर्म्याभ्यां प्रवर्तमानश्चतुर्विधो भवति"। (पृ० 139) इति चातुर्विध्यं प्रतिपादयामास। एवं साधर्म्यवैधर्म्यरूपभेदद्वयसाधितं चातुर्विध्यं रुद्रटेन[213] मम्मटेन[214] चाङ्गीकृतमेव। किञ्च रुय्यकः सामान्य-विशेषयोरिव कार्यकारणयोरप्येकेनेतरसमर्थनम् अर्थान्तरन्यासम् अङ्ग्यकरोत्। एषां चतुर्णामपि साधर्म्यवैधर्म्याभ्यां द्वैविध्येऽष्टविधोऽसौ तस्य मतेन सिद्ध्यति[215]। धर्मसूरिणा तु कार्यकारणयोरितरेतरसमर्थनरूपप्रभेदद्वयं न स्वीकृतम्।

## 2. 8.9 पर्यायोक्तम्

प्रस्तुतेनोच्यमानेन कार्येण प्रस्तुतं यदि।

कारणं गम्यते तत्र स्यात्पर्यायोक्त्यलङ्कृतिः।। (पृ॰ 131)

इति पर्यायोक्तालङ्कारस्य लक्षणमाह धर्मसूरिः। अत्र गम्यत इति पदप्रयोगसामर्थ्यात् प्रस्तुतं कारणं व्यङ्ग्यं भवतीत्याशयो वर्णितुं शक्यते। अभ्युपगतं चैवमेव उद्भट-आनन्दवर्धन-अभिनवगुप्त-मम्मट-विद्याधर-पण्डितराजजगन्नाथ-विश्वेश्वरादिभिः। शोभाकरमित्रस्तु लक्षणाबोध्यं तदित्यङ्गीचकार। परन्तु धर्मसूरिः कण्ठोक्त्या प्रस्तुतकारणस्य व्यङ्ग्यत्वं तिरश्चकार। तथा हि -

> "कार्योक्त्या कारणमपि पर्यायेणोक्तमिव भवतीति पर्यायोक्तिपदप्रवृत्तिः। कार्याभिधानभङ्गीनैपुण्येन कारणस्योक्तप्रायत्वमेवेति न व्यङ्ग्यत्वम्।" (पृ॰ 131)

इति कथनेन व्यङ्ग्यत्वं तस्य परास्तं तेन। एवञ्च व्यङ्ग्यत्वाभावे कीदृशं नाम गम्यत्वमिति विचारणीयं भवति।

'पीनो देवदत्तो दिवा न भुङ्क्ते' इति वाक्यप्रयोगभङ्गीनैपुण्येन यथा रात्रिभोजनरूपं कारणमुक्तप्रायमिव भवति न तूक्तं भवति वाचकाभावात्, न वा व्यङ्ग्यं भवति व्यञ्जकाभावात्। किन्त्वाक्षिप्तं भवति। आक्षेपस्य चाशाब्दत्वात् तल्लभ्यार्थस्य वाच्यत्वव्यङ्ग्यत्वशङ्काऽपि नास्ति। एवमेव जातिशक्तिवादे यथा व्यक्तिरुक्तप्राया भवति, क्रियाद्यन्वयावश्यम्भावित्वान्न तूक्ता भवति। एवमेवात्रापि प्रस्तुतं कारणमाक्षिप्तं भवतीति धर्मसूरेरभिप्रायो भवितुम् अर्हति।

येऽपि प्रस्तुतकारणस्य व्यङ्ग्यत्वम् अङ्गीकृतवन्तो रुय्यक-मम्मट-विद्याधरादयस्ते सर्वे व्यज्यमानं कथं वाच्यं भवति? इति प्रश्नं समाधातुं महान्तं क्लेशम् अन्वभूवन्[216]। अव्यङ्ग्यवादी शोभाकरमित्रः पण्डितराजजगन्नाथेन सोपपत्तिकं खण्डितः। एवं विविधमतानि पर्यालोच्य पण्डितराजः स्वयं व्यङ्ग्यपक्षम् अवलम्ब्यापि 'आक्षेपो वा' इत्याक्षेपपक्षं कटाक्षितवान्[217]। तस्मात् प्रस्तुतं कारणमाक्षिप्यत इति कथनं लघु भवति सोपपत्तिकं च भवति। तस्मात् प्राचीनैः सर्वैरपि पर्यायोक्तस्य गुणीभूतव्यङ्ग्यरूपमध्यमकाव्यरूपत्वं यदङ्गीकृतं तद् धर्मसूरिणो मते न घटते। व्यङ्ग्यसम्पर्काभावादिति वेदितव्यम्।

**2.8.10 समः**

धर्मसूरिः परस्परविरूपघटनात्मकस्य विषमालङ्कारप्रभेदस्य प्रातिलोम्येनान्योन्यानुगुणवस्तुघटनात्मकं समालङ्कारम् अभ्युपागच्छत्। अत्र खलु ऐदम्प्राथम्येन समालङ्कारं प्रतिपादितवन्तं मम्मटाचार्यमारभ्य विद्याधरपर्यन्तं नास्ति कस्यापि विप्रतिपत्तिः। किन्तु शोभाकरमित्रं पण्डितराजजगन्नाथञ्च विहायेतरे सर्व एवैते आलङ्कारिका विमुखाः कारणविलक्षणकार्योत्पत्तिरूपस्येष्टप्राप्तौ व्याप्रियमाणस्यानिष्टनिष्पत्तिरूपस्य च विषमालङ्कारप्रभेदस्य प्रातिलोम्येन उभयसमालङ्कारप्रभेदाङ्गीकरणे।

तथा हि – शोभाकरोऽलङ्काररत्नाकरे रुय्यकमतं खण्डयित्वा त्रिविधस्यापि विषमालङ्कारस्य प्रातिलोम्येन त्रिविधमपि समालङ्कारम् अभ्युपागच्छत्[218]। एवम्–

> "न त्वाद्यभेदद्वयम्। तद्विपर्ययस्य कारणादनुरूपकार्योत्पत्तिरूपस्य वाञ्छितार्थप्राप्तिरूपस्य च वस्तुसिद्धतया चारुताविरहात्।"

इति वदन्तं रुय्यकमाक्षिपन् पण्डितराजजगन्नाथोऽपि –

> "वस्तुतोऽननुरूपयोरपि कार्यकारणयोः श्लेषादिना धर्मैक्यसम्पादनद्वाराऽनुरूपतावर्णने वस्तुतोऽनिष्टस्यापि तेनैवोपायेन इष्टैक्यसम्पत्ताविष्टप्राप्तिवर्णने च चारुताया अनुपदमेव दर्शितत्वात्।" विषमालङ्कारप्रभेदत्रयप्रातिलोम्येन समालङ्कारप्रभेदत्रयं स्वीचकार[219]।

धर्मसूरेरत्र तृतीयः पन्था दृश्यते। स हि –

> "अपरे तु विसदृशकार्योत्पत्तिवैधर्म्येणापि समालङ्कारप्रभेदं सरूपकार्योत्पत्तिमुखेनावतारयन्ति। अनिष्टनिष्पत्तिवैधर्म्येणोत्पादनं वैचित्र्यात् सर्वैरपि उपेक्षितम् भावात्"।
> (पृ० 146–147)

इति कथयन् अनुगुणकार्योत्पत्तिरूपं समालङ्कारम् अङ्गीकृत्योदाहृतवान्। इष्टनिष्पत्तिरूपस्य च समालङ्कारत्वम् अवैचित्र्यान्न स्वीकृतवान्।

किञ्च धर्मसूरिणा 'अपरे' इति निर्दिष्टा आलङ्कारिकाः के? इत्यपि न

ज्ञायते। एवं 'सर्वैः' इति कथनमप्यसङ्गतं दृश्यते। यद्यपि धर्मसूरिर्जगन्नाथस्य समकालिको भवति तथापि रसगङ्गाधरं दृष्टवानिति वक्तुं न सन्ति प्रमाणानि। शोभाकरस्यालङ्कारत्नाकरं दृष्टवान् स्यादिति तत्र तत्र मतसाम्यात् तर्कितव्यं भवति। तेन च त्रिविधोऽपि समालङ्कारोऽङ्गीकृत एवेतीष्टनिष्पत्तिरूपस्य तस्योपेक्षा तेन न कृतेत्यतः 'सर्वैः' इति वचनम् असङ्गतं भवति।

अतोऽस्मिन्नलङ्कारेऽर्धजरतीयन्यायेन नव्यमतं स्वीकृतं धर्मसूरिणा इत्यध्यवसेयम्। अत एवानुगुणघटनात्मकस्यैकस्यैव समालङ्कारत्वम् अङ्गीकृत्येतरभेदद्वयस्य 'चारुत्वाभावात्' तन्निषिद्धवत एकावलीकृतोऽपि धर्मसूरिर्भिद्यत इति तु विशेषः।

## 2.8.11 शृङ्खलामूलालङ्काराः

शृङ्खलामूलालङ्काराश्चत्वारः- (1) कारणमाला (2) एकावली (3) मालादीपकम् (4) सार इति। एषु कारणमाला, एकावली, सारश्च प्रथमतो रुद्रटेन निरूपिताः। मालादीपकं तु दण्डिना प्रथमतया निरूपितम्, मम्मटेन तदनन्तरवर्तिभिश्च स्वीकृतम्। रुद्रटेन तु नैव स्वीकृतम्। एतेषां स्वरूपनिरूपणविषये सर्वेषामाचार्याणाम् ऐकमत्यमेव भूयोऽनुभूयते।

क्रमेणैतेषां लक्षणात्मकानीमानि सर्वस्वसूत्राणि -

"पूर्वस्य पूर्वस्योत्तरोत्तरहेतुत्वे कारणमाला।"
"यथापूर्वं परस्य विशेषणतया स्थापनापोहने एकावली।"
"पूर्वपूर्वस्योत्तरोत्तरगुणावहत्वे मालादीपकम्।"
"उत्तरोत्तरम् उत्कर्षः सारः"[220]। इति।

एतदनुसारेणायमेषां विवेकः- कारणमालायां कार्यकारणभावः पूर्वोत्तरपदार्थयोः सम्बन्धः। अत एव पूर्वपूर्वस्योत्तरोत्तरहेतुत्वे सूत्रोक्तरूपा कारणमाला यथा भवति तथा उत्तरोत्तरस्य पूर्वपूर्वहेतुत्वेऽपि कारणमालैवेति विमर्शिनीकारोऽङ्गीचकार[221]। पूर्वोत्तरपदार्थयोः पोष्यपोषकभावे मालादीपकम् एकावली च भवतः। तत्रापि पूर्वपूर्वस्योत्तरोत्तरपोषकत्वे मालादीपकम्, उत्तरोत्तरस्य पूर्वपूर्वपोषकत्वे त्वेकावलीति। यद्यपि मालादीपकैकावली-लक्षणयोः 'पोषकम्' इति पदं नास्ति, तथापि 'गुणावहत्व'-'विशेषण'पदयोरयमेव तात्पर्यार्थः। पण्डितराजजगन्नाथो मालादीपके एकावल्याः पूर्वोक्त-

वैलक्षण्यादितरदपि वैलक्षण्यं कथयामास यत् पूर्वपूर्वस्य यद् उत्तरोत्तरपोषकत्वं तदेकरूपं स्यादिति, अत एव दीपसाम्याद् दीपकशब्दप्रवृत्तिर्घटत इति च[222]।

एवं परस्परभेदस्य सुवचत्वाद् भिन्ना एवैतेऽलङ्कारा: शृङ्खलामूला इति सर्वस्वकारादीनां मतम्।

अत्रालङ्काररत्नाकरकारस्तु–

**"उत्तरोत्तरस्य पूर्वपूर्वानुबन्धित्वं विपर्ययो वा शृङ्खला"।**

इत्यनुबन्धित्वपदस्य सम्बन्धसामान्यविवक्षापूर्वकं शृङ्खलालङ्कारं लक्षयित्वा–

**"अत्र (1) पूर्वपूर्वस्योत्तरोत्तरहेतुत्वे कारणमाला, (2) तथा यथापूर्वं परस्य विशेषणपरतया स्थापनापोहेन एकावली, (3) पूर्वस्य उत्तरगुणावहत्वे मालादीपकम् इति त्रयः शृङ्खलाबन्धेनान्यैरलङ्कारा लक्षिताः। तेषु च शृङ्खलात्वपरिहारेण प्रत्येकं न विच्छित्तिविशेषोऽस्ति, येनालङ्कारभेदः स्यात्। यदि च कार्यकारणविशेषणविशेष्यभावादिविशेषाश्रयणेन भेदेनाभिधानं तर्हि उत्तरोत्तरमाधाराधेयतास्वस्वामित्वादिसम्बन्धावलम्बनेन शृङ्खलायां बहवोऽलङ्कारा उपसंख्येयाः प्रसज्येरन्। अत इह लक्ष्यव्याप्त्यर्थं शृङ्खलैव लक्षिता, अस्यां महाविषयायां तेषाम् अन्तर्भावोपपत्तेः"।**

इत्यादिना शृङ्खलामात्रवैचित्र्यमेवाङ्गीकृत्य शृङ्खलालङ्कारेऽन्तर्भावमेषां कथयामास[223]।

शोभाकरमतमिदं प्रतिचक्षाणो जयरथः शृङ्खलाकृतचारुत्वं साधारणमुपदृश्य एक एवालङ्कार इत्युच्येत यदि साधर्म्यविरोधादयः पञ्चषा एवालङ्कारा निरूपणीया भवन्ति, न तूपमादयः। अथोपमादिषु साधर्म्यापेक्षायाम् अवान्तरविशेषसत्त्वेन पृथगलङ्काराङ्गीकार इति चेत्, अत्रापि कार्यकारणभावविशेषणविशेष्यभावाद्य-वान्तरभेदसत्त्वं सुवचमेव। आधाराधेयतादिसम्बन्धावलम्बनेन बहवोऽलङ्कारा उपसंख्येयाः प्रसज्येरन् इत्युक्ते विच्छित्तिविशेषसत्त्वे कामम् अङ्गीक्रियतामिति कारणमालादीनां पृथगलङ्कारत्वपक्षं सम्यक् स्थापयामास[224]।

पण्डितराज़जगन्नाथोऽपिं शोभाकरसम्प्रदायेन प्रभावितः सन् शृङ्खलां सावान्तरभेदां निरूप्यापि पूर्वोक्तपक्षद्वयं स्ववचसाऽनूद्यैवं निष्कर्षयामास–

**"एवं शृङ्खलाविषयाणाम् अलङ्काराणां विच्छित्तिवैलक्षण्य-**

स्यानुभवसिद्धत्वात् पृथगलङ्कारत्वे सिद्धे शृङ्खलाया विरोधाभेदसाधर्म्यादिवदनुप्राणकतैवोचिता। न पृथग् अलङ्कारता। तथात्वेऽभेदादीनामपि पृथगलङ्कारतापत्तेः। पूर्णालुप्तादौ न विच्छित्तिवैलक्षण्यम्। अपि तूपमाविच्छित्तिरेवेति सम्प्रदायः"[225] इति।

एवं स्थितान् पक्षोत्तरपक्षानाकलय्यैव धर्मसूरिः कारणमालालक्षण एव-

"पोषकत्वेऽपि तं परे। उत्पत्तौ पोषणे वा कारणत्वस्यानपायादिति तेषाम् अभिप्रायः। तेनास्य चत्वारो भेदाः"। (पृ० 137)

इति शोभाकरमतं कटाक्षयित्वापि तन्मते प्रदर्शितास्वरसादेव कार्यकारणभाव एवोदाहरणं प्रदर्श्य पोषकत्वप्रभेदस्योदाहरणं नैव प्रादर्शयत्। तदिदं धर्मसूरेः परीक्षणकौशलं स्पष्टयतीति बोध्यम्।

### 2.8.12 समुच्चयः

प्रथमं रुद्रटेन प्रतिपादितस्य समुच्चयाख्यस्यास्यालङ्कारस्य बहवो भेदा निरूपिताः काव्यप्रकाशे, अलङ्कारसर्वस्वे च। एकावलीकारस्तु सङ्क्षेपतो गुणानां क्रियाणाञ्च समुच्चयाद् द्वैविध्यमेवास्य प्रतिपादयामास-

यद्भवति यौगपद्यं गुणक्रियाणां समुच्चयः स स्यात्।
एषोऽदर्शि विकल्पप्रतिभटभूतो द्विधाऽस्माभिः।।[226]

इति। अमुमेव भेदद्वयपक्षमुल्लिखितवान् धर्मसूरिः-

"एवञ्च क्रियागुणमेलनवशात् समुच्चयालङ्कारस्य विधाद्वयमेव ऊचुः प्राञ्चः"। इति। (पृ० 134)

स्वयन्तु-

"वयं तु द्रव्यजातिसमुच्चययोरपि तद्भेदतां ब्रूमः। क्रियागुणसमुच्चययोरिवानयोरपि चमत्कारकारितायाः प्रागुक्तालङ्कारसामान्यलक्षणस्य दुरपलापत्वात्।" (पृ० 134)

इत्यन्यद् भेदद्वयमपि निरूपयामास। यद्यपि विधान्तरेण भेदान्तराणि प्राचीनग्रन्थेषूपलभ्यन्त एव, तथापि द्रव्यजात्योः समुच्चयाङ्गीकरणं धर्मसूरेः स्वोपज्ञमेव। अङ्गीकरणे हेतुस्तु तेनैव प्रदर्शित इति नास्माभिर्वितन्यते। किञ्चैषां चतुर्णां भेदानां प्रत्येकं मिथश्च मेलनेन मिश्रभेदा एकादश परिगणिता धर्मसूरिणा, न तूदाहृताः।

**2.8.13 तत्करः**

तत्करालङ्कारो विद्याधरेणैव पृथक्तया प्रथमं परिगणितः। तथापि –

**"तत्सिद्धिहेतावेकस्मिन् यत्रान्यत् तत्करं भवेत् समुच्चयोऽसौ"**[227]

इति काव्यप्रकाशे,

**"एकस्य सिद्धिहेतुत्वेऽन्यस्य तत्करत्वञ्च"** इत्यलङ्कारसर्वस्वे[228] च प्रतिपादिताद् द्वितीयसमुच्चयालङ्कारभेदाद् अयम् अत्यन्तमभिन्न एव। 'तत्कर' इति शब्दोऽपि पूर्वैरेव प्रयुक्तः। अत एवैकावलीलक्षणे–

**"एकेन क्रियमाणं यत्रान्यः स्पर्धयैव तत्कुरुते।**
**सोऽपि समुच्चयभेदः कथितोऽन्यस्तत्करो द्वैधम्।।"**

इत्यस्मिन् 'समुच्चयभेदः' इत्यपि कथितम्[229]। अत एव मल्लिनाथस्तत्रैव तरले "तत्कराख्यं समुच्चयस्य भेदान्तरं लक्षयति" इति व्याचख्यौ। एवञ्च प्राचीनानां लक्षणेषु स्वरूपज्ञापकस्य 'तत्कर' इति पदस्य पृथगलङ्कारनामत्वं समपादयद् विद्याधरः, किन्तु समुच्चयस्यैव भेदान्तरत्वेनामुम् अङ्ग्यकरोत्। किञ्च समाधेरस्य वैलक्षण्यप्रतिपादनार्थम्–

**"यत्र तु खलेकपोतिकया परस्परं स्पर्धमाना इव साधयितुमेकमेव साध्यम् अवतरन्ति भूयांसस्तत्र तत्करः।"**

इति स्वयं व्यवृणोत्।

धर्मसूरिस्तु विवरणम् अमुमाधारीकृत्य लक्षयन् समुच्चयभेदत्वम् अस्य निह्नुय पृथक्तयैवास्य परिगणनम् अकार्षीत् –

**"खलेकपोतन्यायेन मिलितैर्बहुकारणैः।**
**स्वतन्त्रैः क्रियते कार्यं यत्रैकं तत्र तत्करः।।"** (पृ० 135) इति।

अपि चैकावलीकृता भूयसामेषां शोभनाशोभनत्वाभ्यामलङ्कारस्यास्य द्वैधं प्रत्यपादि – यत्र तम् अनुसरतोऽपि धर्मसूरेर्मौनमेव। नैव खलु शोभनत्वा-शोभनत्वाभ्यां विच्छित्तिविशेषोऽस्तीति धर्मसूरेरभिप्रायः।

मम्मटमारभ्य सर्वैरपि तत्करनामकसमुच्चयालङ्कारद्वितीयप्रभेदे सद्योगासद्योगसदसद्योगैस्त्रयो भेदाः परिगणिताः, यत्र तृतीयस्य निराकरणं स्वौदासीन्येन विद्याधरश्चकार। धर्मसूरिस्तु विना प्राचीनमतखण्डनं स्वीयेन मौनेन शिष्टौ द्वावपि प्रभेदौ निराकरोत्।

अत्र त्ववश्यमिदम् अवगन्तव्यं यत् सदसत्सदसद्योगात्मकप्रभेदनिराकरणं शोभाकरमित्रेणैव प्रथमम् अकारि।

"न चास्य सद्योगासद्योगसदसद्योगैर्भेदो गणनीयः, आद्ययोः समसङ्कीर्णत्वात्, उत्तरस्य विषमगर्भत्वात्, अन्यथाऽन्यालङ्कारसङ्कीर्णतया भेदगणनाप्रसङ्गात्"[230] इति।

यद्यपि धर्मसूरिणा युक्तिप्रदर्शनपूर्वकं प्रभेदा इमे न तिरस्कृताः, तथापि भूय उक्तप्रकारेण प्राचीनमताननुसरणस्थलेषु शोभाकरसम्मतेर्दर्शनं, धर्मसूरेरलङ्काररत्नाकरस्य दर्शनम् अनुकरणं चाभ्यूहयति।

### 2.8.14 निदर्शना

"अन्यधर्मान्यसम्बन्धासङ्गतौ वस्तुनोर्द्वयोः।
प्रतिबिम्बनमाक्षिप्तं यत्र तत्र निदर्शना।।" (पृ० 124)

इदं धर्मसूरेर्निदर्शनालक्षणम्। एतेन स्पष्टमिदं भवति यदसौ सम्भवद्वस्तुसम्बन्धमूलां निदर्शनां नाङ्गीचकारेति। शोभाकरमित्रो विद्यानाथश्च एवमेव।

उद्भट–मम्मट–रुय्यक–विद्याधर–जगन्नाथादिभिः प्रसिद्धैरनेकैरालङ्कारिकैर्निदर्शनैषा सम्भवदसम्भवद्वस्तुसम्बन्धमूलात्वेनोभयरूपाप्यङ्गीकृतेति धर्मसूरिस्तेभ्योऽत्र भिद्यते। किञ्च पूर्वोक्ता मम्मटादयः सर्वे आलङ्कारिकाः पदार्थवाक्यार्थरूपेण निदर्शनां द्वेधा विभक्तवन्तः। धर्मसूरिस्तु तादृशविभागमेव नाकरोत्। धर्मसूरेर्लक्ष्यलक्षणपरीक्षायां तु कृतायां मम्मटादिमतेन या पदार्थनिदर्शना भवति सैव लक्षिता उदाहृता चेति स्पष्टं भवति।

अत्रेदं बोध्यम्– पदार्थनिदर्शना तत्र भवति यत्रोपमानोपमेययोर्मध्येऽन्यतरस्य धर्मोऽन्यतरत्र आरोप्यते। उक्तञ्च पण्डितराजेन–

"अस्यास्तु (पदार्थनिदर्शनायास्तु) उपमानोपमेययोरन्यतरधर्मस्यान्यतरत्रारोपो लक्षणम् अस्तु"[231] इति।

पर्यालोच्यमाने एषा निदर्शना असम्भवद्वस्तुसम्बन्धमूलैव भवितुम् अर्हति, न तु सम्भवद्वस्तुसम्बन्धमूला। अन्यधर्मस्यान्यत्रासम्भवस्य स्पष्टत्वात्। एवञ्चेदमत्र सिद्ध्यति यद् धर्मसूरेर्मते वाक्यार्थनिदर्शना नास्ति। सम्भवतस्तेन तस्याः स्थले व्यङ्ग्यरूपकमेवाङ्गीकृतं स्यात्। अत एव सम्भवद्वस्तुसम्बन्धमूलाया निदर्शनाया

अङ्गीकरणस्यावश्यकता नास्ति। अतोऽत्र स्थले स्वोपजीव्यभूत-मम्मटविद्याधरमतमप्युपेक्ष्य स्वपरीक्षणकौशलेन विद्यानाथमते लाघवमुपलक्ष्य तमेवात्रानुससार धर्मसूरिरिति।

## 2.9 दोषविचारः

अलङ्कारशास्त्रग्रन्थेषु सर्वेष्वपि दोषप्रकरणस्य किमपि महत्त्वम् अस्त्येव। भरत-भामह-दण्डि-वामनादयः सर्व एव प्राचीनालङ्कारिका दोषसामान्य-लक्षणप्रणयने, दोषाणां विभागीकरणे, दोषसंख्याविनिर्णये च सुमहद्योगदानम् अकुर्वन्। विहाय विश्वनाथजगन्नाथौ सर्वेषामितरेषां काव्यसामान्यलक्षणे शब्दार्थयोर्विशेष्यभूतयोः 'अदोषौ' इति विशेषणमुपादीयते। तत्र केषाञ्चिद् आचार्याणां मते 'सगुणौ' 'सालङ्कारौ' इति विशेषणद्वयापेक्षया 'अदोषौ' इति दलस्य कथञ्चिदप्यनपनेयत्वम् अभिमतम्। तथा हि स्पष्टं वदति दण्ड्याचार्यः-

"तदल्पमपि नोपेक्ष्यं काव्ये दुष्टं कथञ्चन।
स्याद्वपुः सुन्दरमपि श्वित्रेणैकेन दुर्भगम्"।।[232] इति।

केशवमिश्रोऽलङ्कारशेखरे-

"दोषः सर्वात्मना त्याज्यो रसहानिकरो हि सः।
अन्यो गुणोऽस्तु मा वाऽस्तु महान्निर्दोषता गुणः"।।[233] इति।

भामहस्तु सदोषकाव्यविरचनापेक्षया तदकरणं श्रेय इति वदति-

"नाकवित्वमधर्माय व्याधये दण्डनाय वा।
कुकवित्वं पुनः साक्षान्मृतिमाहुर्मनीषिणः।।"[234] इति।

दोषविषये सम्पन्नो विचारः प्राधान्येन विषयत्रयम् आश्रित्य प्रवृत्तः- (1) दोषस्वरूपम्, तत्सामान्यलक्षणं च, (2) दोषविभागः, (3) दोषसङ्ख्या।

धर्मसूरिरपि दोषाणाम् अवश्यज्ञातव्यत्वबुद्ध्या एव पृथक्तरङ्गेण तान्निरूपयामास। एवं दोषस्वरूपसामान्यलक्षणविषये दोषविभागविषये दोषसङ्ख्याविषये च सङ्ग्रहतया स्वमतं स्पष्टं प्रकाशितवान्। किन्त्विदमत्रावधेयम्- अलङ्कारशास्त्रसम्बन्धिष्वनेकेषु विषयेषु काव्यप्रकाशस्य निरतिशयमहिमत्त्व-मप्रतिहतं प्रतिभासत इत्यनेकवारम् अस्माभिरनुभाव्यत एव। तत्र प्राधान्याप्राधा-न्यदृष्ट्या न्यूनाधिकभावविवेचने क्रियमाणे मम्मटस्य रसध्वनितत्त्वानां परिष्करणे

अत्र त्ववश्यमिदम् अवगन्तव्यं यत् सदसत्सदसद्योगात्मकप्रभेदनिराकरणं शोभाकरमित्रेणैव प्रथमम् अकारि।

> "न चास्य सद्योगासद्योगसदसद्योगैर्भेदो गणनीयः, आद्ययोः समसङ्कीर्णत्वात्, उत्तरस्य विषमगर्भत्वात्, अन्यथाऽन्यालङ्कारसङ्कीर्णतया भेदगणनाप्रसङ्गात्"[230] इति।

यद्यपि धर्मसूरिणा युक्तिप्रदर्शनपूर्वकं प्रभेदा इमे न तिरस्कृताः, तथापि भूय उक्तप्रकारेण प्राचीनमताननुसरणस्थलेषु शोभाकरसम्मतेर्दर्शनं, धर्मसूरेरलङ्काररत्नाकरस्य दर्शनम् अनुकरणं चाभ्यूहयति।

**2.8.14 निदर्शना**

> "अन्यधर्मान्यसम्बन्धासङ्गतौ वस्तुनोर्द्वयोः।
> प्रतिबिम्बनमाक्षिप्तं यत्र तत्र निदर्शना।।" (पृ० 124)

इदं धर्मसूरेर्निदर्शनालक्षणम्। एतेन स्पष्टमिदं भवति यदसौ सम्भवद्वस्तुसम्बन्धमूलां निदर्शनां नाङ्गीचकारेति। शोभाकरमित्रो विद्यानाथश्च एवमेव।

उद्भट-मम्मट-रुय्यक-विद्याधर-जगन्नाथादिभिः प्रसिद्धैरनेकैरालङ्कारिकैर्निदर्शनैषा सम्भवदसम्भवद्वस्तुसम्बन्धमूलात्वेनोभयरूपाप्यङ्गीकृतेति धर्मसूरिस्तेभ्योऽत्र भिद्यते। किञ्च पूर्वोक्ता मम्मटादयः सर्वे आलङ्कारिकाः पदार्थवाक्यार्थरूपेण निदर्शनां द्वेधा विभक्तवन्तः। धर्मसूरिस्तु तादृशविभागमेव नाकरोत्। धर्मसूरेर्लक्ष्यलक्षणपरीक्षायां तु कृतायां ममाप्यदिमतेन या पदार्थनिदर्शना भवति सैव लक्षिता उदाहृता चेति स्पष्टं भवति।

अत्रेदं बोध्यम्- पदार्थनिदर्शना तत्र भवति यत्रोपमानोपमेययोर्मध्येऽन्यतरस्य धर्मोऽन्यतरत्र आरोप्यते। उक्तञ्च पण्डितराजेन-

> "अस्यास्तु (पदार्थनिदर्शनायास्तु) उपमानोपमेययोरन्यतरधर्मस्यान्यतरत्रारोपो लक्षणम् अस्तु"[231] इति।

पर्यालोच्यमाने एषा निदर्शना असम्भवद्वस्तुसम्बन्धमूलैव भवितुम् अर्हति, न तु सम्भवद्वस्तुसम्बन्धमूला। अन्यधर्मस्यान्यत्रासम्भवस्य स्पष्टत्वात्। एवञ्चेदमत्र सिद्ध्यति यद् धर्मसूरेर्मते वाक्यार्थनिदर्शना नास्ति। सम्भवतस्तेन तस्याः स्थले व्यङ्ग्यरूपकमेवाङ्गीकृतं स्यात्। अत एव सम्भवद्वस्तुसम्बन्धमूलाया निदर्शनाया

अङ्गीकरणस्यावश्यकता नास्ति। अतोऽत्र स्थले स्वोपजीव्यभूत-मम्मटविद्याधरमतमप्युपेक्ष्य स्वपरीक्षणकौशलेन विद्यानाथमते लाघवमुपलक्ष्य तमेवात्रानुससार धर्मसूरिरिति।

## 2.9 दोषविचारः

अलङ्कारशास्त्रग्रन्थेषु सर्वेष्वपि दोषप्रकरणस्य किमपि महत्त्वम् अस्त्येव। भरत-भामह-दण्डि-वामनादयः सर्व एव प्राचीनालङ्कारिका दोषसामान्य-लक्षणप्रणयने, दोषाणां विभागीकरणे, दोषसंख्याविनिर्णये च सुमहद्योगदानम् अकुर्वन्। विहाय विश्वनाथजगन्नाथौ सर्वेषामितरेषां काव्यसामान्यलक्षणे शब्दार्थयोर्विशेष्यभूतयोः 'अदोषौ' इति विशेषणमुपादीयते। तत्र केषाञ्चिद् आचार्याणां मते 'सगुणौ' 'सालङ्कारौ' इति विशेषणद्वयापेक्षया 'अदोषौ' इति दलस्य कथञ्चिदप्यनपनेयत्वम् अभिमतम्। तथा हि स्पष्टं वदति दण्ड्याचार्यः-

"तदल्पमपि नोपेक्ष्यं काव्ये दुष्टं कथञ्चन।
स्याद्वपुः सुन्दरमपि श्वित्रेणैकेन दुर्भगम्"।।[232] इति।

केशवमिश्रोऽलङ्कारशेखरे-

"दोषः सर्वात्मना त्याज्यो रसहानिकरो हि सः।
अन्यो गुणोऽस्तु मा वाऽस्तु महान्निर्दोषता गुणः"।।[233] इति।

भामहस्तु सदोषकाव्यविरचनापेक्षया तदकरणं श्रेय इति वदति-

"नाकवित्वमधर्माय व्याधये दण्डनाय वा।
कुकवित्वं पुनः साक्षान्मृतिमाहुर्मनीषिणः।।"[234] इति।

दोषविषये सम्पन्नो विचारः प्राधान्येन विषयत्रयम् आश्रित्य प्रवृत्तः- (1) दोषस्वरूपम्, तत्सामान्यलक्षणं च, (2) दोषविभागः, (3) दोषसङ्ख्या।

धर्मसूरिरपि दोषाणाम् अवश्यज्ञातव्यत्वबुद्ध्या एव पृथक्तरङ्गेण तान्निरूपयामास। एवं दोषस्वरूपसामान्यलक्षणविषये दोषविभागविषये दोषसङ्ख्याविषये च सङ्ग्रहतया स्वमतं स्पष्टं प्रकाशितवान्। किन्त्विदमत्रावधेयम्- अलङ्कारशास्त्रसम्बन्धिष्वनेकेषु विषयेषु काव्यप्रकाशस्य निरतिशयमहिमत्त्व-मप्रतिहतं प्रतिभासत इत्यनेकवारम् अस्माभिरनुभाव्यत एव। तत्र प्राधान्याप्राधा-न्यदृष्ट्या न्यूनाधिकभावविवेचने क्रियमाणे मम्मटस्य रसध्वनितत्त्वानां परिष्करणे

तदनन्तरं गुणदोषस्वरूपसंख्याविचारे यावानभिनिवेशपूर्णः प्रयत्नविशेषः स्पष्टम् अनुभूयते तावान्नानुभूयते शब्दवृत्तिशब्दार्थालङ्कारविषयेषु विचारेषु। एतेनेदमुक्तं भवति यत् मम्मटः स्वपर्यन्तमागतां दोषदर्शनधारां सम्यग्विभज्य महता ग्रन्थेन सोदाहरणं समीक्षाञ्चक्रे। तदनन्तरकालिकेषु विद्याधरः सर्वस्य दोषदर्शनभागस्या-नुवादकरणे प्रयोजनशून्यतां विभाव्य केवलं विधेयाविमर्शादिदोषाणां पञ्चानां सुविशदं समीक्षणम् अकरोत्। विद्यानाथादयस्तु स्वचिकीर्षितग्रन्थानुगुण्येन काव्यप्रकाशानुरोधेनैव विना बहुतरविषयविवेचनं केवलं लक्षणनिरूपणलक्ष्य-प्रदर्शनक्रमेण दोषान् निरूपयामासुः। एवं स्थिते धर्मसूरिर्मम्मटानुरोधेन दोषनिरूपणे तदर्थानुवदने च वृथा ग्रन्थगौरवं, विद्याधरानुरोधेन तन्निरूपणे आलङ्कारिकतत्त्वानां सम्यक्परिचयकरणप्रयोजनकस्य स्वग्रन्थस्याननुरूप्यतां च विभाव्याक्षरशो लक्षणानि विद्यानाथीयानि स्वीकृत्य स्वलक्ष्यश्लोकैर्विद्यानाथोक्त-संख्यानुरोधेन दोषान् निरूपयामास।

अतोऽयं तरङ्गः सर्वोऽपि प्रतापरुद्रीयानुवादात्मक एव दृश्यते। लक्षणकारिकाः सर्वा अपि विद्यानाथीया एव। किन्तु केवलं दोषसामान्यलक्षणे प्रतापरुद्रीयात् साहित्यरत्नाकरे ईषद्वैलक्षण्यं सन्दृश्यते।

### 2.9.1 दोषसामान्यलक्षणविचारः

धर्मसूरेर्दोषसामान्यलक्षणम्-

"हेतुं रसापकर्षस्य बुधा दोषं बभाषिरे।
शब्दार्थद्वारकत्वात् तद्गोचरत्वेन सद्द्विधा।।" इति। (पृ० 188)

विद्यानाथस्य दोषसामान्यलक्षणं तु -

"दोषः काव्यापकर्षस्य हेतुः शब्दार्थगोचरः"[235] इति।

एतेन स्पष्टमिदं यद् विद्यानाथलक्षणे 'काव्यापकर्षस्य' इत्यस्य स्थाने साहित्यरत्नाकरे 'रसापकर्षस्य' इति पदं प्रयुक्तम्। अन्येषु दोषलक्षणेषु ईषद्वैलक्षण्यस्याप्यभावाद् अत्रैव परिदृश्यमानम् इदं वैलक्षण्यं केनापि महता कारणेन स्यादिति तर्क्यते।

दोषसामान्यलक्षणविषये अनेकानि मतानि वर्तन्ते। तत्र दण्ड्याचार्यः-

"दोषा विपत्तये तत्र[236] (गुणास्सम्पत्तये तथा)" इति।

वामनोऽपि–

"गुणविपर्ययात्मनो दोषाः" इति।

"काव्यसौन्दर्याक्षेपहेतवस्त्यागाय दोषा ज्ञातव्याः"[237]

इति च दोषसामान्यलक्षणं प्राचीकटत्।'हेयाः काव्य' इति भोजराजलक्षणस्य –

"अभिमतप्रतीतिव्यवधायकतया विघ्नभूतो (यः) शश्वत् काव्ये हेयतामासादयति स एव दोषः"।

इति व्याख्याम् अकार्षीद् रत्नेश्वरः। एतेन 'अभिमतप्रतीतिव्यवधायकत्वं दोषलक्षणम्' इत्यायाति भोजराजमते।

मम्मटस्तु –

"मुख्यार्थहतिर्दोषो रसश्च मुख्यस्तदाश्रयाद्वाच्यः।

उभयोपयोगिनः स्युः शब्दाद्यास्तेन तेष्वपि सः।।"

इत्यनेन दोषसामान्यलक्षणेन मुख्यार्थभूतरसापकर्षकत्वं दोषत्वम् इति निरूपयाञ्चकार[238]। केशवमिश्रोऽलङ्कारशेखरे तु –

"दोषत्वं रसोत्पत्तिप्रतिबन्धकत्वम्"[239]

इति केवलरसोत्पत्तौ प्रतिबन्धकानामेव दोषत्वकथनद्वारा वाच्यार्थस्य शब्दादीनाञ्च प्रतिबन्धकानां दोषत्वविषये स्वकीयवैमत्यं सूचयति।

एवं प्रदर्शितेषु तत्तदाचार्यलक्षणेषु पञ्चषाणि मतानि सिद्ध्यन्ति। तानि च गुणविपर्ययत्वं, काव्यविपत्तिहेतुत्वम्, अभिमतप्रतीतिव्यवधायकत्वं, मुख्यार्थहतित्वं, रसापकर्षहेतुत्वमिति च। सर्वेष्वेतेषु रसापकर्षहेतुत्वपक्ष एव युक्ततम इति मम्मटचार्यैः स एव पक्ष आदृतः। युक्ततमत्वं चेत्थम्। गुणविपर्ययत्वं दोषत्वमित्येतदनेकत्र व्यभिचरति। काव्यविपत्तिहेतुत्वं दोषत्वमिति पक्षेऽपि काव्यशब्देन यथाश्रुतार्थग्रहणे शब्दार्थविपत्तिहेतुत्वमित्येव यद्यपि भासते तथापि काव्यजीवितभूतरसविपत्तिहेतुत्वमेव वस्तुतः काव्यविपत्तिहेतुत्वम् इत्याश्रयणीयम्। अन्यथा कष्टत्वादीनामनित्यदोषत्वं न सिद्ध्यति। अभिमतप्रतीति-व्यवधायकत्वमिति पक्षे रसस्यैवाभिमतार्थत्वम् एषितव्यम्। तदपेक्षया अभिमतार्थस्यान्यस्याभावात्।

एवं शब्दभेदेऽपि रसापकर्षहेतुत्व एव पूर्वाचार्याणां मतानां पर्यवसानस्य सुवचत्वात् मम्मटः 'मुख्यार्थहतिर्दोषो रसश्च मुख्य' इति रसापकर्षहेतुत्वं दोषत्वमिति लक्षयामास। अत एव सम्भवदस्पष्टतापरिहारार्थं धर्मसूरिः सर्वेषु दोषलक्षणेषु विद्यानाथम् अनुकुर्वाणोऽपिं सामान्यलक्षणे मम्मटलक्षणमाश्रित्य 'हेतुं रसापकर्षस्य बुधा दोषं बभाषिरे' इति सामान्यलक्षणम् अकथयत्। तथा हि विद्यानाथलक्षणे काव्यापकर्षशब्दस्य काव्यशरीरभूतशब्दार्थमात्रपरत्वरूप-यथाश्रुतार्थं परित्यज्य रसपर्यन्तार्थत्वं कल्पनीयम्। तदपेक्षया 'रसापकर्षहेतुत्वम्' इति कथनं स्पष्टतरं भवति। वाच्यार्थस्य शब्दादीनाञ्च येऽपकर्षहेतवः केचन दोषास्तेष्वपि रसापकर्षहेतुत्वरूपं लक्षणं व्याप्नोत्येव। यत्र क्वचन रसापकर्षं विना केवलवाच्यार्थाद्यपकर्षहेतुत्वमेव भवति तादृशे स्थले तादृशस्यादोषत्वमेव। अत एव कष्टत्वादीनां दोषाणां शृङ्गारादिरसप्रधानकाव्येष्वेव दुष्टता, न तु वीरादिरसप्रधानेष्विति दोषाणां नित्यत्वानित्यत्वव्यवस्थापि घटत इति प्रकृतलक्षणे सर्वमनवद्यम्।

### 2.9.2 दोषविभागो दोषसङ्ख्या च

वामनेनैदम्प्राथम्येन दोषाः पद-पदार्थ-वाक्य-वाक्यार्थभेदेन चतुर्धा विभक्ताः। अनन्तरकालीनेष्वनेके पदार्थ-वाक्यार्थदोषाणां सम्भूयार्थदोषत्वम् अङ्गीचक्रुः। दोषविभाग-दोषसंख्याविषये धर्मसूरिर्विद्यानाथमेव सर्वात्मना अनुसरति। लक्षणानि तदीयान्येवात्रोदाह्रियन्ते। संख्याप्यन्यूनानतिरिक्तरूपेण तदीयैव। तथा हि विद्यानाथो दोषाणां पद-वाक्य-अर्थगतत्वरूपेण त्रेधा विभागं प्रदर्श्य सप्तदशपददोषान् चतुर्विंशतिवाक्यदोषान् अष्टादशार्थदोषाँश्च लक्षयित्वा उदाजहार। धर्मसूरिरपि तथैव।

अंशद्वयमत्रावधेयमस्ति-

(1) दोषप्रकरणे एकावलीतत्तरलयोः छायापि नास्ति साहित्यरत्नाकरे। हेतुरत्र पूर्वमेव प्रपञ्चितः।

(2) वाक्यार्थदोषप्रस्तावे लक्षणैः साकम् उद्देशक्रमोऽपि विद्यानाथीय एवादृतः। दोषाणां नामस्वपीषदपि वैलक्षण्यं न कल्पितम्। पददोषप्रस्तावे तूद्देशक्रमोऽपि विपरिवर्तितस्तथा दोषद्वयस्य नामन्यपि ईषद्वैलक्षण्यम् आपादितम्। तथा हि - विद्यानाथेन निरर्थकमिति यत्पठितं तदेव व्यर्थमिति पठितं धर्मसूरिणा। एवमेव विद्यानाथीय-

श्च्युतसंस्कारनामको दोषो धर्मसूरिणाऽसाधुरिति पठितः। किमत्र कारणम्? इति पर्यालोच्यमाने इदमस्माकं प्रतिभाति-धर्मसूरिः स्वकविताकौशलं निरूपयन्निव सप्तदशानामपि पददोषाणामेक-मेवोदाहरणम् अलिखत्। यथा -

"पाथोवाहपदस्त्रिसप्तदशदोर्गल्लश्च वै गुह्यके-
शादीनादिहवे कजारिपितृजिज्जित्योर्जितो दैवतान्।
युद्धे क्लेशगतोऽम्बिकारमणलब्धौर्वर्ध्यवद्रावणः
कोपाच्छोणितलोचनो रघुपतेर्धाम्ना विदग्धोऽभवत्।।"

(पृ० 188)

अस्मिन्नेकोदाहरणे येन क्रमेण दोषाः सङ्घटन्ते तेनैव क्रमेणोद्देशस्य ग्रथनमुचितमिति मत्वा धर्मसूरिरुद्देशक्रमं प्रतापरुद्रीयं परित्यज्य स्वातन्त्र्यम् अवलम्बितवान्। एवम् उद्देशश्लोके च्युतसंस्कारनिरर्थकपदयोर्दुर्घटत्वमालोच्य असाधु-व्यर्थमिति नामभ्यां तावेवाभिहितवान्। अत एवोद्देशे 'असाधुः' इति पठित्वापि 'जित्य' इत्यत्र तद्दोषसमन्वयं कुर्वाणो धर्मसूरिः-

'शब्दशास्त्रविरुद्धं यत् च्युतसंस्कारमिष्यते'। (पृ० 189)

इति तल्लक्षणं च्युतसंस्कारपदघटितं प्रतापरुद्रीयं तथैवापठदिति।

एवमेकमेव श्लोकं सप्तदशदोषघटितं निर्मायातिसुलभतया तमेवापगतसर्वदोषं चकार। यथा -

"पाथोराशिनिकेतनो द्विदशदोर्गण्डो धनेशादिकान्
सङ्ग्रामाङ्गणसीम्नि शक्रविजयी जित्वोर्जितो निर्जरान्।
युद्धेऽहङ्कृतिमान्मृगाङ्कमकुटाल्लब्धोदयो रावणः
कोपाद्रक्तविलोचनो रघुपतेर्दग्धोऽभवत्तेजसा"।। (पृ० 190)

एवमेकोदाहरणनिबन्धनेन पुनरपि तस्यैवापगतदोषत्वेन ग्रथनेन च पठितृणामप्युदाहरणोपस्थितौ सौविध्यं दोषापनयने व्युत्पत्तिश्च भवतीति प्रशंसनीयोऽसौ प्रकारः।

### 2.10 ध्वनिविचारः

ध्वनितरङ्गेऽस्मिन् ध्वनिव्यवस्थापनं ध्वनिभेदपरिगणनञ्च क्रियते।

ध्वनिवादोऽयम् आनन्दवर्धनात् पूर्वमपि तत्र तत्र आम्नात आसीत्। किन्तु आनन्दवर्धनाचार्य एवास्य वादस्य परिष्कृतं रूपम् अकल्पयत् स्वे ध्वन्यालोके। ध्वनिव्यवस्थापनाय प्रयतमानेन तेन ध्वन्यभाववादिनाम् अनेके पूर्वपक्षाः खण्डिताः। तत्रैव लोचने अभिनवगुप्तपादैरपि ध्वनिव्यवस्थापनाय बहवो नूतनांशाः प्रतिपादिताः। एतद्ग्रन्थद्वयोत्पत्त्यनन्तरं मम्मटाचार्यस्तत्रत्यैः कैश्चित् नूतनैश्चांशैर्ध्वनिव्यवस्थापनविचारं परिष्कृत्य सिद्धान्तितवान्। एकावलीकारस्तु प्रथमोन्मेषे आनन्दवर्धन-अभिनवगुप्त-मम्मटाचार्याणां ध्वनिव्यवस्थापनरीतिं सुविशदम् अन्ववादीत्।

धर्मसूरिस्तु भूयः शब्दसाम्येन एकावलीम् अनुसरन्नपि ततोऽर्द्धमंशानामनुवदत्यर्द्धं तु परित्यजति। तथा हि - एकावल्याम्[240] अभाववादास्त्रयः (अभाववादः, चारुताहेतुत्वाभावाद् ध्वनिर्नास्तीति वादः, गुणालङ्कारान्तर्भाववादश्च), अनुमितिवादः, अभिधेयवादास्त्रयश्च (भाट्टमीमांसकानाम् अभिहितान्वयवादः, प्राभाकरमीमांसकानाम् अन्विताभिधानवादः, सोऽयमिषोरिवेत्यादिप्राचीनमीमांसकवादश्च) पूर्वपक्षरूपेण निरूपिताः सम्यक् खण्डिताश्च। साहित्यरत्नाकरेऽपीमेंऽशा विचारिता एकावल्यनुवदनात्मकतयैव। अनन्तरम् एकावल्यां च्युतसंस्कृत्यादिदोषाणां नित्यत्वस्य श्रुतिकटुप्रभृतिदोषाणाम् अनित्यत्वस्य चाङ्गीकारबलात्, असभ्यस्मृतिहेतुपदसन्निधिस्थले अश्लीलरूपदोषाङ्गीकारबलाच्च ध्वनिः संस्थापितः। एवमेव वाच्यव्यङ्ग्ययोः स्वरूपभेदेन, कालभेदेन, आश्रयभेदेन, कारणभेदेन, व्यवहारभेदेन, कार्यभेदेन, विषयभेदेन च भेदः संसाधितः। एवञ्च ध्वनिर्वाच्याद् विविक्ततया व्यवस्थापितः। अनन्तरञ्चानिर्वचनीयवादः, भाक्तवादश्च खण्डितः। तदेतत्सर्वं साहित्यरत्नाकरे परित्यक्तं धर्मसूरिणा। परित्यागस्यास्य कारणं तु ग्रन्थस्य लाघवसम्पादनाद् अन्यदस्माभिर्न विभाव्यते।

ध्वनिभेदपरिगणनविषये तु नास्त्येव भेद एकावली-साहित्यरत्नाकरयोः। इदं त्ववधेयम्- विद्याधरेण रसविचारोऽसंलक्ष्यक्रमव्यङ्ग्यपरिगणनसमय एवाकारि। धर्मसूरिस्तु सौविध्यार्थं रसतरङ्गे विविक्ततया न्यरूपयत्। एवं प्रबन्धप्रकाश्यानां व्यङ्ग्यानामुदाहरणतया गृध्रगोमायुसंवाद उदाहृतो विद्याधरेण। धर्मसूरिणा तु नैष भेद उदाहृतः। एवमेव ध्वनिभेदानां साकल्येन परिगणनं कृतं धर्मसूरिणा। यत्तावन्न दृश्यत एकावल्याम्।

अयमत्र धर्मसूरेर्ध्वनिव्यवस्थापनविचारसारांशः। तथा हि – ध्वन्यभाववादो व्याघातदोषदूषितः। ध्वनेरत्यन्तासत्त्वे ध्वनिरिति व्यवहार एव न भवितुम् अर्हति। किञ्च कुत्रापि प्रतीतस्यैव पदार्थस्य निषेधो लोके दृश्यते 'घटो नास्ति पटो नास्ति' इति। न त्वत्यन्तासतपदार्थस्य वन्ध्यापुत्रादेर्निषेधो व्यवह्रियते। एवञ्च ध्वनेरत्यन्ताप्रतीतौ निषेधो दुष्करः। क्वाचित्कनिषेधे तु सिद्धसाधनम्। क्वचित् काव्ये ध्वन्यभावस्य सिद्धान्तिनापि स्वीकृतत्वात्।

ध्वनेर्गुणालङ्कारान्तर्भाववादोऽप्ययुक्त एव। यतो हि चारुताहेतवोऽलङ्काराः, ध्वनिस्त्वलङ्कार्यः। एवञ्चालङ्कार्यस्य ध्वनेरलङ्कारेष्वन्तर्भावो दुर्घटः। एवं माधुर्यादयो गुणा रसधर्मा इति पूर्वमेव निश्चितम्। तथा च धर्मिणां रसानां धर्मेषु गुणेष्वन्तर्भावोऽपि दुर्घट एव।

ध्वनिरनुमितिरेवेत्यपि वादोऽयुक्तः। तथा हि – व्याप्तिं विना अनुमितिरेव न भवति। व्याप्तिश्च व्याप्यव्यापकयोस्तादात्म्यात् जन्यजनकभावरूपसम्बन्धाद् अन्वयव्यतिरेकसिद्धसाहचर्यनियमाद्वा गृह्यते। प्रकृते साधनत्वेनाभिमतशब्दार्थयोः साध्यत्वेनाभिमतध्वनेश्च त्रिविधोऽपि पूर्वोक्तः सम्बन्धो न विद्यते। तथा हि – ध्वनेः शब्दार्थयोश्च तादात्म्यसम्बन्धो वक्तुं न शक्यः। शब्दार्थौ तिरस्कृत्य केवलचेष्टादिनापि ध्वनेः प्रतीयमानत्वात्। नापि जन्यजनकभावरूपः सम्बन्धो घटते। साध्याभिमतस्य वह्नेः साधनाभिमतो धूमः कार्यभूतः। अत एव धूमो वह्निम् अनुमापयति। एवं प्रकृते साध्याभिमतस्य ध्वनेः साधनाभिमतौ शब्दार्थौ न कार्यभूतौ, प्रत्युत शब्दार्थसद्भावसमनन्तरमेव ध्वनिः प्रतीयत इत्यतः प्रतीपः कार्यकारणभावः। एवम् अन्वयव्यतिरेकसिद्धसाहचर्यनियमोऽपि ध्वनिशब्दार्थयोर्वक्तुं न शक्यते। अव्यङ्ग्यस्थले शब्दार्थयोः सतोरपि ध्वनिर्नास्तीत्यतोऽन्वयव्यभिचारस्य स्पष्टत्वात्।

असौ ध्वनिरभिधेय इत्यपि पक्षोऽसाधुः। तथा हि – अभिधेयवादिनां त्रयः पक्षाः। त्रयोऽपि मीमांसकानामेव। ते च भाट्टमीमांसकानाम् अभिहितान्वयवादः, प्राभाकरमीमांसकानाम् अन्विताभिधानवादः, प्राचीन-मीमांसकानां दीर्घदीर्घतराभिधाव्यापारवादः। तत्राभिहितान्वयवादे वाक्यार्थो नाभिधेयः, किन्तु लक्ष्यः। तथा हि – सङ्केतिता एवार्थाः पदैरभिधीयन्ते। स च सङ्केत आनन्त्यव्यभिचारभयेन व्यक्तौ स्वीकर्तुं न शक्यः। अतो जातावेव सङ्केतः।

एवञ्च जातिविशिष्टा व्यक्तिः कार्यान्वयान्यथानुपपत्त्या आक्षिप्यतेऽथवा लक्ष्यत इत्यभिहितान्वयवादसारांशः। अत्र परिशील्यमाणे विशिष्टे सङ्केतानङ्गीकारात् पदाभिहितसामान्यरूपार्थसम्बद्धेऽपि विशिष्टरूपार्थे अभिधा न प्रवर्तत इति फलति। एवं सति पदाभिहितसामान्येनात्यन्तासम्बद्धे कदाचिद् विरुद्धे च ध्वनिरूपार्थेऽभिधा प्रवर्तत इति नैव वक्तुं शक्यते। अत एतेषां मते ध्वनिर्नाभिधेयः।

अन्विताभिधानवादे प्रवृत्तिनिवृत्तिप्रयोजनकवाक्यस्यैव प्रयोगयोग्यत्वाङ्गीकारादभिधया वाक्येन परस्परान्वितपदार्थरूपवाक्यार्थ एवाभिधीयत इत्यङ्गीक्रियते। न तु पदानि स्वं स्वमर्थम् अभिधातुं शक्नुवन्ति। वृद्धव्यवहारादिना वाक्यस्य वाक्यार्थ एव सङ्केतितत्वाङ्गीकारात्। एवञ्च पदार्थान्तरान्वितमेवार्थम् अभिधातुं समर्थानि पदानि स्वाभिहितमप्यनन्वितस्वार्थम् अभिधातुं न क्षमन्त इति फलति। एवञ्च सङ्केताभावमात्रदोषेण यानि पदानि स्वाभिहितमपि सामान्यरूपमर्थमभिधातुं न क्षमन्ते तानि कथम् अत्यन्तासङ्केतितं ध्वनिरूपमर्थम् अभिदधीरन्।

शब्दप्रयोगसमनन्तरं यावानर्थः प्रतीयते तावत्यभिधैव व्यापार इति प्राचीनमीमांसकानां मतम्। अस्मिंश्च पक्षे 'कन्या ते गर्भिणी जाता' इत्यादिवाक्यश्रवणानन्तरं पितुश्चेष्टादिकस्यापि शब्दार्थत्वम् अभिधेयत्वं च प्रसज्यते। किञ्च लक्षणायाः सर्वत्रोच्छेदोऽपि प्रसज्यते। अभिधयैव निर्वाहात्। तस्मादयमपि पक्षोऽसाधुरेव।

तस्मात् सिद्धमिदं यद् ध्वनिरस्ति स च नानुमेयो न वाऽभिधेय इति।

अस्य ध्वनिव्यवस्थापनविचारस्यानन्तरं काव्यप्रकाशादिग्रन्थानाश्रित्य ध्वनिविभागं मध्यमकाव्यनिरूपणं सोदाहरणं प्रादर्शयत्। रीतिवृत्तिशय्यापाकादीनां स्वरूपमधिकृत्यापि प्रसङ्गः प्रतापरुद्रीयादिग्रन्थसाम्येन कृतो वर्तते।

## 2.11 रसविचारः

दशमेऽस्मिन् रसतरङ्गे रससत्त्वे प्रमाणं, रसस्वरूपं, रससङ्ख्या, विभावादीनां भावानां स्वरूपं, रसानां मिथः स्नेहविरोधौ, भावोदयादय इत्येते चान्ये च रससम्बद्धा विषया निरूपिताः। बहुभिरालङ्कारिकैर्बहुधा प्रपञ्चितान् रससम्[illegible]न् सञ्चिन्त्यैकत्र सङ्ग्रहेण ग्रथनात् तद्विषयावगमे सौलभ्यमुपजायते।

मध्ये च शृङ्गारक्रीडावर्णनं विचारोद्वेजितस्य मनस विश्रान्तिदं भवति। सर्वथाऽत्र रचनावैखरी समीकरणात्माऽप्यतिमात्रतापरित्यागात् कतिचन नूतनांशादानाच्च पाठकानां मनांस्यावर्जयति।

एकावल्यां तु रसविचारोऽल्पमात्रको भवति। रसलक्षणं तस्य अभिधालक्षणातात्पर्यैरबोध्यत्वं, तस्य प्रत्यक्षानुमानस्मरणविषयताखण्डनं, नवानां रसानां तत्तद्विभावानुभावव्यभिचारिभावोल्लेखनम्, एवमेव तद्विषयसम्बद्धाः कतिचनाल्पीयांसो विचाराश्च कृता दृश्यन्ते। शृङ्गारादिरसानामवान्तरभेदप्रदर्शनमपि न विद्यते। उक्तञ्च तेनैव –

> "शृङ्गारादिरससम्भेदाः पुनः शास्त्रान्तरसुलभनिरूपणा इति नेह प्रपञ्चिताः"[241] इति।

धर्मसूरिस्तु एकावलीप्रतिपादितानंशान् सर्वानपि परामृशन्नपि तत्र विचाराणामाधिक्यं सम्पादयति। भट्टलोल्लयदीनां रसविषयकसिद्धान्तान् काव्यप्रकाशम् अनुसृत्य प्रतिपादयति।

## 2.11.1 रससत्त्वे प्रमाणविचारः

एकावलीरसलक्षणे 'न स्वविषयं प्रापितः प्रत्यक्षेण' इतीममंशं विवृण्वान-स्तत्कर्ता विद्याधरः –

> "प्रत्यक्षप्रमाणग्राह्यो रस इति चेत् तर्हि प्रत्यक्षेण गृह्यमाणो रसः किं निर्विकल्पकेन गृह्यते? सविकल्पकेन वा"

इति विकल्प्योभयमपि न सम्भवतीति प्रत्यक्षप्रमाणग्राह्यो रसो न भवतीति स्थापितवान्। एवमेवानुमानाग्राह्यत्वं स्मरणागोचरत्वञ्च रसस्य तेन साधितम्[242]।

धर्मसूरिरप्येकावल्यां लक्षणविवरणप्रकरणस्थम् अमुं विषयमादाय रस-प्रकरणप्रारम्भे–

> "ननु रससद्भावे किं प्रमाणम्? न तावत् प्रत्यक्षं प्रमाणं तत्र क्षमते" (पृ० 233)

इत्यारभ्य रससद्भावप्रमाणविचारं पृथक् प्रतिपादयामास। अत एव रसे सकललौकिकप्रमाणाभावनिरूपणार्थम् एकावल्याम् अनुक्तानामपि उपमान-

आगम–अर्थापत्ति–अनुपलब्धिप्रमाणानां मीमांसकवेदान्त्यभिमतानां षण्णामप्य-विषयत्वं रसस्य प्रादर्शयत्।

किञ्च रसस्वरूपस्य स्मरणाविषयता निरूपिता विद्याधरेण। स्मरणञ्च न प्रमाणम्। स्मृतिः खल्वप्रमा। अपि च प्रत्यक्षानुमानाविषयत्वप्रतिपादनेनैव स्मरणाविषयता प्रतिपादिता भवति। यतो विनाऽनुभवं स्मरणस्य नास्त्यवकाशः। अत इदं पर्यालोच्यैव धर्मसूरी रसस्य स्मरणाविषयतां नैव प्रत्यपीपदत्। विद्याधरलक्षणस्थमपीममंशं नैव जग्राह धर्मसूरिः। एवं विद्याधररस-स्वरूपलक्षणस्थस्यैकांशस्य त्यागात् कतिचनेतरांशादानाच्च स्वरूपलक्षणता-परित्यागपूर्वकं रससद्भावप्रमाणविचाररूपं कमपि वादं प्रतिष्ठापयामास।

### 2.11.1.1 प्रत्यक्षं न प्रमाणम्

प्रत्यक्षादीनां रससत्त्वे प्रमाणत्वाभावसंस्थापनेऽप्येकावल्याः कतिचनोत्तराः कोटय उपक्षिप्ताः साहित्यरत्नाकरे। तथा हि – रसस्य प्रत्यक्षग्राह्यता किं निर्विकल्पकेन उत सविकल्पकेनेति विकल्प्य दूषिता। रसस्य नियतं विभावादिविशिष्टरूपत्वान्न निर्विकल्पकगोचरत्वम्। निर्विकल्पक-ज्ञानाविषयत्वादेव सविकल्पकस्याप्यविषयः। न हि निर्विकल्पकज्ञानं विना सविकल्पकज्ञानम् उत्पद्यत इति।

नैयायिकास्तु समवायादीनां विशेषणज्ञानशून्यविशिष्टज्ञानविषयत्वमङ्गी-कुर्वन्ति। तथा हि – समवायो नाम नित्यं सप्रतियोगिक एव। नित्यं सप्रतियोगिकस्य च कथं केवलविशेषणज्ञानरूपस्य निर्विकल्पकज्ञानस्य विषयत्वमुपपद्यते। विना च निर्विकल्पकं ज्ञानं तत्कार्यं सविकल्पकं नैव भवति। अतस्तैरिदमुच्यते यत्तावत् समवाये प्रतियोगि भवति तस्य प्रतियोगिनः सविकल्पकत्वेन समवायोऽपि सविकल्पकज्ञानविषयो भवतीति। यथा घटसमवायज्ञाने घटः प्रतियोगी। स च घटे घटत्वविशिष्टः सविकल्पकः। एवञ्च तेन सविकल्पकप्रतियोगिज्ञानेनैव पुनरपि समवायनिर्विकल्पकं ज्ञानं विनैव समवायसविकल्पकं ज्ञानमुत्पद्यत इति। एवमेवानुमित्यादावपि। अनुमिते-र्हेतुविशिष्टपक्षधर्मताज्ञानरूपत्वात् नित्यं सविकल्पकता। अत्रापि हेतुभूतधूमादयः धूमत्वविशिष्टरूपेण सविकल्पा इति विनैव निर्विकल्पकं सविकल्पकम् अनुमितिज्ञानं भवति। एवमेव रसस्थलेऽपि विनैव निर्विकल्पकं सविकल्पक-

गोचरत्वाङ्गीकारे बाधकाभाव इति 'न च' इत्यादिना आशङ्क्य घटसमवायस्थले यथा घटः स्वातन्त्र्येण प्राक् सिद्धस्तथा विभावादीनां स्वातन्त्र्येण प्राक् सिद्धत्वाभावात् तादृशसविकल्पकविभावादिप्रतियोगिकतया सिद्ध्यमानं सविकल्पकत्वं रसप्रत्यक्षस्य न सेत्स्यतीति समाहितम्। एतेन निर्विकल्प-सविकल्परूपोभयविधप्रत्यक्षस्याविषयो रस इति फलितम्।

अनन्तरं धर्मसूरिः-

"अस्तु वा यत्किञ्चित् प्रत्यक्षम्, तथापि किं पूर्वसिद्धमेव रसं तद्गोचरयेत्। विभावाद्यनुसन्धानेन तदानीमुत्पन्नं वा" (पृ० 234)

इति विकल्पमुखेन भट्टलोल्लटसम्मतं रसस्योत्पत्तिवादं कथञ्चिदवतार्य खण्डयति। स्पष्टमेव रसो न प्रत्यक्षग्राह्यो भवतीति स्वयं प्रतिपाद्य पुनः "अस्तु वा यत्किञ्चित् प्रत्यक्षम्" इत्यादिना रसस्य प्रत्यक्षविषयत्वाङ्गीकारस्यायमाशयो भवितुम् अर्हतीति वयमुत्प्रेक्षामहे।

विभावादिविशिष्टः खलु रसः प्रत्यक्षविषयत्वेनेदानीम् अङ्गीक्रियते। तत्र वस्तुतो विभावो नाम कारणम्। तस्य रस्यमानतादशायामेव विभावत्वाङ्गीकारात्। रसप्रतीतेः पूर्वं स्वातन्त्र्येण तस्य सविकल्पकप्रतीतिर्यद्यपि नास्ति तथाप्यस्त्येव कारणात्मनाऽवस्थितस्य तस्यैव सविकल्पकप्रतीतिविषयत्वमिति तत्प्रयुक्तं रसस्यापि सविकल्पकज्ञानग्राह्यत्वं सम्भवतीति।

एवम् 'अस्तु वा' इत्यादिना यथाकथञ्चिद् रसस्य प्रत्यक्षविषयत्वमङ्गीकृत्य तत्पुनः-

"किं पूर्वसिद्धमेव रसं तद्गोचरयेत्?
विभावाद्यनुसन्धानेन तदानीमुत्पन्नं वा" (पृ० 234)

इति द्वेधा विकल्प्य दूषणं "तदानीमुत्पद्यते रसः" इति भट्टलोल्लटमतं खण्डयितुमेव। धर्मसूरिकृतग्रन्थनिर्माणेऽन्यत्रास्य मतस्यानुवादार्थं खण्डनार्थं चावकाशो नास्तीत्यत्रैव कथञ्चिद् भट्टलोल्लटमतमवतार्य खण्डितमिति ज्ञेयम्।

### 2.11.1.2 भट्टलोल्लटमतनिराकरणम्

अत्र च प्रथमविकल्पमाश्रित्य पूर्वसिद्धस्यैव रसस्य प्रत्यक्षग्राह्यत्वाङ्गीकारे काव्यार्थानुसन्धानाभावेऽपि सदा रसप्रतीतिः स्यादित्यापत्तिः। अथ तदापत्ति-

परिहाराय "तदानीमुत्पन्नम्" इति द्वितीयो विकल्प एष्टव्यः। अयमेव लोल्लटाभिमतः। मतस्यास्य दूषणप्रकारस्त्वेवं भवति।

मतेऽस्मिन् विभावानां रसस्य च कार्यकारणभावोऽङ्गीकार्यः। तत्रापि विभावादीनि रसं प्रति न समवायिकारणानि भवितुम् अर्हन्ति। विभावानां रसस्य च भिन्नाधिकरणकत्वात्। नाप्यसमवायिकारणत्वं तेषाम्। तेषां द्रव्यरूपत्वात्। एवञ्च परिशेषात् निमित्तकारणत्वमेवाङ्गीकर्तव्यम्, अङ्गीकृते च निमित्तकारणत्वे विभावानाम् एषां नाशेऽपि रसस्यानुवृत्तिप्रसङ्गो भवति। निमित्तकारणभूत-कुलालनाशेन न तावद् घटोऽपि नष्टो भवति। रसस्तु विभावादिजीवितावधिः। अतो न कार्यो रसः। एवञ्च तदानीमुत्पन्नं रसं प्रत्यक्षं विषयीकरोतीति दुर्घटमिति।

पुनरप्युदाहरणत्रयप्रदर्शनपूर्वकं निमित्तकारणनाशेऽपि कार्यस्य नाशो दृष्ट इति, अतो निमित्तकारणभूतविभावादिनाशेऽपि कार्यस्य रसस्य नाशो युक्त एव, एवञ्च विभावादिकार्यमेव रस इतीयं शङ्का त्रिष्वप्युदाहरणस्थलेषु कार्यनाशो न केवलं निमित्तकारणनाशात्, अपि तु कारणान्तरेभ्योऽपीति स्थापनेन परास्ता।

तत्राशङ्कितुः प्रथमोदाहरणं वैशेषिकमतेनापेक्षाबुद्धिनाशाद् द्वित्वनाशः। अयं भावः- अयमेकोऽयमेक इत्येवंरूपाया अपेक्षाबुद्धेर्द्वित्वमुत्पद्यते। अपेक्षाबुद्धिनाशाच्च तत् नश्यति। अपेक्षाबुद्धिश्च द्वित्वस्य निमित्तकारणम् इति वैशेषिकाः। एवं निमित्तकारणनाशेऽपि कार्यमपैतीति सिद्ध्यति। अर्वाचीन-नैयायिकेषु केचिद् वेदान्तिनश्चापेक्षाबुद्धेर्द्वित्वोत्पत्तौ कारणत्वं नाङ्गीकुर्वन्ति। द्वित्वञ्च वस्तुसहभावि, यावद् वस्तु विद्यमानम्। सर्वेष्वपि वस्तुष्वेकत्वं द्वित्वं त्रित्वम् इति सर्वे गुणा नित्यं विद्यन्त एव। द्वित्वत्रित्वादीनां परस्परविरुद्धानामप्येकत्र सहावस्थानं ह्रस्वत्वदीर्घत्वदृष्टान्तेनाङ्गीक्रियते। एवमेव सर्वपदार्थभेदोऽपि सर्वेषु पदार्थेषु नित्यं भवत्येव। अथापि भेदज्ञानं प्रतियोगिप्रतीतिसत्त्व एव भवति। एवं यथा नित्यसिद्धस्यापि भेदज्ञानस्य प्रतियोगिज्ञानं कारणं तथा नित्यसिद्धानां द्वित्वादीनामपि प्रतीतावपेक्षाबुद्धेः कारणत्वं भवति। एवञ्च द्वित्वादीनां नाश एव नास्ति। तत्प्रतीतावेव परमपेक्षाबुद्धेः कारणत्वम् इति वदन्ति। तदेतन्मतमाधारीकृत्य प्रथमोदाहरणं खण्डितं धर्मसूरिणा। हस्तसंयोगापाये कटविवरणापायः, सवितृकिरणसंयोगापाये कमलविकासापायश्चेति इमे द्वे पूर्वपक्षिणो दृष्टान्ते क्रमात् चिरकालसंवेष्टनाहितसंस्कारबलरूपस्य, मुकुलीभावरूपविरोधिकार्यरूपस्य च

निमित्तान्तरस्य विद्यमानत्वात् तिरस्कृते। एवञ्च नास्ति कुत्रापि केवलनिमित्तकारणनाशात् कार्यनाशः। तस्माद् विभावादिनाशेऽपि रसोऽनुवर्तेत इति प्रदर्शिताया आपत्तेर्बलाद् विभावादयो रसं प्रति निमित्तकारणान्यपि न भवन्तीत्यतस्त्रिविधकारणत्वाभावाद् विभावादिभ्यो रसास्तदानीमुत्पद्यन्त इति पक्षो न घटत इत्यसौ लोल्लटवादनिराकरणसारांशः।

लोल्लटमतस्य प्रदर्शिताभिर्युक्तिभिर्यन्निराकरणं तद् धर्मसूरेः स्वोपज्ञं भासते। रुचिरोऽसौ लोल्लटमतनिराकरणवादो धर्मसूरेः शास्त्रार्थावगाहनचातुर्यं प्रकटयति। एवम् "अस्तु वा यत्किञ्चित्प्रत्यक्षम्" इति प्रत्यक्षग्राह्यत्वम् अभ्युपगम्यापि कृतेन तन्निराकरणेन रसः प्रत्यक्षग्राह्यो न भवतीति सिद्ध्यति।

### 2.11.1.3 श्रीशङ्कुकमतनिराकरणम्

एवं रससत्त्वे प्रत्यक्षं प्रमाणं न भवतीति स्थापनमुखेन भट्टलोल्लटमतं सयुक्तिकं निराकृत्य क्रमप्राप्तम् अनुमानमपि रससत्त्वे प्रमाणं न भवतीति स्थापयन् तन्मुखेनानुमेयो रस इति श्रीशङ्कुकपक्षं निराकरोति धर्मसूरिः। निराकरणप्रकारस्तु एकावली-तत्तरलानुवादात्मको दृश्यते। शङ्कुकमतानुवादे तु मम्मटपङ्क्त्यनु-सरणम् अनुभूयते।

अयमत्र पिण्डितार्थः- नाट्ये रामाद्यभेदभावनाभावितेन नटेन प्रकाशितैर्वि-भावादिभी रसोऽनुमीयते। "रामः सुखदुःखातिशयपरवशो भवितुमर्हति। तादृग्विभावादिकारणयोगित्वात्। य एवं स एवम्। यथा वयम्" इति चानुमानाकारः। एवं नट्यदिगतत्वेनानुमितेनैव रसेन सामाजिका अपि सुख्यन्तीति श्रीशङ्कुकमतम्। अत्र पूर्वोक्तानुमाने विभावादीनां विभावादिस्वरूपेणैवानुमितौ कारणत्वाङ्गीकारेऽसिद्धिर्दोषः। विभावादीनां लोकेऽप्रसिद्धत्वात्। विभावादीनां कारणत्वादिरूपेण हेतुत्वाङ्गीकारे यद्यपि नास्त्यसिद्धिर्दोषस्तथाप्यालङ्कारिकैः शास्त्रे तेषां कारणत्वादिना हेतुत्वस्यानङ्गीकारात् नैषः कल्पोऽपि कल्पते।

यद्यपि धर्मसूरिणा स्पष्टं नोक्तं तथापि लोल्लटमतनिराकरणावसरे रसविभावयोः प्रदर्शिता या कार्यकारणभावासङ्गतिः साऽत्राप्यतिदेष्टु शक्यत एव। अतो विभावानां रसं प्रति विभावात्मना कारणात्मनाऽपि कारणत्वासङ्गते-रकारणभूतैर्विभावादिभी रसः कथम् अनुमीयेत इति दुरुत्तरं व्यसनम् अनुमितिपक्षे भवति।

अथ साध्यसाधनयोः कार्यकारणभावाभावेऽप्यन्वयव्यतिरेकबल-सिद्धसाहचर्यनियमादपि साधनेन साध्यं साध्यते, यथा कृत्तिकोदये रोहिण्यासत्तिप्रतीतिस्तथा विभावादिरूपेण लिङ्गेन रसः साध्यत इति चेत्, अयमपि पक्षः पूर्वोक्तयुक्तिभिरेव निराकर्तुं शक्यः। तथा हि – शास्त्राद्बहिरप्रसिद्धरूपै-र्विभावादिभी रसस्य साहचर्यनियमोऽपि तेन रूपेण कार्यकारणभाववद् दुर्घटः। एवं कारणात्मना च कार्यकारणभावो नाङ्गीक्रियते आलङ्कारिकैः। न वाऽङ्गीकर्तुं शक्यः। तस्मात् साहचर्यनियमस्यैवाभावात् तै रसोऽनुमातुं न शक्य इति। तस्माद् अनुमानमपि न प्रमाणं रससत्त्वे इति।

### 2.11.1.4 उपमानमपि न प्रमाणम्

एवं साधर्म्यवैधर्म्यमात्रविषयकमुपमानमपि रससत्त्वे प्रमाणं भवितुं नार्हति।

### 2.11.1.5 आगमोऽपि न प्रमाणम्

एवमेवागमोऽपि न प्रमाणमिति वक्तव्यम् अवशिष्यते। आगमो नाम शब्दप्रमाणमित्यर्थः। शब्दप्रमाणगम्यो रस इत्युक्ते कया वृत्त्या इति वाच्यम्। अयं विचार एकावल्याम् "अयं च स्वप्नेऽपि परिहरति वाच्यताम्" इति वाक्यव्याख्याने द्रष्टव्यः। तत्र अभिधा–लक्षणा–तात्पर्यरूपवृत्तित्रयाविषयत्वं रसस्य स्पष्टीकृतम्। धर्मसूरिणा "न चागमस्तत्र प्रगल्भत" इत्यादिविचारेण गौण्या सह वृत्तिचतुष्टयाबोध्यत्वं प्रत्यपादि।

इदमत्रावगन्तव्यम् – रसस्याभिधाबोध्यत्वाभावकथनेनैव लक्षणाबोध्यत्वं तात्पर्याबोध्यत्वञ्च कथितम् इति धर्मसूरेरभिप्रायः। तथा हि – तीरादिशब्दैर-भिधेयस्यैव तीररूपार्थस्य गङ्गापदेन लक्ष्यमाणत्वं दृश्यते, न तु केनापि शब्देनानभिधीयमानस्य। तथा विधेयदृष्ट्याऽभिधानं तात्पर्यम् इति लक्षणात् प्रमाणान्तरप्राप्ताप्राप्तसमभिव्याहारे प्राप्तानाम् अनुवाद्यत्वम् अप्राप्तानाञ्च विधेयत्वम्। एवञ्च तादृशविधेयानुवाद्यसमभिव्याहारस्थलेऽनुवाद्यवाचकपदानां विधेयार्थदृष्टिरेव तात्पर्यम् इत्युच्यते। यथा 'दध्ना जुहोति' इत्यादौ होमस्य 'अग्निहोत्रं जुहोति' इति वाक्यान्तरप्राप्तत्वाद् अनुवाद्यता, दध्नश्च अप्राप्तत्वाद् विधेयता। एवञ्चात्र वाक्ये प्राप्तहोममुद्दिश्याप्राप्तदधिविधान एव तात्पर्यम् इत्यत्र वाक्ये विधेयदृष्टिः सुस्पष्टा। यत्किञ्चिद् भवतु– 'दधि' इति शब्दस्याभिधेय

एवार्थे तात्पर्यमपि घटत इत्यतोऽत्यन्तानभिधेयेऽर्थे तात्पर्यवृत्तिरपि न प्रसरति। तस्माद् रसस्यानभिधेयत्वे स्थापितेऽलक्ष्यत्वं तात्पर्याविषयत्वञ्च स्वयं स्थापितं भवतीति।

तच्चानभिधेयत्वं रसस्य प्रकृतप्रकरणे रसस्यालौकिकत्वाङ्गीकारात् सङ्केताभावादिति हेतुना साधितम्। परन्तूत्तरत्र स्वीयरसलक्षणव्याख्यानमुखेन-

> "ननु किं विभावादीनां व्यञ्जकत्वकल्पननिर्बन्धेन? सामान्यवाचिना रसपदेन विशेषवाचिना शृङ्गारादिपदेन वा रसोऽभिधीयतामिति चेत्, नैवम्। शतकृत्वस्तदुभयपद-प्रयोगेऽपि काव्यार्थानुसन्धानशून्यानां रसप्रादुर्भावाभावात्। प्रत्युत विभावादिप्रयोगे रसशृङ्गारादिपदाप्रयोगेऽपि रसा-भिव्यक्तेः। अतोऽन्वयव्यतिरेकयोर्विभावादिमात्र-पर्यवसितत्वात् तस्यैव व्यञ्जकत्वपक्षः सरसानां मनसे रोचते"।
>
> (पृ० 242-243)

इत्यादिग्रन्थेन रसस्यानभिधेयत्वं सम्यक् प्रतिपादितम्। अतस्तदप्यत्रानुसन्धेयम्।

विभावादयः सादृश्यम् अवलम्ब्य रसं न प्रत्याययन्तीत्यतो गौण्या अपि नास्ति प्रसङ्गः। तस्मान्न शब्दप्रमाणगम्यो रस इति।

### 2.11.1.6 अर्थापत्त्यनुपलब्धी रसं न प्रत्याययतः

आत्मनो भाट्ट-वेदान्तिमताभिनिवेशेन च धर्मसूरिरेकावल्याम् अनुक्तमपि अर्थापत्त्यनुपलब्ध्यविषयत्वमपि रसस्य प्रतिपादितवान्। अर्थापत्तेरनुमाना-भिन्नत्वात्, भिन्नत्वे वा तज्जन्यज्ञानस्य परोक्षज्ञानात्मकत्वात्, रसस्य च अपरोक्षज्ञानरूपत्वात्, अभावैकविषयत्वाच्चानुपलब्धेरुभयेषामप्यविषयो भवति रस इति।

एवं षण्णामपि प्रमाणानाम् अविषयत्वम् आशङ्क्य प्रमाणप्रतीतस्यैव लक्षणग्रथनमिति, रसस्य च प्रमाणप्रतीतत्वाभावात् लक्षणग्रथनमपि न शक्यते कर्तुमित्याशङ्क्य-अतो लक्षणप्रमाणाभावाद् रसो नास्तीति, एवं रसोपजीवि-काव्यमीमांसाशास्त्रमेवानारम्भणीयम् इत्युपसंहरति रसविषयकप्रमाणपूर्वपक्षं धर्मसूरिः।

### 2.11.1.7 प्रमाणविचारे पूर्वपक्षोपसंहारः

उपसंहारक्रमम् अधिकृत्येदं चिन्तनीयं भवति। 'रसो नास्ति' इत्येवोपसंहारः कर्तव्यः, रसस्यैव निरूपयिष्यमाणत्वात्। तदुपजीविकाव्य- मीमांसाशास्त्रारम्भो न करणीय इत्युपसंहारो यद्यपि न दुष्टतथाप्यस्मिन् प्रकरणे न शोभते। तथा हि - अतीतो भूयान् ग्रन्थः। दशमोऽन्तिमश्च तरङ्गः। किं वा प्रयोजनम् इदानीं काव्यमीमांसाशास्त्रानारम्भणीयत्वाशङ्कया?

सम्पूर्णः प्रथमस्तरङ्गः काव्यमीमांसारम्भणीयत्वव्यवस्थापनपरो यत्रानारम्भणीयत्वं बहुधा विकल्प्य दूषितम्। अयमप्यंशस्तत्रैव कथितोऽशोभिष्यत। अतो रसलक्षणमुक्त्वा तद्विवरणरूपेण व्याख्यानेनानभिमतमत-खण्डनरूपाद् एकावल्यनुसृतमार्गाद् ध्वनिव्यवस्थापनसन्दर्भ इवात्रापि रसस्याभावं पूर्वपक्षीकृत्य तद्व्यवस्थापनरूपोऽयं मार्गो नूनं धर्मसूरेर्विषयग्रथनकौशलं यद्यपि प्रकटयति तथापि कुतो वा काव्यमीमांसानारम्भणीयत्वे पूर्वपक्षस्योपसंहारस्तेन प्रादर्शीति न स्पष्टमवगम्यते।

अथवेदं तस्य हृदयं स्यात्। प्रथमतरङ्गे काव्यमीमांसाऽऽरम्भणीयत्व-व्यवस्थापनानन्तरं द्वितीयतरङ्गे काव्यलक्षणमुक्तं "सगुणालङ्कृती काव्यं पदार्थौ दोषवर्जितौ" इति। एतल्लक्षणविवरणरूपेणैव सर्वो ग्रन्थः संग्रथित इति प्रतिपादितचरम् अस्माभिः। एतस्मिंश्च निर्माणविधाने नास्त्यवकाशो रसविचारस्य। यतः पदार्थयोः सरसत्वं विशेषणं नोपात्तम्। परन्तु अपरोक्षमिदं सत्यं यद् रस एव आत्मा काव्यस्य यन्निरूपणं विना काव्यमीमांसाशास्त्रमेव असम्पूर्णतां याति। अङ्गीकृतं चैतद् धर्मसूरिणा-

> "एवं तावत् काव्यलक्षणं तद्भेदाँश्च सप्रपञ्चं निरूप्य इदानीं तस्य प्राणायमानं रसं निरूपयितुकामो वृत्तसङ्कीर्तनमुखेन तं प्रस्तौति"। (पृ० 233)

इति रसतरङ्गम् अवतारयता। 'रसोपजीवि काव्यमीमांसाशास्त्रम्' इति च वदता। अत्यन्तमुत्कृष्टत्वादेव चावसरप्राप्तोऽपि ध्वनिभेदपरिगणनप्रकरणे रसविचारो न तत्र निरूपितः, किन्तु निरूपितश्च विविक्ततया। अत एव विषयविनिवेशन-विधानेऽतिशयितत्वम् अस्य ग्रन्थस्यैकावल्या यत्र मध्ये ध्वनिप्रभेदगणनं रसविचारः संदृश्यते।

एवञ्च नवतरङ्गात्मकः प्रथमो भागः काव्यशरीरमीमांसाशास्त्रम्। दशमतरङ्गात्मको द्वितीयो भागस्तु काव्यात्ममीमांसाशास्त्रम्। शरीरात्मनोः स्थितेन सन्निहितेन सम्बन्धेन नियमितावुभावपि भागौ नात्यन्तं भिन्नताम् उपगन्तुम् अर्हतः। अतो ग्रन्थैक्यमेव। एवञ्च दशमतरङ्गे पुनरप्यस्त्यवकाशः काव्यमीमांसा-नारम्भणीयत्वाशङ्कायास्तत्समाधानस्य चेति।

एवं प्रतिपादितदिशा रसस्य प्रत्यक्षप्रमाणाग्राह्यत्वव्यवस्थापनमुखेन लोल्लटवादोऽनुमित्यविषयत्वव्यवस्थापनेन श्रीशङ्कुकवादश्च निराकृतः। एवमेव भट्टनायकवादोऽपि निराकार्यः। तथापि केवलं नामभेदेन व्यञ्जनाव्यापारं, व्यङ्ग्यत्वं च रसस्याभ्युपगच्छतस्तस्य मतस्य खण्डनं न शक्यकार्यं रसस्य सकलप्रमाणाविषयत्वव्यवस्थापकविचारे। अतोऽनन्तरं स निराकृतः।

## 2.11.1.8 भट्टनायकसिद्धान्तनिराकरणम्

अयं हि भट्टनायकवादसङ्ग्रहः - सीतात्वादिपरिज्ञाने सति अगम्यात्वज्ञानवतां सामाजिकानां शृङ्गारादिरसानुभवो न भवति। अतो भावकत्वव्यापारमहिम्ना रामादीनां सीतादीनां च साधारणीकरणम् अभ्युपगन्तव्यम्। एवं साधारणतया कान्तात्वेन भावितायां सत्यां नायिकायां स्थायी सत्त्वोद्रेकप्रकाशानन्दसंविन्मयेन भोगकृत्वव्यापारेण भुज्यमानो रसः।

एतन्मतखण्डनं धर्मसूरिणा इतरालङ्कारिकवैलक्षण्येन कृतं भासते। तथा हि - भोगकृत्वव्यापारः स्वयं संविन्मयः। तेन स्थायी भुज्यत इति खलु भट्टनायकमतम्।

अत्र 'भुज्यत' इति 'भुजिर्'-धातोः कोऽर्थः? न त्वभ्यवहाररूपो भवितुम् अर्हति। अथ भुज्यतेऽनुभूयत इति कृत्वा तत्स्थायिभावविषयकं संविदन्तरमिति वक्तव्यम्। नास्ति च तथा संविद्द्वयानुभवः। विभावाद्यनुसन्धानसमनन्तरं रससंविदेकैवानुभवसिद्धा सहृदयानाम्। अपि च संविद्रूपस्य भोगस्याङ्गीकारादेव सिद्धे रसानुभवे पुनरपि संविदन्तराङ्गीकरणं गौरवार्थं भवति। संविदः संविदन्तरजनकत्वेनानवस्थादोषश्च भवति।

एवं लोल्लटादीनां मतानि निरस्याभिनवगुप्तपादानाम् अभिव्यक्तिपक्षमेव सिद्धान्तितवान् धर्मसूरिः। स्वयं चाभ्यधात्-

"स एव (अभिव्यक्तिपक्ष एव) परीक्षकाणाम् अन्तरङ्गम् अवगाहत इत्यस्माभिरपि सत्सम्प्रदायलोभेन तमेव पक्षम् अनुसृत्य रसो निरूप्यते"। इति। (पृ० 240)

अभिव्यक्तिपक्षे रसस्वरूपनिरूपणे च भूयः काव्यप्रकाशस्य शब्दतोऽनुकरणं संदृश्यते।

**2.11.1.9 रससत्त्वे प्रमाणविचारे सिद्धान्तः**

इदानीं वक्तव्यं किं वा प्रमाणं रससद्भावे। अत्र च न सम्यक् समाहितं धर्मसूरिणा।

न च प्रत्यायकाभावाद् अप्रतीतार्थस्य लक्षणप्रणयनं दुष्करम् इति शङ्क्यम्। उक्तसामग्र्या एव रसव्यञ्जकत्वात्"। (पृ० 237)

इत्येव दृश्यते साहित्यरत्नाकरे। एतेनेदं ज्ञायते यदुक्तसामग्री नाम विभावानुभावव्यभिचारिणः। एते च रसं नोत्पादयन्ति नाप्यनुमापयन्ति, परन्तु व्यञ्जयन्ति। रसव्यञ्जका विभावादय एव प्रमाणम् इति तावदेतद्वाक्यार्थो भवितुम् अर्हति।

एवमपि प्रत्यक्षादिषु षट्सु प्रमाणेषु किं प्रमाणम् अङ्गीकृतम् इति चिन्तनीयम्। इदं त्वस्माभिश्चिन्त्यते। वेदान्तिनां मतसादृश्येन रसानुभव एव प्रमाणम् इति वक्तव्यम्। स चानुभवः प्रत्यक्षः। स च सविकल्पो निर्विकल्पश्च। उक्तं हि धर्मसूरिणा–

"विभावादिविशेषणविशिष्टत्वात् सविकल्पः, तथापि स्वसंवेद्यत्वाद् अविकल्पः" इति। (पृ० 242)

अथवा प्रमाणं शृङ्गग्राहिकतयाऽनिर्दिश्य स्वरूपात्मकलक्षणमात्र-प्रणयनस्येदं तात्पर्यं भवितुम् अर्हति। रसलक्षणमुक्त्वाऽनन्तरं प्रतिदलव्याख्यानावसरे बहुवारं धर्मसूरिणा कथितं यद् रसोऽलौकिकः। न केवलं धर्मसूरिणा एवं कथितं किन्तु कथितं सर्वैरपि मम्मटादिभिरालङ्कारिकैः[243]। अतोऽलौकिकत्वादेव तस्य लोकसिद्धषट्प्रमाणाविषयत्वेऽपि न क्षतिः। स्वरूपं तु यथोपवर्णितं तथा सहृदयसाक्षिकं प्रकाशते। अत एव लक्षणप्रणयनं कर्तुं शक्यत इति।

एवं षट्प्रमाणाविषयत्वस्थापनप्रसङ्गे षड्भिरपि प्रमाणैः प्रमेयो रस इति

सुस्पष्टं प्रतिपादयन् कश्चन ग्रन्थभागश्चमत्कारचन्द्रिकायां विश्वेश्वरकविचन्द्रकृतायां पञ्चमोल्लासान्ते[244] उपलभ्यते। तत्र सुरुचिरवाक्यविन्यासेन रससत्त्वे प्रत्यक्षादीनि षडपि प्रमाणानि प्रसरन्तीति सम्यग् उपपादितम्। चमत्कारचन्द्रिकैषा धर्मसूरिणा दृष्टेति वक्तुं प्रमाणं नास्ति।

## 2.11.2 भोजराजीयः शृङ्गारैकरससिद्धान्तः

भट्टलोल्लट–श्रीशङ्कुकादिभिरनेकैरालङ्कारिकैरनेके रससिद्धान्ताः प्रवर्तिताः। ते चाभिनवगुप्ताचार्यैरभिनवभारत्यां लोचने च खण्डिताः। अभिनवगुप्तपादानाम् अनुवादेभ्य एव एतेषां सिद्धान्तानां स्वरूपम् अस्माभिर्ज्ञायते। तत्तत्सिद्धान्त-प्रतिपादकग्रन्थास्तु बहोः कालात् पूर्वमेव नष्टाः। अत एवैतन्मतानुवदने तत्खण्डने च सर्वेऽनन्तरकालिका अभिनवगुप्ताचार्यमेवानुसरन्ति। रससिद्धान्तविचारेऽ-भिनवगुप्ताचार्यमार्गात् मार्गान्तरेण प्रवृत्तेषु भोजराज एक एव शोभतेतराम्।

तत्रायं माल्वदेशीयधाराधिपतिरभिनवगुप्ताचार्याणां चरमे वयसि प्रारब्धस्वीयरचनाव्यासङ्ग आसीत्। अनेन सरस्वतीकण्ठाभरणं, शृङ्गारप्रकाश इति द्वौ ग्रन्थावलङ्कारशास्त्रे ग्रथितौ। यद्यप्यसौ ध्वनिरससिद्धान्तावलम्ब्येव, यद्यपि च ध्वन्यालोकम् अयम् अपश्यत्, तथाप्यन्या सरणिरनेन ध्वनिरससिद्धान्ते-ष्वाद्रियते। अत एवैकरूपात् काश्मीरीयालङ्कारिकग्रन्थसमुदयाद् भिन्नतया दृश्यमानौ बहूनां नूत्नांशानां नूत्नविचाराणाञ्च आकरौ एतदीयौ ग्रन्थौ नूनं संस्कृतालङ्कारवाङ्मये विशिष्टं स्थानं लभेते। सर्वेषु विषयेषु पूर्वाचार्या भामह–दण्डि–वामनाचार्यादय आद्रियन्त एवैतेन। तथापि तत्तद्विषयाणां विप्रतिपत्तीनाञ्च मूलमाकलय्य तदुद्धरणेन परस्परं विरुद्धानामपि सिद्धान्तानां साम्यस्य परस्परसम्बद्धत्वस्य च निरूपणमस्य विशेषः।

विधिवशाद् भोजराजीयः शृङ्गारैकरससिद्धान्तः स्वरूपेण इतरसिद्धान्त-विलक्षणः सर्वैरप्यर्वाचीनैरालङ्कारिकैर्नैव सम्यगवगतः। अनाकलय्य समग्रं स्वरूपं खण्डितोऽयं सिद्धान्तो महता स्वकपोलकल्पितभोजराजाशयतन्निराकरणरूपेण प्रबन्धेन। प्रायोऽर्वाचीनैर्नायं ग्रन्थो दृष्टः। धर्मसूरिरपि प्राचीनाननुसरन् भोजराजीयं रससिद्धान्तं खण्डयामास। तस्मात् शृङ्गारप्रकाशग्रन्थस्य समग्रस्यानुपलम्भाद् अस्मद्गुरुवर्यैः डॉ० प्रो० वि० राघवन्महोदयैः सुनिबद्धं विचारमहान्तं च

Bhoja's Śṛṅgāra-Prakāśa इत्यमुं ग्रन्थमाधारीकृत्य भोजराजीय-सिद्धान्तसंग्रहो विविच्यते[245]।

1. रसस्तावद् एकः। स च सात्त्विकाहङ्काररूपः। तस्यैवाभिमानः शृङ्गार इति च नामान्तरम्। स चाहङ्काररूपः सर्वेषु रसिकेषु वर्तते। अनेकजन्मसु समाचरितपुण्यकर्मसम्पादितरसभावनायुक्तत्वमेव रसिकत्वं, तच्च पूर्वोक्ताहङ्कारेण विना नैवोपपादनीयः।

2. अयम् अहङ्कारात्मको रस एव मूलभूतः। भावान्तररूपेण चायमेवास्माभिरनुभूयते। रत्यादयो भावा अस्मादेव समुद्भूता अस्यैव प्रकाराः। अयमेव मूलभूतः स्थायी। अयमेक एव च रसः। इतरे चैकोनपञ्चाशद्भावाः स्वयं राजन्तोऽमुमेव प्रकाशयन्ति शिखा इवाग्नेः।

3. एकस्माद् अहङ्काराद् उद्भिन्नानाम् एकोनपञ्चाशद् भावानां प्रत्येकं प्रकर्षदशा काचन विद्यते, यत्रान्यतमः स्थायी, इतरे च तस्य व्यभिचारिणो भवन्ति। एतत्प्रकर्षदशायामप्येते भावा एव। रस इति व्यवहारस्तु अहङ्कारानुप्रवेशाद् उपचारात् सिद्धः।

4. मूलभूताहङ्कारावस्था तु पूर्वा कोटिरित्यभिधीयते। अनन्तरावस्था यत्र एषोऽहङ्कारो विविधभावात्मतां भौतिकपदार्थसंयोगादापद्यते सा मध्यमावस्था। अत्रैव सर्वेऽप्येकोनपञ्चाशद्भावाः प्रकर्षदशां प्राप्नुवन्ति। वस्तुतोऽस्यामपि दशायामेते रसत्वं नाप्नुवन्ति। यो भावः स भाव एव सर्वदा न रसो भवितुम् अर्हति। उपचारतस्तु रसत्वम् उच्यते[246]।

5. इयं मध्यमावस्था व्यावहारिकदशा रसानां यद्विषयः सर्वालङ्कारिकप्रवर्तितो रसविचारः। भरतस्य स्थायिनो व्यभिचारिणः, सात्त्विकाः, अनुभावाः, एवं तस्यैव रससूत्रं, किञ्चैवं 'भावेभ्यो रसाः' 'स्थायिप्रकर्षो रस' इत्यादयो वादाश्च मध्यमावस्थाया एव विषयाः। वस्तुतो विचार्यमाणे मध्यमावस्थायां भोजो न केनाप्यालङ्कारिकेण विप्रतिपद्यते।

6. परं तत्रास्ति कश्चिद्विशेषः। आलङ्कारिकैः सर्वैरप्येकोनपञ्चाशद्भावेषु केचित् स्थायित्वात् स्थायिनः, केचिच्च व्यभिचारिणोऽङ्गीक्रियन्ते। भोजस्तु 'कविनिर्मितपात्रकथासंविधानम् अनुसृत्य सर्व एव भावाः स्थायिनो भवितुम्

अर्हन्ति। यदा चैको भावः स्थायिताम् उपगच्छति तदानीम् इतरे तम् अनुवर्तन्ते व्यभिचारितया। एवञ्च रसा नाष्टौ, न नव, नापि दश, न चापि द्वादश, परन्तु एकोनपञ्चाशत्। इतोऽप्यधिकाः। यतो भोजः पारवश्यस्वातन्त्र्यादीनन्यानपि रसत्वेन व्यवहरति। परमार्थतस्तु नैकोऽप्येषां, नापि रत्यादयोऽष्टौ रसा भवितुम् अर्हन्ति। अहङ्कार एव एको रसः' इत्यभिधत्ते।

7. यदा चैवम् अहङ्कार एकोनपञ्चाशद्भावरूपताम् आपद्यते यदा च पुनरपि सर्वैरेतैः प्रकर्षदशाऽधिगम्यते तदाऽन्यत् किञ्चित् समीकरणम् उपपद्यते। प्रकर्षदशाम् आपन्नाः सर्वे भावाः प्रेमात्मकैकरूपतां प्राप्नुवन्ति येन च द्वारेण पुनरप्यहङ्कारेऽन्तर्भवन्ति। तस्माद् एको रसः। रत्यादिनामानि तु भावनात्मकमध्य-मावस्थायाः सम्बन्धीनि। भावनादशा च रसस्थितेरनन्तरकालीना यत्र चैको रसो विविधभावात्मताम् आपद्यते। एताञ्च भावनादशाम् अतिवर्तते रसानुभवः। यश्च आत्मस्वहङ्कारेण प्रकाशितः, आत्मनामेवांशभूतः।

8. तादृशो रसोऽथवाऽहङ्कारस्तथा सम्पूर्णो भावप्रपञ्चोऽहङ्कारोत्पन्नः कविप्रेक्षकपाठकेषु सहृदयान् विभज्य प्रदर्शयति। सर्वे चैतादृशाहङ्कारयुक्ताः संस्कृता रसाश्रया भवन्ति। एवमात्मन आभ्यन्तरस्वाभिमानत्वेन निरूपितोऽ-हङ्कार आत्मन एव समग्रतासम्पादनविधानं व्यनक्ति।

9. अयं रसः संस्कृतेः शिखरं प्रापयति मनुष्यम् इति कृत्वा शृङ्गार इत्यभिहितः। 'येन शृङ्गं रीयते सः शृङ्गारः'। अहङ्कारश्च न लौकिकोऽहङ्कारो गर्वात्मोत्कर्षभावनारूपः परन्तु सात्त्विकोऽहंप्रत्ययगम्यः। स एवाभिमान इति कथ्यते येनानुकूलवेदनीयतया दुःखमपि सुखत्वेनाभिमन्यते।

परिशील्यमानेऽद्वैतसिद्धान्तादत्यल्पमेव भिद्यते भोजस्य रससिद्धान्तः। यथा पारमार्थिकदशायाम् एक एवात्माऽविद्यासंयोगाद् व्यावहारिकदशायां पुत्रकलत्रस्वामिसेवकाद्यात्मना नानात्वं प्रपन्नः पुनरपि योगादिना शुद्धिं प्रापितेन, अत एव प्रकृष्टेन चित्तेन सर्वात्मभावपर्यालोचनया पुनरपि पारमार्थिकं स्वमेकं रूपं प्रतिपद्यते, एवं पारमार्थिकदशायाम् अहङ्कार एवैको रसः, भौतिकवस्तु-संयोगाद् व्यावहारिकदशायामेकोनपञ्चाशद्भावरूपतामापन्नः पुनरपि सर्वत्र प्रकर्षवशात् प्रेमात्मकैकरूपतापर्यालोचनया प्रकृतिभूताहङ्कारे स्वस्मिन्नेव विश्राम्यति। इयाँस्तु विशेषः। अद्वैते आत्मनोऽविद्यासंयोगात् संसारः,

आत्मैकत्वज्ञानाच्च मोक्षः। रससिद्धान्ते पुनः अहङ्कारस्यैकरूपताध्यवसायान्न मोक्षः, किन्तु ब्रह्मानन्दसब्रह्मचार्यानन्दमात्रम् इति।

भोजो रससिद्धान्तम् अमुं 'रसिकशब्दनिर्वचनानुसन्धानद्वारा समधिजगाम। लोके केचन 'रसिका' इति व्यवह्रियन्ते, केचन 'अरसिका' इति। तर्हि कोऽर्थो रसिकपदस्य? रसोऽस्यास्तीति यद्वशात् कश्चन संस्कृतोऽभिज्ञः कलावांश्च दृश्यते। रसिक इति व्यवहारो न केवलं रसनादशाम् आधारीकृत्य प्रयुक्तः, अपि तु मनुष्यः कश्चित्तु स्वस्वरूपेणैव रसिको भवति। काव्यार्थाननुसन्धानदशायामपि स रसिक एव। कश्चित्तु स्वस्वरूपेणैवारसिको भवति। रसो नाम कश्चनोत्कर्षापादको धर्मः, यद्वशात् तद्वान् तदभाववद्भ्यो वैलक्षण्येन ज्ञाप्यते। अरसिकेभ्यो रसिकानां वैलक्षण्यमेकरूपमेवेति तद्वैलक्षण्यापादको धर्मो रसोऽप्येक एव स्यात्, न तु प्रतिमनुष्यं भिन्नः। स च विचार्यमाणे बुद्धितत्त्वात्मकोऽहङ्कार एव नान्यः।

एषोऽहङ्कारो मनोजन्यानां भावानां मूलभूतः। एतस्याहङ्कारस्य परिणत्य-परिणती आधारीकृत्यैव संस्कृतत्वासंस्कृतत्वाभिज्ञत्वानभिज्ञत्वादयो धर्मा मनुष्याणां भवन्ति। एकोऽहङ्काररसः कवौ, पात्रे, नटे, सामाजिके च समानो दृश्यते। एतदहङ्कारतत्त्वेनैव कश्चित् शक्नोति काव्यार्थभावनायाम्। विना चैतत् न कोऽपि भावयिता सामाजिकः, न कोऽपि कविश्च। एतत् पूर्वजन्मसुकृतफलम्। उक्तञ्च-

आत्मस्थितं गुणविशेषमहङ्कृतस्य शृङ्गारमाहुरिह जीवितमात्मयोनेः।
तस्यात्मशक्तिरसनीयतया रसत्वं युक्तस्य येन रसिकोऽयमिति प्रवादः।।

सत्त्वात्मनाममलजन्मविशेषजन्मा जन्मान्तरानुभवनिर्मितवासनोत्थः।
सर्वात्मसम्पदुदयातिशयैकहेतुर्जागर्ति कोऽपि हृदि मानमयो विकारः।।[247]

एतादृशस्य विलक्षणस्य स्वीयरससिद्धान्तस्य प्राचीनालङ्कारिक-सम्मतिप्रदर्शनार्थमिव दण्डिनो रसवदाद्यलङ्कारलक्षकः श्लोको विचित्रेण मार्गेण व्याख्यातो भोजराजेन येन सकलोऽपि स्वसिद्धान्तसारः सूचितो भवति। यथा दण्डिनः कारिका-

प्रेयः प्रियतराख्यानं रसवद्रसपेशलम्।
ऊर्जस्वि रूढाहङ्कारं युक्तोत्कर्षं च तत् त्रयम्।।

अत्र भोजस्य व्याख्यानम्-

"तत्र 'ऊर्जस्वि रूढाहङ्कारम्' इत्यनेन आत्मविशेषनिष्ठस्योत्कृष्टादृष्टजन्मनोऽनेकजन्मानुभवसंस्काराहितद्रढिम्नः समग्रात्मगुणसम्पदुत्पादातिशयहेतोरहङ्कारविशेषस्योपसंग्रहाद् अहङ्काराभिमानशृङ्गारापरनाम्नो रसस्य मानमयविकाररूपेणाभिमानिनां मनसि जाग्रतः परां कोटिम् उपवर्णयन्ति। 'रसवद्रसपेशलम्' इत्यनेन विभावानुभावव्यभिचारिसात्त्विकसयोगाद् रसनिष्पत्तिरिति रत्यादिरूपेणानेकधाऽऽविर्भवतोऽभिवर्धमानस्य परप्रकर्षगामिनः शृङ्गारस्य मध्यमावस्थां सूचयति। 'प्रेयः प्रियतराख्यानम्' इत्यनेन समस्तभावमूर्धाभिषिक्ताया रतेः परप्रकर्षाधिगमाद् भावनाधिगमे भावरूपताम् उल्लङ्घ्य प्रेमरूपेण परिणताया उपादानाद् भावान्तराणामपि परप्रकर्षाधिगमे रसरूपेण परिणतिरिति ज्ञापयन् अहङ्कारस्योत्तरां कोटिम् उपलक्षयति। सर्वेषामपि हि रत्यादिप्रकर्षाणां रतिप्रियो रणप्रियः परिहासप्रियोऽमर्षप्रिय इति प्रेम्ण्येव पर्यवसानं भवति।"[248]

प्रदर्शितक्रमेण विलक्षणम् अमुं भोजीयं रससिद्धान्तम् अनवगच्छन्नेव धर्मसूरिस्तं खण्डयामास। तथा हि -

"रस्यते स्वाद्यत इति व्युत्पत्त्या रसशब्दस्य सुखास्वादरूपशृङ्गार एवार्थो युक्तः, सुखस्यैवास्वाद्यत्वात्। इतरेषां तु सुखास्वादरहितानां प्रत्युत अनवधिकदुःखानुभवसम्भिन्नानां करुणादीनां रसशब्दार्थतैव न घटत इत्यभिप्रायेण शृङ्गारप्रकाशे भोजराजो व्याजहार-

वीराद्भुतादिषु रसेषु रसप्रसिद्धिः
सिद्धा कुतोऽपि वटयक्षवदाविभाति।
लोके गतानुगतिकत्ववशादुपेताम्
एतां निवर्तयितुमेष परिश्रमो नः।।'
शृङ्गारवीरकरुणाद्भुतहास्यरौद्र-
बीभत्सवत्सलभयानकशान्तनाम्नः।
आम्नासिषुर्दश रसानपरे वयं तु
शृङ्गारमेव रसनाद् रसमामनामः।।" इति। (पृ० 243-244)

यस्त्वत्र भोजाभिप्रायो धर्मसूरिणाऽनूदितः स एवायुक्तः। न हि भोजराजः

करुणादिषु रसशब्दव्युत्पत्तिं नेक्षते किन्तु तादृशरसशब्दव्युत्पत्तिप्रवृत्त्यैव एकोनपञ्चाशतामपि भावानां रसत्वम् अङ्गीकरोति। परन्तु परमार्थतो रसत्वम् एकस्यैवाहङ्कारस्य। अस्यैव च शृङ्गार इति नामान्तरम्। अयं शृङ्गारो रतिस्थायिभावात्मकात् शृङ्गारात् तत्त्वतो भिन्न एव। एवञ्च महतोऽस्य शृङ्गारप्रकाशाख्यप्रबन्धस्य पर्यन्तानुसन्धानाभावात् मतमेतत् साक्षादजानतां धर्मसूरिप्रभृतीनामुभयशृङ्गारयोरैक्याध्यासः। भवति च प्रदर्शितश्लोकद्वय-मात्रपरिज्ञानवताम् अयं भ्रमः। प्रायः सर्वैरपि भोजराजसिद्धान्तानुवदने कर्णाकर्णिकया प्राप्तावेतौ द्वावेव श्लोकौ निर्दिश्येते – येन ज्ञायते तदनन्तरग्रन्थो न दृष्टचर एतैरिति। एवमेवैकावल्यामपि विद्याधरेणैतौ द्वावेव श्लोकौ स्मृतौ। शिङ्गभूपालविश्वेश्वरौ त्वष्टरसवादिनावपि न भोजराजीयम् एकरससिद्धान्तं प्रतिक्षिपतः। तत्र च कारणं भोजसिद्धान्तावगतिरेव।

पूर्वम् अनूदितस्य भोजमतस्य खण्डनम् एकावल्यां वाऽन्यत्र कुत्रचिद्वा विस्तरेण न दृश्यते। धर्मसूरिस्तु विस्तरेणैतन्निरासम् अकरोत्। परन्तु स्वयम् अनवगत्य क्रियमाणम् इदं खण्डनं न वस्तुतो भोजमतखण्डनं भवति, नापि मध्यमावस्थायां धर्मसूरिमतस्य भोजमतस्य च विरोधः। धर्मसूरिकृत-भोजमतखण्डनं विस्तरभयान्नात्र प्रस्तूयते।

### 2.11.3 रसानां प्रकृतिविकृतिभावविचारः

शृङ्गारहास्यौ, वीराद्भुतौ, रौद्रभयानकौ, बीभत्सकरुणौ च मिथोऽविरुद्धौ। शृङ्गारबीभत्सौ, वीरभयानकौ, रौद्राद्भुतौ, हास्यकरुणौ च मिथो विरुद्धौ। अथ किं प्रयुक्तोऽयं विरोधाविरोधनिर्णयः। अत्र भरतश्चतुर्णां रसानां प्रकृतित्वं, चतुर्णां विकृतित्वं च प्रतिपादयति। तत्र शृङ्गार–वीर–बीभत्स–रौद्राः प्रकृतिरसाः। एभ्यः क्रमाद् हास्याद्भुतभयानककरुणा उत्पद्यन्ते। एवञ्चैते विकृतिरसा इति[249]।

सैष जन्यजनकभावोऽभिनवगुप्ताचार्यैर्भोजराजादिभिश्च नाङ्गीकृतः। प्रदर्शितो रसानां मिथः कार्यकारणभावोऽन्वयव्यतिरेकाभ्यां दूषितो वर्तते। शृङ्गाराद् हास्यो नियमेन न भवति, भवति च शृङ्गारेतररसानुकरणादपि। कदाचिद् रतेः करुणो जायते यथा कुमारसम्भवे रतेः। रौद्राच्च न केवलं करुणस्योत्पादः, अपि तु भयानकस्यापि। वीरेऽप्युत्तमप्रकृतीनां नास्त्यद्भुतोदयः। शृङ्गारादपि कदाचिद् अद्भुतो जायते। एवं परिशील्यमाने सर्वत्र कार्यकारणभावोऽन्वय-व्यतिरेकाभ्यां दूषितो वर्तते।

दशरूपके धनञ्जयोऽपि रसानां जन्यजनकभावं परित्यज्य चतुर्णाम् एषां द्वन्द्वानामेकोपाधिकत्वरूपम् अन्यं सम्बन्धम् उरीचकार। यथा-

"स्वादः काव्यार्थसम्भेदाद् आत्मानन्दसमुद्भवः।
विकासविस्तरक्षोभविक्षेपैः स चतुर्विधः।।
शृङ्गारवीरबीभत्सरौद्रेषु मनसः क्रमात्।
हास्याद्भुतभयोत्कर्षकरुणानां त एव हि।।
अतस्तज्जन्यता तेषामत एवावधारणम्"।।

अत्रावलोकः-

"चतुर्धा चित्तभूमयो भवन्ति। तद्यथा शृङ्गारे विकासः, वीरे विस्तरः, बीभत्से क्षोभः, रौद्रे विक्षेप इति। तदन्येषां चतुर्णां हास्याद्भुतभयानककरुणानां स्वसामग्रीलब्धपरिपोषाणां त एव चत्वारो विकासाद्याश्चेतसः सम्भेदाः। अत एव-
'शृङ्गाराद्धि भवेद्धास्यः...... बीभत्साच्च भयानकः' इति हेतुहेतुमद्भाव एव सम्भेदापेक्षया दर्शितः, न कार्यकारणभावाभिप्रायेण, तेषां कारणान्तरजन्यत्वात्"[250] इति।

एवञ्च स्पष्टमिदं यद् भरताभ्युपगतः कार्यकारणभावः सयुक्तिकं प्रतिक्षिप्तो धनिकादिभिरेकोपाधिकत्वरूपं सम्बन्धम् अभ्युपगच्छद्भिः। धर्मसूरिस्तु स्थलभेदेनोभावपि पक्षौ स्वीकरोति न त्वन्यतरं खण्डयति। तथा हि रसानां मिथः स्नेहविरोधौ प्रतिपादयितुं प्रवृत्तो दशरूपकप्रोक्ताश्चतुरश्चित्तवृत्तीः परिगणय्याधिकतया तासां स्वरूपनिर्वचनमपि ब्रूते -

विकासः कुसुमस्येव पादपस्येव विस्तरः।
चेतसोऽब्धेरिव क्षोभः विक्षेपो मरुतो यथा।। इति। (पृ० 247)

चतुर्णामपि द्वन्द्वानामेताभ्यश्चतसृभ्यश्चित्तवृत्तिभ्यो जननाद् एकैकस्मिन्नपि द्वन्द्वे मिथो रसयोः स्नेहः 'एकोपाधिकत्वतः', विभिन्नोपाधिकयो रसयोस्तु विरोध इति। एवञ्च कार्यकारणभावपक्षस्य साक्षादनिराकरणेऽपि एकोपाधिकत्वपक्षस्वीकरणम् अत्र स्पष्टम्। हास्यरसनिरूपणावसरे तु-

"एवं तावत् सप्रपञ्चं शृङ्गारं निरूप्याधुना तत्कार्यं हास्यरसं निरूपयति। शृङ्गारहास्ययोः कार्यकारणभावः शृङ्गारतिलके कथितः -

हास्यो भवति शृङ्गारात् करुणो रौद्रकर्मणः।
अद्भुतश्च तथा वीराद् बीभत्साच्च भयानकः।। इति"। (पृ० 255)

इति कार्यकारणभावपक्षमपि स्वीकरोति। न केवलम् अत्र प्रसङ्गाद् एषा कारिका उदाहृता, परन्त्वन्यत्रापि –

"अत्र रसाद् रसान्तरोत्पत्तिरपि कविभिः सम्मता।
यथोक्तं शृङ्गारतिलके-
हास्यो भवति ................भयानकः। इति"।

इति स्पष्टमेव रसाद् रसान्तरोत्पत्तिपक्षं स्वीकरोति।

एकावल्यां तु कार्यकारणभावः प्रतिक्षिप्तः, एकोपाधिकत्वम् अङ्गीकृतम्। उक्तञ्च –

"उपाधिर्भूमिकाश्रय इति यावत्। हास्याद्भुतकरुणभयानकेष्वपि विकासादिरेवोपाधिरिति एभिस्सह मित्रता शृङ्गारादीनाम्। न तु कार्यकारणभावः। तेषां प्रत्येकं विभावादिकारणभेदस्य दृष्टत्वात्"[251] इति।

धर्मसूरिरेकावलीं प्रायोऽनुसरन्नपि कस्मात् कारणात् शृङ्गारहास्यादीनां कार्यकारणभावम् अङ्गीकरोति, किं वा उभयपक्षपरिग्रहणेऽस्य तात्पर्यमिति न ज्ञायते। यदि 'रसाद् रसान्तरोत्पत्तिरपि कविभिः सम्मता' इत्यत्र 'कविभिः' इति पदेन स्वात्मनस्तत्र विमतिं प्रतिपादयति तर्हि हास्यरसनिरूपणस्य सङ्गतिप्रदर्शनग्रन्थोऽसङ्गत एव स्यात्। तत्राङ्गीकृत्यैव शृङ्गारकार्यत्वं हास्यस्य शृङ्गारानन्तरं तन्निरूपणमिति स्पष्टं कथयति। अत इदमेव धर्मसूरिमतमिति वक्तुं न शक्यते।

## 2.11.4 शान्तरसविचारः

शान्तरसस्तावद् बहुविधस्य विचारस्य विषयीकृतः संस्कृतालङ्कारग्रन्थेषु। भरतमुनिरष्टावेव रसान् प्रत्यपादयत्। शान्तस्य च नास्ति तत्र समुल्लेखः। अर्वाचीनैर्बहुभिरालङ्कारिकैः शान्तस्य रसत्वानङ्गीकारे भरतेनानिरूपणमेव हेतुतया कथितमित्यतो ज्ञायते यदधुना नाट्यशास्त्रे उपलभ्यमानः शान्तरसविषयको विचारः प्रक्षिप्तः स्यादिति। अभिनवगुप्तपादा अपि कदाचित् प्रक्षिप्तभूतैतद्ग्रन्थभागप्रामाण्येन शान्तं व्यवस्थापयन्ति। कदाचित् स्वतन्त्रतयैव।

शान्तरस इदम्प्रथमतया उद्भटेन प्रतिपादितः। तेनापि तस्यास्तित्वादिकम् अधिकृत्य न कृतो विचारः; अपि तु केवलं नाम्ना उद्दिष्टः स्वीये काव्यालङ्कार-सारसङ्ग्रहे[252]। सम्भवतः स्वेन प्रणीतेऽद्यानुपलभ्यमाने नाट्यशास्त्रव्याख्याने बहुधा विचारितवान् स्यात्। रुद्रटोऽपि शान्तम् अङ्गीचकार। सम्यग्ज्ञानं च तस्य स्थायी इत्युवाच[253]। अनन्तरम् आनन्दवर्धनाचार्यैर्ध्वन्यालोके विस्तृतविचारपूर्वकं स्थापितः शान्तरसः[254]। अभिनवगुप्तपादास्त्वभिनवभारत्यां लोचने च सकलाशङ्कासमाधानपूर्वकं शान्तं न केवलं स्थापयामासुः; परन्तु सकलरसशिखरभूम्नि संस्थापयामासुः[255]। प्रायोऽनन्तरा आलङ्कारिकाः सर्वेऽपि शान्तम् अङ्गीचक्रुः।

एवं प्रायः सर्वेऽपि नाट्यशास्त्रविषयकग्रन्थप्रणेतारः शान्तस्याभावं जगदुः। तत्र दशरूपकप्रणेता धनञ्जयस्तद्व्याख्याता धनिकश्च सर्वात्मना रसस्य अभावं युक्तिभिर्निरूपयामासतुः[256]। शिङ्गभूपालोऽप्यत्यन्ताभावम् अस्य प्रादर्शयत्[257]।

विद्याधरः शान्तम् अङ्गीचकार। किन्तु नाट्य एवेति वा काव्य एवेति वा तस्य नियमो न कृतः[258]। मम्मटाचार्यः काव्येऽस्य सत्त्वं नाट्ये चासत्त्वम् अवदत्[259]। धर्मसूरिस्तु दशरूपकानुसारेण शान्ताभावं पूर्वपक्षीकृत्य मम्मटम् अनुसरन् काव्येऽस्य भावं नाट्ये चाभावं सिद्धान्तयामास। अस्य स्थायीभावविषये च विविधान् प्रस्तूय निर्वेदमेव सिद्धान्तितवान्।

शान्तरसम् अनङ्गीकुर्वतां त्रिचतुरा आक्षेपाः प्रसिद्धाः, ते च यथोचितं समाहिता अभिनवगुप्तपादादिभिः। धर्मसूरिरप्याक्षेपसमाधाने प्रायस्तथैवानुवदति। तथा हि –

1. भरतमुनिना रसेषु शान्तस्यापरिगणनम्, शान्तस्य स्थाय्यादीनाम् अप्रदर्शनं च प्रथम आक्षेपः।
2. शमस्य सर्वव्यापारोपरमरूपत्वात् प्रदर्शयितुम् अयोग्य इति द्वितीयः।
3. सर्वस्यापि लोकव्यवहारस्य रागद्वेषसम्मिश्रितत्वात् मानवचित्तवृत्ते-स्तावुच्छेत्तुं न शक्यौ। अत एव न शान्तो रत्यादिवत् मानवानां साधारणो धर्म इति तृतीयः।

एतानेवाक्षेपान् श्लोकेनानुवदति धर्मसूरिः –

"यदि नवमतया शमो मतः स्यात्
किमिति मुनिः स च नाललक्षदेनम्।
अपि परिगणयन् रसेषु भावान्
रतिमुखरानलल‌ङ्गदस्य किं वा।।"

"रागद्वेषविलाससम्भृतरसं विश्वं जगच्चेष्टते
तावेतौ सुतरामनादिसुमहाकालप्रवाहोल्बणौ।
नैकोऽपि क्षमते पुमांस्तदनयोरामूलमुन्मूलने
तेनात्यन्तपरीक्षणे तु भुवने का नाम शान्तेः कथा।।" (पृ० 244)

1. एतेषां समाधानानि सोपपत्तिकमुक्तान्यभिनवगुप्तादिभिराचार्यैः। निर्वेदस्य स्थायिसञ्चारिणोर्मध्यपाठात् तदुभयात्मकत्वं देहलीदत्तदीपन्यायेन मुनेरनुमतम्, नो चेत् सत्सु बहुषु व्यभिचारिभावेषु नित्यामङ्गलं निर्वेदमेव कुतः प्रथमम् उपादीयेत। अतः शान्तोऽप्यङ्गीकृत एव मुनिनेति प्रथमाक्षेपस्य समाधिः[260]।

2. सर्वव्यापारोपरमः शमस्य पर्यन्तभूमिः। स च मा भवतु योग्यः प्रदर्शयितुम्। परन्तु इयमेव कथा इतरेषामपि रसानां पर्यन्तभूमेः। न हि शृङ्गारे सम्प्रयोगः, रौद्रे वध इत्यादयः प्रदर्शनयोग्याः। किं तावता रसत्वं शृङ्गारादीनां व्याहन्यते। एवञ्च तादृशसर्वव्यापारोपरमस्थित्यै यतमानस्य प्रयत्नसमुच्चय-स्तत्त्वज्ञानाधिगमे तस्याभिनिविष्टता कामादिजय इत्येते चान्ये चांशा अत्रापि प्रदर्शनयोग्या एव। मुक्तानामपि न निष्क्रियता सर्वेषाम्।

"कुर्वन्नेवेह कर्माणि संस्थिता जनकादयः।" इति।
"कुर्याद्विद्वांस्तथा सक्तश्चिकीर्षुर्लोकसंग्रहम्।"

इति च गीतानुशासनात्।

धर्मसूरिस्तु शान्तस्य प्रदर्शनायोग्यत्वं स्वीकृत्यैव नाट्ये तस्याभावम् अङ्गीचकार।

3. तृतीय आक्षेपः प्रतिक्षिप्त आचार्यानन्दवर्धनेन –

"यदि नाम सर्वजनानुभवगोचरता तस्य नास्ति नैतावताऽसाव-लोकसामान्यमहानुभावचित्तवृत्तिविशेषः प्रतिक्षेप्तुं शक्यः" इति।

अभिनवगुप्तपादास्तस्यैव बाणेन तमेव घ्नन्ति–

"ननु तत्र हृदयसंवादाभावाद् रस्यमानतैव नोपपन्ना। क एवमाह नास्तीति? यतः प्रतीयत एवेत्युक्तम्। ननु प्रतीयते। सर्वस्य श्लाघास्पदं न भवति। तर्हि वीतरागाणां शृङ्गारो न श्लाघ्य इति सोऽपि रसाच्च्यवताम्"[261] इति।

धर्मसूरिरप्येवमेव प्राक्षिपद् इमम् आक्षेपम्–

"यद्यपि न सर्वत्र शान्तिसम्भवस्तथापि शमदमादिसम्पन्नेषु नित्यनैमित्तिककर्मानुष्ठाननिर्मलीकृतस्वान्तेषु श्रवणादिनिरतेषु पण्डितेषु सम्भवत्येव शान्तो नाम रसः" इति। (पृ० 245)

एवमेव रागद्वेषपरित्यागोऽशक्यकार्य इत्युक्तिरपि न साधीयसी। तिरोधत्ते ह्येषा बहूनां महर्षीणां तापसानां ज्ञानिनां च चरित्राणि। तस्मात् पूर्वोक्ताक्षेपाणाम् अपरीक्ष्य कृतत्वाद् अस्त्येव शान्तो नवमो रस इति सिद्धान्तयामास धर्मसूरिः।

### 2.11.5 शान्तस्य स्थायिभावः कः?

भरतमुनिना शान्तस्य स्थायिभावाप्रदर्शनात् तत्स्थायिभावविषयेऽनेकानि मतानि समजायन्त। धर्मसूरिरपि कांश्चित् तान् पक्षान् उदाजहार–

> "किञ्च जुगुप्साविस्मयशमाः स्थायिभावा इति वचनानुरोधात् शम एवास्य स्थायी भवतु। केचिद् उत्साहं स्थायिनमाहुः। कोहलस्तु उत्साहो वा निर्वेदो वा शमो वाऽस्य स्थायी इत्युवाच। केचित् जुगुप्सास्थायिनम् एनम् आहुः" इति। (पृ० 245–246)

प्रतिक्षिप्ताश्चैते पक्षास्तेनैव–

"तदसङ्गतम्। रसानां प्रतिनियतस्थायिकत्वनियमात्"।

इति। धर्मसूरिमते निर्वेद एव शान्तस्य स्थायीति निश्चप्रचम्। वस्तुतस्तु निर्वेदस्य स्थायिताऽङ्गीकरणद्वारैव शान्तस्य रसत्वं स्थापयति धर्मसूरिः। तथा हि –

> "न स्थायिव्यभिचारिते यदि पुनश्चित्ते मुनेः सम्मते
> निर्वेदस्य निरूप्य तान् रतिमुखानष्टावपि स्थायिनः।
> तेषूद्देश्यतया स्थितेषु बहुशो भावेषु सञ्चारिणां
> नित्यामङ्गलमुद्दिशेत् कथमसौ निर्वेदमेवादितः"।। इति। (पृ० 245)

"न चास्य स्थायिनोऽपरिगणनम्। स्थायिव्यभिचारिमध्यपाठादेव निर्वेदस्योभयरूपता स्वीकृतेति मुनेरभिसन्धेर्ज्ञायमानत्वात्" इति च।

(पृ० 245)

किञ्च प्रदर्शितस्थायिभाववविषयकपक्षभेदपरिगणनानन्तरम् –

"ननु सूत्रकारैः कण्ठतोऽनुपात्तस्य निर्वेदस्य स्थायिताकल्पनम् अतिसाहसमिति चेत्"।

इत्याशङ्क्य–

"मैवम्। सूत्रकृतां सर्वेषामेवायं स्वभावो यद्यत्नेन किञ्चित् सूचयन्ति" इत्यादिना समाहितम्। (पृ० 246)

तस्माद् धर्मसूरिमते निर्वेद एवास्य स्थायीति स्पष्टम्। पूर्वोक्तपक्षाणाम् अनूद्य खण्डनस्य तु तात्पर्यं वयमेवम् अवगच्छामः। सर्वे चैते केचिदन्ये च पक्षा अभिनवगुप्तपादैः शान्तरसविचारे पूर्वपक्षीकृत्य निरस्ताः। नैकस्याप्येषु पक्षेषु प्रवर्तयिता तैः स्मृतः, नाप्यस्माभिर्ज्ञायते। एवम् अभिनवगुप्तपादाः सुबहून् पक्षान् खण्डयित्वा–

"तेन आत्मैव ज्ञानानन्दादिविशुद्धधर्मयोगी परिकल्पितविषयोपभोगरहितोऽत्र स्थायी"[262] इति सिद्धान्तयामासुः। धर्मसूरिस्तु पूर्वोक्तपक्षान् खण्डयित्वा प्रदर्शितक्रमेण निर्वेदमेव स्थायितया निरणयत्। तत्र धर्मसूरेः अयम् अभिप्रायः–

"जुगुप्साविस्मयशमाः स्थायीभावाः प्रकीर्तिताः"।

इति पाठः प्रक्षिप्त इत्यभिनवगुप्तपादैरपि सूचितमेव। तथा हि –

"तथा च चिरन्तनपुस्तकेषु स्थायिभावान् रसत्वमुपनेष्याम इत्यनन्तरं शान्तो नाम शमस्थायिभावात्मक इत्यादिशान्तलक्षणं पठ्यते"।[263]

इति चिरन्तनपुस्तकेष्विति विशिष्य कथनात् प्रक्षिप्तत्वं सूचितं तैः। तथा च शान्तस्य रसत्वस्थापने सुदृढं प्रमाणम् एकमेव अवशिष्यते यत् नित्यामङ्गलस्य निर्वेदस्य स्थायिव्यभिचारिमध्यपाठः। अतो निर्वेदस्य शान्तस्थायिताङ्गीकरण एव शान्तस्य रसत्वं स्थापितं भवतीति तदन्येषां स्थायित्वं नाङ्गीकर्तव्यमिति।

अन्यदप्यत्रावधेयम् अस्ति। यथा प्रतिपादितचरं अनेके पक्षाः अभिनवगुप्तपादैस्तत्तत्प्रवर्तकनामग्रहणं विना पूर्वपक्षेऽनूदिताः। धर्मसूरिस्तु–

> "कोहलस्तु उत्साहो वा निर्वेदो वा शमो वा अस्य स्थायी इत्युवाच"। (पृ० 246)

इति कथयन् पक्षत्रयस्यास्य प्रसिद्धस्य प्रवर्तयिता आचार्यकोहल इति स्पष्टयति। कोहलाचार्यस्त्वभिनवगुप्तपादेभ्योऽपि प्राक्तनो नाट्यशास्त्रव्याख्याताऽनेकेषु स्थलेषु महत्त्वपूर्णान् अनेकानभिप्रायान् उपन्यस्तवान्[264]। अनेकेषु स्थलेषु तेऽभिप्राया अभिनवगुप्तपादैस्तिरस्कृताश्च सन्ति। अतः शान्तस्य स्थायिभाव-विषयेऽत्यन्तप्रसिद्धानां त्रयाणामपि पक्षाणां कोहलाचार्य एव प्रवर्तक इति सूचयन् धर्मसूरिः सुमहद्योगदानम् अकरोत्।

### 2.11.6 रसाभासविचारः

> एकत्रैवानुरागश्चेत् तिर्यङ्म्लेच्छगतोऽपि वा।
> योषितो बहुसक्तिश्चेद् रसाभासस्त्रिधा मतः।।"[265]

इति साम्प्रदायिका रसाभासस्य त्रैविध्यम् अङ्गीकृतवन्तः। एकावलीकारः परं तिर्यग्गतरत्यादे रसाभासत्वं कण्ठोक्त्या निराचकार। म्लेच्छगतस्य तु रसाभासत्वं कण्ठतो न स्वीकृतवान् न वा निराकृतवान्। एकत्रैवानुरागवतः शृङ्गारस्य तु रसाभासत्वं सोदाहरणं स्वीकृतवान्।

'ब्रह्मन् अध्ययनस्य नैष समय' इत्येकत्रैवानुरागवतः शृङ्गारस्योदाहरणं प्रदर्श्य–

> "यत्र परस्परानुकूल्यकल्लोलितः प्रवर्तते स्थायी तत्र रसः। यत्र पुनरेकतरानुरागस्तत्र स्थायिनोऽनौचित्येन प्रवृत्तत्वात् तदाभास एव।"

इत्यादिना तदाभासत्वे हेतुं प्रदर्श्य–

> "अत्र न कथमपि मिथिलाधिराजतनयायाः प्रेमभाजनं भवति रामभद्रेतरः। ततः सर्वथा तस्यामनौचित्येन रतिः प्रावर्तत रावणस्य। रसाभासः समजनि विप्रलम्भशृङ्गारः।"[266]

इत्येकतरनिष्ठरत्यादे रसाभासत्वं विशदीकृतम्।

शिङ्गभूपालो रसार्णवसुधाकरे तिर्यग्गतस्येव म्लेच्छगतस्यापि रसत्वं विद्याधरेणाङ्गीकृतमिति कृत्वा तथैवानूद्य विस्तरेणाखण्डयत्। तथा हि –

"ननु तिर्यङ्म्लेच्छगतयोराभासत्वं न युज्यते। तयोर्विभावादिसम्भवात्। असम्भवे नास्वादयोग्यता इति चेत्, न। भोः म्लेच्छरसवादिन् उत्कलाधिपतेः शृङ्गाररसाभिमानिनो नरसिंहदेवस्य चित्तम् अनुवर्तमानेन विद्याधरेण कविना बाढम् आभ्यन्तरीकृतोऽसि। एवं खलु समर्थितम् एकावल्याम् अनेन– 'अपरे तु रसाभासं तिर्यक्षु प्रचक्षते। तन्न परीक्षाक्षमम्। तेष्वपि विभावादिसम्भवात्। विभावादिज्ञानशून्यास्तिर्यञ्चो न भाजनं भवितुम् अर्हन्ति रसस्येति चेत्, न। मनुष्येष्वपि केषुचित् तथाभूतेषु रसविषयाभासप्रसङ्गात्। अत्र विभावादिसम्भवो हि रसं प्रति प्रयोजकः। न विभावादिज्ञानम्। ततश्च तिरश्चाम् अस्त्येव रस' इति। न तावत् तिरश्चां विभावत्वम् उपपद्यते। शृङ्गारे हि समुज्ज्वलस्य शुचिनो दर्शनीयस्यैव वस्तुनो मुनिना विभावत्वेन आम्नानात्। तिरश्चाम् उद्वर्तनमज्जनाकल्परसनाद्यभावाद् उज्ज्वलशुचिदर्शनीयत्वानाम् असम्भावना प्रसिद्धैव। ......................"[267] इत्यादिना।

धर्मसूरिः पूर्वोक्तकारिकामेवोदाहरन् त्रिविधस्याप्येकत्रैवानुरागवतो म्लेच्छतिर्यग्गतस्य स्त्रियो बहुनायकविषयस्य च शृङ्गारस्याभासताम् अङ्गीचकार। अनुचितविषयप्रवर्तनत्वमेव हेतुं प्रादर्शयत्–

'रसभावयोराभासत्वम् अनुचितविषयप्रवर्तनम्' इति। इदं त्ववधेयं यत् साहित्यरत्नाकरे रसाभासविषयको विचारस्त्रिषु स्थलेषु भागशो वर्तते। तथा हि दशमे तरङ्गे शृङ्गाररसनिरूपणात् प्राक् पूर्वोक्तकारिकामुखेन रसाभासविभागम् अकार्षीत्। दशमतरङ्गस्यान्ते च रसस्याभासत्वे हेतुरुक्तः। सप्तमे तरङ्गे ऊर्जस्व्यलङ्कारप्रकरणे रसाभासस्योदाहरणं प्रदर्शितम्।

किञ्चेदम् अप्यत्रावधेयं यदनेकत्र विद्याधरम् अनुसरन्नप्यसौ धर्मसूरिर्विद्याधरेणैकेनैव प्रवर्तितं तिर्यग्गतरत्यादिकस्यापि रसत्वपक्षं निराकृतवान्। अपि च विद्याधरो म्लेच्छगतरत्यादेर्विषये मौनम् अवलम्बितवान्। तेन केवलम् एकत्रैवानुरागवतः शृङ्गारस्यैवोदाहरणं प्रदर्शितम्। धर्नसूरिस्तु तद्वैलक्षण्येन यत्र रसत्वाग्रहो विद्याधरस्य तस्यैव तिर्यग्गतरत्यादे रसाभासोदाहरणत्वेन विचारम् अकरोद् ऊर्जस्व्यलङ्कारप्रकरणे, न त्वितरेषाम्। एतज्ज्ञापयति विद्याधरस्यानुसरणेऽपि धर्मसूरेः स्वातन्त्र्यावलम्बनम्।

## सन्दर्भाः

1. विद्यानाथः, प्रतापरुद्रीयम्, पृ० 3
2. कृष्णमिश्रः, अलङ्कारसुधाकरः, पृ० 2
3. कालिदासः, रघुवंशम्, 12. 32
4. मल्लिनाथः, एकावली with तरल, पृ० 94-95
5. Ibid, पृ० 88
6. मम्मटः, काव्यप्रकाशः, पृ० 218
7. अस्याः स्मृतेर्मूलं नोपलभ्यते।
8. जैमिनिः, मीमांसादर्शनम्
9. मम्मटः, काव्यप्रकाशः, पृ० 6
10. विद्याधरः, एकावली, पृ० 16
11. प्रवरसेनः, सेतुबन्धकाव्यम्, पृ० 9
12. असत्कीर्तनकान्तारपरिवर्तनपांसुलाम्।
    वाचं शौरिकथालापगङ्गयैव पुनीमहे।। सा० र०, पृ० 8
13. सैवेह वाणी जनताघहारिणी सुधारिणी संसृतिसिन्धुतारिणी।
    यानन्तनामावलिदिव्यहारिणी स्खलत्पदैर्यद्यपि सा विकारिणी।। सा०र०, पृ० 8
14. जैमिनिः, मीमांसादर्शनम्, सू० 1-3-1
15. आपदेवः, मीमांसान्यायप्रकाशः, पृ० 247
16. वामनः, काव्यालङ्कारसूत्राणि, अधि० 1 पृ० 10
17. कुमारिलभट्टः, श्लोकवार्तिकम्, शब्दपरिच्छेदः, श्लो० 8
18. Ibid. चोदनासूत्रम्, श्लो० 3
19. विद्याधरः, एकावली, 1-6
20. विद्यानाथः, प्रतापरुद्रीयम्, पृ० 8
21. कृष्णमिश्रः, अलङ्कारसुधाकरः GOML. R. 3361 पृ० 66
22. पाणिनिः, अष्टाध्यायी 5-1-124
23. Ibid. 6-4-148
24. Ibid. 8-4-64
25. Ibid. 3-3-113
26. यास्कः, निरुक्तम्, पृ० 15
27. दण्डी, काव्यादर्शः, 1-103, पृ० 54
28. Ibid. 1-104, पृ० 55
29. रुद्रटः काव्यालङ्कारः, 1-14
30. मम्मटः, काव्यप्रकाशः 1-3, पृ० 11

31. Ibid. पृ० 13
32. भामहः, काव्यालङ्कारः, 1-5 पृ० 5
33. Ibid. 1-10, पृ० 9
34. हेमचन्द्रः, काव्यानुशासनम्, पृ० 5-6
35. वाग्भटः, अलङ्कारतिलकम्
36. वाग्भटः, काव्यालङ्कारः, पृ० 3
37. जगन्नाथः, रसगङ्गाधरः Vol. I, पृ० 46
38. मम्मटः, op.cit. PP 11 -12
39. पाणिनिः, अष्टाध्यायी, 1- 4 - 14
40. गौतमः, न्यायदर्शनम्, 2-2-58
41. कृष्णमिश्रः, op.cit. पृ० 112
42. पाणिनिः, op.cit. 1-4-104
43. Ibid. 5-3-1
44. काव्यप्रकाशः, with प्रदीपोद्द्योतः, पृ० 28-29 Poona 1929
45. साहित्यरत्नाकरः, पृ० 160 हैदराबाद् 1972
46. विश्वनाथः, साहित्यदर्पणः, पृ० 31
47. मम्मटः, काव्यप्रकाशः With प्रदीपोद्द्योतः, पृ० 30 Poona, 1929
48. साहित्यरत्नाकरः पृ० 160 Hydrabad 1972
49. भर्तृहरिः, वाक्यपदीयम् 3 सम्बन्ध, 37 पूर्वभागः, पृ० 149 Poona 1963
50. Ibid.
51. Ibid. 3-पूर्वभागः, पृ० 123
52. वाचस्पतिमिश्रः, तत्त्वबिन्दुः, पृ० 158
53. विश्वनाथः, न्यायसिद्धान्तमुक्तावली, पृ० 545 Madras 1923
54. वाचस्पतिमिश्रः, op.cit. P 160
55. कुमारिलभट्टः, श्लोकवार्तिकम्, पृ० 432 Madras 1971
56. Ibid.
57. हेमचन्द्रः, काव्यानुशासनम्, पृ० 58
58. अलङ्कारकौस्तुभः II 18 p. 39
59. "……तस्मात् शक्तिः सम्बन्ध इति सर्वमनवद्यम्। (सा०र०, पृ० 30) ……शब्दानामपि पदार्थप्रतीतिजननानुगुणः परिष्पन्दपरिणामविलक्षणो व्यापारोऽङ्गीकरणीयः।(सा०र०, पृ०34)
60. भर्तृहरिः, op.cit. 3 सम्बन्ध, 3
61. जैमिनिः, op.cit. 1.1.5

62. वाचस्पतिमिश्रः, op.cit. पृ० 160
63. पतञ्जलिः, महाभाष्यम्, खण्डः 1 भागः1 p. 12
64. भर्तृहरिः, वाक्यपदीयम् 3 सम्बन्ध, 29
65. Ibid.
66. Ibid. पृ० 48–50 सम्पूर्णानन्दसंस्कृत-वि० वि० Ed.
67. अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
    विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः।।
    भर्तृहरिः, op.cit. श्लो०1 प्रथमकाण्डः, हैदराबाद् 1974
68. पतञ्जलिः, op.cit. खण्डः 1 भागः 1, P. 108
69. "सामयिकत्वात् शब्दार्थसम्प्रत्ययस्य" गौतमः, न्यायसूत्रम् 2.1.55
70. विश्वनाथः, मुक्तावली, पृ० 549 Madras 1923
71. कौण्डभट्टः, भूषणसारः, शक्तिनिर्णयः
72. भूषणसारः, with प्रभा, दर्पणम्, पृ० 477
73. कृष्णमिश्रः op.cit. p. 120, 121
74. एकावली with तरल, पृ० 54 Bombay 1892
75. Ibid.
76. Ibid.
77. पाणिनिः, अष्टाध्यायी, 1-2-64
78. पतञ्जलिः, महाभाष्यम्, खण्डः 1 भागः 2. p. 94
79. जैमिनिः, op.cit. आकृत्यधिकरणम्, सू० 1.3-9
80. पतञ्जलिः, महाभाष्यम्, खण्डः 1 भागः 2. P. 94
81. पतञ्जलिः, महाभाष्यम्, खण्डः 1 भागः 1 P. 44
82. पाणिनिः, अष्टाध्यायी, 1-2-58
83. Ibid. 1-2-64
84. पतञ्जलिः, महाभाष्यम्, खण्डः 1 भागः 1 PP 98-99
85. नागेशः, लघुशब्देन्दुशेखरः
86. गौतमः, न्यायदर्शनम्, 2-2-68
87. मण्डनमिश्रः, शब्दशक्तिप्रकाशिका, पृ० 87 (अनूदितं जगदीशेन)
    Secondary reference in Śabda Śakti Prakāśikā.
88. गौतमः, न्यायदर्शनम्, 2-2-68
89. मम्मटः, काव्यप्रकाशः, pp. 32-37
90. Ibid. पृ० 44-45
91. पतञ्जलिः, महाभाष्यम्, खण्डः 1 भागः 2 पृ० 98-99

92. जगन्नाथः, रसगङ्गाधरः, Vol. II पृ० 148
93. वे० सु० शास्त्री, शब्दतरङ्गिणी, पृ० 133 मद्रास 1969
94. विश्वनाथः, न्यायसिद्धान्तमुक्तावली, पृ० 588
95. गौतमः, न्यायदर्शनम्, सू० 2-2-61
96. नागेशः, वैयाकरणसिद्धान्तलघुमञ्जूषा, पृ० 108 चौखम्बा, 1963
97. Ibid. पृ० 112
98. गोविन्दठक्कुरः, काव्यप्रकाशः with प्रदीपः, पृ० 38, Poona 1929
99. Ibid. पृ० 37
100. Ibid. पृ० 49
101. नागेशः, वैयाकरणसिद्धान्तमञ्जूषा, पृ० 27 सं० सं० वि० वि० वाराणसी 1977
102. जगन्नाथः, रसगङ्गाधरः, पृ० Vol. II पृ० 156
Also वे० सु० शास्त्री, op.cit. पृ० 137
103. पतञ्जलिः, महाभाष्यम्, सू० 4-1-48
104. Ibid. द्वितीयखण्डः, पृ० 327
105. कृष्णमिश्रः, op.cit. पृ० 150
106. गौतमः, न्यायदर्शनम्, सू० 2-2-61
107. उद्योतकरः, न्यायवार्तिकम्
108. शालिकनाथः, प्रकरणपञ्चिका 1 वाक्यपरिच्छेदः 1 पृ० 398
109. कुमारिलभट्टः, तन्त्रवार्तिकम्
110. खण्डदेवः, भाट्टरहस्यम्
111. हेमचन्द्रः, काव्यानुशासनम्, पृ० 30
112. मम्मटः, काव्यप्रकाशः, पृ० 46
113. झलकीकरः, काव्यप्रकाशः, with बालबोधिनी, पृ० 46
114. Ibid. पृ० 53
115. मल्लिनाथः, एकावली with तरलम्, पृ० 70
116. मल्लिनाथः, एकावली with तरलम्, पृ० 67-68
117. धर्मराजाध्वरिः, वेदान्तपरिभाषा, पृ० 74
118. खण्डदेवः, भाट्टदीपिका, तत्सिद्ध्यधिकरणम् 1-4-13
119. कुमारिलभट्टः, तन्त्रवार्तिकम्, 1-4 पृ० 318
120. Ibid.
121. भाट्टदीपिका with प्रभावली, पृ० 119
122. Ibid. पृ० 118, 119
123. वे० सु० शास्त्री, शब्दतरङ्गिणी, पृ० 146

124.मम्मटः, काव्यप्रकाशः 2-19 पृ० 63
125.Ibid. 2-14 पृ० 58
126.Ibid. 3-21, 22 पृ० 72
127.विश्वनाथः, प्रतापरुद्रीयम्, पृ० 35
128.मम्मटः, काव्यप्रकाशः, 2-19 पृ० 63
129.Ibid. 2-14 पृ० 58
130.आनन्दवर्धनः, ध्वन्यालोकः, Vol. I पृ०, 74
131.मम्मटः, काव्यप्रकाशः, पृ० 28
132.Ibid. पृ० 72
133.Ibid. 4-37, 39, 40 पृ० 127-135
134.विद्याधरः, एकावली, पृ० 144
135.Ibid.
136.काव्यप्रकाशः with माणिक्यचन्द्रकृतव्याख्या, पृ० 289 मैसूरु; हेमचन्द्रः, काव्यानुशासनम्, पृ० 20
137.मम्मटः, काव्यप्रकाशः, पृ० 462
138.विद्याधरः, एकावली, पृ० 144
139.आनन्दवर्धनः, ध्वन्यालोकः, पृ० Vol. II 101
140.मम्मटः, काव्यप्रकाशः, पृ० 465
141.Ibid. पृ० 465
142.वामनः, काव्यालङ्कारसूत्राणि, अधि०, 3 पृ० 2
143.Ibid. अधि० 3, पृ० 1-2
144.मम्मटः, काव्यप्रकाशः, पृ० 471-472
145.गोविन्दठक्कुरः, काव्यप्रदीपः, पृ० 389
146.विद्याधरः, एकावली, पृ० 147
147.विद्याधरः, एकावली, पृ० 147
148.विद्यानाथः, प्रतापरुद्रीयम्, पृ० 216
149.विद्यानाथः, प्रतापरुद्रीयम्, पृ० 217
150.Ibid.
151.दण्डी, काव्यादर्शः, पृ० 22
152.विद्याधरः, एकावली, पृ० 148
153.मम्मटः, काव्यप्रकाशः, पृ० 478-479
154.विद्याधरः, एकावली, पृ० 184-194
155.विद्यानाथः, प्रतापरुद्रीयम्, पृ० 230-233

156.रुय्यकः, अलङ्कारसर्वस्वम्, पृ० 61-62
157.अलङ्कारसर्वस्वम् with सञ्जीविनी, पृ० 30
158.विद्याधरः, एकावली, पृ० 189
159.विद्यानाथः, प्रतापरुद्रीयम्, पृ० 228
160.रुद्रटः, काव्यालङ्कारः
161.रुय्यकः, अलङ्कारसर्वस्वम्, पृ० 46 (भूमिकायाम्)
162."स्वतस्सिद्धेन भिन्नेन सम्मतेन च धर्मतः।
साम्यमन्येन वर्ण्यस्य वाच्यं चेदेकदोपमा।।"
विद्यानाथः, प्रतापरुद्रीयम्, पृ० 236, मद्रास् 1970
163.Ibid. पृ० 237
164.विद्याधरः, एकावली, पृ० 197
165.Ibid.
166.रुय्यकः, op.cit. पृ० 360
167.मम्मटः, op. cit. पृ० 540
168.रुय्यकः, अलङ्कारसर्वस्वम् with विमर्शिनी, पृ० 82
169.विद्याधरः, op.cit. पृ० 195-6
170.विद्यानाथः, op.cit. पृ० 250
171.दण्डी, काव्यादर्शः, पृ० 84
172.विद्याचक्रवर्ती, अलङ्कारसर्वस्वम् with संजीविनी, पृ० 54-55
173.दण्डी, काव्यादर्शः, पृ० 85
174.विद्याधरः, op.cit. पृ० 213
175.विद्यानाथः op.cit. पृ० 254
विद्याधरः, op.cit. पृ० 221
176.रुय्यकः, op.cit. पृ० 135
177.विद्याचक्रवर्ती, अलङ्कारसर्वस्वम् with संजीविनी, पृ० 55
178.अप्पय्यदीक्षितः, कुवलयानन्दः, पृ० 20
179.अप्पय्यदीक्षितः, चित्रमीमांसा, पृ० 240
180.जगन्नाथः, रसगङ्गाधरः, पृ० 547
181.नागेशः, काव्यप्रकाशः with उद्योतम्, पृ० 465
182.विद्याधरः, op.cit पृ० 221
183.विद्यानाथः, op.cit. पृ० 255
184.विद्यानाथः, op.cit. पृ० 259
185.विद्याधरः, op.cit. पृ० 231

186.मम्मटः, op.cit. पृ० 48
187.गोविन्दठक्कुरः, काव्यप्रकाशः, with प्रदीपः, पृ० 46
188.रुय्यकः, op.cit. पृ० 182
189.Ibid. पृ० 190
190.कुमारस्वामी, प्रतापरुद्रीयम् with रत्नापणम्, पृ० 259
191.विद्यनाथः, op.cit.
192.मम्मटः, काव्यप्रकाशः, पृ० 584
193.वामनः, काव्यालङ्कारसूत्राणि अधि० IV सू० 22 पृ० 3-62
194.भामहः, काव्यालङ्कारः, पृ० 110 (2-75)
195.यद्यपि लक्षणप्रणयनस्थले विद्यानाथेन उपमानादुपमेयस्य आधिक्ये न्यूनत्वे च व्यतिरेकालङ्कारोऽभ्युपगतः, तथापि द्वितीयप्रभेदो नैवोदाहृतः। तत्र च कुमारस्वामी- 'उपमानादुपमयेस्य अल्पत्वपक्षे सहृदयहृदयानधिरोहाद् उदाहरणं नोक्तम्। भेदद्वयलक्षणं तु सर्वस्वकारानुसाराद् इति रहस्यम्' इत्यलिखत्। द्र०विद्यानाथः, प्रतापरुद्रीयम्, पृ०293
196.रुद्रटः, काव्यालङ्कारः
197.रुय्यकः, op.cit. पृ० 286
198.मम्मटः, op.cit. पृ० 645
199. जगन्नाथः, op.cit. भागः 3, पृ० 130
200.रुय्यकः, op.cit. पृ० 243
201.विद्याधरः, op.cit. पृ० 242
202.हरिहरः, बिन्द्वलङ्कारः, एकावल्यामुद्धृतम्।
203.विद्यानाथः, op.cit. पृ० 289
204.अप्पय्यदीक्षितः, कुवलयानन्दः, पृ० 49
205.जगन्नाथः, op.cit. भागः, 3 पृ० 41
206.भामहः, काव्यालङ्कारः। पृ० 73
207.वामनः, op.cit. 4-3-18 पृ० 3-58
208.उद्भटः, काव्यालङ्कारसारसङ्ग्रहः पृ० 15 वर्गः 1 श्लो० 14
209.रुद्रटः, op.cit.
210.जगन्नाथः, op.cit. भागः 3-47
211.Ibid.
212.विद्याधरः, op.cit. पृ० 266
213."धर्मिणमर्थविशेषं सामान्यं वाऽभिधाय तत्सिध्यै।
यत्र सधर्मिकमितरं न्यस्येत् सोऽर्थान्तरन्यासः।।
पूर्ववदभिधायैकं विशेषसामान्ययोः द्वितीयं तु।
तत्सिद्धयेऽभिदध्याद् विपरीतं यत्र सोऽन्योन्यम्।।"
– रुद्रटः, काव्यालङ्कारः

214. "सामान्यं वा विशेषो वा तदन्येन समर्थ्यते।
यत्तु सोऽर्थान्तरन्यासः साधर्म्येतरेण वा।।" – मम्मटः काव्यप्रकाशः, पृ० 661

215. रुय्यकः, अलङ्कारसर्वस्वम्, पृ० 399

216. "............तेन यदेव उच्यते तदेव व्यङ्ग्यम्। यथा तु व्यङ्ग्यं न तथा उच्यते। यथा गवि शुक्ले चलति दृष्टे 'गौः शुक्लः चलति' इति विकल्पः। यदेव दृष्टं तदेव विकल्पयति न तु यथा दृष्टं तथा। यतोऽभिन्नासंसृष्टत्वेन दृष्टम्। भेदसंसर्गाभ्यां विकल्पयति"। – मम्मटः, op.cit. पृ० 681–82

217. जगन्नाथः, रसगङ्गाधरः, भागः 3 पृ० 268

218. शोभाकरमित्रः, अलङ्काररत्नाकरः, पृ० 107

219. जगन्नाथः, op.cit भागः 3–367

220. रुय्यकः, op.cit पृ० 523, 528, 530, 533

221. जयरथः, op.cit. पृ० 525

222. जगन्नाथः, op.cit. पृ० 165

223. शोभाकरमित्रः, op.cit पृ० 165–166

224. जयरथः, op.cit पृ० 525

225. जगन्नाथः, op.cit भागः 3–417

226. विद्याधरः, op.cit. पृ० 311

227. मम्मटः, op.cit पृ० 686

228. रुय्यकः, op.cit. पृ० 599

229. विद्याधरः, op.cit पृ० 312

230. शोभाकरमित्रः, op.cit. पृ० 155

231. जगन्नाथः, op.cit. भागः 3– 96

232. दण्डी, op.cit. पृ० 4 (1–7)

233. केशवमिश्रः, अलङ्कारशेखरः, श्लो० 2–1

234. भामहः, op.cit. श्लो० 1–19

235. विद्यानाथः, op.cit. पृ० 197

236. दण्डी, op.cit.

237. वामनः, op.cit. अधि० II अ० I भागः I-47

238. मम्मटः, op.cit. पृ० 263–64

239. केशवमिश्रः, op.cit. पृ० 14

240. विद्याधरः, एकावली, प्रथमोन्मेषः

241. विद्याधरः, op.cit. पृ० 103

242. Ibid. पृ० 90–93

243. मम्मटः, op.cit. पृ० 93
244. विश्वेश्वरः, चमत्कारचन्द्रिका, पृ० 95–96
245. डा० वे० राघवन्, Bhoja's Śṛṅgāra-Prakāśa. pp. 451-53
246. "न रत्यादिभूमा रसः। किं तर्हि? शृङ्गारः"
"रत्यादिभूमनि पुनर्वितथा रसोक्तिः"
"यतोऽमी रत्यादयः परं प्रकर्षमारूढा भावा एव, न रसाः"
"यदपि च गदितं प्रकर्षगामी भवति रसो रसविस्मयादिरेव।
तदपि न समञ्जसं प्रकृष्टाः प्रतिनिजभेदममी हि सर्व एव।।"
"रसः शृङ्गार एवैको भावा रत्यादयो मताः।
प्रकर्षगामिनोऽपीह प्रेमग्लानिश्रमादिवत्।।"
247. Ibid. पृ० 454
248. Ibid. पृ० 492–493
249. "शृङ्गाराद्धि भवेद्धास्यो रौद्राच्च करुणो रसः।
वीराच्चैवाद्भुतोत्पत्तिर्बीभत्साच्च भयानकः।।
शृङ्गारानुकृतिर्या तु स हास्यस्तु प्रकीर्तितः।
रौद्रस्य चैव यत्कर्म स ज्ञेयः करुणो रसः।।
वीरस्यापि च यत्कर्म सोऽद्भुतः परिकीर्तितः।
बीभत्सदर्शनं यत्र ज्ञेयः स तु भयानकः।।"
भरतः, नाट्यशास्त्रम्, पृ० 696–700 (प्रथमो भागः)
250. धनञ्जयः, दशरूपकम्, with अवलोकः, पृ० 287–288
251. विद्याधरः, op.cit. पृ० 78
252. उद्भटः, op.cit. पृ० 52 वर्गः, 4 श्लो० 4
253. रुद्रटः, op.cit.
254. आनन्दवर्धनः, ध्वन्यालोकः
255. अभिनवगुप्ताचार्यः, नाट्यशास्त्रम् with अभिनवभारती, पृ० 776–779 (प्रथमो भागः)
256. धनञ्जयः, दशरूपकम् with अवलोकः, पृ० 267
257. शिङ्गभूपालः, रसार्णवसुधाकरः, पृ० 175
258. विद्याधरः, op.cit. पृ० 96–98
259. मम्मटः, op.cit. पृ० 98, 117
260. "स्थायिसञ्चारिमध्ये चैतदर्थमेवायं पठितः। अन्यथा माङ्गलिको मुनिस्तथा न पठेत्। जुगुप्सां च व्यभिचारित्वेन शृङ्गारे निषेधन् मुनिर्भावानां सर्वेषामेव स्थायित्व-सञ्चारित्व-चित्तजत्व-अनुभावत्वानि योग्यतोपनिपतितानि शब्दार्थबलाकृष्टानि अनुजानाति।"
-अभिनवगुप्तः, नाट्यशास्त्रम् with अभिनवभारती, पृ० 764 (प्रथमभागः)

261.आनन्दवर्धनः, ध्वन्यालोकः with लोचनम्।
262.अभिनवगुप्तः, नाट्यशास्त्रम् with अभिनवभारती, पृ० 769
263.Ibid. पृ० 776
264.P.V. Kaṇe, History of Sanskrit poetics pp. 24-25
265.शृङ्गारतिलकम्।
266.विद्याधरः, op.cit. पृ० 105-106
267.शिङ्गभूपालः, op.cit. पृ० 206



## ।। अथ तृतीयोऽध्यायः ।।

# साहित्यरत्नाकरव्याख्यानानि



साहित्यरत्नाकरस्योपरि पञ्च व्याख्यानान्युपनिबद्धानि। तानि च क्रमेण – (1) महामहोपाध्यायकृष्णमिश्रविरचितः 'अलङ्कारसुधाकरः', (2) चर्लवेङ्कटसूरिविरचिता 'नौका', (3) मल्लादिलक्ष्मणसूरिविरचितः 'मन्दरः', (4) पण्डितमधुसूदनमिश्रविरचिता 'नौका', (5) वासुदेवचयनिकृतं 'विवरणम्'।

एतेष्वलङ्कारसुधाकर एव प्राचीनतमः प्रशस्ततमश्चेति प्रतीयते। किञ्चैतेषु 'अलङ्कारसुधाकरः' 'विवरणं' चाद्य यावद् अमुद्रितौ[1]। तत्रापि साहित्यरत्नाकरम् अधिकृत्य लिखितेषु लघुनिबन्धादिषु कुत्रापि विवरणस्य उल्लेख एव नास्ति। अस्माभिरेव ऐदम्प्राथम्येनास्य साहित्यरत्नाकरव्याख्यानरूपता अधिगता। शिष्टेषु त्रिषु व्याख्यानेषु 'मन्दरः' द्विवारं[2] 'नौका' द्वयम् एकैकवारं च मुद्रितम् आसीत्[3]।

ऐतिहासिकदृष्ट्याप्येतेषां पूर्वोक्त एव क्रम इति वयं प्रतीमहे। किञ्च चर्लवेङ्कटसूरिः, मल्लादिलक्ष्मणसूरिश्च आन्ध्रदेशीयौ। इतरे त्रय उत्कलीयाः। अपि च सुधाकरम् एकं विहायेतराणि चत्वार्यपि व्याख्यानानि मूलग्रन्थवाक्यानां समन्वयकरण एव प्रवृत्तानि, न तु विस्तृतविचारे इति वाच्यम्। सुधाकरस्तु अतीव वैशद्येन बहून् अर्थान् प्रतिपादयति। मूलग्रन्थसमन्वयम् इव कुत्रचित् मूलग्रन्थं परिष्करोति, क्वचित् खण्डयति च।

अधुना तत्तद्व्याख्याकर्तॄणां देशकालादिपरिचयकरणपूर्वकं तत्तद्व्याख्यानान्यधिकृत्य किञ्चित् प्रस्तूयते।

### 3.1 म० म० कृष्णमिश्रः, अलङ्कारसुधाकरश्च

सुधाकरस्य प्रथमकौमुद्या अन्ते विद्यमानया पुष्पिकया इदम् अवगम्यते यदसौ कौत्सकुलोत्पन्नो रामदीक्षितस्य पौत्रः, परमानन्दमिश्रस्य पुत्रः कृष्णमिश्र–

नामा इति। 'कालसर्वस्व'नामके धर्मशास्त्रग्रन्थेऽपि प्रकरणान्तपुष्पिकासु सुधाकरपुष्पिकासाम्यम् अक्षरशोऽनुभूयते। तथा हि –

> "इति श्रीमत्कौत्सकुलकैरवशरन्निशाकरन्यायवैशेषिक-मीमांसाशेषभाष्यादिशास्त्राकूपारपारङ्गमसाहित्यसङ्गीतछन्दः-प्राकृतज्योतिःपाटीबीजादिविद् गर्वसर्वङ्कषमहामहोपाध्याय-कविकोविदकृष्णमिश्रविरचिते कालसर्वस्वे वैष्णवप्रकरणं समाप्तम्। समाप्तश्च अयं ग्रन्थः।"

इति कालसर्वस्वपुष्पिका तत्र तत्र द्वित्र्यक्षरभेदेनालङ्कारसुधाकरपुष्पिकया समानाकारा विद्यते। एवञ्च कालसर्वस्वसुधाकरयोः कर्ता कृष्णमिश्रोऽभिन्न एवेति प्रतिभाति। अभ्युपगम्य चैवं कालसर्वस्वे उपलभ्यमानैः प्रमाणैः कृष्णमिश्रस्य कालोऽष्टादश-क्रैस्तशताब्दस्य मध्यभाग इति निश्चितं केदारनाथमहापात्रमहोदयेन[4]। प्रमाणं चेदं तत्र प्रदर्शितं तेन यत् कालसर्वस्वे उत्कलीयस्मृतिग्रन्थकर्तुर्गोपीनाथवाजपेयिन उल्लेखस्त्रिवारं कृतो दृश्यते। गोपीनाथवाजपेयी द्वितीयगजपतिरामचन्द्रदेवस्य (1726-1736) खुर्दाधीशस्य राजगुरुरासीदिति गोपीनाथस्य पुत्रेण चयनिचन्द्रशेखरेण लिखितात् मथुरानिरुद्धनाटकस्य प्रास्ताविकश्लोकाद् एकस्माद् अवगम्यते। किञ्चाष्टादशक्रैस्तशताब्दस्य प्रथमपादे स्थितेन प्रसिद्धेन गदाधरराजगुरुणा लिखितत्वेन सम्भावितौ 'दीक्षासारयोगसार' नामकौ ग्रन्थावप्यसावुल्लिलेखेति अयमप्यन्यो हेतुरस्य पूर्वोक्तकालस्याङ्गीकारे। एवं प्रमाणद्वयेन निश्चितः कृष्णमिश्रस्य कालः।

सुधाकरे प्रास्ताविकश्लोकेषु प्रथमकौमुद्यन्तपुष्पिकायाञ्चास्य वंशावलिरेवं सिद्ध्यति –

मृत्युञ्जयमिश्रः – कौत्सगोत्रः
|
रामचन्द्रमिश्रः
|
परमानन्दमिश्रः
|
कृष्णमिश्रः

किन्तु श्रीविश्वनाथस्वाईं स्वेऽप्रकाशिते शोधप्रबन्धे कालसर्वस्वकर्तुः कृष्णमिश्रस्य वंशावलिं भिन्नामेव प्रादर्शयत्। तथा हि –

आनन्ददीक्षितः
|

देवानन्दमिश्रः

हरिहरमिश्रः बलभद्रमिश्रः

कृष्णः दक्षेश्वरः त्रिलोचनः नारायणः जनार्दनः वनमाला सिद्धेश्वरः भगवान् दुर्गा सरस्वती

इति। एवं वंशावलिभेदात् कृष्णमिश्रौ द्वावपि परस्परं भिन्नाविति तस्याभिप्रायः। अस्मिन् पक्षे कालसर्वस्वम् आधारीकृत्य कृष्णमिश्रस्य कालनिर्णयो दुष्करो भवतीति बाह्याभ्यन्तरप्रमाणैः सुधाकरमेवाश्रित्य कृष्णमिश्रस्य कालो निश्चेयो भवति।

यत्किञ्चिदस्तु कृष्णमिश्रस्तु पूर्वोक्तकालान्न प्राक्तनो भवितुम् अर्हति। यतः सुधाकरेऽनेकेषु स्थलेषु वैयाकरणशेखरस्य नागेशभट्टस्य अष्टादशक्रैस्तशताब्द-प्रथमपादे स्थितस्य प्रभाव उपलक्ष्यते। तस्मात् कृष्णमिश्रयोर्भिन्नत्वेऽभिन्नत्वे वा सुधाकरकर्तुः कालस्त्वष्टादशक्रैस्तशताब्दमध्यभाग एव भवितुम् अर्हतीति वयं प्रतीमः।

### 3.1.1 सुधाकरस्य वैशिष्ट्यम्

प्रायो ग्रन्थान्तपुष्पिकादिषु ग्रन्थकर्तृविषये उपनिबध्यमानानि विशेषणान्य-तिशयोक्तिसम्भरितानि भवन्ति। किन्तु सुधाकरपुष्पिकायां कृष्णमिश्रस्य यानि विशेषणानि तानि तु स्वभावोक्तिरूपाण्येवेति वयं प्रतीमहे। दुर्दैवात् टीकेयम् असमाप्तैव सर्वासु मातृकासु लभ्यते। उपलभ्यमानासु मातृकास्वत्यन्ताधिक्येन सन्देहालङ्कारपर्यन्तमेव सुधाकरग्रन्थ उपलभ्यते[5]। एवम् उपलभ्यमानेऽस्मिन् सार्धषट्तरङ्गात्मक एव भागे तत्र तत्र प्रसङ्गेऽनेके तत्तच्छास्त्रीया गहना विचाराः कृताः कृष्णमिश्रेण। तटस्थशास्त्राणाम् उल्लेखेऽपि न तत्तच्छास्त्रीयाः साधारणरूपाः प्रमेयांशा एव उल्लिखिताः, किन्तु तत्तदर्थे यश्चरमो विचारः सोऽपि परीक्षितः। एवं तत्र तत्र कृतेभ्यो विचारेभ्य इदम् अवगम्यते यदस्य सर्वतोमुखपाण्डित्यं नानाशास्त्रेष्वासीदिति। व्याकरणे नव्यन्याये पुराणधर्मशास्त्रादिषु कृतभूरिपरिश्रमो बभूव। बहुषु स्थलेषु तत्तच्छास्त्रीयविचारेष्ववान्तरमतभेदानपि प्रदर्श्य तेषां मतानां गहनस्समन्वयप्रकारोऽपि प्रदर्श्यते। एवं व्याख्यानम् इदं न्यायव्याकरण-

मीमांसाशास्त्रेषु समीचीनपरिचयवतामेव सुलभावगमं वर्तते। तथा हि – ब्रह्मणः सत्य-ज्ञान-आनन्दस्वरूपत्वनिरूपणं, 'चिदानन्दमयम्' इत्यत्र मयटः स्वरूपार्थत्वनिर्वहणं, मायास्वरूपनिरूपणञ्च ग्रन्थादावेवास्योत्तरमीमांसाव्युत्पत्तिं स्पष्टीकरोति (10-16)। एवं वेदानाम् अपौरुषेयत्वस्थापनं (40-41) भावनाविचारश्च (43-44) पूर्वमीमांसायाम् अस्य पाण्डित्यं प्रथयति। अवतार-शब्दस्याभिव्यक्तिमात्रार्थकत्वं निरूपयन्ननेकेभ्यः पुराणेभ्यो रामकृष्णादीनाम् उत्पत्तिनिषेधकवाक्यानि सञ्चिन्वन् स्वकीयपुराणमर्मज्ञतां द्रढयति (56-57)।

शब्दार्थसम्बन्धविचारे (112-119) अभिधाया व्यापारत्वप्रतिपादनस्थले (121-122) शक्यार्थविचारे (123-145) च कृष्णमिश्रेण कृत-श्चतुस्तन्त्रविषयको विचारस्तेषु तस्य निरूढिं स्वातन्त्र्यं च सातिशयं प्रकटयति।

"यद्वा वैयाकरणमते निष्कर्षपक्षे जहत्स्वार्थावृत्त्यभ्युपगमेन समासेऽपि पृथक् शक्तिकल्पनाद् एकशक्तिकत्वाद् इत्यर्थः"। (189)

इतीदं वाक्यं व्याकरणशास्त्रे एकदेशिमतादिष्वप्यस्य व्युत्पत्तिं ज्ञापयति। कृष्णमिश्रः लक्षणाविचारे धर्मसूरेर्मीमांसकानुयायितां स्पष्टीकृत्य तन्मतखण्डन-पूर्वकं नैयायिकमतं स्थापयन् स्वस्य न्यायशास्त्रप्रवणतां प्रकटयति (155-160)।

अलङ्कारशास्त्रप्रमेयेष्वपि तत्र तत्र मूलग्रन्थानुक्तानां विषयाणां प्रतिपादनद्वारा मूलग्रन्थस्य परिपोषं जनयति। तथा हि – शृङ्गारनायिकानां प्रभेदपरिगणनस्थले मूलग्रन्थातिरिक्ता अनेके प्रभेदा ग्रन्थान्तरीयोदाहरणैः स्वीयोदाहरणैश्च कृष्णमिश्रेण परिगणिताः (84-105)। एवं प्रतिभापरनामधेयायाः शक्तेः स्वरूपविभागादि-प्रदर्शनमपि मूलग्रन्थेऽविद्यमानं कृतम् अस्ति (106-108)। एवमेव काव्यलक्षणे सरसावित्यस्यापि दलस्य निवेश्यत्वम् आशङ्क्य मनांसि विस्मापयति। जहदजहल्लक्षणायाः स्वरूपमुपवर्ण्य काव्यप्रकाशकारादिभिस्तादृशप्रभेदानङ्गी-करणमयुक्तमेवेति धर्मसूरेराशयम् उपष्टम्भयन् रुचिरं विचारः कृतोऽनेन (166-172)। लक्षणाबीजविचारस्थले तात्पर्यानुपपत्तेर्लक्षणाबीजत्वव्यव-स्थापनविचारेऽपि कृष्णमिश्रः स्वकीयं मतिवैशद्यं प्रकटयति (199-204)।

अनेकेषु स्थलेषु मूलग्रन्थपाठनधिकृत्य विचारयति। क्वचित् समीचीनं पाठं विद्यमानेषु सञ्चिनोति। क्वचिच्च स्वयं समीचीनपाठनिर्णयं करोति। अस्मिन्

विषये 35, 37, 81, 145, 153, 192, 212, 213, 217, 228 इमानि पृष्ठानि ईक्षितव्यानि।

अनेकेषु स्थलेषु धर्मसूरेः खण्डनम् अकारि। तथा हि –

1. अभिसारिकाया उदाहरणम् अधिकृत्य–
'वस्तुतस्तु स्वीयानाम् अभिसारस्य जगन्नाथदीक्षितादिभि-र्व्यवस्थापितत्वाद् ईदृशकौटिल्यानुसरणम् अनुचितमेवेति युक्तमुत्पश्यामः' (80)।
2. प्रतिभाशब्दनिष्पत्तिं विचारयन्–
'वस्तुतस्तु प्रतिभातीति प्रतिभा। पचाद्यजिति सारम्' (105)।
3. केवलजातेरेव शब्दार्थत्वपक्षं धर्मसूरिसम्मतम् आक्षिपन्–
"व्यक्तेरनुमानलभ्यत्वे पदार्थत्वाभावेन क्रियानन्वयापत्ते-र्व्यक्तित्वादिना गोरुपस्थितावपि गोत्वादिरूपेण अन्वया-सम्भवाच्च। तस्माज्जातिरेव शब्दार्थ इति यद् ग्रन्थकृतोक्तं तन्न घटते" (137)।
4. लक्षणाविचारे धर्मसूरेर्मीमांसकमतानुयायितां निराकुर्वन्–
"एतेन स्वबोध्यसम्बन्धो लक्षणेति मीमांसकोक्ता वाक्यवृत्ति-र्लक्षणा स्वाभिप्रेता इति फलितम्। इदञ्च न रुचिरम् आभासते" (155)।
5. जहत्स्वार्थायां लक्षणायां लक्ष्यार्थस्वरूपं विवेचयन्–
"वस्तुतोऽनया रीत्या गङ्गायाम् इत्यादौ शक्यार्थस्य अर्थान्तरवैशिष्ट्येनापि स्वीकारे विशेषः, किन्तु प्राचीनप्रवादम् अनुसृत्येदमुक्तं मूलग्रन्थकृता इति दिक्" (164)।
6. जहदजहल्लक्षणाऽङ्गीकारविषयेऽपि धर्मसूरिमतमित्थं परिष्करोति–
"तस्माद् दर्पण-काव्यप्रकाशकार-विद्यानाथाद्यनुक्तेर्नैयायिका-सम्मतत्वात् नेयं लक्षणा प्रामाणिकी इति, अन्यथा पूर्वम् अननुभूतेऽनुभूतत्वेऽपि स्वांशेऽप्यनुद्बुद्धसंस्कारके वा देवदत्ते तल्लक्षणया सोऽयं देवदत्त इति प्रयोगापत्तेरित्यलं बाहुल्येन" (173)।

7. धर्मसूरिसम्मतमोजोगुणस्य शब्दश्लेषान्तर्भावम् आक्षिपन्–
"ग्रन्थकृता शब्दश्लेषान्तर्भाव उक्तो नातीव रम्यः" (231)।

किञ्चास्मिन् सुधाकरव्याख्याने तत्र तत्र कतिचन वाक्यानि विविध-दृक्कोणेभ्योऽत्यन्तविलक्षणानि प्रधानानि चोपलभ्यन्ते–

1. "दाक्षिणात्यानां प्रायस्त्रिपुण्ड्रवत्त्वाद् इदम् उक्तम्। यज्वाभिप्रायेण वा" (72)।
2. "दक्षिणदेशे प्रायशः शिवस्य प्राधान्याद् विद्याधिकाराच्च विष्णोः प्रथमतो हरं स्तौति" (5)।
3. "मङ्गलसूत्रं दाक्षिणात्यवधूनां सधवालक्षणचिह्नमिति तद्देशीयत्वाद् इदम् उक्तम्"। (58-59)।
4. "ग्रन्थकर्तुर्मीमांसकानुगुणत्वाच्च" (151)।
5. "यद्यपि चक्रबन्धेत्यनयोरपदान्तत्वात् नवारस- [ नकार ]- युक्त एव धकारो युक्तः, तथाप्यान्ध्रलिप्यां पदान्तापदान्तयोः सर्वत्रानुस्वारस्येव लिखनं वर्गान्त्ययुक्तस्य। एतद्रीत्या इदम् उक्तम्" (245)।

अनेकेषां शब्दानां प्रक्रियाप्रदर्शनद्वारा तत्र तत्र विशेषांशानामुल्लेखनं सुधाकरेऽन्यो विशेषः। तादृशानां संख्याबाहुल्यात् नास्माभिरत्रोदाहृतास्ते।

एवम् अनेकेषु विषयेष्वलङ्कारसुधाकरस्य वैशिष्ट्यं प्रतिपादयितुं स्थालीपुलाकन्यायेन कतिचित् स्थलान्युदाहृतानि। वस्तुतस्त्वस्मिन् व्याख्याने प्रत्येकमपि वाक्यं परिशीलनार्हं भवति। तत्र तावद् उदाहृतान् विषयान् आश्रित्य विचारः शोधप्रबन्धे न कृतः, विस्तरभयात्। इदं त्वन्ते समासतो वक्तुं शक्यते यत् लोचनव्याख्यानेन ध्वन्यालोक इवालङ्कारसुधाकरेण साहित्यरत्नाकरो नितरां भूषितः। कृष्णमिश्रसदृशस्य व्याख्यातुर्लाभो धर्मसूरेरदृष्टविशेषः इत्यपि वक्तव्यं भवति।

### 3.2 चर्लवेङ्कटसूरिकृता नौका

'चर्ल' इत्युपनामकवेङ्कटसूरिरसौ नैध्रुवकाश्यपसगोत्रो ब्रह्मान्तर्वाणेः पौत्रः

सूरमाम्बा–लक्ष्मणसूरिरादम्पत्योः पुत्रश्च आसीदिति नौकाव्याख्यानस्य प्रारम्भश्लोकेभ्यः पञ्चमतरङ्गस्य तरङ्गान्तपुष्पिकायाश्च अवगम्यते। अयम् अष्टादशक्रैस्तशताब्दस्य मध्यभागे आसीदित्यवगम्यते। एषा व्याख्या संस्कृतै-कादमी, हैदराबादद्वारा देवनागर्यां 1972 संवत्सरे प्रकाशिता।

### 3.3 मल्लादिलक्ष्मणसूरिः – मन्दरः

मल्लादि–लक्ष्मणसूरिरान्ध्रदेशे गोदावरी–मण्डले काकिनाडपट्टणाभिजन इति ज्ञायते। अस्य पुत्रो वेङ्कटशास्त्री काकिनाडपट्टणे कस्मिंश्चित् महाविद्यालयेऽध्यापक आसीत्। अस्य पौत्रः काकिनाडपट्टणे श्रीआचण्टवेङ्कटरायसांख्यायन-शर्ममहाशयेन दृष्टः। लक्ष्मणसूरिरेकोनविंशक्रैस्तशताब्दस्यान्तिमे भागे दिवं गत इति ज्ञायते। एते विषयाः श्रीराघवाचार्याणां लेखनाज्ज्ञायन्ते[6]।

इदं त्वत्रावधेयम् – मन्दरव्याख्यारम्भश्लोकेष्वन्यत्र च नौकाव्याख्यानस्य निन्दनं कृतं दृश्यते। तथा हि –

"दुर्व्याख्या-विषदूषितां भगवतीं श्रीधर्मसूरेर्गिरं
भावालङ्कृतिसङ्गतिप्रकटनव्यावृत्तकौतूहलाम् ।
दर्शं दर्शमचेतसां सुमनसां सम्प्रीतये सादरं
व्याख्यां मन्दरसंज्ञिकां वितनुते सल्लक्षणां लक्ष्मणः।।

साहित्यरत्नाकरतत्त्वबोधे नालं हि नौकेति विरेमुरेके।
केचिद्विमोहात् मृगतृष्णिकायां वातायुवत्तत्र मुधा भ्रमन्ति।।

आद्यत्वबुद्धिं परिहृत्य नौकामेतां च टीकां कलयन्तु कल्याः।
लोकः करेणोरवलोककाले कर्णादिवत् पश्यति दन्तयुग्मम्।।"

"व्याख्या ह्यसावद्यतनप्रणीतेत्युत्सृज्य मात्सर्यमनार्यवर्यम्"।[7]
एवं "तस्मात् पर्वतनाथसूरिजलधेः" इति श्लोकस्य व्याख्याने–
"कविहृदयापरिज्ञाननिदानं कस्यचिद् व्याख्यानम् अपास्तम्"।

इति, तथा –

"साक्षात् सङ्केतितार्थस्य बोधकं तेषु वाचकम्।"[8]

इति वाचकपदलक्षणस्य लक्षणद्वयरूपताव्याख्यानं·नौकाकृतम् आक्षिपन्–

**"इति च सम्प्रदायापरेज्ञानासम्भावितार्थोपपादनावश्यकार्थप्रतिपादनायतनं कस्यचिद् व्याख्यानम् अपास्तम्।"[9]**

इति चैवमादिवाक्यैर्नौकाव्याख्यानदूषणं कृतम्। वस्तुतस्तु प्रदर्शितस्थलद्वयेऽन्यत्रापि च मन्दरकर्तुरेवाज्ञानं प्रकटितमिति वक्तुं सुशकत्वात्, पूर्वोक्तश्लोकेषु प्रदर्शित आत्मोत्कर्षोऽयुक्त एवेति वयं मन्यामहे। एते द्वेऽपि व्याख्याने मूलग्रन्थस्य वाक्यसमन्वयैकप्रयोजने, न तु विस्तृतशास्त्रार्थविचाररूपे इत्यपि वक्तुं शक्यते। क्वचित् शब्दार्थसम्बन्धविचारादिस्थलेषु मन्दरकर्तुर्व्युत्पत्त्यतिशय आलक्ष्यते। टीकेयम् आन्ध्राक्षरेषु मद्रासत एकवारं देवनागर्यां हैदराबादत एकवारं मुद्रितः।

### 3.4 मधुसूदनतर्कवाचस्पतिः – नौका

असौ जगन्नाथपुर्याः समीपे विद्यमाने वीरबलभद्रपुरशासननाम्न्यग्रहारे जनिम् अलभत। तत्रैव स्वे सप्तसप्ततितमवर्षे 1942 क्रैस्ताब्दे तनुम् अत्यजत्। स्वपितू रामकृष्णमिश्रसकाशात्, पितामहात् नरसिङ्गमिश्राच्चाधीतानेकविद्योऽपि नवद्वीपादिदेशानपि गत्वा न्यायादिशास्त्राण्यधीतवान्। असौ बामडाधीशस्य सुढलदेवनाम्नो राज्ञः सभायां चतुर्दशवर्षाणि बडखिमुण्डिराज्यसभायां चतुर्दशवर्षाणि च आस्थानपण्डितपदवीम् अलञ्चकार। जगन्नाथपुर्यां गोविन्दरामानुजपाठशालायामपि कञ्चित्कालम् अध्यापितवान्[10]। अस्य इतराः कृतयः – (1) हनुमत्सन्देशः (2) मायाशबरीविलासः (3) तारावली (4) श्रीलहरी (5) निर्गुणस्तवः (6) ध्वन्यालोकस्य अवदानटीका (1938 A.D. संवत्सरे प्रकाशिता)।

अनया व्याख्यया भूषितः साहित्यरत्नाकरः 1901 क्रैस्ताब्दे उत्कलेषु विद्यमानात् 'बामडा'पट्टणात् 'सुढल'मुद्रणालयद्वारा मुद्रितः। श्रीविश्वनाथपाणिग्राहिशर्मणा प्रकाशितः। प्रकाशनम् इदं सुढलसंस्थानाधीशस्य वीरश्रीसच्चिदानन्ददेवयुवराजमहोदयस्यानुकूल्येन सम्पन्नं चकास्ति। अस्य सम्पादनस्य पीठिकायां बामडासंस्थानेतिहासस्तद्राजस्तुतिश्चावलोकनीयौ। एषा अपि टीका अत्यन्तसाधारणया रीत्या ग्रन्थस्य वाक्यसमन्वयपरैवेति वक्तुं शक्यते।

### 3.5 वासुदेवचयनिः – विवरणटीका

मालती–जगन्नाथशर्मणोः पुत्रोऽसौ वासुदेवचयनिरुत्कलेषु 'कोठसाहि'–ग्रामाभिजन इति प्रथमतरङ्गव्याख्यानस्यान्ते विद्यमानायाः पुष्पिकाया अवगम्यते–

"कोठसाहिभववंशमौक्तिकाद् यो जजान जगदादिनाथतः।
मालतीतनुज एष दीक्षितो वासुदेव उदियात् सतां मुदे"।।

व्याख्यारम्भश्लोकेष्वस्य वंशावलिरेवं प्रदर्शिता–




अस्य कालस्तु स्पष्टतया वस्तुं न शक्नुमः। किन्त्वष्टादशक्रैस्ताब्दस्य चरमे पादे अथवा किञ्चित् ततोऽप्यनन्तरं भवितुम् अर्हति। एषा साहित्यरत्नाकरव्याख्या धर्मसूरिविषये गवेषितवद्भिः कैश्चिदपि नोपलक्षिता, न चोट्टङ्किता। ऐदम्प्राथम्येनास्माभिरेव भुवनेश्वरे State Museum तालपत्रग्रन्थालयेऽस्याः प्रतिकृतिरेका लब्धा अधीता च (AL 32)। एषाऽपि विवरणटीकाऽतीव रम्याऽसम्पूर्णा च। लक्षणातरङ्गे जहदजहल्लक्षणापर्यन्तमेव यद्यप्येषा उपलभ्यते, तथापि तदवधिविषयप्रतिपादनबहुला अत्यन्तोपकारिणी च परिलक्ष्यते।

एवमस्मिन् प्रकरणे साहित्यरत्नाकरटीका अधिकृत्य किञ्चिद्विवेचितम्। तत्राप्यप्रकाशितटीके सुधाकरविवरणेऽधिकृत्य प्रकृतोपयोगिताम् उपलक्ष्य किञ्चिदिव वैशद्येन प्रतिपादनं कृतम्। तथाप्यनेकेषु स्थलेषु वक्तव्यार्थबाहुल्यम् उपलक्ष्य आत्मा नियन्त्रितः।

## सन्दर्भाः


1. अलङ्कारसुधाकरः R.3361 GOML मद्रास।
   विवरणम् A.L. 32. State Museum MSS. Library, Bhubaneshwar.
2. सरस्वती प्रेस्, मद्रास
   संस्कृतपरिषद्, हैदराबाद 1972
3. मधुसूदनमिश्रकृता नौका-बामडा, ORISSA 1901
   चर्लवेङ्कटसूरिकृता नौका-संस्कृतपरिषद्, हैदराबाद् 1972
4. K.N. Mahāpātra, op.cit. pp. cxc III
5. R.3361 GOML, Madras
6. E.V.V. Rāghavācāryulu, साहित्यरत्नाकरमु-नौकामन्दरमुलु
7. साहित्यरत्नाकरः, पृ० 3-5 हैदराबाद्, 1972
8. Ibid. पृ० 159
9. Ibid. पृ० 160
10. P. K. Miśrā, Unpublished Thesis.




# साहित्यरत्नाकरोद्धृतानि विविधबन्धचित्राणि



।। चक्रबन्धः ।।

सा.र. पृ. ९०

सु र रा ज ग्र णी श्या मः स्थि रा व र सु ता प तिः

वि र रा ज घृ णी रा मः सु रा सु र कृ ता न तिः

॥ गोमूत्रिकाबन्धः ॥

सा.र. पृ. ९०




।। पद्मबन्धः ।।

सा.र. पृ. ११




**।। नागबन्धः ।।**

सा.र. पृ. १०



॥ मुरजबन्धः ॥

सा.र. पृ. ११




।। षोडशदलपद्मबन्धः ।।

सा.र. पृ. ९१

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| शौ | धी | सो | म | म | सो | ऽधी | शौ |
| धी | र | सा | र | र | सा | र | धीः |
| सो | ऽभा | व | ना | ना | व | भा | सो |
| म | म | तो | न | न | तो | म | म |

।। पादार्धभ्रमकम् ।।

सा.र. पृ. ९२




।। खड्गबन्धः ।।

सा.र. पृ. १२

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| झो | धी | सो | म | म | सो | धी | झो |
| धी | वि | भा | म | म | भा | वि | धी |
| सो | भा | व | ना | ना | व | भा | सो |
| म | म | ना | म | म | ना | म | म |

।। सर्वतोभद्रबन्धः ।।

सा.र. पृ. १२



।। क्षुरिकाबन्धः ।।

सा.र. पृ. ९३




॥ हलबन्धः ॥

सा.र. पृ. १३




।। गुच्छबन्धः ।।

सा.र. पृ. १३



॥ मत्स्यबन्धः ॥

सा.र. पृ. ९३

# सहायक-ग्रन्थसूची

## 1. संस्कृतग्रन्थसूची

[ संस्कृग्रन्थसूच्यां पुस्तकस्य नाम, ग्रन्थकर्तुर्नाम, सम्पादकस्य अथवा प्रकाशकस्य नाम, मुद्रणस्थानं, संवत्सरश्च क्रमशः निर्दिष्टाः ]


अब्ददूतम्, कृष्णश्रीचन्दनः, सं० भगवान् पण्डा, Directorate of Tourism and Cultural Affairs, Orissa, Bhuvaneswar, 1980.

अलङ्काररत्नाकरः, शोभाकरमित्रः, Oriental Book Agency, Pune, 1942

अलङ्कारशेखरः, केशवमिश्रः, सं० अनन्तरामशास्त्री वेतालः, चौखम्बा, 1927

अलङ्कारसर्वस्वम्, रुय्यकः, सं० रेवाप्रसादद्विवेदी, चौखम्बा, वाराणसी, 1971

अलङ्कारसर्वस्वम्, रुय्यकः, सं० Dr. S.S. जानकी, मेहरचन्द् लक्ष्मणदास्, दिल्ली, 1965

अष्टाध्यायी, प्र० रामलाल कपूर ट्रस्ट, सोनीपत, हर्याना, 1973

एकावली, विद्याधरः, सं० के० पी० त्रिवेदी, मुम्बई, 1903

कालिदासग्रन्थावली, सं० रेवाप्रसादद्विवेदी, काशी-हिन्दू-विश्वविद्यालयः, वाराणसी, 1976

काव्यप्रकाशः (प्रदीपोद्योतसमेतः), मम्मटः, आनन्दाश्रमप्रकाशनम्, पुने, 1929

काव्यप्रकाशः (बालबोधिनीसहितः), मम्मटः, भण्डारकर प्राच्यविद्या-संशोधनसंस्थानम्, पुणे, 1965

काव्यादर्शः, दण्डी, वाविल्ल - रामस्वामिशास्त्रुलु एण्ड सन्स, मद्रास, 1964

काव्यानुशासनम्, हेमचन्द्रः, सं० शिवदत्तशर्मा, निर्णयसागरः, मुम्बई, 1934

काव्यालङ्कारः, भामहः, सं० सि० शङ्करनारायणशास्त्री, बालमनोरमाप्रेस, मद्रास, 1956

काव्यालङ्कारः, वाग्भटः, श्रीवेङ्कटेश्वरस्टीमम - प्रेस, मुम्बई, 1956

काव्यालङ्कारः, रुद्रटः, सं० रामदेवशुक्लः, चौखम्बा, वाराणसी, 1966

काव्यालङ्कारसारसंग्रहः, उद्भटः, सं० N.D. बनहट्टी, भण्डारकरप्रकाशनम्, पुणे, 1925

काव्यालङ्कारसूत्राणि, अप्पय्यदीक्षितः, निर्णयसागर प्रकाशनम्, मुम्बई, 1937

कृष्णकेलितरङ्गिणी, सं० प्रमीला मिश्रा, Directorate of Tourism and cultural affairs, Orissa, Bhuvaneswar.

गङ्गवंशानुचरितम्, सं० प्रमीला मिश्रा, Directorate of Tourism and Cultural affairs Orissa, Bhuvaneswar, 1979

चमत्कारचन्द्रिका, विश्वेश्वरकविचन्द्रः, सं० डॉ० पि० श्रीराममूर्तिः, आन्ध्रविश्वकलापरिषद्, विशाखापट्टनम्, 1969

चित्रमीमांसा, अप्पय्यदीक्षितः, सं० जगदीशचन्द्रमिश्रः, चौखम्बा, वाराणसी, 1971

तत्त्वबिन्दुः, वाचस्पतिमिश्रः, अण्णमलैविश्वविद्यालयग्रन्थमाला, अण्णमलैनगरम्

तन्त्रवार्तिकम्, कुमारिलभट्टः, आनन्दाश्रमप्रकाशनम्, पुणे, 1–6 भागाः, 1947

दशरूपकम्, धनञ्जयः, सं० रामजी–उपाध्यायः, भारतीयसंस्कृतिसंस्थानम्, इलाहाबाद, 1979

ध्वन्यालोकः, आनन्दवर्धनः, सं० रामसागरत्रिपाठी, मोतीलाल बनारसीदास, दिल्ली, 1975

नरकासुरविजयव्यायोगः, धर्मसूरिः सं० D.G. पाध्ये, संस्कृतपरिषत्, हैदराबाद, 1961

नाट्यशास्त्रम्, भरतः, सं० मधुसूदनशास्त्री, काशीहिन्दूविश्वविद्यालयः, वाराणसी, 1971

निरुक्तम्, यास्कः, सं० मुकुन्दझाबक्षी, मेहरचन्द लक्ष्मणदास, दिल्ली, 1982

न्यायदर्शनम्, गौतमः, भारतीयविद्याप्रकाशनम्, वाराणसी, 1966

न्यायरक्षामणिः, अप्पय्यदीक्षितः, सं० S.R. कृष्णमूर्तिशास्त्री, सिकन्दराबाद, 1971

न्यायवार्तिकम्, उद्योतकरः, वाराणसी, 1916

न्यायसिद्धान्तमुक्तावली, विश्वनाथः, बालमनोरमा प्रेस, मद्रास, 1923

प्रकरणपञ्चिका, शालिकनाथः, काशीहिन्दूविश्वविद्यालयः, 1961

प्रतापरुद्रयशोभूषणम्, विद्यानाथः, सं० डॉ० वे० राघवन्, मद्रास, 1970

ब्रह्मामृतवर्षिणी, धर्मभट्टः, सं० गोल्लमूडि–लक्ष्मीकान्तरावु, नेल्लूरु, 1900

**ब्रह्मामृतवर्षिणी**, धर्मभट्टः, सं० हरिनारायण-आप्टे, आन्नदाश्रमप्रेस, पुणे, 1911
**ब्रह्मामृतवर्षिणी**, धर्मभट्टः, सं० प्रज्ञानानन्दसरस्वती, चौखम्बा, वाराणसी, 1911
**ब्रह्मामृतवर्षिणी**, धर्मभट्टः, सं० S. वेङ्कटरमण-अय्यर्, चौखम्बा, वाराणसी, 1916
**भाट्टदीपिका**, खण्डदेवः, मद्रास-विश्वविद्यालयः, मद्रास, 1957
**भाट्टदीपिका**, खण्डदेवः, निर्णयसागरप्रेस, मुम्बई, 1922
**भाट्टरहस्यम्**, खण्डदेवः, शास्त्रमुक्तावली, कांचीपुरम्, 1900
**महाभाष्यम्**, पतञ्जलिः, मोतीलाल-बनारसीदास, दिल्ली, 1967
**मीमांसादर्शनम्**, जैमिनिः, आनन्दाश्रमप्रेस, पुणे, 1947
**मीमांसान्यायप्रकाशः**, आपदेवः, भण्डारकरशोधसंस्थानम्, पुणे, 1937
**मेघसन्देशः**, कालिदासः, लक्ष्मीवेंकटेश्वरप्रेस, मुम्बई, 1923
**रघवुंशः**, कालिदासः, काशीहिन्दूविश्वविद्यालयः, वाराणसी, 1976
**रसकल्पद्रुमः**, जगन्नाथमिश्रः, सं० पंडितबनाम्बर आचार्य, ओडिशा साहित्य अकाडमी, भुवनेश्वर, 1965
**रसगंगाधरः**, जगन्नाथः, काशीहिन्दूविश्वविद्यालयः, वाराणसी, 1-3 भागाः, 1964, 1970, 1973
**रसार्णवसुधाकरः**, सिङ्गभूपालः, सं० गणपतिशास्त्री, तिरुवनन्तपुर-संस्कृतग्रन्थमाला, त्रिवेन्द्रम्, 1916
**लघुशब्देन्दुशेखरः**, नागेशः आन्ध्रविश्वकलापरिषद्, 1941
**वाक्यपदीयम्**, भर्तृहरिः, तेलुगु अकाडमी, हैदराबाद, 1974, (1, 2 काण्डौ) डेक्कन् कॉलेज, पुणे, 1963 (तृतीयकाण्डः, पूर्वभागः)
**वेदान्तपरिभाषा**, धर्मराजाध्वरिः, अड्यार-ग्रन्थालयप्रकाशनम्, मद्रास, 1971
**वैयाकरणभूषणसारः**, कौण्डभट्टः, आदर्शग्रन्थमाला, वाराणसी, 1947
**वैयाकरणसिद्धान्तमञ्जूषा**, नागेशः, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी, 1977
**वैयाकरणसिद्धान्तलघुमञ्जूषा**, नागेशः, चौखम्बा, वाराणसी, 1963
**शब्दशक्तिप्रकाशिका**, मण्डनमिश्रः, चौखम्बा, वाराणसी, 1934
**शब्दतरङ्गिणी**, वेपत्तूरु, सुब्रह्मण्यशास्त्री, संस्कृतगवेषणसमितिः, मद्रास, 1969
**शारीरकमीमांसाभाष्यम्**, श्रीशङ्करभगवत्पादाः, चौखम्बा, वाराणसी, 1982

शृङ्गारमञ्जरी, सन्त अक्बर झा, सं० डॉ० वे० राघवन्, Dept. of Archaeology, Govt. of Andhra Pradesh, Hyderabad, 1951.

श्रीशाङ्करग्रन्थावलिः, श्रीशङ्करभगवत्पादाः, Vol. 18, वाणीविंलास-प्रेस, कुम्भकोणम्

श्लोकवार्तिकम्, कुमारिलभट्टः, शब्दपरिच्छेदः, मद्रास, 1971

साहित्यदर्पणम्, विश्वनाथः, सं० दुर्गाप्रसादद्विवेदी, मेहरचन्द लक्ष्मणदास, दिल्ली, 1982

साहित्यरत्नाकरः, धर्मसूरिः, सरस्वती-प्रेस, मद्रास

साहित्यरत्नाकरः, धर्मसूरिः, बामण्डा, ओरिस्सा, 1901

साहित्यरत्नाकरः, धर्मसूरिः, संस्कृतपरिषत्, हैदराबाद, 1972 (1-2 भागौ)

सेतुबन्धकाव्यम्, प्रवरसेनः, भारतीयविद्याप्रकाशनम्, दिल्ली, 1982

**2. तेलुगुग्रन्थाः**

अप्पकवीयमु, अप्पकविः, वाविल्लरामस्वामिशास्त्रुलु एण्ड सन्स, मद्रास, 1922

आन्ध्रकविजीवितमु, वीरेशलिङ्गं पन्तुलु, Part I, 1916

आन्ध्रविज्ञानसर्वस्वमु, vol. III, तेलुगु अकाडमी, हैदराबाद

कविशिरोभूषणमु, अहोबलपण्डितः, सं० लक्ष्मीरञ्जनम्, 1965

कुवलयानन्दप्रकाशमु, कट्किनेनि-रामकविः, अप्रकाशितः, G.O.M.L., D. 2661, मद्रास

छन्दोदर्पणमु, अनन्तार्यः, वाविल्ल-रामस्वामिशास्त्रुलु एण्ड सन्स, मद्रास, 1921

नरकासुरविजयव्यायोगमु, कोक्कण्ड वेंकटरत्नं पन्तुलु, वाविल्ल-रामस्वामिशास्त्रुलु एण्ड सन्स, मद्रास, 1950

बालभागवतमु, R, 723, PL 973, S.V.O. Institute library, Tirupati.

वेलुगोटि वारिवंशचरितमु, शेषगिरिशास्त्री, शारदाम्बाविलास प्रेस, मद्रास, 1911

वेलुगोटि वारिवंशावलि, N.V. रमणय्य, मद्रास विश्वविद्यालयः, मद्रास, 1939

समग्रान्ध्रसाहित्यमु, आरुद्र, vol. 9

**3. अप्रकाशितग्रन्थाः**

**अलङ्कारसुधाकरः**, कृष्णमिश्रः, G.O.M.L., R., 3361, मद्रास
**आमोदः**, चिलकमर्रि रङ्गशायी, अड्यार-ग्रन्थावलयः, Paper X.J. 13
**कविकण्ठहारः**, जगन्नाथनारायणदेवः, Orissa State Museum, Bhubaneswar, S.Ms. 10
**कविचिन्तामणिः**, कविरत्नगोपीनाथपात्रः, Orissa State Museum, Bhubaneswar, S.Ms. 11.
**कविसमयकल्लोलः**, अनन्तार्यः, R. 17815 GOML, मद्रास
**दत्तरत्नाकरः**, धर्मराजाध्वरिः, D. 3167, GOML, मद्रास
**पदार्थदीपिका**, गौरनः, D. 12951, GOML, मद्रास
**परिभाषार्थप्रकाशः**, पान्देल्ल धर्मसूरिः, GOML, मद्रास
**पुरुषोत्तममाहात्म्यम्**, D 2473, GOML., मद्रास
**पुरुषोत्तमक्षेत्रमाहात्म्यम्**, D 2472, GOML., मद्रास
**ब्रह्मामृतवर्षिणी**, धर्मभट्टः, D 4689, R 6699, GOML, मद्रास 75554, PM 610, PM 611, PM 612, 73148, 74088, 75296, 75542, 75676 अड्यार ग्रन्थालयः, मद्रास
**लक्षणदीपिका**, गौरनः, D 12951, D 12952, GOML., मद्रास
**वाक्यप्रकाशः**, उदयधर्मः, 1370/1884/87, BORI, पुणे
**विवरणटीका**, वासुदेवचयनिः, AL 32, Orissa, State Museum, Bhubaneswar.
**साहित्यभूषणम्**, रघुनाथदासः, Dr. अद्वैतचरणधलस्य शोधप्रबन्धः

**4. English Works**

**Aufrecht, Catalogues Catalogorum vol. 1**
De. S.K., **History of Skt. Poetics**, Phirma K.L. Mukhopadhyaya, Calcutta, 1960
Kane, P.V., **History of Skt. poetics**, Motilal Banarasidas, Delhi, 1971
Krishnamacharya, M., **History of Classical Skt., Literature**, Motilal Banarasidas, Delhi, 1970
Krishna Swamy, Iyangar, S., **Sources of Vijayanagara history**, University of Madras, Madras, 1919

Mahapatra, K.N., A descriptive catalogues of Skt. Manuscripts of Orissa vol. 2
Misra, P.K., Contribution of Orissan authors to Skt. poetics, and unpublished thesis.
Malt by, District Mannual of Ganjam.
Raghavan, V. Dr., Bhojas Sṛngāraprakāśa 'punarvasu' Madras, 1978.
Rangacharya, V., A Topographical list of inscriptions of the Madras Presidency, vol. II, 1919.
Satyanayarana Rajaguru, History of Gangas.
Srirama Murthy, P. Dr., Contribution of Andhras to the Skt. Literature Andhra University, Woltair.
Miscelanious works. (1) A Descriptive catalogue of Telugu Manuscripts Vol. I, GOML., Madras.
(2) Gazatteer Visakhapatnam District.
(3) New Catalogues catalogorum vol. IV and vol. IX, Madras.

## 5. लघुनिबन्धाः

### संस्कृतम्

राजन्नशास्त्री, सागरिका, षष्ठवर्षीयप्रथमाङ्कः, सागर, मध्यप्रदेशः।

### तेलुगु

नागेश्वररावु पन्तुलु, भारति मासपत्रिका, 1931
मेकञ्जे, लोकल रिकार्ड्स्, vol. 14, GOML., मद्रास
राघवाचार्यः, E.V.V. आन्ध्रसाहित्यपरिषत्पत्रिका, काकिनाड – आन्ध्र, vol. 17, No. 16.
राघवाचार्यः E.V.V. साहित्यरत्नाकरमु – नौकामन्दरमुलु
सोमेश्वरशास्त्री श्रीरंगम्, आन्ध्रपत्रिका, विजयवाड, 1926-27

### English

Raghavacharya E.V.V., 'Dharmasuri' – his date and works New Indian Antiquery vol. II, 1939-40.
Summaries of Papers, All India Oriental Conference, Mysore, 1935.

तादृङ्निर्मलधर्मसूरिकवितासोल्लासकल्लोलिनी-
पूर्णः कर्णमनोहरो विजयते साहित्यरत्नाकरः।

– धर्मसूरिः।

काव्यामृताकलनया मृदुशीतलानि
श्रीरामदिव्ययशसा सुरभीकृतानि।
येषां मनांसि घनसारसमानि तेषाम्
एषा कृतिर्वितनुतां कमपि प्रहर्षम्।।

– धर्मसूरिः।

# मातृकापरिचयः

इदमस्माकं सम्पादनम् अष्टौ मातृका आधारीकृत्य निष्पन्नम्। तत्रापि षण्मातृकाः शासकीयप्राच्यलिखितग्रन्थालयसम्बन्धिन्यः (Govt. Oriental Manuscripts Library, Madras)। द्वे च अड्यारग्रन्थालयस्थे (Adyar Library, Madras)। तासां विवरणम् अधस्ताद् दीयते।

1. R. 306 (G.O.M.L.) "म० 1" संज्ञया चिह्नितः।
   तालपत्रग्रन्थः। 15 7/8 × 1 3/8 अङ्गुलपरिमाणकः। 123 पत्राणि। प्रतिपुटं सप्तपङ्क्तयः। आन्ध्रलिप्यां लिखितः। क्वाचित्केन त्रुटितः। सम्पूर्णः। गुण्टूरुवास्तव्येन प्रयागसीतारामशास्त्रिणा 1910–11 A.D. संवत्सरे अस्मै ग्रन्थालयाय समर्पितः। प्रथमेषु त्रिषु पत्रेषु न किञ्चित् लिखितम्। अन्ते लेखकेन स्वात्मा एवम् परिचायितः –
   "श्रीसातवल्ल्याम्बुधिचन्द्रशेषभट्टस्य सूनुर्नरसिंहनामा।
   शिवाङ्घ्रिपद्माश्रितशान्त(चेताः) साहित्यरत्नाकरमालिखच्छुभम्।।
   श्रीसातवल्ल्याख्यसुवंशपावनः शेषाद्रिसूनुर्नरसिंहनामा।
   सर्वं यथामातृकवत्तथैव साहित्यरत्नाकरपुस्तकं(मा)लिखत्।।"
   अयं ग्रन्थः A Triennial Catalogue of Manuscripts [G.O.M.L. Madras - 1913, vol. I, part I, Sanskrit 'A'] इत्यस्मिन् ग्रन्थे 412 तमे पुटे वर्णितः।
2. R. 804 (G.O.M.L.) 'म० 2' संज्ञया चिह्नितः। तालपत्रग्रन्थः। 17 1/4 × 1 3/8 अङ्गुलपरिमाणकः। 94 पत्राणि। प्रतिपुटम् अष्टौ पङ्क्तयः। आन्ध्रलिप्यां लिखितः। क्वाचित्केन त्रुटितः। शोभनं निर्दुष्टं च लेखनम्। बहूनां साधुपाठनां मूलभूतः। सम्पूर्णः। श्री- जे० गौरीनाथशास्त्रिभिः मचिलीपट्टणवास्तव्यैः 1913–14 वर्षे ग्रन्थालयायास्मै प्राप्तः।

अयं ग्रन्थः, A Triennial Catalogue of Manuscripts (G.O.M.L. Madras 1917, vol. II, part I Sanskrit 'A') इत्यत्र 1080 तमे पुटे वर्णितः।

3. D. 12970 (G.O.M.L.) 'म० 3' संज्ञया चिह्नितः। तालपत्रग्रन्थः। 156 पुटाः। प्रतिपुटम् अष्टौ पङ्क्तयः। सम्पूर्णः। प्रायः पाठभेदा न दृश्यन्तेऽत्र। अस्मिन् 30 तमपत्रम् आरभ्य 38 तमपत्रपर्यन्तं (उत्प्रेक्षामारभ्य निदर्शनापर्यन्तम्) ग्रन्थलिप्यां लिखितः। शिष्टो भाग आन्ध्रलिप्याम्। एषः लिपिद्वयलेखकः प्रायो द्रविडः स्यादिति अस्मदभ्यूहः।

किञ्च प्रथमे पत्रे 'संस्कृतं भाष्यम्' अथवा 'संस्कृतं धार्यम्' इति वा लिखितमस्ति। एवमेव 'साहित्य नमो नमः। लाक्षणिकोऽयं ग्रन्थः पण्डित-रामस्वामिशास्त्रिणः' इत्यपि लिखितमस्ति। अनन्तरं विषयसूची अपि लिखिता। यथा –

'ग्रन्थारम्भसमर्थनं 1 पत्रारम्भः।
वाचकशब्दार्थवृत्तिनिरूपणं 9 पत्रारम्भः।
लक्षणशब्दनिरूपणं 12 पत्रारम्भः।
व्यञ्जकशब्दार्थवृत्तिनिरूपणं 18 पत्रारम्भः।
गुणनिरूपणम् 22 पत्रारम्भः।
शब्दालङ्कारनिरूपणम् 22 पत्रारम्भः।
अर्थालङ्कारनिरूपणम् 26 पत्रारम्भः।
दोषनिरूपणम्
ध्वनिभेदनिरूपणम् 54 पत्रारम्भः।
रसनिरूपणम् 62 पत्रारम्भः।
एतेषां विशेषविवरणे स्फुटाक्षराणि लिख्यन्ते' इति।

4. D. 12971. (G.O.M.L.) 'म० 4' संज्ञया चिह्नितः। तालपत्रग्रन्थः। 18 × 1 1/4 अङ्गुलात्मकः। सप्ततिः पुटाः। प्रतिपुटं पञ्च पङ्क्तयः। ग्रन्थलिपिः। बहुलतया त्रुटितः। अतिप्राचीनः। तालपत्राणामनेकत्र व्यत्ययो दृश्यते। सदोषं लेखनम्। असम्पूर्णः। श्रीश्रीनिवासाचार्यनारायणाचार्ययोः सम्बन्धी अयं ग्रन्थः।

5. D. 12972. (G.O.M.L.) 'म० 5' संज्ञया चिह्नितः। तालपत्रग्रन्थः। 14 3/4 × 1 1/4 अङ्गुलपरिमाणः। 147 पुटः। प्रतिपुटं नव पङ्क्तयः। ग्रन्थलिपिः। क्वाचित्केन त्रुटितः। नवमे तरङ्गे विच्छिद्यते। असम्पूर्णः। सुगमं लेखनम्।
6. D.12973. (G.O.M.L.) 'म० 6' संज्ञया चिह्नितः। तालपत्रग्रन्थः। 8 3/4 × 2 अंगुलपरिमाणः। 70 पुटः। प्रतिपुटं 8 पङ्क्तयः। ग्रन्थलिपिः। निर्दुष्टं लेखनम्। दशमतरङ्गमात्रात्मकः। शोभनं लेखनम्।
   एते चत्वारोऽपि ग्रन्थाः 'A descriptive catalogue of the Sanskrit Manuscript in the G.O.M.L. Madras.' [1918 vol. XXII] इत्यस्मिन् ग्रन्थे 8712 तमे पुटे वर्णिताः।
7. 73722 (XXIX. M.12) अड्यार-ग्रन्थालयः 'अ० 1' संज्ञया चिह्नितः। तालपत्रग्रन्थः। 14 × 1 1/2 अङ्गुलपरिमाणः। 131 पत्राणि। प्रतिपुटं सप्तपङ्क्तयः। क्रिमिभक्षितः, प्राचीनः। क्वाचित्केन त्रुटितः। आन्ध्रलिपिः। शोभनं लेखनम्। सम्पूर्णः।
8. 73887 (XXXC. 17) अड्यार-ग्रन्थालयः 'अं० 2' संज्ञया चिह्नितः। तालपत्रग्रन्थः। 15 3/4 × 1 3/8 अङ्गुलपरिमाणः। 128 पत्राणि। प्रतिपुटं 6 पङ्क्तयः। प्राचीनः। क्रिमिभक्षितः, त्रुटितश्च। आन्ध्रलिपिः। शोभनं लेखनम्। सम्पूर्णः।

एतौ द्वावपि ग्रन्थौ 'Descriptive catalogue of Sanskrit Manuscripts in the Adyar Library,' [vol. V. Kavya, Nataka, Alankara 1951] इत्यस्मिन् ग्रन्थे 582 तमे पुटे वर्णितौ।



# ।। विषयानुक्रमणिका ।।

## षष्ठः शब्दालङ्कारनिरूपणतरङ्गः 87–99

धर्मसूरिप्रणीतः

# साहित्यरत्नाकरः

## ।। अथ प्रथमो ग्रन्थारम्भसमर्थनतरङ्गः ।।



आलिङ्ग्य गाढमुदरं पितुरर्धजाने-
रुत्सङ्गवर्त्यवतु[1] बालगजाननो नः।
यत्कुम्भयोर्गिरिसुताकुचपार्श्वभाजो-
स्स्तन्यं पिपासति गुहस्त्रिभिराननाब्जैः ।। 1 ।।

श्रेयो मे विदधातु शारदशशिश्रीभासुराभा सुरा-
हारासारनिरासकारिमधुरव्याहारिणी हारिणी।
मुक्ताभूषणपोषणस्मितलवश्रीसाधुनासाधुना
लावण्येन निजेन निर्जितवती रम्भारती भारती ।। 2 ।।

नमस्तमः कर्दमदुर्गमाम्बुधिप्रणष्टचेष्टाखिलजन्तुसन्ततिम्।
प्रसार्यमाणैः पटुदीर्घै[2]रश्मिभिर्जगत्त्रयीमुद्धरते विवस्वते ।। 3 ।।
(न० व्या० 1-7)

नित्यं रसार्द्रहृदयेन्धनसम्प्रयुक्त-
दाक्षायणीविरहदारुणपावकस्य।
उद्भूत[3]धूमकलिकामुपकण्ठमूलं
क्ष्वेल[4]च्छलेन वहते महसे[5] नमोऽस्तु ।। 4 ।।

लक्ष्मीं वक्षसि, तारहारवलये तस्याः प्रियं सोदरं
बिभ्रच्छुभ्रमणिं, परं च नयने, नाभौ च भद्रासनम्।
ऊरु-भ्रू-गल-नाभि-रोमलतिकामित्राणि पञ्चायुधा-
न्याश्लिष्यन्करपङ्कजैरवतु नः कश्चिन्महाकामुकः ।। 5 ।।

अनन्तमत्यन्तविशुद्धविग्रहं महश्चिदानन्दमयं निरामयम्।
अशेषवेदान्तविचिन्त्यवैभवं प्रशस्तमस्ति प्रविभास्वरं स्वतः ।। 6 ।।
तदव्ययं ज्योतिरनाद्यविद्यया वृतं रजस्सत्त्वतमोगुणाढ्यया।
प्रजापतिश्रीपतिपार्वतीपतिप्रपञ्चरूपाणि मुहुः प्रपद्यते ।। 7 ।।
तदेकदात्मन्यखिलं चराचरं निधाय नारायणनामकं[6] महः।
फणीन्द्रपर्यङ्कतले पयोनिधौ चिराय रेमे निजयोगनिद्रया ।। 8 ।।
ततोऽस्य नाभीसरसस्सरोरुहं समुद्ययौ यस्य समस्तमम्बरम्।
वितन्वदिन्दिन्दिरशाबविभ्रमं दलान्तरालेषु चिरं व्यलीयत[7] ।। 9 ।।
ततस्ततस्तामरसात्समुद्गत[8]श्चतुर्मुखस्तद्रजसेव[9] राजसः।
जगत्सिसृक्षुर्जगदीशशासनात्समाधिसम्पन्नमना मनागभूत् ।। 10 ।।
त[10]स्मात्समाधिसचिवान्मनसस्तदीयात्
पुत्रा मरीचिपुलहप्रमुखाः प्रभू[11]ताः।
यत्पुत्रपौत्रतदपत्यपरम्पराभि-
रापूरितोऽभवदजाण्डकटाहगर्भः ।। 11 ।।
तेष्वङ्गिरोमुनिवरादुदयं प्रपेदे भास्वानिवोदयगिरेर्हरितो मुनीन्द्रः।
दोषानुषङ्गरहितश्च नभोगमार्गभ्रान्तो[12] निराकृततमाश्शुचियोगदीप्रः ।। 12 ।।
गोत्रे च तस्य समभूदभिजातवंशो वाराणसीत्युपपदेन भुवि प्रसिद्धः।
तत्राभवन्बुधवरास्त्रिपुरारिसो[13]मयज्वादयश्शुभतपः श्रुतशीलवृत्ताः[14] ।। 13 ।।
देवान्हविर्भिरतिथीनशनैश्च[15] शिष्यान्विद्योपदेशविधया परितोषयद्भिः।
वाराणसीविहितनित्यनिवासदीक्षैर्यैः पण्डितैर्भरतखण्डममण्डि पुण्यैः ।। 14 ।।
सर्वज्ञतश्शमितकामरुषो गिरीशात् श्रीपार्वतीप्रियतमात् त्रिपुरारिनाम्नः।
तस्माद्बुधाद्बहुमुखोद्गतवाग्विभूतिर्धर्माह्वयस्समुदभून्महितः कुमारः ।। 15 ।।
नागाम्बिकां शुभगुणां प्रतिगृह्य कन्यामेकां गृहाश्रमनिवासकृते चिरं यः।
अन्यप्रतिग्रहभयो निगमागमानां सत्सम्प्रदायमकरोदवनावख[16]ण्डम् ।। 16 ।।
शम्भोर्यदीयशतरुद्रकृताभिषेकतोयैर्ललाटगलतापहरैः कपर्दे।
गङ्गात्मना परिणतैर्द्धि[17]रेऽवसिक्ता नूनं जटावलिलताश्शशिपुष्पशोभाम्[18] ।। 17 ।।

यस्सप्तवारविहितैर्वरदात्प्रहृष्टात्प्रासादमन्त्रसुपुरश्चरणैर्महेशात्।
आसप्तमाद्वरमगान्निजवंशजानां विच्छेदशून्यविमलाखिलशास्त्रबोधम्।। 18।।

विधिवदनुष्ठितकर्मा धर्माख्यसुधीस्स संस्फुरद्धर्मा।[19]
जनयाम्बभूव तनयान्नारायणपर्वतेशरामाख्यान्।। 19।।

पदक्रमजटाक्षर[20]क्रमपदक्र[21]मारोहणा-
वरोहविषमक्रमाक्रममुखावधानाध्वनि।
परिक्रमणचक्रवर्त्यभिधयाष्टदिग्गूढया
चचार बहुशः क्षितौ द्विजरथेन नारायणः।। 20।।

जित्वा रामाव[22]धानिप्रवर[23]मुरुमरु[24]द्वंगवद्वेदचर्चा-
गोष्ठ्या नारायणार्यस्सदसि बुधशतै[25]श्श्लाघ्यमानावधानः।
सन्तुष्टाद्धर्मभूपादलभत शिबिकां चामरच्छत्र[26]पूर्वं
गर्वाखर्वावधानीश्वरशरभघटागण्डभेरुण्डचिह्नम्।। 21।।

तस्यानुजः पर्वतनाथसूरिरासीदशेषागमपारदृश्वा।
ऐकात्म्यलीलायितमादिमानां षड्दर्शनीजन्मकृतां मुनीनाम्[27] ।। 22।।

एकं कोऽपि सुदर्शनं भ्रमकरं पाणौ ललाटे दधौ
कश्चित्कामविघा[28]तुकं पदतले कश्चिच्छिवक्षोभकम्।
निश्शेषभ्रमभञ्जिकां शिवकरीं कामप्रदां पर्वता-
धीशार्यस्समदर्शयद्रसनया षड्दर्शनीमद्भुतम्।। 23।।

वाग्मित्व-द्युति-शुद्धि-विष्णुभजनाभीष्टार्थविश्राणनै-
र्यस्मि[29]न्विस्मयमावहत्यहिपतौ नित्यैकता वारिता।
द्वित्वं पुष्पवतोः, कृशानुषु गतं त्रित्त्वं, चतुष्ट्वं चिरा-
दुत्सन्नं सनकादिषु, प्रशमितं पञ्चत्वमिन्द्रद्रुषु।। 24।।

येन स्वैरमभाणि पाणिनिमतं, प्राणादि काणादवा-
ग्गुम्फे[30] स्पष्टमघट्टि भट्टगुरुवागुट्टीकिते[31] कुट्टिमे।
निश्शङ्कं निरटङ्कि शङ्करमतं, चाक्षोदि चाक्षाङ्घ्रिवाग्
ध्वन्यध्वन्युदलास्य[32]खण्डि निखिला[33] पाषण्डषण्डाटवी।। 25।।

यो वादेन जनार्दनाह्वयबुधं मध्ये विपश्चित्सभं[34]
जित्वाऽविन्दत[35] वादिकेसरिपदं प्रौढं तदीयं स्वयम्।
मायावादिभयङ्कराख्यबिरुदादत्यूर्जितादार्जितात्
किञ्चोदञ्चयति स्म कीर्तिमतुलां प्रच्यावयन्वैष्णवम्[36]।। 26।।
आटोपोद्भटनाट्यधूर्जटिजटाकोटीरकोटी[37] नटद्
गङ्गातुङ्गतरङ्गरिङ्गणभरप्रस्पर्धिवाग्वैभवः।
सोऽयं स्वप्रतिभादृषन्निकषणप्रोद्दीप्तषड्दर्शिनी[38]
रत्नस्त्रङ्मयकन्धरो यदनुजो रामाह्वयः पण्डितः।। 27।।
तस्मात्पर्वतनाथसूरि[39] जलधेश्श्रीयल्लमाम्बाविय-
द्गङ्गासङ्गजुषो लसद्गुणमणेर्लब्धोद[40]यश्चन्द्रवत्।
सोऽहं धर्मसुधीर्गवां विलसितैः कर्तुं रसालङ्क्रिया-
संस्फूर्तिं समुदञ्चयेयमधुना साहित्यरत्नाकरम्।। 28।।

अत्र कविपक्षे गवां विलसितैर्वचसां विलासैः, रसालङ्क्रिया-संस्फूर्तिम्-रसा वक्ष्यमाण[41]लक्षणाः शृङ्गारादयः, अलङ्क्रिया उपमादयः, इदं गुणादीनामुपलक्षणम्, तासां[42] संस्फूर्तिं निरूपणं कर्तुं साहित्यरत्नाकरं नामालङ्कारग्रन्थं समुदञ्चयेयं निर्मास्यामीत्यर्थोऽवगन्तव्यः।

चन्द्रपक्षे गावः किरणाः, रसालङ्क्रियासंस्फूर्तिं रसा भूमिस्तस्या अलङ्क्रियाया रत्नाकरात्मिकाया मेखलायाः संस्फूर्तिं[43] शोभां समुदञ्चनं[44] संवर्धनम्[45]। रत्नाकरस्य महीमेखलात्वं भूतधात्र्यब्धिमेखला इति निघण्टु[46]-वचनादवगन्तव्यम्।

अत्र चन्द्रवदहमपि गोविलासै रसालङ्कारसंस्फुरणाय[47] रत्नाकर-मुदञ्चयेयमित्युपमा[48]। सा च चन्द्रवदिति तद्वाचकपदोपादानाच्छ्रौती[49][50]। पर्वतनाथसूरिजलधेः यल्लमाम्बावियद्गङ्गालसद्गुणमणेरित्यत्र त्रयो रूपकालङ्काराः। गवां रसालङ्क्रियासंस्फूर्तिमित्यत्र त्रयश्श्लेषालङ्काराः। किरणभूमिभूषणानां वचनशृङ्गाराद्युपमादिभ्यो भेदेऽपि श्लेषशब्द-(शब्दश्लेष?) बलेनाभेदाध्यवसायाद् भेदे अभेदरूपातिशयोक्तिश्च[51]। सर्वैरेतैरुपमानुप्राणितेति तस्यास्तेषां च अङ्गाङ्गिभावेन सङ्करः। इतरेषां तु संसृष्टिः[52]। लक्षणानि तु उपरिष्टाद्वक्ष्यन्ते अलङ्कारतरङ्गे[53]।

एवं तावत् प्रारिप्सित[54]ग्रन्थपरिसमाप्तिपरिपन्थिप्रत्यूहप्रशमनपटुतया प्रयोजनवतीं शिष्टाचारानुमितस्मृत्युन्नीतश्रौत[55]सिद्धतया प्रमाणवतीं, ग्रन्थारम्भ-स्याङ्गभूतां पौनःपुन्येन[56] बहिरपि कृतां देवतानुग्रहाशंसनप्रणामरूपां[57] मङ्गलाचर्यां, शिष्यशिक्षार्थमादिमेषु पञ्चसु श्लोकेषु निबध्य अस्मिन् श्लोके प्रेक्षावत्प्रवृत्त्यङ्गभूतं विषयाद्यनुबन्धचतुष्टयमसूसुचत्[58]।

तत्र रसालङ्कारादिर्विषयः, तदवबोधः प्रयोजनं, तत्कामोऽधिकारी[59], सम्बन्धश्च यथासम्भवमुन्नेयः। इदानीं स्वग्रन्थे[60] प्रेक्षावतां प्ररोचना-[61]मुत्पादयितुमाह–

विरिञ्चिवनिताकराञ्चितविपञ्चिकासञ्चरत्
स्वरप्रसरमाधुरीरसरमाधुरीणा गिरः।
जयन्ति मम मन्दरक्षुभितसिन्धुबन्धुभ्रमी-
निरर्गलविनिर्गलद्बहुलभङ्गभङ्गीभृतः।। 29।।

रसरमा– रससमृद्धिः, सिन्धुबन्धुः समुद्रः, भ्रम्या–भ्रमणेन, 'इत्थंभावे तृतीया' (अष्टाध्यायी 2-3-21) भङ्गाः– तरङ्गाः, भङ्गी– अवस्थाविशेषः।

अत्र विपञ्चीस्वरधर्मस्य माधुर्यस्य तरङ्गधर्मस्य भङ्ग्याश्च वचनेष्व-सम्भवात् तत्सादृश्याक्षेपात्[62] प्रकृतस्य अप्रकृतधर्मसम्बन्धासम्भवमूलौ निदर्शनावान्तरभेदौ अर्थालङ्कारौ, वृत्त्यनुप्रासाश्शब्दालङ्काराः, तेषां सर्वेषां संसृष्टिः, सर्वातिशायित्वं व्यंग्यम्।

रसज्ञानामेवात्र[63] प्रवृत्तिः स्वारसिकी न सर्वेषामित्याह–

रसप्रसरनिर्भराः कविगिरां प्रसाराः परं
मुदं विदधते हृदि म्रदिमभाजि काव्यामृतैः।
सुधाकरकराङ्कुरव्यतिकरेण चन्द्रोपला
द्रवन्ति शिशिराश्शिरादपि न विन्ध्यवन्ध्योपलाः[64]।। 30।।

परमिति पदस्य केवलार्थवाचिनो हृदीत्यनेन सम्बन्धः। अत्र यथा सुधाकरकराः[65] शिशिरशशिशिला एव द्रावयन्ति न परुषाः,[66] तथा कविगिरोऽपि[67] सरसहृदयेष्वेव मुदमुदञ्चयन्ति, न[68] शुष्कतर्ककर्कशेष्विति कविगिरां सुधाकरकराणां च निरपेक्षवाक्यद्वये बिम्बप्रतिबिम्बभावेन साधर्म्यनिर्देशाद् दृष्टान्तालङ्कारः। स च वृत्त्यनुप्रासेन संसृज्यते।

इदानीं स्वग्रन्थवैयर्थ्यं परिहर्तुमाह[69]–

**अलङ्क्रियाः पूर्वतरैः प्रणीता[70] न योजिताः काश्चन नायकेन।**
**कैश्चित्तु कुक्षिम्भरिभिर्निबद्धाः क्षोदीयसा काश्चन नायकेन।। 31।।**

अत्रालङ्क्रियाशब्दः साध्यवसानलक्षणया अलङ्कारप्रतिपादक- ग्रन्थपरः। ऐक्यप्रतिपत्तिः प्रयोजनम्। क्षोदीयसा क्षुद्रतरेण। 'ईयसुनि स्थूलदूर- ' (अष्टाध्यायी 6-4-156) इत्यादिना यणादिलोपः[71] पूर्वगुणश्च[72]। कुक्षिम्भरिभिः स्वोदरपूरकैः। 'फलेग्रहिरात्मम्भरिश्च' (अष्टाध्यायी 3-2-26) इति चशब्देन[73] निपातनात्साधुः। नायको रत्नं नेता च।

स्वालङ्कारस्य तद्वैलक्षण्यमाह[74]–

**दिव्येनोत्तमनायकेन घटिता सेयं ममालङ्कृतिः**
**सद्वृत्ता कृतिना विदेहतनयावक्षोरुहस्थायिना।**
**तत्तादृग्दशकण्ठकीर्तिपयसो नैल्यावहश्रीजुषा**
**निस्त्रासेन महेन्द्रनीलमणिनोदारेण संशोभते।। 32।।**

तदेव तादृग्यस्य[75] तत्तादृक्, उपमाशून्यमित्यर्थः।

**क्षीरमध्ये क्षिपेन्नीलं क्षीरं चेन्नीलतां व्रजेत्।**
**इन्द्रनीलस्स विज्ञेयस्सर्वसम्पत्प्रदायकः[76] ।। 33।।**

(स्मृ० सा० रत्नपरीक्षायाम्)

इत्युक्तलक्षणलक्षितत्वं द्योतयितुं तत्तादृगित्यादिविशेषणम्। महेन्द्रनील- मणिपदं साध्यवसानलक्षणया रघुनायकपरम्। अनायकदुर्नायकोत्तमनायक- सङ्घटितेष्वलङ्कारेषु लोके उत्तमनायकसङ्घटितालङ्कार एव सुदृशामादरा- तिशयदर्शनात् तथाविधे स्वालङ्कारे भूयानादरो भवेत्, वैयर्थ्यशङ्का तु प्रत्युत प्राचीनेष्वेव[77] भविष्यतीति श्लोकतात्पर्यार्थः[78]। अत्र श्लेषानुप्राणिता- तिशयोक्तिरलङ्कारः।

**एकेन चरितार्थत्वादितरानर्थता तु या।**
**सा मद्ग्रन्थस्थितावन्यग्रन्थानां किं न जायताम्।। 34।।**
**काव्यामृताकलनया मृदुशीतलानि श्रीरामदिव्ययशसा सुरभीकृतानि।**
**येषां मनांसि घनसारसमानि तेषामेषा कृतिर्वितनुतां कमपि प्रहर्षम्।। 35।।**

कतिचन शुभपदसरणौ तमोभरा व्यञ्जयन्ति दोषाहीन्[79]।
शमयति विभूषयति[80] वा मृग्यस्स हि नीलकण्ठ एव परम्।। 36।।

काव्यमीमांसाया अनारम्भणीयत्वाशङ्कां निवारयितुमाह[81]–

मीमांस्यं पुनरत्र काव्यममुना सिध्यन्ति कीर्त्यादयो
दुष्काव्यं हि निषेधभागितरथा रामायणादेः क्षतिः।
कान्तासम्मिततो( यो )पदेशकतया[82] नार्येव काव्यश्रिया
स्वारस्यात्क्रियते हिताहितकृते पुंसां प्रवृत्त्यादिकम्।। 37।।

काव्यम् अमीमांस्यम् इति वदता वक्तव्यम्, किं विषयाभावात् प्रयोजनाभावाद्वा उत निषिद्धत्वाद्[83] आहोस्वित् पुरुषार्थपर्यवसानाभावात्[84] तत्कर्तव्यताबोधकप्रमाणाभावाद्वा।

नाद्यः, वक्ष्यमाणलक्षणस्यैव काव्यस्य विषयत्वात्। न द्वितीयः, काव्यस्य कीर्त्यादि[85]विविधपुरुषार्थसाधकतया तन्मीमांसाया अपि प्रयोजनवत्त्वात्। अङ्गानां प्रधानफलेनैव फलवत्त्वनियमात्। काव्यस्यार्थवत्त्वं काव्यप्रकाशकारादिभिरुक्तम्–

काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये।
सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे।। 38।।

(का० प्र० 1–2) इति।

विश्वोल्लङ्घनजाङ्घिकीं वितनुते कीर्तिं विधत्ते श्रियं
हेलानिर्जित[86]यक्षराजविभवां चिन्ताकरं हन्त्यघम्।
दुग्धे स्वादुतरान्नसान्वितरति स्फारं कलाकौशलं
काव्यं निर्वृतिमावहत्यपि परिस्पन्दावहं चेतसः।। 39।।

[87]परित्रड्ढइ विण्णाणं संभाविज्जइ जसो विसप्पंदि गुणा[88]।
सुव्वइ सुपुरुसचरिअं किं तज्जेण ण हरंदि कव्वालावा[89]।। 40।।

छाया[90]–

परिवर्धते विज्ञानं सम्भाव्यते यशो विसर्पन्ति गुणाः।
श्रूयते सुपुरुषचरितं किं तद्येन न हरन्ति काव्यालापाः।। 41।।

न हरन्तीत्यत्र[91] मन इति शेषः[92]। न च केवलं दृष्टमात्रफलकत्वम्।

किन्तु[93] कीर्तिमुखेन स्वर्गादेरपि[94] फलत्वात्। "कीर्तिं स्वर्गफलामाहुरासंसारं विपश्चितः"।। 42।। (का० सू० 1-1) इत्युक्तत्वात्।

"काव्यालापांश्च वर्जयेत्"।। 43।। इति स्मृत्या[95] काव्यस्वरूपस्यैव निषिद्धत्वात् स्वर्गादेरपि दूरोत्सारिता इति तृतीयविकल्पोऽपि[96] नावकल्पते। निषेधस्य मुद्राराक्षसाद्यसत्काव्यविषयत्वात्। अन्यथा रामायणादेरपि हेयताप्रसङ्गात्। ततः[97] श्रवणमननादिभ्यो[98] विष्णुकथानिर्वर्तककाव्यनिर्माणमेव[99] श्रेयस्साधनमिति मन्वानो भगवान्वाल्मीकिर्निर्ममे[100] रामायणमिति[101]।

**असत्कीर्तनकान्तारपरिवर्तनपांसुलाम्।**
**वाचं[102] शौरिकथालापगङ्गयैव पुनीमहे।। 44।।**

इत्यभिधाय वेदव्यासोऽपि हरिवंशनिर्माणाय[103] प्रववृते[104]।

**सैवेह वाणी जनताघहारिणी सुधारिणी संसृतिसिन्धुतारिणी।**
**यानन्तनामावलिदिव्यहारिणी स्खलत्पदैर्यद्यपि सा विकारिणी।।45।।**

इत्यादिनारदीयादिपुराण[105]वचनैर्[106]विष्णुकथाप्रतिपादककाव्यानां[107] प्रशंस्यमान[108]-त्वाच्च।

तुरीये[109] विकल्पे इदं विवेचनीयम्-किं पुरुषार्थापर्यवसायित्वं तदसाधकत्वात्, आहोस्वित् क्लृप्तादेव प्रमाणाद् वेदादेर्हिताहितप्रवृत्ति-निवृत्तिसिद्धेरतथाविधस्यास्य[110] वैयर्थ्यादिति। नाद्यः, तत्साधकत्वस्य पूर्वमेवोदीरितत्वात्[111]। न द्वितीयः, निषेधशास्त्रस्यान्यपरत्वोक्तेरस्यापि[112] क्लृप्तप्रमाणत्वात्।

अथ मन्यसे उपदेशान्तराद्वेदादेरेव प्रवृत्तिनिवृत्तिसिद्धौ काव्यस्य ततोऽतिशयाभावाद् वैयर्थ्यमिति मैवं मंस्थाः[113], अतिशयसद्भावात्। तथा[114] हि। उपदेशो नाम कर्तव्याकर्तव्ययोरन्यतरबोधकं पौरुषेयम-पौरुषेयं वा वाक्यम्। तदेव शासनाच्छास्त्रम्। तदुक्तमाचार्यैः -

**प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा।**
**पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते।। 46।।**

(श्लो० वा० शब्द० 4) इति।

स[115] चोपदेशस्त्रिविधः, प्रभुसम्मितः, सुहृत्सम्मितः, कान्तासम्मित-

श्चेति। तत्र प्रभुसम्मितो वेदः, शब्दप्रधानत्वात्। यथा हि लोके प्रभुर्वाङ्मात्रेण पुनः[116] प्रवर्तयति निवर्तयति च, अन्यथा दण्डमापादयति, एवं वेदोऽपि शब्दप्राधान्येनैव नियोज्यं यथायथं प्रवर्तयति निवर्तयति च[117], विपक्षे प्रत्यवायं[118] सूचयति[119]। अत्रार्थस्य प्राधान्यमात्रत्यागः, न तु स्वरूप-त्यागः[120], तथात्वे तु उन्मत्तप्रलपितवद् अप्रवर्तकतैव वेदस्य स्यात्। शब्दश्चात्र विधिप्रत्ययोपलक्षितं वाक्यम्। तस्य प्राधान्यं प्रवर्तकत्वम्। तेन शब्दप्रधानं शास्त्रं प्रभुसम्मितमिति लक्षणमुक्तं भवति।

ननु पुरुषप्रवृत्तिरूपां[121] भावनां विदधानः प्रत्यय एव प्रवर्तकः, तस्य प्रेरणार्थे[122] विधानात्। तत्कथं वाक्यं प्रवर्तकमिति चेत्-[123]प्रत्ययः प्रवर्तक इत्याकलयन् स च विशिष्ट[124]भावनाभिधायीति किं नाचकलद्भवान्। तथाकलने वाक्यमेव प्रवर्तकमिति[125] किं नाज्ञासीत्[126]। न हि भावयेदित्युक्ते कश्चित्प्रवर्तते, किन्त्विदमनेनैवं भावयेदिति। तथा सति अंशत्रय-विशिष्टभावनाभिधायी प्रत्ययः[127] प्रवर्तक इति वाक्यमेव प्रवर्तकमित्युक्तं भवति। इदमुदितमाचार्यैः[128] कारिकायाम्[129] -

**किमाद्यपेक्षितैः[130] पूर्णस्समर्थः प्रत्ययो विधौ।**
**तेन प्रवर्तकं वाक्यं[131] शास्त्रेऽस्मिंश्चोदनोच्यते।। 47।।** इति।

(श्लोकवार्तिकः, चोदनासूत्रे श्लो० 3)

अतो वेदवाक्यानामन्यथापाठे अपाठे वा[132], अन्यथानुष्ठाने अननुष्ठाने[133] वा[134] महान्प्रत्यवायः। अध्ययनविधेः फलवदर्थावबोधपर्यन्तत्वात्। तेन प्रभुसम्मितो वेदः।

सुहृत्सम्मितः पुराणादिः, अर्थप्रधानत्वात्। अत्रार्थो वाक्यार्थो न पदार्थः, तस्याप्रवर्तक[135]त्वात्। तत्प्राधान्यं[136] च प्रवर्तकत्वमेव। अर्थवादात्मकाः, पुराणादयो वेदवत् 'एतदेवं[137] कुर्यात्' इति विधिबलेन पुरुषं प्रवर्तयितुं नेशते; किन्तु प्राचीनपुरुषकथाशरीरवर्णनद्वारा सुहृद इव युक्तिभिरनुनीय प्रवर्तयन्ति।

कान्तासम्मितोपदेशस्तु काव्यम्-

**ध्वनिप्रधानं शास्त्रं कान्तासम्मितमुच्यते[138] ।। 48।।**

(एकावली 1-6)

इति लक्षणम्। यथा हि कान्ताः कटाक्षवीक्षणहावभावादिभिः पुरुषं रञ्जयन्ति, व्यञ्जनव्यापारेणैव सर्वं कार्यं कारयन्ति, एवं काव्यविद्यापि शब्दार्थ-तदुभयशक्तिमूलया व्यञ्जनावृत्त्या सहृदयहृदयानन्दिन्या लोकोत्तरचमत्कार-कारिण्या रामादिवद्वर्तितव्यं न रावणादिवद् इति[139] व्यञ्ज[140]यन्ती सरसता-मापाद्यैव पुंसः कर्तव्ये प्रवर्तयति निवर्तयति चाकर्तव्यादिति काव्यमुप-देशान्तरा[141]दतिशायितया न निरर्थकम्।

नापि पञ्चमः, मूलप्रमाणाभावेऽपि काव्यविचारशास्त्रप्रवृत्त्युपपत्तेः। दृश्यते हि मूलप्रमाणाभावेऽपि पदार्थमीमांसात्मकन्यायवैशेषिकंशास्त्रयोः प्रवृत्तिः, उपलभ्यते च पदमीमांसायास्सञ्चारः। तद्वदत्रापि भविष्यति।

अथ मन्यसे 'स्वाध्यायोऽध्येतव्यः' इत्यत्राध्ययनविधिः प्रतीयते। तस्य च फलवदर्थावबोधपर्यन्तता न्यायसिद्धा। अर्थावबोधश्च द्विविधः - पदार्थगोचरो[142] वाक्यार्थगोचरश्चेति। द्विविधोऽपि विचारसाध्यः। तत्र वाक्यार्थज्ञानस्य पदार्थज्ञा[143]नपूर्वकत्वात् तस्य च साधुपदाधीनत्वात् पदसाधुत्वमीमांसाकर्तव्यताप्यध्ययनविधिनैवापादिता। अनन्तरं परस्परव्या-वृत्तपदार्थबोधसिद्धये पदार्थविचारात्मकयोर्न्या[144]यवैशेषिकशास्त्रयो[145]रप्या-रम्भस्तेनैवापादितः। एवं वाक्यार्थज्ञानाय वाक्यार्थमीमांसाशास्त्रा[146]रम्भोऽ-पीति न कुत्रापि मूलप्रमाणशून्यतेति।

अत्रोच्यते-कान्तासम्मिततया सारस्येन कर्तव्याकर्तव्ययोः प्रवृत्ति-निवृत्तिजनकत्वात् काव्यमुपदेशान्तरमति[147]शेते इत्यवोचाम। ध्वनिप्रधानं शास्त्रं कान्तासम्मितमिति लक्षणं चावादिष्म। ध्वनयश्च विचारमन्तरेण दुर्बोधा इति काव्यमीमांसाकर्तव्यता च न्यायसिद्धा।

उपलभ्यन्ते च बहुतराणि श्रुतिस्मृतीतिहासपुराणेषु पुण्यश्लोकगुण-प्रतिपादककाव्यकर्तव्यताप्रतिपादकानि वचनानि-

पुण्यश्लोकस्य चरितमुदाहरणमर्हति।। 49।।

(प्रतापरुद्रीयम् 1-6 पृ० 3)

कीर्तयेच्च जगन्नाथं वेदं चापि समीरयेत्।। 50।।

क उत्तमश्लोकगुणानुवादात् पुमान्विरज्येत विना पशुघ्नात्।। 51।।

(भागवतम्, स्कन्धः 10 श्लो० 4)

प्रतिष्ठां काव्यबन्धस्य यशसस्सरणिं विदुः।
अकीर्तिवर्धनीं[148] चैव कुकवित्वविडम्बनाम्।। 52।।
कीर्तिं स्वर्गफलामाहुरासंसारं विपश्चितः।
अकीर्तिं तु निरालोकनरकोद्देशदूतिकाम्।। 53।।
तस्मात्कीर्तिमुपादातुमकीर्तिं च व्यपोहितुम्।
काव्यालङ्कारशास्त्रार्थस्सम्पाद्यः कविपुङ्गवैः[149]।। 54।।
(का० सू० अध्याय: 1 अधि० 1)

इत्यादीनि। अत्र पुराणभारतवचनानां वेदरूपत्वेन[150] प्रामाण्यं निर्विवादम्[151]। पुराणं पञ्चमो वेदः, भारतं पञ्चमो वेद इति तयोर्वेदत्वोक्तेः। स्मृतिवचनानां श्रुतिमूलत्वेन[152] प्रामाण्यं स्मृत्यधिकरणे (जै० सू० 1-3-1) निर्णीतमेव[153]।

ननु 'काव्यालापांश्च वर्जयेत्'।। 55।।

इति स्मृतिबाधितत्वाद्[154][155] एतासां स्मृतीनां रागादिमूलत्वं वर्णनीयम्। तदुक्तम्-

रागद्वेषमदोन्मादप्रमादालस्यलुब्धताः।
क्व वा नोत्प्रेक्षितुं शक्याः स्मृत्यप्रामाण्यहेतवः।। 56।।
[त० वा० 1-3-3]

इति। तथा च[156] वैसर्जनीयवासोग्रहणस्मृतिवद्[157] अप्रामाण्यमिति चेत्, मैवम्। कथञ्चिदपि प्रामाण्यानिर्वाहेऽप्रामाण्यवर्णनमिति[158][159]। प्रकृते तु व्यवस्थया प्रामाण्यं निर्वोढुं शक्यते। तथा हि। यदि निषेधस्मृतिः काव्यमात्रं गोचरयेद् रामायणादेरप्युच्छेदस्स्यादिति[160][161] न्यायानुगृहीततया विशेषवचनानां बलवत्त्वात्[162] तदनुरोधेन सामान्यनिषेधोऽसत्काव्यविषयतया प्रामाण्यमश्नुवीत। विशेषस्मृतयश्च स्वार्थे निष्प्रतिपक्षतया निरङ्कुशं प्रामाण्यं भजेरन् इत्युभयीनां[163] प्रामाण्यं व्यवस्थाप्यते। अतो न कश्चिद्दोषः।

अथैवमपि काव्यमीमांसाया मूलभूतप्रत्यक्षश्रुत्या विना न वैदिकम्मन्यः परितुष्यति भवान्, तर्हि तदुपन्यासेन[164] भवन्तं परितोषयिष्यामः। तथा हि अध्ययनविधिर्वैदिकपद[165]पदार्थवाक्यार्थमीमांसानां प्रयोजक इति हि त्वयोक्तम्। स एव विधिः काव्यमीमांसाप्रयोजकोऽपि[166][167] भवतु। सन्त्येव हि प्रायशो वेदेष्वपि काव्यलक्षणलक्षितान्यदोषाणि सगुणानि सालङ्काराणि

वाक्यानि। गुणा वक्ष्यमाणलक्षणा[168] अर्थव्यक्त्यादयः[169]। ते च– 'यदेकस्मिन्यूपे द्वे रशने' (तै० सं० 6–6–5) इत्यादिवाक्येषु[170][171] सम्भवन्ति। अलङ्कारा उपमादयः[172]। 'आ ते गर्भो योनिमेतु पुमान्बाण इवेषुधिम्' (एकाग्निकाण्डम्, प्रथमप्रश्नः 13 खण्डः) इत्यादिषूपमा[173]। 'त्रिंशदस्या जघनं योजनानि' (तै० ब्रा० 2–4–2) इत्यादावतिशयोक्तिः। 'प्राणा अपरबाहून् अधिषवण' (तै० सं० 6–2–11) इत्यादौ रूपकम्। 'यस्यामुशन्तः प्रहरामशेषम्' (ऋ० सं० 10–87–37) 'उपोप मे परामृश' (ऋ० सं० 1–126–7) 'जायेव पत्य उशती सुवासाः' (ऋ० सं० 1–124–7) इत्यादिषु शृङ्गाररसः। 'तेषामसुराणां तिस्रः पुर आसन्'[174] इत्यादिषु[175] वीररसः। 'यो वा अस्य पशुमत्ति मांसं सोऽत्ति' (तै० सं० 7–2–10) इत्यादौ[176] बीभत्सरसः। 'को मोहः कस्तथा शोकः' (ईशावास्योपनिषत्) इत्यादौ शान्तरसः। एवमन्येऽपि गुणालङ्काररसास्तत्र तत्र द्रष्टव्याः। अतस्तदवबोधनार्थं[177] गुणालङ्काररसादिप्रतिपादककाव्य-मीमांसारम्भोऽपि[178] अध्ययनविध्यभिमत[179] एवेति[180] सन्तोष्टव्यमायुष्मता[181]।

अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः।
पुराणं धर्मशास्त्रं च[182] विद्या ह्येताश्चतुर्दश।। 57।।

(वि० पु० 3–6–27)

इति चतुर्दशसु विद्यास्थानेषु काव्यमीमांसाया अपरिगणनाद् अनुपादेयत्वमिति न शङ्कनीयम्[183], तथा सति रामायणादेरनुपादेयता[184]-प्रसङ्गात्। तस्माद् विषयप्रयोजनसद्भावान्निषेधस्य अन्यविषयत्वात् मूल-प्रमाणसद्भावाच्च काव्यमीमांसाशास्त्रमारम्भणीयमिति[185] सर्वमनवद्यम्[186]।

।। इति[187] श्रीमत्त्रिभुवनपवित्रहरितगोत्राव[188]तंसवाराणसीवं[189]शपद्माकरप्रभातभानुना पदवाक्यप्रमाणपारावारपारीणश्रीमहोपाध्यायपर्वतनाथसूरि[190]पण्डितमण्डले-श्वरसूनुना श्रीयल्लमाम्बागर्भरत्नाकरपारिजातेन निर्मलाचारपूतेन चतुर्दश-विद्या[191]विभूषणवता श्री[192]धर्मसंख्यावता विरचिते श्रीमद्रघुकुलतिलकयशोघन-सार[193]सुरभिते[194] साहित्यरत्नाकरनामन्यलङ्कारशास्त्रे ग्रन्थारम्भसमर्थनं नाम प्रथमस्तरङ्गः।।

[195]आस्थामन्दिरमिन्दिराप्रणयिनो देवस्य रामात्मन-
स्त्वङ्गत्तुङ्गतरङ्गरिङ्गणभरै[196]रङ्गीकृताडम्बरः।
तादृङ्निर्मलधर्मसूरिकवितासोल्लासकल्लोलिनी-
पूर्णः कर्णमनोहरो विजयते साहित्यरत्नाकरः।। 58।।
धर्मान्तर्वाणिवर्यैस्त्रिभुवनविदिते वारणास्यन्वये यः
सञ्जातः पर्वतेशाच्छुभगुणगणभूर्यल्लमाम्बासुगर्भे।[197]
काव्यालङ्कारकृष्णास्तुतिरविशतकोन्नाटकादिप्रणेतु-[198]
स्तस्यालङ्कारशास्त्रे रघुपतिविभुके[199] चादिमोऽयं तरङ्गः।। 59।।

---

पाठभेदाः

1. म० 1 स्फुट
2. म० 1 दीर्घदीर्घ
3. अ० 1 उद्धूत
4. म० 1 क्ष्वेड
5. म० 1, अ० 1, अ० 2 महते
6. म० 1 रूपकम्
7. म० 1 व्यलिप्यत
8. म० 1 म० 2 अ० 1 अ० 2 समुद्यत
9. म० 1 सैव
10. म० 2 अ० 2 अस्मात्
11. अ० 1 प्रसूताः
12. म० 1 भ्रात्रा
13. म० 1 नाम
14. म० 1 शीतवृत्ताः
15. अ० 1 र्भिरशनैरतिर्थीश्च
16. म० 1 नाद
17. म० 2 र्दधतीव
18. अ० 1 भाः
19. म० 1 ख्यस्सुधीस्संस्फु, म० 2 अ० 2 ख्यस्सुधीस्सुसंस्फु
20. म० 1 म० 2 अ० 1 अ० 2 मपदाक्ष
21. म० 1 म० 2 अ० 1 अ० 2 मजयक्र

22. म० 1 माराव
23. म० 1 म० 2 अ० 2 प्रमुख
24. म० 1 गुरुमरुहे
25. म० 2 जनै, अ० 1 वरै
26. म० 1 पूर्णं, म० 2 पूर्वां
27. म० 1 मणीनाम्
28. म० 1 त
29. म० 2 तस्मिन्
30. म० 1 ग्गुच्छे
31. म० 1 गुद्दीपते
32. अ० 1 न्युपलास्य
33. अ० 1 निबिडा
34. म० 1 त्सम्यं
35. म० 5 अ० 2 त्वविन्दित
36. अ० 1 म० 1 प्रख्यापयन् वै
37. अ० 2 रट
38. अ० 1 अ० 2 र्श
39. म० 5 थ दुग्धज
40. म० 1 णेर्यस्योद
41. म० 2 म० 5 माणाः श्रृं
42. म० 1 अ० 1 अ० 2 तेषां
43. म० 2 तस्याः अलङ्क्रिया रत्नाकरात्मिका या मेखला तस्यास्सं०
44. म० 1 म० 2 अ० 1 अ० 2 उदञ्चनं
45. म० 1 म० 5 अ० 2 वर्धनं
46. म० 1 अ० 2 लेत्यादिनै म० 1 म० 2 अ० 2 नैघण्टिक
47. म० 1 अ० 1 अ० 2 रस्फु
48. अ० 1 ये इ
49. म० 1 म० 5 अ० 2 कवदुपा० अ० 1 कवच्छब्दोपा
50. म० 1 च्छ्रौतीति
51. म० 2 उपमादिभ्यो भेदेऽपि श्लेषलब्धाभे०
52. म० 1 अ० 1 अ० 2 ष्टिरिति
53. म० 2 उपरिष्टाद्वक्ष्यामः, इतः परं म० 2 म० 5 मातृकयोः 'वाक्यम्' इति पदमधिकं दृश्यते।

54. म० 2 एवं प्रा
55. म० 1 स्मृत्युन्मीलित
56. अ० 2 तां प्रपञ्चितां पौनः
57. म० 1-2, अ० 1-2 प्रवणरूपां
58. म० 1 असूसृजत्
59. म० 2 तद्बुभुत्सुरधिकारी
60. अ० 1 स्वग्रन्थे इति नास्ति
61. अ० 1 तां रोचनां
62. म० 2 म० 5 अ० 2 म्भवात्सादृश्या
63. म० 1-2 अ० 1-2 नवरस
64. म० 5 न्ध्योपला
65. म० 1 किरणः
66. म० 1 अ० 1 परुषान् पाषाणान् त
67. म० 1-2 अ० 1-2 सरसकवि
68. अ० 1 न तु
69. म० 1 परिधूर्तु
70. अ० 1 निबद्धा
71. म० 1 स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां पूर्वस्य च गुण इति य०
72. म० 1 अ० 1 लोपपूर्वगुणौ
73. म० 2 चकारेण
74. अ० 1 तद्वैषम्य
75. अ० 1 स्यासौ त
76. म० 1 अ० 1 प्रसादकः
77. अ० 1 न ग्रन्थेष्वेव
78. म० 1 अ० 1-2 श्लोकद्वयता०
79. म० 1-2 अ० 2 दोषौघान्
80. म० 1 अ० 1-2 वि इत्युपसर्गो नास्ति
81. म० 1 अ० 2 शङ्कां वा
82. म०.1 पदेशिक
83. म० 2 अ० 1 वा अधिकम्
84. म० 2 वा अधिकम्
85. अ० 2 काव्यस्यैव की०
86. अ० 1-2 लाधिक्कृत

87. अ० 2 पारि
88. म० 1 अ० 2 विडम्पंदिउणा
89. म० 1 इति इति, अ० 2 इति, म० 2 वा
90. अ० 1 ग्रन्थपातः (कव्वालावा- न च केवलं)
91. म० 2 न हरन्तीत्यत्र नास्ति
92. म० 1 अ० 2 वाक्यमिदं नास्ति
93. म० 1-2, अ० 1-2 किन्तु नास्ति
94. अ० 1 रपि तत्फ
95. अ० 1 दिति निषेधस्मृ०
96. म० 1 अ० 1 तृतीयकल्पो
97. म० 2 अतश्च, अ० 2 यतश्च
98. म० 1 भ्योऽपि वि०
99. अ० 1 काव्यमेव
100. म० 1-2, अ० 1-2 निर्ममे हि रा
101. म० 1-2, 5 अ० 1-2 इति नास्ति
102. अ० 1 वाञ्छन्
103. म० 1-2, अ० 1-2 निर्माणे
104. अ० 1 प्रवृत्तः
105. म० 2 इति नारदीयपु०
106. म० 1 यादिवचनैः
107. म० 1 वाक्यानां
108. म० 1 अ० 1-2 प्रशस्य
109. म० 1 अ० 1-2 ये हि वि
110. म० 1 स्याप्यस्य अ० 2 स्यान्यस्य
111. म० 1 मेवावेदितत्वात् म० 2 मेवोपपादितत्वात्
112. अ० 1 परत्वात् अस्यापि
113. म० 2 मंस्थाः नास्ति
114. म० 1 तथाहि नास्ति
115. म० 1-2 तथाहि अधिकं वर्तते
116. म० 1 अ० 1 पुंसः, म० 2 पुरुषं
117. म० 1 ग्रन्थपातः (अन्यथा - निवर्तयति च)
118. म० 1 यं च सू०
119. म० 2 यं च दर्शयति

120. म० 1 – 2, 5 अ० 1 – 2 स्वरूपतः
121. म० 5 रूपः
122. म० 5 अ० 2 प्रेरणार्थं
123. अ० 1 न अधिकम्
124. म० 2 अ० 1–2 विशिष्ट इति
125. म० 1 मित्यपि
126. म० 1 –2 किमिति वा नावमंसीत्
127. अ० 2 एव अधिकम्
128. म० 2 काशि०
129. अ० 2 कारिकायां नास्ति
130. म० 1 द्यरक्षितैः
131. म० 5 अ० 2 शास्त्रं
132. म० 1–2, अ० 1–2 अपाठे वा नास्ति
133. म० 2 अननुष्ठाने नास्ति
134. अ० 1 च
135. अ० 1 स्याप्रधानक
136. अ० 2 तत्प्रधानकत्वं
137. म० 1 अ० 2 वेदवदेवं
138. म० 1 म० 5 अ० 1–2 उच्यते नास्ति
139. म० 1 इति च
140. अ० 2 इति च तद्व्यञ्ज०
141. म० 1 न्तराति०
142. म० 1 वाचको
143. अ० 2 र्थावबोध
144. अ० 1 त्मकन्याय
145. अ० 1 वैशेषिकयोः
146. अ० 1 मीमांसार्थशास्त्रा
147. म० 1 शान्तरमप्यति, अ० 2 शान्तरादति
148. म० 1 अ० 1–2 वर्तनीं
149. मं० 2 शास्त्रार्थाः कर्तव्याः कवि०
150. अ० 1 वेदमूलत्वेन
151. म० 2 अ० 1 निर्विचिकित्सम्
152. म० 1-2 अ० 1 नानां च श्रुति०

153. म० 2 तमिति
154. अ० 1 निषेधस्स्मृति
155. म० 2 अ० 1 बोधित
156. अ० 1–2 ततश्च
157. म० 2 वैसर्जनहोमीयं वासोऽध्वयुर्गृह्णाति इति स्मृति
158. म० 1 निर्वर्णनम्
159. म० 1–2, 5 अ० 1–2 इति नास्ति
160. अ० 1 रयेत् तथा च रामा०
161. म० 1 देरप्यभेदः
162. अ० 2 प्रबल
163. म० 2 उभयेषां म० 5 अ० 1 उभयानां
164. अ० 1 न्यासेनैव
165. अ० 1 पद नास्ति
166. अ० 2 काव्यवाक्यमी०
167. अ० 1 अपि नास्ति
168. म० 1–2, 5 अ० 1–2 गुणालङ्कारा वक्ष्य
169. म० 1, 5 अ० 1–2 गुणा अर्थ०
170. म० 1–2 अ० 2 यूप इत्यादि
171. म० 1 काव्येषु
172. म० 2 वाक्यमिदं नास्ति
173. म० 1 योनिमित्यादिषु, म० 2, 5 अ० 2 योनिमेत्वित्यादिषु
174. म० 2 पुर इत्या
175. अ० 1 इत्यादौ
176. म० 1 मांसं इत्यादौ
177. अ० 1 अवबोधार्थ
178. अ० 1 सा प्रारम्भः
179. म० 2 अ० 1 विध्यनुमत
180. अ० 2 मत इति
181. म० 2 भवता अधिकम्
182. म० 2 धर्मशास्त्रं पुराणं च
183. अ० 2 संशनीयम्
184. म० 1–2, अ० 1–2 देरप्यनुपा०
185. म० 2 म०5 यमेवेति

186. म० 2 म० 5 सुस्थम्
187. म० 1 तरङ्गान्तगद्योऽयं नास्ति, म० 5 गद्यादस्मात् धर्मान्तर्वाणि आस्थामन्दिरेति श्लोकद्वयं वर्तते।
188. म० 2 अ० 1 गोत्रवतंस
189. अ० 1 वारणाशि
190. अ० 1-2 सूरि नास्ति
191. अ० 2 वि नास्ति
192. अ० 1-2 श्री नास्ति
193. म० 2 अ० 1-2 घनसारसार
194. अ० 2 सुरभीकृते
195. म० 1 आस्थामन्दिर इति धर्मान्तर्वाणिवर्य इति श्लोकौ विपर्यस्तौ
196. अ० 1 धरैः
197. म० 1 म० 5 सञ्जातो यज्ञमाम्बामृतफलं पर्वतेशस्य भाग्यम्
198. म० 3 म० 4 व्याख्याविख्यातकीर्तिर्विवरणगुरुवाक्सांख्यमुख्यागमानां
199. अ० 1 विभवे



# ।। अथ द्वितीयोऽभिधातरङ्गः ।।



अथ कृतिनायके रघुनायके नायकगुणानाह–

महाकुलीनत्वमुदारता च तथा महाभाग्यविदग्धभावौ।
तेजस्विता धार्मिकतोज्ज्वलत्वममी गुणा जाग्रति नायकस्य।। 1।।

[1] महाकुलीनता नाम कुले महति सम्भवः।। 2।। (प्र० रु० 1–13)

यथा[2] –

आवासः कथमस्मदादिवचसां वंशो रघूणां भवे-
द्यस्यासीत् प्रभवस्त्रिमूर्तितनुभृद्भानुस्त्रिवेदीमयः।
यत्सम्भूतभगीरथस्य दुहिता[3] गङ्गा जगत्पावनी
यत्र व्यक्तिमुपागतस्स[4] भगवान्रामात्मना[5] श्रीपतिः।। 3।।

यद्विश्राणनताच्छील्यमौदार्यं तन्निगद्यते।। 4।। (प्र० रु० 1–15)

यथा[6] –

प्रत्यासन्नसुधांशुबिम्बमुकुरे संलक्ष्यमाणानना-
श्चञ्चत्काञ्चननूत्नरत्नखचितप्रासादशय्यासनाः।
सुन्दर्यो विदुषां सुरेन्द्रतरुणी[7]संल्लापलीलारसे
संसक्ताः कथयन्ति राघवविभोरौदार्यमत्यद्भुतम्।। 5।।

सर्वसर्वंसहैश्वर्यं महाभाग्यमुदीर्यते।। 6।।

यथा[8] –

आचक्रवालवसुधातलचक्रवालं सर्वे नराधिपतयस्ससुरासुरेन्द्राः।
नीराजयन्ति रघुनन्दनपादपीठं कोटीरकोटिघटितस्फुटरत्नदीपैः।।7।।

कृत्यवस्तुषु चातुर्यं वैदग्ध्यमभिधीयते।। 8।। ( प्र० रु० )

यथा–

सीताशोकममर्त्यदैन्यमसुरक्रौर्यं च मन्दोदरी-
कण्ठे मङ्गलसूत्रमात्मलघुतामेकेषुणा योऽलुनात्।

लीलोन्मूलितसप्तसालवितते[10](:) श्वेतातपत्रायुत-[11]
च्छेतुस्तस्य विदग्धताविवरणे ब्रह्मापि जिह्मायते।। 9।।

**जगत्प्रकाशकत्वं यत्तेजस्वित्वं तदुच्यते।। 10।। (प्र० रु० )**

यथा[12]-

तत्तादृक्प्रौढदोषाचरतिमिरभरोल्लुण्ठनाकुण्ठशक्तेः
सर्वत्रोज्जृम्भमाणस्फुरणरघुपतिस्फारतेजः[13]खरांशोः।
तत्तद्ब्रह्माण्डभाण्डे विमलतरवियन्नीरनीरन्ध्रगर्भे[14]
बिम्बा एव स्फुरन्ति प्रतिफलिततनोर्नूनमेकैकसूर्याः।। 11।।

अत्र सकलब्रह्माण्डप्रकाशकस्य[15] रघुकुलतिलकप्रतापसूर्यस्य गगन-जलपूरिते[16] एकैकस्मिन्ब्रह्माण्डे प्रतिफलितमूर्तेः प्रतिबिम्बा एवैकैकसूर्यास्सन्तः[17] स्फुरन्ति न तु तदितरे सूर्याः[18] सन्तीत्यपह्नवालङ्कारभेदः। अतिशयोक्ति-रूपकश्लेषाश्च इत्येतेषां[19] सङ्करः।

**धर्मैकायत्तचित्तत्वं धार्मिकत्वमुदीर्यते।। 12।। (प्र० रु०)**

यथा[20]-

ताताज्ञाचरणाद्वनं गतवतः सन्त्यज्य राज्यश्रियं
कैकेय्यामविकारिणश्च भरतच्छन्देऽप्यनावर्तिनः।
यातायाहितसोदराय शरणं लङ्काश्रियं यच्छत-
स्तस्माद्दाशरथेस्सुरासुरनरेष्वन्यो[21] न धन्यो जनः।। 13।।

**रूपसम्पन्नदेहत्वमौज्ज्वल्यं परिकीर्त्यते।। 14।। ( प्र० रु० )**

[22]यथा[23]-

यत्सौन्दर्यमवेक्ष्य जीर्णमुनयो वाताम्बुपर्णाशना
धैर्यं नार्य इवापसार्य सहजं[24] सन्त्यज्य लज्जामपि।
सम्भोगं किल वव्रुरित्यभिदधे पौराणिकैस्तत्क्व वा
रामस्य क्व नु कामरूपविभव(:)स्त्रीमात्रनेत्रप्रियः।। 15।।

यदिति भिन्नं पदम्[25]।

## नायकस्वरूपनिरूपणम्

अथ नायकस्वरूपं निरूप्यते–

कीर्तिप्रतापसम्पन्नः पुमर्थत्रयतत्परः।
धुरन्धरश्च गुणवान्नायकः परिकीर्त्यते[26] ।। 16 ।।

[27]तत्र प्रतापसम्पत्तिः प्रागेव प्रादर्शि[28] ।

कीर्तिसम्पत्तिर्यथा–

न ग्रस्तस्तमसा न चाह्नि मलिनो दर्शेन नो कर्शितो[29]
नैवास्तङ्गतिमान् न[30] चाङ्कितततनुर्नो पाक्षिकश्रीरपि।
लोकालोकनगेन्द्रलङ्घनविधौ नो पङ्गुभावं गतो
निर्दोषो गुणसागराद्रघुपतेर्ज्जातो यशश्चन्द्रमाः।। 17 ।।

यथा वा–

उद्वेलाद्गुणसागराद्रघुपतेर्निर्धूतदोषाकरा–
दासीत्कोऽप्यविपल्लवश्शुभयशोमन्दारभूमीरुहः।
नानाभूधरबीजसागररसान्गर्भेऽभितो बिभ्रति
ब्रह्माण्डानि फलानि, यत्र बहुशस्संश्लिष्य सञ्जाग्रति।। 18 ।।

वेलाशब्देन कूलकालौ[31] द्वावपि विवक्षितौ। तेन उद्वेलशब्देन[32] देशकालनियन्त्रितात् प्रसिद्धसागराद् रामगुणसागरस्य व्यतिरेको दर्शितः। निर्धूतदोषाकरादित्यत्रापि तथैव। अविपल्लवो वृक्षपक्षे[33] पल्लवव्यतिरेकशून्यः, कीर्तिपक्षे विपल्लेशेनापि रहितः[34]। नानाभूधरा एव बीजानि सागरा एव रसाः। अत्र श्लेषरूपकातिशयोक्तीनां सङ्करः। बिभ्रतीत्यत्र 'वा नपुंसकस्य' इति वैकल्पिको नुमभावः। धार्मिकत्वौदार्यवर्णनादेव[35] तदुभयतुल्य–कोटिकः[36] कामो[37]ऽप्यर्थसिद्ध एव।

धुरन्धरत्वं यथा–

आचार्यवान्वररुचिस्त्रिपुरारिरासी–
दाकल्पवाञ्छ्यनवानपि दानवारिः।

दिक्पालका विदधुरुत्तमयानचर्यां
दोर्मण्डले[38] रघुपतौ धरणीं दधाने।। 19।।

यथा वा–

मृदुचन्दनशीतरामबाहौ[39] कलिता भूर्विजहौ निवासखेदम्।
अतिनिष्ठुरकूर्म[40]कर्पराग्रे विषनिर्दूषित[41]शेष[42]भोगभागे।। 20।।

अत्र[43] निष्ठुरविषनिर्दूषितपद[44]महिम्ना भूदेवताया अनुचितस्थलावस्थानेन[45] महान् सन्तापो[46] जात इति वस्तु वस्तुना[47] ध्वन्यते।

गुणाढ्यत्वं यथा–

शेषाश्चेत्पुरुषास्त्रिविष्टपजुषस्सर्वेऽप्यनाशायुषः
सर्वज्ञाश्च चतुष्पदीपरिमितां वाचं वदेयुस्सदा।
शब्दाश्च क्रमवर्जिता यदि समस्तार्थाभिधानक्षमा
नाक्रान्ताश्च विवक्षया रघुपतेस्तत्राप्यगण्या गुणाः।। 21।।

अत्र सर्वपदं यथायर्थं सम्बध्यते। तरुगुल्मलतादयश्चतुर्मुखान्ता जीवाः सर्वशब्दार्थः। चतुष्पदीपरिमितामिति, वाग्धेनोश्चत्वारि पदानि। तत्र पदत्रयं प्राणिनो नोच्चारयितुं क्षमन्ते; किन्तु[48] तुरीयमेव पदं[49] वदन्ति। अयं चार्थश्चत्वारि वाक्परिमिता पदानि इत्यादि[50]श्रुतिसिद्धः। वदेयुरिति सम्भावनायां लिङ्। वदनं सम्भावितं चेद् इत्यर्थः। समस्तेति लक्षणादिवृत्त्या अर्थबोधकत्वे विलम्बा[51]पत्तेरिति भावः। तत्रापि तथापीत्यर्थः। अतिशयोक्तिरलङ्कारः[52]। ग[53]णनासामग्रीमेलनेऽपि[54] कार्यानुत्पत्तेर्विशेषोक्तिश्च। सा चातिशयोक्त्यनुप्राणितेति सङ्करः।

धीरोदात्तादिनायकविशेषा निरूप्यन्ते।

स च नायकश्चतुर्विधः–धीरोदात्तो धीरोद्धतो धीरललितो धीरशान्तश्चेति।

गम्भीरस्सार[55]सम्पन्नः कृपावानविकत्थनः।
परकीयगुणग्राही धीरोदात्तो निगद्यते।। 22।।

गाम्भीर्य[56]हर्षामर्षादिव्यञ्जकविकार[57]शून्यत्वम्। यथा–

राज्यस्थो वा वनस्थो भवति रघुपतिस्तुल्यवक्त्र[58]प्रसादः[59]
कैलासोद्धारणादीन्प्रकटयति[60] गुणानद्भुतान्रावणस्य।

सीताश्लेषाभिलाषिण्यपि गलविपिने न्यस्तशस्त्रः कृपावान्
लज्जासिन्धौ निमज्जत्यवनतवदनः किन्नरैर्गीयमानः।। 23।।

**चण्डो विकत्थनो दृप्तो[61] बली धीरोद्धतो मतः।। 24।।**

यथा[62] –

रे रे लङ्केश रामं किमिति मृगयसे तिष्ठ रे निष्ठुरा मे
प्रौढप्रायातिकायक्षतजरसझरैस्सम्यगाचम्य पूर्वम्।
नीत्वा प्राणाहुतीनां पदमतिकठिनानिन्द्रजित्प्राणवायून्
काण्डास्त्वत्कालखण्डाचलकबलविधौ[63] व्यग्रभावं भजन्ते।।25।।

**स धीरललितो नेता निश्चिन्तो भोगलम्पटः।। 26।।**

यथा[64] –

राज्याभिषेकसमनन्तरकालमेव
रामेण (रामाय) सादरसमर्पितराज्यलक्ष्मीः[65]।
शत्रुघ्नलक्ष्मणमुखैरुपचर्यमाण-
स्साम्राज्यभोगनिरतो भरतो बभूव।। 27।।

**धीरशान्तश्शान्तिधैर्यदीप्रो[66] विप्रो निगद्यते।। 28।।**

यथा[67] –

गङ्गादीनां नदीनाममलिनपुलिने हंससंसेव्यमाने
स्नाताः पूताः प्रशान्ताश्शुभसितभसितन्यस्तशस्तै[68]स्त्रिपुण्ड्राः।
सन्तस्सन्तोषवन्तो महितमहितहृद्रामनामाभिरामं
जापं जापं दुरापं निलयमकलयन्भासुरा भूसुरेन्द्राः।। 29।।

अत्र शब्दालङ्काराणां संसृष्टिः। एते नायकास्सर्वरससाधारणाः।

**शृङ्गारनायकास्तत्सहकारिणश्च**

**अनुकूलो दक्षिणश्च[69] शठो धृष्ट इति[70] चत्वारश्शृङ्गारनायकाः।**
**एकायत्तोऽनुकूलस्स्यात्।। 30।।**

यथा[71] –

धम्मिल्लं दरफुल्लहल्लकदलैरुल्लास्य भालस्थले[72, 73]
कस्तूरीतिलकं[74] कपोलकुचयोर्निर्माय पत्राङ्कुरान्।

उत्सङ्गे विनिवेश्य भूषणगणैस्सीतां[75] स्वयं भूषितां
रामः क्रीडति कामकार्मुकलतामौर्वीविपञ्चीरवैः।। 31।।

तुल्योऽनेकत्र दक्षिणः।। 32।।

यथा[76]–

विद्याप्रौढविलासिनीभिरनिशं कण्ठे गृहीतस्स्वयं
भूदेव्या सततावलम्बितभुजो राज्यश्रिया रञ्जितः।
कान्तैः कीर्तिवधूजनैः परिवृतस्सत्कान्तिसीमन्तिनी
रत्नैः शिलष्टतनुर्विदेहतनयामङ्के[77] विधत्ते विभुः।। 33।।

नायिकामात्रविज्ञात[78]विप्रिय[79]श्शठ उच्यते।। 34।।

यथा[80]–

गूढं त्वया नायक गोपिता या मृगेक्षणासीन्मुकुरे त्वदीये[81]।
दृष्टा मया साऽद्य हि मत्समाना शाठ्यं तव ज्ञातमभूतपूर्वम्।। 35।।

व्यक्तापराधो निर्भीको धृष्ट इत्यभिधीयते।। 36।।

यथा[82]–

वीरश्रियो वपुषि ते परिभोगचिह्न[83]
संलक्ष्यते क्षममिदं नहि[84] सम्परीतुम्।
सर्वं मया हि विदितं चरितं त्वदीयं
तत्किं प्रतारयसि[85] मां विनयैरलीकैः।। 37।।

एतेषां[86] नायिकानुकूलने क्रमात् पीठमर्दविटचेटविदूषकाः सहकारिणः।
किञ्चिदूनः पीठमर्दः कलासु कुशलो विटः।
सन्धान[87]कुशलश्चेटो हास्यप्रायो विदूषकः।। 38।।

तत्राद्यो यथा–

श्रीरामभूप तव चापगुणस्वनात्मा कोऽप्यद्भुतो जयति संयति पीठमर्दः।
यश्श्रोत्रभूमिगत एव नयत्यरीणां राज्यश्रियस्तव चिराय वशंवदत्वम्।। 39।।

इतरेषां[88] स्पष्टमुदाहरणम्।

**शृङ्गारनायिकाः**

अथ[89] अष्टविधाः शृङ्गारनायिका निरूप्यन्ते-

स्वाधीनपतिका ह्येका तथा वासकसज्जिका।
विरहोत्कण्ठिता चैव विप्रलब्धा च खण्डिता।। 40।।
कलहान्तरिता चैव तथा प्रोषितभर्तृका।
तथाभिसारिका[90] चेति नायिकास्त्वष्टधा स्मृताः।। 41।।
स्वाधीनपतिका सा[91] स्याद्या पत्या नित्य[92]लालिता।। 42।।

यथा[93]-

डोलायामधिरोप्य मन्दवलनैरान्दोलयन्नादरात्
केलीकाननमञ्जुवञ्जुललताकुञ्जेषु[94] सञ्चारयन्।
स्वेदाम्भोघनसारसाररजसां क्षोदेन शान्तिं नयन्
रामो लालयते विदेहतनयामुत्सङ्गसंसङ्गिनीम्[95]।। 43।।
केलीगृहं तथात्मानमलङ्कृत्य स्मरातुरा।
प्रतीक्षते या दयितं सा स्याद्वासकसज्जिका।। 44।।

यथा[96]-

केलीसद्मनि सज्जिते स्थितवती स्वाङ्गं मुहुर्भूषितं
पश्यन्ती मुकुरे भविष्यति रते[97] सङ्कल्पयन्ती क्रमम्।
पृच्छन्ती दिवसावसानसमयस्यासन्नभावं मुहु-
र्बाला मे भवतः[98] प्रतीक्षणपरा मा राम जाड्यं कृथाः।। 45।।
विरहेण कृतोत्कण्ठा विरहोत्कण्ठिता मता।। 46।।

यथा-

हस्तन्यस्तमुखाम्बुजानवरतं द्वारे विधत्ते स्थितिं[99]
त्वन्मार्गे चलितं[100] सखीजनमपि त्वामेव सा मन्यते।
एकां प्रेषितवत्यपि प्रियसखीमन्यां पुनः प्रेषय-
त्याहारादिपराङ्मुखी रघुपते त्वय्येव सा वर्तते।। 47।।

यथा वा-

कन्दर्पो विरहानले मम सखि क्षिप्त्वा चकोराङ्गना-
चञ्चूखण्डितचारुचन्द्रकिरण[101]श्रीखण्डकाण्डच्छटाः[102]।

चञ्चन्नूतनचूतरेणुविकिरैश्चैत्रानिलैस्साम्प्रतं[103]
हन्तोद्दीपयति प्रियो रघुपतिर्नायाति का मे[104] गतिः।।48।।

**प्रियेण वञ्चिता ज्ञेया विप्रलब्धा स्मरातुरा।।49।।**

यथा[105] –

श्वसितमृदितमेतत्सद्म सङ्केतितं मे
शिशिरयति हि चन्द्रो न त्वहो रामचन्द्रः।
अजनि रजनिकालस्साम्प्रतं यातयामः
स्वभवनमयि सख्यस्सत्वरं यात[106] यामः।।50।।

अहो इति खेदे।

**क्वचिन्नीतक्षपे कान्ते खण्डितेर्ष्याकषायिता।। 51।**

यथा ममैव व्यायोगे–

नीतक्षपः क्वचिदधः कृतजीवनाया[107]
रागान्वितस्तुहिनबाष्पमुचो नलिन्याः।
[108]लीनश्रियो विगलितालिगिरो विवस्वान्
पुष्णाति पादपतनेन पुनः प्रहर्षम्।। 52।।

**निरस्य दयितं कोपात्पश्चात्तापमुपागता।**
**कलहान्तरिता नाम[109] कलाविद्भिरुदाहृता[110]।। 53।।**

यथा–

प्राणाः पञ्च विरिञ्चिना मम कृता बाणाश्च तन्मारणाः[111]
पञ्चैवात्मभुवस्तथापि न भयं तेभ्यो ममाशङ्कितम्।
षष्ठं प्राणमहं न राघवमयं यत्प्राग्विना संस्थिता
कोपादद्य विधूय तं स्मरशरग्राहैर्न गृह्ये कथम्।।54।।

**देशान्तरगते कान्ते[112] खिन्ना प्रोषितभर्तृका।।55।।**

यथा–

रामे गच्छत्यसुरविजयं कर्तुकामे वनान्तं
भूनन्दिन्या दिनशशिकलापाण्डुरः कान्तिपूरः।
कन्दर्पाग्नेर्दधति वपुषि स्पष्टमङ्गारभङ्गी–
मङ्गीचक्रे भसितपटलीरूषणा[113]टोप[114]मुद्राम्।। 56।।

अत्र कन्दर्पाग्नेरिति पञ्चमी[115]। असुराः खरादयः।

**अनुरक्ता स्वयं कान्तं याति या साऽभिसारिका।। 57।।**

यथा–

रावणावरजा तत्र राघवं मदनातुरा।
प्रतिपेदे[116] निदाघार्ता व्यालीव मलयद्रुमम्।। 58।। [रघु० 12–32]

यथा वा[117] –

घोटीतीक्ष्णखुरक्षतक्षितिरजस्स्फारान्धकारावृते
संयद्रात्रिमुखे कृपाणलतिकादूतीकृतालम्बना।
शुण्डालद्युतिडम्बराम्बरधरा शूरैकभोगोन्मुखी
शत्रुश्रीरभिसारिका रघुपतेरङ्गं[118] समालिङ्गति।। 59।।

एताश्च मुग्धामध्याप्रगल्भाभेदेन त्रिविधा भवन्ति। तासां[119] स्वरूपं रसतरङ्गे वक्ष्यामः[120]। ताः पुनः पद्मिन्यादिभेदेन चतुर्विधाः। तासां[121] लक्षणं कामशास्त्रे प्रसिद्धमिति[122] नेह प्रपञ्च्यते[123]।

**अथ काव्यसामग्री प्रतिपाद्यते**

अथेदानीम्[124] उक्तलक्षण[125]विशिष्टस्य नायकस्य कथाशरीरनिर्वर्तकं काव्यं लिलक्षयिषुरादौ तत्सामग्रीं दर्शयति–

**बीजं हि तस्याः कवितालतायाः प्राञ्चो वदन्ति प्रतिभाविशेषम्।**
**सत्काव्यशास्त्राद्यवबोधनादि जलावसेकादिकमीरयन्ति।। 60।।**

प्राञ्च इति 'नाञ्चेः पूजायाम्' (6.4.30 ) इत्युप[126]धानकारस्य[127] [128]लोपप्रतिषेधः[129]। प्रतिभेति[130] 'आतश्चोपसर्गे' (3.1.136 ) इत्या(ङ्) 'अकर्तरि च कारके संज्ञायाम्' (3.3.19 ) इति करणार्थता[131]। प्रतिभान्त्यनया इति प्रतिभा–

स्मृतिर्व्यतीतविषया मतिरागामिगोचरा।
बुद्धिस्तात्कालिकी ज्ञेया प्रज्ञा त्रैकाल्यगोचरा।। 61।।
प्रज्ञां नवनवोन्मेषशालिनीं प्रतिभां विदुः।। 62।।

इत्युक्तलक्षणा प्राचीनजननकृतसुकृतविशेषसमुत्पादिता शक्तिः। यां विना कवितैव न प्रसरेत्। प्रसृता वापहसनीया स्यात्। तस्या विशेष उद्बोधः। तं कवितालताया बीजं प्रधानकारणं प्राञ्चः प्राहुः। काव्यानि रामायणादीनि। शास्त्राणि काणादपाणिनीयादीनि[132]। आदिशब्देन रथ[133]गजतुर[134]गखड्गादि-शास्त्राणां परिग्रहः। तेषामवबोधन[135] सम्यगर्थपरिच्छित्तिः। द्वितीयेनादिशब्देन काव्यविच्छिक्षया[136] काव्यकरणविचारयोर्निरन्तर[137]परिशीलनं विवक्ष्यते। अनवरतमभ्यस्यतामेव कवीनां काव्येषु पाकोदयदर्शनात्। एतत्सर्वं तस्या जलावसेकादिकं प्राहुः। अत्रादिशब्देन दोहदादिपरिग्रहः। यथा हि[138] क्षितिपाथःपवनादीनां कारणत्वेऽपि अङ्कुरोत्पत्तौ अन्तरङ्गत्वात् प्राधान्यं बीजस्य, एवं प्रतिभाशक्तेरपि कवितोदयेऽन्तरङ्गत्वाद् व्युत्पत्ति-[139] मान्द्याविर्भूतदोषनिराकरणप्रभविष्णुत्वाच्च प्राधान्यमिति भावः।

**काव्यलक्षणम्**

अधुना[140] काव्यसामान्यलक्षणमाह –

**सगुणालङ्कृती काव्यं पदार्थौ दोषवर्जितौ[141] ।। 63 ।।**

गुणादीनां लक्षणानि तत्तत्तरङ्गेषु वक्ष्यामः।

पदशब्देनात्र पदसन्दर्भात्मकं वाक्यं[142] लक्ष्यते। तत्रैव काव्यलक्षण-सम्भवात्। पदं विभक्त्यन्तं[143] वेद्यम्[144]। 'सुप्तिङन्तं पदम्' (1.4.14) इति पदलक्षणस्य प्रत्येकसमुदायपक्षयोरव्याप्त्यसम्भवदोषग्रस्तत्वात्। पदं विभजते–

**वाचकं लक्षकं चैव व्यञ्जकं चेति तत्त्रिधा[145] ।। 64 ।।**

आद्यं लक्षयति –

**साक्षात्सङ्केतितार्थस्य बोधकं तेषु वाचकम् ।। 65 ।।**

सङ्केतितो गृहीतसम्बन्ध इत्यर्थः।

ननु कोऽयं शब्दार्थयोस्सम्बन्धः। न तावत्तादात्म्यम्। विलक्षणतया प्रतीतेः। नापि कार्यकारणभावः। शब्दस्य नित्यत्वे गगनकार्यत्वे[146] च[147] स्वार्थेन सह कार्यकारणभावाभावात्। नापि देशकालाविनाभावः[148]। भिन्नदेशकालत्वात्। नापि संयोगः। शब्दस्य द्रव्यत्वे[149] गुणत्वे वा स्वार्थेन

द्रव्येण गुणेन[150] वा तदयोगात्। नाप्यर्थस्मृतिजनन[151]शक्तिरेव सम्बन्धः। अगृहीतस्य तस्य[152] कार्यानुपयोगात्। अन्यथाऽव्युत्पन्नस्यापि शब्दादर्थ-प्र[153]तीतिप्रसङ्गात्। ग्रहणापेक्षायां स्वजन्यार्थस्मृ[154]त्यैव स्वानुमानाद् अन्योऽन्याश्रयप्रसङ्गात्। न च पूर्वपूर्वस्मृत्या तदनुमानाद् उत्तरोत्तरस्मृतिजन्म। अनवस्थाप्रसङ्गात्। किञ्च यत्र सम्बन्धिदर्शनात् सम्बन्ध्यन्त[155]रस्मृतिस्तत्र सादृश्यविरोधादिरेव सम्बन्धो नियतः[156]। स च प्रकृते नास्ति[157]। तस्मात् न शब्दार्थयोस्सम्बन्ध इति।

अत्रोच्यते- अस्तु शक्तिरेव सम्बन्धः। स च सङ्गतिग्रहणकाल एव गृह्यते। तज्जनितसंस्कारः शब्ददर्शनसमुद्बुद्धः सत्तामात्रेणार्थस्मृतिं जनयति। न तु अर्थ[158]प्रतियोगिकसम्बन्धविशिष्टशब्दज्ञानम्[159] अर्थस्मृतिहेतुरभ्युप-गम्यते। तथा सति सम्बन्धस्यापि कारणकोटिनिवेश[160]ने सम्बन्धान्तराभ्यु-पगमप्रसङ्गात्। अर्थस्यापि सम्बन्धविशेषणतया प्रथममवगतत्वेन पुनस्तदवगमाय शब्दवैयर्थ्यप्रसङ्गाच्च। यत्तूक्तम्, अन्यत्र सादृश्यादिरेव सम्बन्ध इति, तत्र वक्तव्यम्- किं[161] शब्दार्थयोरपि सादृश्यादिना भाव्यमिति विवक्षितम्, उत शब्दार्थवदन्यत्रापि तन्माभूदिति, किं वा तदभावात् प्रकृतेऽपि स्मृत्यभाव इति। नाद्यः, शब्दार्थयोस्तदसम्भवात्[162]। न द्वितीयः, अन्वयव्यतिरेकसिद्धत्वात्। तृतीयेऽपि शक्तिसम्बन्धमङ्गीकृत्य स्मृत्यभाव आपाद्यते वा[163] उत सम्बन्ध एव नास्तीति वा[164]। न द्वितीयः, कार्यगम्यत्वात् शक्तिलक्षणसम्बन्धस्य। नाद्यः, माता मे वन्ध्या इतिवत् स्मृतिजन्म[165]शक्तिरस्ति स्मृतिर्नास्तीति स्ववचन[166]व्याघा[167]तात्। तस्मात् शक्तिस्सम्बन्ध इत्यनवद्यम्। वाच्यभेदमुखेन[168] वाचकभेदं विवक्षन् वाच्यभेदमाह-

**जातिर्गुणः क्रिया द्रव्यं साङ्केत्यं जातिरेव वा।। 66।।**

तत्र तावत् सत्येवास्य शब्दस्यायमर्थ इति समयग्रहे शब्दा-दर्थविशेषप्रतीतिः, अन्यथा नेत्यन्वयव्यतिरेकाभ्यां सङ्केतग्रह[169]सहकृत एव शब्दोऽर्थं[170] बोधयतीति[171] सर्वसम्प्रतिपन्नम्। सङ्केतग्रहश्च जातिगुणक्रिया-द्रव्येषु वा[172] जातावेव वा[173] जात्यालिङ्गितव्यक्तौ वा अन्यापोहे वा मतभेदेन भवति।

ननु व्यक्तीनामर्थक्रियाकारित्वात् तत्रैव सङ्केतः किं न स्यादिति चेत्, तत्र पृच्छामः– किं सर्वासु व्यक्तिषु, उतैकदेशे। नाद्यः, आनन्त्यात्। नेतरः, इतरव्यक्तौ गोव्यवहारदर्शनेन व्यभिचारात्। किञ्च व्यक्तिसङ्केतपक्षे गौश्शुक्लश्चलो डित्थ इत्यर्थभेदाभावेन पर्यायत्वप्रसङ्गः। या तु व्यक्तिः स्वसमानव्यक्त्यन्तरबाहुल्यरहिता यथा आकाशव्यक्तिः सा[174] तादृशी व्यक्तिरेव शब्दार्थोऽस्तु। आनन्त्यव्यभिचारदोषा[175]भावात्। इतरास्तु व्यक्तयो जात्यालिङ्गिता एव शब्दार्थाः[176], केवलजातेरर्थक्रियाशून्यतया पुरुषप्रवृत्तियोग्यत्वाभावात्[177], केवलव्यक्तेरानन्त्य[178]व्यभिचारादिदोषग्रस्तत्वाच्च, प्रत्येकमसङ्केतार्हत्वेऽपि मिलितयोः प्रवृत्तिनिमित्तत्वमुपपद्यते। उक्तविधया विशिष्टस्यैव शब्दार्थत्वे प्रामाणिके गौरवमिति न दोषमावहति। ततो जात्यालिङ्गिता[179] व्यक्तिश्शब्दार्थ इति नैयायिकाः प्राहुः।

बाह्याः पुनः क्षणिकत्वात् सर्वस्य सामान्यस्यापि कल्प्यमानस्य[180] तथात्वेन अन्यापोहश्शब्दसङ्केतनिकेतनमि[181]त्याहुः।

शाब्दिकास्तु जात्यादिचतुष्टयमपि यथायथं प्रवृत्तिनिमित्तमाचक्षते।

उक्तञ्च भाष्यकारैः– गौः शुक्लः चलो डित्थ इति[182] चतुष्टयी हि[183] शब्दानां प्रवृत्तिरिति। तत्र गवादिश[184]ब्दा जातिवाचकाः।[185] जातिर्नाम भिन्नेष्वनुगतबुद्ध्यालम्बनभूतस्तत्प्रमाणको वस्तुनः प्राणप्रदो धर्मः। उक्तं हि वाक्यपदीये– गौः स्वरूपेण न गौः नाप्यगौः किन्तु[186] गोत्वाभिसम्बन्धाद् गौः इति। शुक्लादयश्शब्दा गुणवाचकाः। गुणो नाम लब्धसत्ताकस्य विशेषाधायको रूपादिधर्मः[187]। डित्थादयश्शब्दा द्रव्यवाचकाः। द्रव्यं नाम वक्त्रा यदृच्छया डित्थादिष्वर्थेषू[188]पाधित्वेन निवेशितं डित्थादिशब्दानामन्त्यवर्णबुद्धिनिर्ग्राह्यं संहृतक्रमं स्वरूपम्। ननु आनन्त्यव्यभिचारभिया व्यक्तिसङ्केतं विहाय जात्यादौ सङ्केतः स्वीकृतः। तत्र जातेरनुवृत्तत्वेऽपि गुणक्रियायदृच्छाशब्दानामनुवृत्तत्वाभावात् स दोषस्तदवस्थ इति चेत्, मैवम्, गुणादीनामप्येकत्वा[189]ङ्गीकारात्। शुक्तिस्फटिकादिषु शुक्ल[190]गुणस्य भेदेन प्रतीतिस्तु[191] भ्रान्तिरेव। दृश्यते हि[192] बहुतरङ्गेषु प्रतिबिम्बितस्य रवेरेकस्यापि तत्तदाश्रयभेदेन भेदाध्यारोपः। तस्मादेव[193] जात्यादि-

चतुष्टयमपि[194] यथायथं प्रवृत्तिनिमित्तमिति स्थितम्। अन्ये पुनः उक्तपक्षेषु[195] अपरितुष्यन्तः[196] [197]सर्वत्रापि जातिरेव[198] प्रवृत्तिनिमित्तमिति[199] मन्यन्ते। अपरितोषश्चेत्थम्। न तावत् जात्यादिचतुष्टयं यथायथं प्रवृत्तिनिमित्तम्। प्रवृत्तिनिमित्तस्य[200] वैविध्यापत्तेः[201]। एकस्या एव जातेः प्रवृत्तिनिमित्तत्वे सम्भवति[202] तद्वैविध्याभ्युपगमायोगात्। तथा च गवादिशब्दानां गोत्वादौ सङ्केतः। शुक्लादीनां[203] शुक्लत्वादौ। पाकादीनां[204] पाकत्वादौ। डित्थादीनां च[205] वैशेषिकादिमतेन अहरहश्शरीरभेदसिद्धौ तत्रापि डित्थत्वादावेवेति युक्तम्।

यदुक्तं बाह्यैः सर्वस्य[206] क्षणिकत्वात् सामान्यस्यापि कल्प्यमानस्य तथात्वाद् अन्यापोहश्शब्दार्थ इति। तदसत्। सर्वस्य[207] क्षणिकत्वे मानाभावात्। प्रत्यभिज्ञया स्थायित्वसिद्धेश्च। न चान्यापोहश्च शब्दार्थता। घटप्रतीतौ तदपोहरूपा अघटप्रतीतिः। तत्प्रतीतौ च[208] तदपोहरूपा[209] घटप्रतीतिरिति[210] परस्पराश्रयप्रसङ्गात्[211]।

यदप्युक्तं नैयायिकैर्जात्यादिलिङ्गता व्यक्तिः शब्दार्थ इति। तत्र ब्रूमः। सर्वो हि धर्मी प्रातिस्विकेन[212] सामान्येन वा केनचिद्धर्मेण[213] घटितो वेद्यते। गोव्यक्तिश्च न गोशब्दात्प्रातिस्विकधर्मघटिता[214] प्रतीयते। न हि प्रत्यक्षेणैव[215] अन्योन्यविलक्षणज्ञानं शब्दाद्भवति; किन्तु आकृतिधर्मिकतयैव[216]।

ततश्च–

**विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे।। 67।।**

इति न्यायेन विशेषणभूता जातिरेव शब्दार्थः। न च जातेरुपलक्षणत्वं शङ्कनीयम्। धर्मिणि धर्मान्तरव्यावृत्ततया प्रतीते[217] धर्मान्तरं प्रतीयमानमुपलक्षणम्[218]। यथा गृहे प्रतीते काकः। इह तु न शब्दाद्व्यक्तेः[219] धर्मान्तरेण पूर्व[220] व्यावृत्ततया प्रतीतिः। किन्तु आकृतिर्धर्मिकतयैव[221] इत्याकृतिर्विशेषणमेव। ननु कार्यान्वयो व्यक्तिमात्रस्येति सैव शब्दार्थ इति चेत्, न।[222] [223]आकृतिधर्मिकैव[224] व्यक्तिरन्वयिनी इति आकृतावेवान्वयधीः। न च निर्व्यापाराया[225] आकृतेः[226] न क्रियासाधनत्वयोग्यतेति न शब्दार्थतेति[227] वाच्यम्। न हि कारणत्वं[228] व्यापारवत्त्वनियतम्। व्यापारोत्पादे

व्यापारान्तराभ्युपगमेन[229] अनवस्थापत्तेः;[230] किन्तु नियतपूर्ववृत्तित्वनियतम्।[231] तज्जातावस्त्येव। बुद्ध्या हि[232] व्यक्त्या क्रिया साध्यत इति धीद्वारास्ति साधनत्वमाकृतेः। कथं पुनः आकृतिव्यक्त्योरेकधीवेद्यत्वेऽपि आकृतेरेव शब्दार्थता न व्यक्तेरिति चेत्, न[233], उक्तोत्तरत्वात्। शब्दाद् व्यक्तौ धीः आकृतिधर्मेणैव[234] जायते। न प्रातिस्विकेन धर्मान्तरेणास्याः[235] स्फूर्तिरित्युक्तमेव। नन्वेतदयुक्तम्। किमाकृतिः प्रतीता व्यक्तिधीहेतुः, उताप्रतीता[236]। नाद्यः, धीभेदापत्तेः। न द्वितीयः, हेतुत्वासम्भवात्। तथा च शब्दधीविषयत्वमपि[237] कथं व्यक्तेः। अन्यव्यावृत्तविशेषरूपा[238] हि व्यक्तिः[239]।

न च शब्दात्तथा प्रतीतिरिति चेत्, मैवम्। न ह्यज्ञाता ज्ञाता वा आकृतिर्व्यक्तिधीहेतुः; किन्तु ज्ञायमानावस्थैव। द्विविधा हि लोके पदार्थाः- स्वतन्त्राः परतन्त्राश्चेति। तत्र[240] स्वतन्त्राणां ज्ञानानामेव हेतुत्वम्। परतन्त्राणां तु ज्ञायमानतयैव। तत्राकृतेः प्रातिस्विकं रूपं[241] परतन्त्रम्[242]। तच्छब्दात्स्फुरद्[243] अन्तर्भावितधर्मिभूतव्यक्तिकमेव[244] स्फुरति, नान्यथा। अतो न धीभेदापत्तिः[245]। व्यक्तेः शब्दधीविषयत्वं[246] च सिद्धम्। इदमेवापर्यवसानमपि[247][248] यदन्तर्भावितधर्मिका धर्मधीरिति[249]। अत एव आक्षेपादनुमानादर्थापत्तेर्वा व्यक्तिधीरिति निरस्तम्।

नन्वेवं व्यक्तेरपि शब्दजन्यधीविषयत्वे तस्यामपि शब्दशक्तिरिति वाच्यतापत्तिरिति चेत्, मैवम्। यस्मादेवमाकृतिधर्मस्वभावादेव व्यक्त्यन्त-र्भावस्तस्मादेवात्र[250] गवादिशब्दविषये यस्यां स्फूर्तौ शक्तिः कल्प्यते तत्र सा द्व्यंशा। आकृतिरेकोंऽशो व्यक्तिरन्यः। तत्र[251] अनन्यलभ्याकृत्यंशस्फूर्तौ शब्दशक्तिकल्पने व्यक्त्यंशस्फूर्तेरन्तर्भावोऽवर्जनीयतया[252] भवति। अनन्यलभ्य-विषयत्वात् शब्दशक्तिकल्पनायाः[253]। एवञ्च व्यक्त्यंशोऽकारणकस्स्यादिति चोद्यं च निरस्तम्[254]। नान्तरीयकस्य पृथक्कारणापेक्षाभावात्। अत एव न विशिष्टस्य वाच्यता। शक्तिकल्पनागौरवाच्च। न च[255] शाब्दिकमतवद्[256] उभयापेक्षया[257] उभयार्थविषयत्वस्वीकारः, शक्तेरनन्यलभ्यविषयत्वादेवेति सर्वमवदातम्।

तदेवं मतभेदेन जात्यादिचतुष्टयस्य[258] जातेरेव वा सङ्केतनिकेतनत्वे स्थिते[259] वाच्यस्यार्थस्य चतुर्विधत्वमेकविधत्वमेव वा व्यवतिष्ठते[260]। तद्वाचकशब्दोऽपि तथैव व्यवस्थितो भवति[261]।

अथ[262] अभिधां लक्षयति–

मुख्यार्थगोचरा तस्य व्यापृतिः[263] कथ्यतेऽभिधा।। 68।।

तस्य वाचकस्य। इन्द्रियाणामिव शब्दानामपि पदार्थप्रतीति-जननानुगुणः परिस्पन्दपरिणामविलक्षणो व्यापारोऽङ्गीकरणीयः। स च कोष्ठगत्या[264] विचार्यमाणः सङ्गतिप्रतिसन्धानात्मको बुद्धिविशेष एव। स चात्मनिष्ठोऽपि शब्दधर्मत्वेन व्यवह्रियत इति प्राञ्चः। सा द्विविधा- रूढिपूर्विका, योगपूर्विका चेति। तत्राद्या यथा–

श्रीरामचन्द्र भवतश्चरणारविन्दरेणुं[265] कथं मधु च मुक्तिपदं वदन्ति।
यद्रेणुना मुनिरवाप कलत्रबन्धं रत्नाकरोऽपि मकरन्दरसैरविन्दत्।। 69।।

अत्र सर्वे शब्दा रूढाः[266]। [267]द्वितीया यथा[268]–

काकुत्स्थकार्मुकाम्भोदे[269] शरवर्षिणि[270] नादिनि।
नृत्तवन्तः क्रतुभुजः कलापिन इवोन्मुखाः।। 70।।

अत्र सर्वेऽपि शब्दा[271] यौगिकाः[272]।

।। इति श्रीमत्त्रिभुवनपवित्रहरितगोत्रावतंसवाराणसीवंशपद्माकर-प्रभातभानुना पदवाक्यप्रमाणपारावारपारीणश्रीमहोपाध्याय-पर्वतनाथसूरिपण्डितमण्डलेश्वरसूनुना श्रीयल्लमाम्बागर्भरत्ना-करपारिजातेन निर्मलाचारपूतेन चतुर्दशविद्याविभूषणवता धर्मसंख्यावता विरचिते श्रीमद्रघुकुलतिलकयशोघनसार-सुरभिते साहित्यरत्नाकरनामन्यलङ्कारशास्त्रे वाचकशब्दार्थ-वृत्तिनिरूपणं नाम द्वितीयस्तरङ्गः।।

आस्थामन्दिरमिन्दिराप्रणयिनो देवस्य रामात्मन-
स्त्वङ्गत्तुङ्गतरङ्गरिङ्गणभरैरङ्गीकृताडम्बरः।
तादृङ्निर्मलधर्मसूरिकवितासोल्लासकल्लोलिनी-
पूर्णः कर्णमनोहरो विजयते साहित्यरत्नाकरः।। 71।।

धर्मान्तर्वाणिवर्यस्त्रिभुवनविदिते वारणास्यन्वये यः
सञ्जातः पर्वतेशाच्छुभगुणगणभूर्यल्लमाम्बासुगर्भे।
काव्यालङ्कारकृष्णास्तुतिरविशतकोन्नाटकादिप्रणेतु-
स्तस्यालङ्कारशास्त्रे रघुपतिविभुकेऽयं द्वितीयस्तरङ्गः।। 72।।

## पाठभेदाः

1. म० 1, 5 महाकुलीनता यथा
2. अ 1-2 महाकुलीनता अधिकम्
3. आन्ध्रलिप्यां मुद्रितपुस्तके तनया
4. म० 2 गमत्स०
5. म० 1 म० 5 अ० 2 उपागमत्किमपरं रा० अ० 3 गतः किमपरं रा०
6. अ० 1-2 उदारता अधिकम्
7. म० 1 रमणी
8. म० 5 तत् अधिकम्
9. अ० 2 न्मी०
10. अ० 1 ताल०
11. म० 2 अ० 1 अ० 2 युते
12. अ० 1 तेजस्वित्वं अधिकम्
13. म० 1-2 रघुमणे, म० 5 अ० 1-2 रघुमणि
14. अ० 1 ण्डैर्वि
15. अ० 1 सकल नास्ति
16. म० 1 परिपूरिते
17. म० 2 एकैक
18. म० 1, 5 अ० 1-2 सवितारः
19. अ० 1 श्च ते, अ० 2 श्चेति ते
20. अ० 1 धार्मिकत्वम् अधिकम्
21. अ० 1 जने
22. अ० 1 उज्ज्वलत्वम् अधिकम्
23. म० 1 म० 5 उज्ज्वलत्वं सौन्दर्यं यथा
24. म० 1 म० 5 अ० 1 सहजां, म० 2 सहसा
25. म० 1 भिन्नपदम्
26. म० 2 म० 5 परिकीर्तितः
27. म० 1 अ० 2 अत्र
28. म० 2 म० 5 अ० 1 दर्शिता
29. म० 1 म० 5 दर्शितो
30. अ० 1-2 गतिविन्न
31. म० 2 पारावारौ अधिकम्
32. म० 1 म० 5 अ० 1-2 पदेन

33. अ० 2 वृक्षपक्षे नास्ति
34. म० 5 शून्यः
35. अ० 2 धर्मार्थोभयसम्पत्तिरुक्ता अधिकम्
36. म० 1-2, अ० 1 तदुभयसम्पत्तिरुक्ता। तदुभयतुल्य०
37. अ० 2 तदुभयकोटितुल्यकामो
38. म० 1 दुर्मण्डले
39. म० 2 अ० 1-2 बाहा.
40. म० 1 अ० 2 खर्प०
41. म० 1 निघ्रूषित
42. म० 2 भोगि
43. म० 2, 5 अत्रापि, अ० 1 अति अधिकम्
44. म० 1 निर्धूषित
45. अ० 2 अवस्थाने
46. म० 1-2 अ० 1-2 अनुतापो
47. म० 2, 5 अ० 1 वस्तुनावस्तु
48. म० 1-2 अ० 1-2 किन्तु नास्ति
49. अ० 1 पदं नास्ति
50. अ० 1 पदानीति
51. म० 1 म्बापत्ति
52. म० 1 अ० 1-2 क्तिः
53. म० 1-2 गुणगणना
54. अ० 2 मेलनत्वेऽपि
55. म० 2, 5 स्सत्त्व
56. म० 1-2 अ० 1-2 नाम अधिकम्
57. म० 2,5 आदि अधिकम्
58. म० 1 क्त्रः प्र०
59. म० 2 प्रकाशः
60. म० 1-2 अ० 1-2 प्रगणयति
61. म० 1 दीप्तो
62. म० 5 यथा वा
63. म० 1-2, अ० 1 हतौ, अ० 2 हता
64. म० 5 यथा वा
65. म० 1 अ० 1 लक्ष्मीम्

66. म० 1 दीप्तो
67. म० 5 यथा वा
68. अ० 1 शस्त्र
69. म० 1 च नास्ति
70. म० 5, अ० 1 दक्षिणो धृष्टश्शठ इति
71. म० 5 यथा वा
72. म० 1, 5 अ० 1 फाले
73. म० 5 स्थली
74. म० 1-2, 5 अ० 1 कस्तूर्या
75. अ० 1 भरै
76. म० 5 यथा वा
77. म० 2 अ० 2 च
78. म० 2 विदित
79. म० 1 गूढ अधिकम्
80. म० 5 यथा वा
81. आन्ध्रलिप्यां मुद्रितपुस्तके तदीये
82. म० 5 यथा वा
83. म० 1 जिह्मं
84. अ० 1 न च
85. म० 1 प्रहारयसि
86. म० 2 म० 5 नायकानां अधिकम्
87. म० 2 अ० 1 निपुण
88. म० 1 अ० 1 अ० 2 तु अधिकम्
89. म० 1 अथ नास्ति
90. अ० 2 सारिणी
91. म० 2 म० 5 सा नास्ति
92. म० 2 नित्यं सुला
93. म० 5 यथा वा
94. अ० 1 गुञ्जेषु
95. म० 1-2 म० 5 संस्थायिनीम्
96. म० 1 यथा नास्ति
97. अ० 2 रतौ
98. म० 5 भवतः नास्ति

99. म० 1 स्थितं
100. म० 5 चरितं
101. म० 1 किरणा
102. म० 1-2 अ० 1-2 च्छदान्
103. म० 2 निकरे
104. म० 1 अ० 2 मे का
105. अ० 1 यथा नास्ति
106. म० 1 यातु
107. म० 1 जीविकाया
108. म० 1 म० 5 वीत
109. म० 2 चैव
110. म० 5 रुदारिता
111. अ० 2 न्मारकाः
112. म० 1 कान्ते नास्ति
113. म० 2 भूषणा
114. म० 1 णादोषमुद्राः
115. म० 1 म० 2 म० 5 अ० 1-2 वाक्यमिदं नास्ति
116. म० 1-2 अभिपेदे
117. म० 5 अ० 1 वा नास्ति
118. अ० 2 र्बाहुं
119. म० 1-2, 5 अ० 1-2 च अधिकम्
120. म० 1-2, 5 अ० 1-2 निरूपयिष्यामः
121. म० 2 अ० 2 च अधिकम्
122. अ० 2 प्रपश्चितम्
123. अ० 2 प्रतारयते
124. म० 2, 5 इदानीं नास्ति
125. म० 1 अ० 1-2 गुण०
126. म० 2 मित्यादिनाप
127. म० 1-2, 5 अ० 1 कारस्य नास्ति
128. म० 2 न अधिकम्
129. म० 2 अ० 1 मिति नलोपाभावः
130. म० 1 प्रतिभेति नास्ति
131. म० 1 कारणा०

132. म० 2 पाणिनीयानि
133. म० 1-2 अ० 1-2 रथ नास्ति
134. म० 5 तुरगगज०
135. म० 1 विबोधः
136. म० 1-2 विचक्षया, अ० 1 काव्यविच्छिक्षया नास्ति
137. म० 1 निरन्तरं
138. म० 2 वा
139. म० 1 न्तरङ्गव्युत्पत्ति
140. म० 2, 5 अथ
141. अ० 2 इति अधिकम्
142. अ० 1 काव्यं
143. म० 1-2, 5 अ० 1 च अधिकम्
144. म० 1 वेदितव्यं
145. अ० 2 चेति च त्रिधा
146. म० 2,5 कार्यत्वेन
147. अ० 2 वा
148. म० 2 भावाः
149. अ० 1 वा अधिकम्
150. म० 1-2, 5 अ० 1 गुणेन द्रव्येण
151. म० 2 जनक
152. अ० 1 तस्य नास्ति
153. म० 2, 5 अ० 1-2 शब्दार्थ
154. म० 1 स्मृत्येव
155. अ० 2 न्तरे
156. अ० 1 नियतः नास्ति
157. म० 2, 5 इति अधिकम्
158. अ० 2 त्वर्थे
159. म० 1 शब्द नास्ति
160. अ० 2 निविष्टतया
161. म० 1-2, 5 अ० 1 किं नास्ति, अ० 2 वक्तव्यं। किं नास्ति।
162. म० 1 तदभावात्
163. म० 1-2, 5 अ० 1-2 वा नास्ति
164. म० 1-2, 5 अ० 1 इति वा नास्ति अ० 2 वा नास्ति

165. अ० 2 जनक
166. म० 1-2, 5 अ० 2 स्ववचन नास्ति
167. अ० 1 व्याघात्
168. म० 1 वाच्यभेदेन, म० 2, 5 अ० 2 वाच्यमुखेन
169. म० 2, 5 ग्रह नास्ति
170. म० 1 शब्दार्थः
171. म० 1 इति नास्ति
172. म० 1 अ० 1 वा नास्ति
173. अ० 1 वा नास्ति
174. म० 2 सा नास्ति
175. अ० 1 दोष नास्ति
176. म० 1, 5 अ० 1-2 शब्दार्थाः नास्ति
177. म० 1 प्रवृत्त्ययोग्यत्वात्
178. म० 1 रानन्त्यादि
179. म० 1 लिंगित
180. म० 1 सामान्यस्याकल्प्यस्य
181. म० 1 निकेत नास्ति
182. अ० 2 इत्यादौ
183. म० 1-2, 5 अ० 1-2 हि नास्ति
184. म० 1, 5 अ० 1-2 गवादयः
185. म० 1 तत्र अधिकम्
186. अ० 1-2, किन्तु नास्ति
187. म० 1-2, दिर्धर्मः
188. अ० 1 डित्थादिषूपा०
189. म० 2, 5 अ० 1-2 प्येकैकत्वा
190. म० 1 शुक्लस्य
191. म० 1-2, 5 अ० 1-2 तु नास्ति
192. म० 5 हि नास्ति
193. म० 1-2, 5 अ० 1-2 तदेवं
194. म० 2 अपि नास्ति
195. म० 5 अन्येऽप्युक्त
196. म० 1-2 अ० 1 पक्षेऽप्यपरि
197. म० 1 परितोषात्स

198. म० 1 अ० 1 जातिमेव
199. म० 1-2 अ० 1 इति नास्ति
200. अ० 1 निमित्ते
201. म० 1 निमित्तद्वैविध्या०
202. म० 2 सति अधिकम्
203. म० 2 शुक्लादिशब्दानां
204. म० 1- 2, 5 अ० 1-2 पच्यादीनां
205. म० 2 अ० 1 च नास्ति
206. म० 2-5, अपि अधिकम्
207. म० 2, 5 अ० 1 अपि अधिकम्
208. म० 2, 5 च नास्ति
209. म० 1 रूपा नास्ति
210. म० 1 प्रतीते
211. म० 2 श्रयत्व०
212. अ० 2 धर्मेण अधिकम्
213. अ० 2 धर्मेण नास्ति
214. म० 1-2, 5 क नास्ति
215. अ० 2 णेव
216. म० 1 धर्म०
217. अ० 1 र्धर्मा०
218. अ० 1 प्रतीयमानं नास्ति
219. अ० 1 द्व्यक्ति०
220. म० 1-2, 5 अ० 1-2 पूर्वं नास्ति
221. म० 1-2, 5 अ० 2 धर्म०
222. म० 1-2 न नास्ति
223. म० 1 आकृतिधर्मिकैव शब्दार्थ इति चेत् अधिकं
224. आन्ध्रलिप्यां मुद्रितपुस्तके कैक०
225. म० 1 निर्व्यापारतया
226. म० 1-2, 5 अ० 1-2 आकृते निर्व्यापाराया०
227. अ० 1 शब्दार्थ इति
228. अ० 1 कारकत्वं
229. अ० 2 रत्वादेर्व्या
230. म० 1 गमे अन०

231. अ० 1-2 पूर्वक्षणवर्तित्व०
232. म० 1 वा
233. अ० 1 न नास्ति, म० 1-2-5 रिति न
234. अ० 2 धर्मिकैव
235. अ० 2 प्रातिस्विकधर्मेणास्य
236. अ० 1 वा अधिकम्
237. अ० 1-2 शाब्द
238. म० 1 विशेष्य०
239. म० 1 पाभिव्यक्तिः
240. अ० 1 अत्र
241. अ० 1-2 स्वरूपं
242. म० 1-2, 5 परतन्त्रत्वम्
243. अ० 1 परतन्त्रत्वाच्छब्दा०
244. अ० 1-2 धर्मिभूत नास्ति
245. म० 2 दानुपपत्तिः
246. म० 1 व्यक्तेश्शाब्द०
247. अ० 1 मेवावसान०
248. म० 2 अपि नास्ति
249. म० 1-2 अ० 1 तद्धर्मं
250. म० 1 दिहात्र
251. म० 1-2, 5 अत्रा०
252. म० 5 अवर्जनीयस्तथा
253. अ० 1 शब्द नास्ति
254. अ० 2 चोद्यं परास्तम्
255. म० 1-2 चा
256. अ० 1-2 शाब्दमत
257. म० 2 शाब्दमतापेक्ष, म० 5 शाब्दमतिवदुत्प्रेक्ष म० 1 न शब्दवदुभयापेक्ष०
258. म० 2, 5 वा अधिकम्
259. म० 2 अ० 1 सिद्धे
260. अ० 1-2 वावतिष्ठते
261. म० 2 अवतिष्ठते
262. म० 1 अ० 1-2 अथ नास्ति
263. म० 1 व्यावृत्तिः

264. म० 2 काष्ठ०
265. अ० 1–2, म० 5 रविन्दे
266. म० 1 सर्वेऽपि रूढाः
267. म० 5 तत्र अधिकम्
268. अ० 2 यथा नास्ति
269. म० 1 म्भोधे
270. म० 1, 5 वर्णिनि
271. म० 1–2 अ० 1–2 शब्दा नास्ति
272. अ० 1 एव अधिकम्।



# ।। अथ तृतीयो लक्षणातरङ्गः ।।



एवं वाच्यवाचकतद्वृत्तीर्निरूप्य सम्प्रति तन्मूलकतया[1] लक्ष्य-लक्षक[2]तद्वृत्तीर्निरूपयितुमर्थज्ञानस्य शब्दज्ञानपूर्वकत्वात् पूर्वं शब्दं निरूपयति-

**योऽर्थं लक्षणया शब्दो बोधयेल्लक्षको ह्यसौ।। 1।।**

लक्षणया अर्थप्रतिपादकश्शब्दो लाक्षणिक इति लक्षणार्थः। लक्षणयेति वाचकादिव्यावृत्तिः।

ननु केयं लक्षणा? यद्योगाच्छब्दस्य लाक्षणिकतेत्यपेक्षायां लक्षणायाः सामान्यलक्षणमाह-

**वाच्यार्थबाधे तद्योगे रूढितो वा प्रयोजनात्।**
**ययान्यं बोधयेच्छब्दो व्यापृत्या सास्य लक्षणा।। 2।।**

अन्यमर्थम्। अस्य शब्दस्य। मुख्यार्थबाधः सम्बन्धः, प्रसिद्धि-प्रयोजनयोरन्यतरच्च, लक्षणाप्रयोजकानीत्यर्थः।

ननु किं शब्दस्य लक्षकत्वमर्थस्य वा। नाद्यः, तस्य स्वार्थप्रकाशनमात्रेणोपरतव्यापारस्य पुनर्व्यापारान्तरायोगात्। न द्वितीयः, अर्थस्य लक्षकत्वे शब्दव्यापारो लक्षणेत्यङ्गीकारविरोधाद्[3] इति चेत्, उच्यते[4]- वाच्यार्थव्यापार एव लक्षणा वाचके समारोप्यते। न च शब्दव्यापारताङ्गीकारविरोधः, आरोपितश्शब्दव्यापारो लक्षणेत्यभ्युपगमात्।

नन्वर्थस्यैव लक्षकत्वे कथमजहत्स्वार्थायां स्वार्थांशे[5] वृत्तिविरोधा-भावः। केवलसमुदायभेदेन लक्ष्यलक्षकभेदसद्भावादित्यवेहि।

नन्वर्थधर्मस्य शब्दाध्यारोपे किं निमित्तमिति चेत्, शब्दप्रतिपादित-स्यैवार्थस्य लक्षकत्वादिति वदामः। न हि शब्दव्यापारसंस्पर्शमन्तरेण अर्थोऽर्थान्तरं लक्षयितुमीष्टे। अन्यथा प्रमाणान्तरोपनीतानामर्थानां लक्षकत्व-

प्रसङ्गात्। अतोऽर्थव्यापारोऽपि शब्दमहिम्ना प्राप्तत्वाच्छब्दव्यापार इत्युच्यते। अत एव सान्तरार्थनिष्ठः शब्दव्यापारो लक्षणा इत्यभिधीयते[6]। वाच्यार्थबाध इत्यनेन वाच्यार्थस्वीकारे वाक्यप्रामाण्यानुपपत्तिर्विवक्ष्यते, न तु वाच्यस्य[7] वाक्यार्थेन[8] सम्बन्धानुपपत्तिः। नापि मुख्यार्थस्वीकारे प्रत्यक्षादिप्रमाणविरोधो वा[9] विवक्ष्यते।

अत एव तदुभयविवक्षया प्रवृत्तं कैश्चिदुक्तं लक्षणालक्षणद्वयम-व्याप्तिदूषितम्[10]। तथा हि-

**वाच्यस्यार्थस्य वाक्यार्थे सम्बन्धानुपपत्तितः।**
**तत्सम्बन्धवशप्राप्तस्यान्वयाल्लक्षणोच्यते।। 3।।**

इति यल्लक्षणं तदव्यापकम्। न हि 'विषं भुङ्क्ष्व' इत्यादौ[11] तल्लक्षणमस्ति। सर्वेषां पदानां लक्षकत्वेन वाच्यार्थाभावात्। यदपि[12]-

**मानान्तरविरोधे तु[13] मुख्यार्थस्य परिग्रहे।**
**मुख्यार्थेनाविनाभूते[14] प्रतीतिर्लक्षणोच्यते।। 4।।**

इति लक्षणालक्षणं[15] तदप्यव्यापकम्। कुण्डपायिनामयने 'मासमग्निहोत्रं जुहोति' इत्यत्रैतल्लक्षणस्य[16] अव्यापकत्वात्[17]। तथा हि 'यावज्जीवमग्निहोत्रं जुहोति' इत्यत्र अग्निहोत्रपदस्य नित्याग्निहोत्रनामत्वं[18] तत्प्रख्यनयेन[19] सिद्धम्[20]। अयं चाग्निहोत्रशब्दः कर्मान्तरे नित्याग्निहोत्रसाधर्म्यात् साध्यवसानलक्षणया[21] प्रवर्तत इति प्रकरणान्तरे 'प्रयोजनान्यत्वम्' इत्यत्र निर्णीतम्। न ह्यत्र मानान्तरविरोधः। तदर्थस्य प्रत्यक्षाद्यगोचरत्वात्। तस्मात् मुख्यार्थपरिग्रहे वाक्यप्रामाण्यानुपपत्तिरेव[22] लक्षणाबीजम्। उक्तं हि-

**वाक्यप्रामाण्यभङ्गस्स्यात् स्वाभिधेयपरे पदे।**
**लक्षणा तत्र विज्ञेया वाक्ये लौकिकवैदिके।। 5।।**

इति। अस्ति च 'गङ्गायां घोषः प्रतिवसति' 'आदित्यो[23] यूपः' इत्यादि-लौकिकवैदिकवाक्येषु मुख्यार्थमात्रपरत्वे[24] वाक्यप्रामाण्यानुपपत्तिः। यद्यपि तत्र वाक्यार्थान्वयानुपपत्तिरप्यस्ति[25], तथापि[26] लोके[27]-

**सुवर्णपुष्पां पृथिवीं चिन्वन्ति[28] पुरुषास्त्रयः।**
**शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम्।। 6।।**

इत्यादौ पदार्थानामन्वयसम्भवेऽपि निष्प्रयोजने तात्पर्यासम्भवेन वाक्य-प्रामाण्यानुपपत्तेः, प्रतीयमानवाक्यार्थं हित्वा शूरादित्वं सम्पदो हेतुरिति ध्वनिना सूच्यते। वेदे च 'वायुर्वै क्षेपिष्ठा देवता' (य० सं० 2-1-1) इत्यादौ सम्भवत्येव वाच्यार्थान्वये नैरर्थक्यवशेन देवताप्राशस्त्यलक्षणया कर्मणः प्राशस्त्यं लक्ष्यत इत्यर्थवादाधिकरणे निर्णीतम्। तस्माद् वाक्य-प्रामाण्यानुपपत्तिरेव[29] लक्षणाक्षेपिकेति सूक्तम्।

तद्योग इति योगशब्देन सम्बन्धमात्रं विवक्षितम्। प्रयोजनं च यथा-सम्भवं तत्र तत्र द्रष्टव्यम्। अत्र रूढितो वा प्रयोजनाद् इत्येतल्लक्षणाविभाग-परम्। शिष्टं लक्षणपरमिति ज्ञेयम्।

तत्र रूढिलक्षणा यथा-

प्रवीणो भवतो राम कृपाणो युधि यन्निजम्।
कोशं चर्ममयं हित्वाऽगृह्णाद्रत्नमयं द्विषाम्।। 7।।

अत्र प्रवीण इत्यत्र वीणाप्रकर्षस्य प्रकृतानुपयोगाद् रूढितः प्रसिद्धेरेव निपुणत्वे लक्षणाऽऽश्रीयते।

प्रयोजनलक्षणा तु प्रथमं शुद्धा सारोपा साध्यवसाना चेति त्रिविधा[30]। तत्राद्या जहत्स्वार्था अजहत्स्वार्था जहदजहत्स्वार्था चेति त्रिविधा[31]। इतरे तु प्रत्येकं गौणी शुद्धा चेति द्विविधे इति फलतो लक्षणा[32] सप्तविधा[33] इति विभागं सिद्धवत्कृत्य[34] क्रमेण तासां लक्षणोदाहरणे दर्शयन् आदौ जहत्स्वार्थां लक्षयति[35] -

**स्वार्थं हित्वा परोक्तिश्चेज्जहत्स्वार्था तदा भवेत्।। 8।।**

यदा गङ्गादिशब्दः परस्य तटादेर्घोषाद्यधिकरणत्वसिद्धये स्वार्थं हित्वा स्वात्मानं तटाद्यर्थे प्रवर्तयति तदा स्वार्थत्यागात् जहत्स्वार्था अन्वर्थसंज्ञेत्यर्थः। यथा-

ग्रामास्त्रयस्स्वरहिताः क्व धृतास्सदैव
श्राव्याश्च मध्यमयुता भरतेन दाताः[36]।
रामेण तून्नतधनाश्शतशो महार्हाः
प्रेक्ष्याश्च पात्रवशगा निहिता नदीषु।। 9।।

**भरतेन सङ्गीतशास्त्र[37]प्रवर्तकेन, ग्रामाः स्वरसन्दोहात्मकाः,**

**तथा स्वराणां सन्दोहो ग्राम इत्यभिधीयते।**

इत्युक्तत्वात्। दाताः[38] शोधिताः – दैप् शोधने इति धातो रूपम्[39]। [40]अत्र शब्दश्लेषमहिम्ना भरतेन राजविशेषेण जनपदविशेषा वितीर्णा इत्यपि ध्वन्यते। ते च त्रय एव।

**षड्जग्रामस्तथैवैको मध्यमग्राम एव च।**

**गान्धारग्राम इत्येतद् ग्रामत्रयमुदाहृतम्।। 10।।**

इत्युक्तत्वात्[41]। नापरिमिता इत्य[42]पि ध्वन्यते। स्वरहिताः[43] स्वैर्निषादादिभिः सङ्गीभूतैर्हिताः प्रिया इति स्वरूपकथनम्। स्वैर्धनै रहिता इति निन्दा च व्यज्यते। क्व धृताः क्वापि धृताः। स्वराणामभिव्यक्तिमात्रशरीरत्वात् नैकत्र धृता इति स्वभावोक्तिः[44]। यत्र क्वचन देशे सम्प्रदाने च[45] निहिता इति निन्दा च व्यज्यते। सदैव श्राव्या नित्यं श्रोत्रग्राह्या इति स्वभावोक्तिः। अन्यत्र[46] ग्रामा दत्ता इति नित्यं वाङ्मात्रसिद्धाः, न तु दर्शनयोग्या इति निन्दा च[47] व्यज्यते। किञ्च मध्यमयुता मध्यमग्रामेण सङ्गताः। अन्यत्र न त्रयोऽप्युत्कृष्टा इति[48] ध्वन्यते[49]। एवं भरतदत्तग्रामेभ्यो रामदत्तग्रामाणामतिशय उत्तरार्धे प्रतिपादितः स्फुट एव। अत एवात्र[50] शब्दार्थश्लेषप्रतिभोत्थापितातिशयोक्त्य[51]नुप्राणितो व्यतिरेकालङ्कारः।

अत्र नदीनां स्रोतोरूपाणां ग्रामाधिकरणता न सम्भवतीति नदीशब्दस्तस्मिन्मुख्यार्थे गृहीते वाक्यप्रामाण्यभङ्गात् तं त्यक्त्वा अधिकतरशैत्यपावनत्वादिद्योतनाय तत्सम्बन्धिनि तीरे स्वात्मानमर्पयतीतीयं जहत्स्वार्था।

इयमप्रस्तुतप्रशंसादेरलङ्कारस्य मूलम्। सामान्यविशेषकार्यकारणसरूपाणामन्यतमस्याप्रस्तुतस्य[52] कथनात् तेषामेव अन्यतमस्य प्रतियोगिनः प्रस्तुतस्य गम्यत्वे ह्यप्रस्तुतप्रशंसा। तत्र[53] अप्रस्तुतस्य[54] अप्रस्तुतत्वादेव कथनमनुपपन्नं सत् स्वार्थत्यागेन प्रस्तुतमाक्षिपतीति युक्तमस्या जहल्लक्षणामूलत्वम्।

यदा पुनः स्वाभिधेयविपरीतमर्थं लक्षयति तदा सा जहत्स्वार्थैव विपरीतलक्षणेत्युच्यते। यथा–

रामस्सुरासुरदुरासददुर्गवर्ती
दैत्यः परार्धचतुरङ्गचमूसहायः[55]।
जय्यः कथं वद विभीषण रावणेन
स्थानच्युतेन मनुजेन पदातिना च।। 11।।

इदमिन्द्रजिद्वचनमभि[56]धेयविपरीतमर्थं[57] लक्षयति। रामरावणयो-र्मुख्यार्थासम्भवोऽनुपपत्तिः। विरोधस्सम्बन्धः। रामस्य सुजयत्वं[58] रावणस्य दुर्जयत्वं[59] च प्रयोजनम्।

इयं तु व्याजस्तुतेर्बीजम्। यत्र वाच्यया निन्दया स्तुतिः स्तुत्या वाच्यया[60] निन्दा[61] च[62] गम्यते सा हि व्याजस्तुतिः। तत्र विपरीतार्थप्रतिपत्ति-र्विरुद्धलक्षणामूलैव।

अजहत्स्वार्थां[63] लक्षयति-

**शब्दस्स्वार्थक्रियासिद्ध्यै स्वार्थात्यागेन लक्षयेत्।**
**अर्थान्तरं स्वार्थयुतमजहत्स्वार्थिका भवेत्।। 12।।**

यत्र शब्देन स्वार्थगतक्रियासिद्धये स्वार्थात्यागेनैव[64] तद्विशिष्टमर्थान्तरं लक्ष्यते,[65] यथा 'कुन्ताः प्रविशन्ति' इत्यत्र कुन्तप्रवेशाय तद्वन्तः पुरुषाः[66], सा अजहत्स्वार्था लक्षणा इत्यर्थः। यथा-

दयादाक्षिण्यदातृत्वधैर्यधर्मादयो गुणाः।
विशन्ति भवतो राम सुधर्मासन्निभां सभाम्।। 13।।

अत्र दयादिगुणानां[67] स्वतस्सभाप्रवेशासम्भवात् तत्सिद्धये दयादि-शब्दाः स्वार्थोपादानेनैव तत्सम्बन्धिनः पुरुषान् लक्षयन्ति।

न च शब्दस्य[68] स्वार्थापरित्यागे तत्रांशेऽभिधा[69] अंशान्तरे लक्षणा चेत्येकस्य शब्दस्य[70] एकदैव वृत्तिद्वयापत्तिरिति वाच्यम्। अत्रापि[71] स्वार्थं हित्वैव स्वार्थविशिष्टेऽर्थान्तरे सृष्टिन्यायेन लक्षणास्वीकारात्। हन्त! तर्हि अजहत्स्वार्थता[72] कथमिति चेत्, न ह्यभिधात्यागमात्रेण स्वार्थत्यागः 'गङ्गायां घोषः' इत्यादिस्थलवैलक्षण्येन स्वाभिहितार्थमेव अर्थान्तरवैशिष्ट्येन विकृत्य पुन[73]र्लक्षणया स्वीकारा[74]दिति सन्तोष्टव्यम्। सभासदामुत्कर्षद्योतनं प्रयोजनम्।

इयमजहल्लक्षणा समासोक्त्यादेर्बीजम्। प्रस्तुतविशेषणसाम्याद् अप्रस्तुतस्य गम्यत्वे हि समासोक्तिः। तत्र प्रस्तुतस्वरूपानुपमर्देनैव[75] विशेषण-महिम्ना अप्रस्तुताक्षेपात्[76]। अनयोर्जहदजहत्स्वार्थलक्षणयोर्लक्षणलक्षणो-पादानलक्षणेति संज्ञां विनिवेश्य[77] व्याजहार[78] काव्यप्रकाशकारः[79]।

जहदजहल्लक्षणां लक्षयति-

**अंशभेदमुपादाय जहाति न जहाति च[80]।**
**शब्दस्स्वार्थं यदि जहदजहत्स्वार्थलक्षणा[81] ।। 14।।**

यथा –

समुद्रकन्यासमुपासितो यो वैकुण्ठलोके वसतिं वितेने।
सोऽयं हरिस्सम्प्रति रामनामा सीतासमेतोऽधिवसत्ययोध्याम्।। 15।।

अत्र यद्देशकालवैशिष्ट्यं हरेः पूर्वमभूत् तद्देशकालवैशिष्ट्यमधुना नास्तीति सोऽयमित्यत्र तत्तांशे स्वार्थं जहाति। इदन्तांशे तु[82] न जहाति इतीयं जहदजहत्स्वार्था लक्षणा[83]।

ननु[84] एवं सति इयं लक्षणा पदद्वयधर्म इत्युक्तं स्यात्- तदसाधु। अभिधावत् तस्या अपि एकपदधर्मत्वेन पदसंघातधर्मतया[85] क्वाप्यदर्शनात्। अत एव काव्यप्रकाशकारो[86] नैतामुदाजहार, नाप्यन्यः परीक्षक इति नेयं सम्भवतीति[87] चेत्,

अत्र ब्रूमः। किमिह लक्षणैव नास्तीति विवक्षया परेण नोदाहृता सत्यपि उक्तविधाद्वय[88] एव अन्तर्भवतीति वा। नाद्यः, विचारासहत्वात्। तथा हि – यावता शब्देन यावानर्थः प्रतीयते तावानेव तस्यार्थो न न्यूनो नाधिकश्चेति स्थितिः। सोऽयं देवदत्त इत्यत्र तत्तेदन्ताविशिष्टं देवदत्तस्वरूपमवभासत इति तावदेवार्थः। तत्र तत्तांशबाधे न्यूनमिदमस्वार्थ इति कथमनेनाभिधीयेत[89]। [90]प्रतीयमानं च तद्यया कयाचन वृत्त्या प्रतिपादनीयम्। तेन तत्रोपलक्षित-मिदन्ताघटितमेव देवदत्तस्वरूपमभिधाकुण्ठनाल्लक्षणया बोध्यमिति अकामेनाप्यभ्युपगन्तव्यमेव[91][92] इति कथमत्र नास्ति लक्षणा। नापि द्वितीयः[93]। न तावदियं जहत्स्वार्था। इयं हि तत्तांशमात्रमेव[94] जहाति। न तु लक्षणलक्षणावत् परार्थं स्वार्थं सकलमपि[95] समर्पयति[96]। नाप्यजहत्स्वार्था।

स्वसिद्धये पराक्षेपाभावात्। किन्तु स्वार्थस्यैव अंशभेदेन हानाहानाभ्या-मुभयवैलक्षण्यात् कोट्यन्तरमिति अन्यैर्वेयं[97] जहदजहल्लक्षणा।

दृश्यते च लोकवेदयोः 'अर्धमन्तर्वेद्यर्धम्बहिर्वेदि' 'विषं भुङ्क्ष्व' इत्यादौ पदसंघातलक्षणा। ब्रह्मवादिनश्च एतामेवोपजीव्य महावाक्यार्थं व्यवस्थापयन्ति। इयांस्तु विशेषः। आलङ्कारिकास्तावत् तत्तांशस्येदानीम-सम्भवात् तस्यैव हानमिदन्तांशस्य[98] इदानीं सम्भवाद् अहानमिति जहदजहत्स्वार्थामाचक्षते।[99] वेदान्तिनस्तु दृष्टान्तदार्ष्टान्तिकयोरैकरूप्याय 'सोऽयं देवदत्तः' इत्यत्रापि तत्तेदन्तांशयोरन्योन्यविरुद्धयोरपि[100] त्यागेन अविरुद्धस्वरूपमात्रापरित्यागेन च द्वयोपलक्षितं स्वरूपमात्रं लक्ष्यत इति जहदजहत्स्वार्थां व्युत्पाद्य तत्त्वमसीत्यादिमहावाक्येऽपि तत्त्वंपदार्थ-[101]गतविरुद्धांशत्यागेन अविरुद्धचिन्मात्रोपादानेन च उभयोपलक्षितमेकमखण्डं वस्तु भागत्यागलक्षणया प्रतिपाद्यत इति वर्णयन्ति।

ननु आलङ्कारिकोक्तमार्गेण पूर्वकालोपलक्षितस्य एतत्कालवैशिष्ट्य-वर्णनेऽपि सम्भवत्येव तयोरभेदप्रतिपादनम्[102] इति चेत्, मैवम्[103]। किं[104] पूर्वकालोपलक्षितस्य एतत्कालविशिष्टेन अभेदः प्रतिपाद्यत इत्युच्यते, किं पूर्वकालोपलक्षितस्य वर्तमानकालवैशिष्ट्यलक्षणधर्मप्रतिपादनेन अर्थादभेद-स्सिध्यतीति[105]। नाद्यः, विशिष्टस्वरूपयोरभेदासम्भवात्। तथा सति वर्तमानकालविशिष्टस्य[106] प्रागपि सद्भावप्रसङ्गात्। नापि द्वितीयः। साक्षादेवाभेदप्रतिपादने[107] सम्भवति परम्परया तत्प्रतिपादनाश्रयणस्य अयुक्तत्वात्। उभयपदलक्षणाश्रयणे कल्पनागौरवात् तदाश्रियत इति चेत्, मैवम्। परम्परयाऽभेदप्रतिपादनात् साक्षादभेदप्रतिपादने बुद्धिलाघवस्य दर्शितत्वात्। तथापि विनिगमनायां को हेतुरिति चेत्, बुभुत्सितार्थस्य साक्षात्प्रतिपादनलाभ एवेति ब्रूमः। एवं वेदान्तिवर्णितमार्गेण पदद्वयलक्षणा-पक्षावलम्बनेऽपि आलङ्कारिकमते जहदजहल्लक्षणा सिद्ध्यत्येवेति परेषां तदनुदाहरणमज्ञानविलसितमेव।

एतास्तिस्रोऽपि शुद्धा एव, उपचारेणामिश्रितत्वात्।

उपचारो नाम गुणयोगः। तदभावादेवासां शुद्धत्वम्। भिन्नत्वेन

प्रतीयमानयोरैक्यारोपणमुपचार इत्युक्ते सिंहोऽयमिति वक्ष्यमाणे साध्यवसानाप्रभेदे गौणे विषयस्य विषयिनिगीर्णत्वेन भिन्नत्वेन[108] प्रतीत्यभावात् तत्रापि शुद्धात्वमेव[109] स्यात्।

ननु प्राभाकराः सर्वत्र जातिशब्दार्थवादिनोऽपि 'व्रीहीन् प्रोक्षति' इत्यादौ उद्देश्यस्थले व्यक्तिलक्षणामाहुः। सा कुत्रान्तर्भवतीति चेत्, अज्ञान एवान्तर्भवतीति वदामः। न ह्यत्र लक्षणाप्रयोजकं रूढिप्रयोजनयोरन्यतरत् सम्भवति। तर्हि प्रोक्षणश्रुतेः का गतिरिति चेत्, तत्र जातेः प्रोक्षणसंस्कारान्वयानुपपत्त्या व्यक्तिरविनाभाविन्याक्षिप्यते जात्या। यथा – भूयतामित्यत्र कर्ता पश्यतीत्यत्र[110] कर्म क्रियया आक्षिप्यते। यथा वा[111] ग्राममित्यत्र कर्मकारकेण गच्छेति क्रिया आक्षिप्यते। एवम् अर्थापत्तिमहिम्नापि तत्र तत्र पदार्थप्रतीतिर्द्रष्टव्या[112]। रूढिप्रयोजनं विना कुत्रापि लक्षणाया अप्रवृत्तेः। अन्यथा अतिप्रसङ्गादिति[113] सन्तोष्टव्यम्। अत्रायं[114] लक्षणासङ्ग्रहः[115] –

स्वार्थत्यागे समानेऽपि सह तेनान्यलक्षणा[116]।  
यत्रेयमजहत्स्वार्था जहत्स्वार्था च तं विना।। 16।।  
स्वार्थैकांशत्यागादंशान्तरमेव लक्ष्यते यत्र।  
सा जहदजहत्स्वार्था तत्त्वमसीत्यादिविषयदृश्येयम्।। 17।। इति।  
(एकावली – त०)

एवं शुद्धां त्रिविधां निरूप्य सारोपाया लक्षणं विभागं चाह–

सामानाधिकरण्येन भेदस्यापह्नवं विना।  
विषयारोप्ययोरुक्तौ[117] सारोपा सा द्विधा[118] मता।। 18।।

आरोप्यमाणारोपविषयौ यदा अनपह्नुतभेदौ सामानाधिकरण्येन निर्दिश्येते तदा सारोपेत्यर्थः। एतेन साध्यवसानातो भेद उक्तः। इयं[119] तु द्विविधा–शुद्धा गौणी चेति। तत्र गौणी गुणसादृश्यनिमित्ता। शुद्धा तु सादृश्येतरकार्यकारणभावादिसम्बन्धनिबन्धना[120]।

एतेन लक्षणायाः पृथग्भूता गौणीवृत्तिरिति तान्त्रिकसमयः परास्तो वेदितव्यः। तथा हि प्राभाकरास्तावदाहुः। लक्षणातो गौणस्यायं भेदः। गौणे हि पदप्रयोगादेव गुणोपेते तात्पर्यम्। लक्षणायां तु पदार्थोपलब्धे[121] सम्बन्धिनि

[122]पदतात्पर्यमिति। नन्वयमेव भेदो नोपपद्यते। यथा[123] लक्षणायां सम्बन्धिसम्बन्धयोः स्मृतयोरपि सम्बन्धिमात्रेऽन्वितेऽर्थे[124] वाक्य-तात्पर्यमवधार्यते तथा गौणेऽपि[125] मुख्यस्यानन्वयात् सदृशसादृश्ययोः स्मृतयोरपि सदृशमात्र एव तात्पर्यमवगम्यतामिति चेत्, मैवम्। अग्निशब्दात् स्वार्थे स्मृतिस्ततस्तस्यानुपपत्तिविमर्शात् तस्मात्स्वार्थात् स्वसदृशे[126]ऽर्थान्तरे स्मृतिः – सदृशस्मृतिश्च सादृश्यव्यतिरेकेण नास्तीति सादृश्यस्मृतिश्चास्त्येव। तत्र[127] न तावत् सदृशमात्रे तात्पर्यम्। पदान्तरेणोपात्ततया पौनरुक्त्यापत्तेः। नापि सादृश्यमात्रे, समानाधिकरणपद[128]प्रयोगानुपपत्तेः।[129] अतः सादृश्यविशिष्टसदृशस्मृत्या तत्रैव वाक्यतात्पर्यम्। सा तु समानाधिकरण-पदप्रयोगबलादेव। [130]अतो गौणे सादृश्यविशिष्टान्वितेऽर्थे वाक्यतात्पर्य-ज्ञानसमय एव पदस्योपयोगः। लक्षणायां त्वपेक्षाक्रमवशेन[131] सम्बन्धि-मात्रा[132]न्वितेऽर्थे[133] वाक्यतात्पर्यात् सम्बन्धिमात्रे प[134]दतात्पर्यम्। न सम्बन्धोपेते। प्रतिवसतीत्यनेन अन्वययोगोऽपि न सम्बन्धविशिष्टे। सम्बन्धिप्रतीत्यर्थस्य तस्य तत्प्रतीतिमात्रार्थस्य वाक्यतात्पर्यपूर्वकपदतात्पर्यान्तर्भावे मानाभावादिति न पदप्रयोगापेक्षा तत्र। यत्रापि गौणे[135] पदप्रयोगो नास्ति 'अग्निरधीते' इत्यादौ तत्रापि सादृश्योपेत एव पदतात्पर्यम्। पदप्रयोगसहितस्थले तथैव तात्पर्यावधारणात्। यथा काम्ये कामिनि योज्यान्वयबलादपूर्वे लिङ्गादेस्तात्पर्यमिति नित्येऽपि तथा।

ननु यदि लक्षणायां वाक्यतात्पर्यज्ञानसमये न पदप्रयोगापेक्षा कथं तर्हि[136] तत्र पदप्रयोगधीरिति चेत्– वाक्यतात्पर्यप्रतीत्यैव हि[137] पश्चात्तत्र पदप्रयोगधीः संभूयकारिताव्युत्पत्तेः। यत एवं गौणे पद[138]प्रयोगतात्पर्य-निरूपणपूर्वकमेव विशिष्टेऽर्थे वाक्यतात्पर्याद् विशिष्यान्वयपरत्वं पदस्य। लक्षणायान्तु पदप्रयोगनिरपेक्षमेव वा[139]क्यतात्पर्ये ज्ञाते पश्चात्तत्र पदप्रयोगधीः। अत एव जघन्यत्वं गौणात् लक्षणाया इति वृत्तित्रयं सिद्धम् इति।

आचार्याः पुनः 'अग्निर्माणवकः' इत्यत्र अग्निगतपैङ्गल्यादिगुण-सादृश्यात् माणवके अग्नि[140]शब्दप्रवृत्तिरिति गौणी नाम वृत्त्यन्तरमुररीचक्रिरे। तथा चोक्तम्–

अग्नित्वलक्षितादर्थाद्यत्पैङ्गल्यादि गम्यते।
तेन माणवके बुद्धिस्सादृश्याद्[141]दुपजायते।। 19।।

इति तान् पृच्छामः[142]। सम्बन्धानुपपत्तिप्रयोजनानि खलु लक्षणाबीजानि[143]। तानि इहापि सन्ति किम्[144]। न सन्ति वा। आद्ये किमपराद्धं तत्र लक्षणाव्यवहारेण। न द्वितीयः, तेषां दुरपह्नवत्वात्। नन्वत्र सम्बन्धो दुर्निरूपः। कस्तवा[145]भिप्रायः? अभिधेयाविनाभावो न सम्भवतीति चेत्- मा सम्भवतु। सादृश्यन्तु[146] भविष्यति। न हि स एव सम्बन्धो लक्षणोपयोगीति निर्बन्धः। कार्यकारणभावादेरपि सम्ब[147]न्धस्य वक्ष्यमाणत्वात्। प्रयोजनं च[148] ताद्रूप्यप्रतिपत्तिः। एवञ्च सति अन्वयानुपपत्त्या परत्र परशब्दप्रयोगसाम्ये विद्यमानेऽपि यत्किञ्चिदवान्तरवैषम्यावलम्बनेन पदार्थजातिभेदाङ्गीकारे अतिप्रसङ्गस्स्यादिति यत्किञ्चिदेतदिति[149]।

द्वयी[150]मुदाहरति। यथा-

छिन्नेन्द्रारिशिरोरसार्द्रवटकैस्तत्कन्धरोच्चैरसृ-
ग्धारातैलघृतैस्तवासिरगदङ्कारस्समृद्धो बभौ।
किं ब्रूमो रघुराम वीर शुचिना दक्षेण येनाद्भुतं
दुर्वारो दशकन्धरः प्रशमितस्त्रैलोक्य[151]तापज्वरः।। 20।।

अत्र पूर्वार्धे अगदङ्कारशब्देन लक्ष्यमाणरसौषधवटकतैलघृत-सम्पत्तिज्वरनिवर्तकत्वादिवैद्यगतगुणसादृश्यनिमित्ता लक्षणा गौणी। यथाहुः-

अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते।
लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता।। 21।।
(त० वा० 3-4-12)

इति गुणाश्च स्वपरसाधारण्येन लक्षणीयाः। अन्यथा स्वार्थगताना-मर्थान्तरप्रवृत्तिनिमित्तत्वे वैयधिकरण्यदोषः। परगतानां तु स्वार्थासम्बद्धानां[152] लक्ष्यत्वानुपपत्तिः। साधारण्ये तु न कश्चिद्दोषः। उत्तरार्धे तापहेतौ दशकन्धरे तापज्वर[153]शब्दस्य प्रवृत्तिनिमि[154]त्तं कार्यकारणभावसम्बन्ध इति शुद्धा लक्षणा। उभयत्रापि विषयनिगरणाभावात् सारोपता। खड्गे रावणे च क्रमाद् वैद्यत्वेन तापज्वरत्वेन च[155] प्रतीतिः प्रयोजनम्[156]।

इयं द्विविधापि रूपकादेर्बीजम्। 'मुखं चन्द्रो' 'नेत्रानन्दश्चन्द्र' इति च उभयमूलत्वेनापि रूपकस्योत्थितेः।

उपचारश्च [157] कार्यकारणभावतादर्थ्यस्वस्वामिभावावयवावयविभाव- तात्कर्म्य[158]रूपनिमित्तानां पाञ्चविध्येन पञ्चधा भवति। तत्राद्य उदाहृतः। तादर्थ्येन यथा - इन्द्रार्थाः स्थूणा इन्द्रः[159]। स्वस्वामिभावेन यथा - राजकीयः पुरुषो राजा। अवयवावयविभावेन यथा- अग्रहस्तो[160] हस्तः। तात्कर्म्येण[161] यथा- अतक्षा तक्षा। एषु क्रमाद् इष्टप्रदत्वानुल्लङ्घ्यत्वसामर्थ्यकौशल-[162] विशेषाः प्रयोजनानि व्यङ्ग्यानि।

साध्यवसानां लक्षयति-

**निगीर्णो विषयोऽन्येन यदि साध्यवसानिका।**

**सा पूर्ववद्द्विधा तेन लक्षणास्सप्त लक्षिताः।। 22।।**

अन्येन विषयिणा,[163] विषयनिगरणेन अभेदप्रतिपत्तिरध्यवसायः। तेन सहिता साध्यवसाना। तत्राद्या यथा - 'अयं कामधेनुः' इत्यत्र अनवरत- विरतणशीलत्वगुणसादृश्याद् रामे कामधेनुरूपताध्यवसानम्। सर्वथैव अभिन्नत्वप्रतीतिः प्रयोजनम्। द्वितीया यथा- 'अयमभ्युदयो लोकानाम्' इत्यत्र[164] अभ्युदयहेतुत्वाद् रामे अभ्युदयशब्दप्रवृत्तिः। अव्यभिचारेण कार्यनिष्पादकत्वमिहापि प्रयोजनम्। अत्रोभयत्रापि अयं शब्दो[165] न रामाख्यविषयपरामर्शी। तदा सारोप[166]त्वप्रसङ्गात्। किन्तु तद्गतेदन्तामात्रं परामर्शविषयिणीमारोप्यमाणां कामधेनुमेव पुरोवर्त्यभेदाध्यवसायेन इदन्तया विशिनष्टि। तद्विशिष्टा च विषयिणी कामधेनुर्निगीर्णविषयतया स्वतादात्म्येन प्रतीयते। एवमयमभ्युदय इत्यत्राप्यूह्यम्।

इयमतिशयोक्तेर्बीजम्। अध्यवसितप्राधान्ये[167]ऽतिशयोक्तिरिति लक्षणात्[168]

सप्तेति। जहल्लक्षणा अजहल्लक्षणा जहदजहल्लक्षणा शुद्धसारोपा शुद्धसाध्यवसाना चेति पञ्च शुद्धाः। गौणसारोपा[169] गौणसाध्यवसाना चेति द्वे गौण्यौ। तयोर्गुणयोगादेव शुद्धाभ्यो भेदः। शुद्धत्वं च तासामगौणत्वमेव। आरोपाध्यवसानाभ्यामेव गौण्योर्मिथो भेदः। सारोपासाध्यवसानयोः

शुद्धयोश्च[170] ताभ्यामेव अन्योन्यभेदः। जहदादिशुद्धाभ्यस्तु[171] कार्यकारण-भावादिसम्बन्धनिबन्धनोपचाराद् भेद इति न कुत्रापि साङ्कर्यशङ्कावकाशः।

एवं फलतो लक्षणायास्सप्तविधाया अपि त्रिविधसङ्करेण एकविध-संसृष्ट्या च मेलने[172] प्रत्येकं चातुर्विध्येन अष्टाविंशतिभेदा भवन्ति। शुद्धभेदैरपि मेलने[173] सप्ताधिक्यात् पुनः पञ्चत्रिंशत्प्रकाराः। स्वप्रभेदैश्च सङ्कलने तु[174] संख्यातुमेव न शक्यन्ते तत्प्रकाराः।

यथाहुः[175] –

सङ्करेण त्रिरूपेण संसृष्ट्या चैकरूपया[176]।
अस्यास्सङ्कलनेऽन्योऽन्यमष्टाविंशतिरीरिताः[177]।। 23।।
पञ्चत्रिंशत्समाख्याताश्शुद्धभेदैस्समं पुनः[178]।
स्वैः प्रभेदैरलङ्कारैर्ध्वनिभेदैश्च सङ्गताः (ता)।। 24।।
वितन्वन्ति( ती ) चमत्कारं संख्यामत्सरिणी मता।। 25।।

(एकावली)

इति। शुद्धभेदैरसङ्कलितभेदैः स्वैः प्रभेदैः लक्षणाभेदैः[179] संख्यामत्सरिणी[180] असंख्या इत्यर्थः।

सङ्करश्च अङ्गाङ्गिभावेन संशयेन एकलक्षकानुप्रवेशेन[181] चेति त्रिरूपः।

तत्राद्यो यथा–

संवर्धयन्तं निजजीवनेन शुचिं सदा बाडवमम्बुराशिम्[182]।
विनाश्य रामस्य शरस्त्रपावान्निषङ्गगर्भं निभृतोऽधिशेते।। 26।।

जीवनेन जलेन प्राणेन च। शुचि बाडवं बडवाग्निं, शुद्धब्राह्मणं च। अत्र जीवनादिशब्दश्लेषमूलकाभेदाध्यवसायेन[183] सागरः स्वप्राणेन शुद्धब्राह्मणपोषक इति प्रतीयते[184]। तद्विनाशनरूपानुचितकर्माचरण-जनितलज्जा[185][186] रामशरस्य निषङ्गकोटरशयने हेतुतया उत्प्रेक्ष्यते। सा च वाचकपदाभावाद् गम्येति श्लेषातिशयोक्त्युत्प्रेक्षाणां सङ्करः। लज्जायाः क्वचिच्छयनहेतुंत्वेन तच्छेषतया तदङ्गत्वम्। लज्जानिद्रयोश्चेतनधर्मयो-रचेतने रामबाणेऽसम्भवात् लज्जाशब्देन तत्कार्यभूता समुद्रान्तरंशोषण-

रूपानुचितकर्मान्तराचरणा[187]न्निवृत्तिर्लक्ष्यते। लज्जितो हि निवर्तते। शयनशब्देन च तत्कार्यं निर्व्यापारत्वं लक्ष्यते[188]। शयितो न व्याप्रियते इत्युक्तरीत्या अनयोर्लक्षणयोरङ्गाङ्गिभावेन सङ्करः।

संशयेन यथा–

सचेतना काञ्चनपु[189]त्रिका वा शरीरिणी मन्मथचातुरी वा।
सौदामिनी स्थैर्यवती किमेषा का वा न जाने रघुवीरपार्श्वे।। 27।।

अत्र काञ्चनपुत्रिकेत्यादौ कमनीयकान्तिगुणयोगात् सादृश्यगु[190]णनिमित्ता गौणी लक्षणा इति तावदविवादम्। तत्र एषेति सर्वनाम्न इदन्ता–[191] (एतत्ता) विशिष्टसीतारूपविशेष्यनिष्ठत्वे विषयानिगरणाद् अग्निर्माणवक इतिवत् सारोपा स्यात्। इदन्ता–[192](एतत्ता)मात्रनिष्ठत्वे तु[193] विषयनिगरणाद् अयमग्निरितिवत् साध्यवसाना[194] स्यात्। अत्र अन्यतरनिश्चायकाभावेन ए[195]षैत्येकस्मिन्[196] सन्देहज्ञाने[197] विषयतया सङ्कीर्यमाणत्वात् सन्देहसङ्कर इत्यर्थः।

एकलक्षकानुप्रवेशेन यथा–

संवर्तावसरप्रसारिदिनकृत्सर्वस्वपाटच्चरो
दैत्यध्वान्तहरः प्रतापतपनो रामस्य कोऽप्युद्भवन्।[198]
भूमिं द्यामपि कौशिकोत्सववतीं चक्रेऽद्भुतं वर्धयन्
तारानेतरि[199] नूतनीं श्रिय[200]मधात्पौरस्त्यदेशे तमः।। 28।।

कोऽपि अलौकिकः। अलौकिकत्वमेवाह त्रिभिर्विशेषणैः। भूमिं कौशिकोत्सववतीं विश्वामित्रोन्न[201]तयज्ञवतीं, द्यां स्वर्गं, कौशिकोत्सववतीम् इन्द्रप्रहर्ष[202]वतीं, प्रसिद्धतपनोदये कौशिकानां घूकानाम्[203] उत्सवो नास्ति। अस्मिंस्तु न तथेति भावः। तारानेतरि सुग्रीवे चन्द्रे च प्रसिद्धतपनस्तारापतौ श्रियं हरति अयन्तु वर्धयति। प्रसिद्धसूर्यस्तु[204] पौरस्त्यदेशे पूर्वदिग्भागे तमो हरति। अयं तु रलयोरभेदात् पौलस्त्यदेशे तत्करोतीति सर्वत्र[205] श्लेषानुप्राणितौ व्यतिरेकविरोधाभासौ। अत्र पाटच्चरः प्रतापतपनं[206] इति[207] विषयनिगरणं विना प्रतापे चौरत्वारोपणात्[208] सारोपेयं लक्षणा गौणी।

सर्वस्वपदेन चात्र[209] तत्ते[210]जस्समृद्धिर्लक्ष्यते। तद्गर्भीकारेण प्रवृत्तत्वात् साध्यवसाना। अनयोर्भिन्नपदस्थयोरपि समस्तपदस्यैकत्वात् तद्गतत्वेन एकलक्षकानुप्रवेशेनायं सङ्करः।

संसृष्टिर्यथा–

आम्रेडितं सुरतरोः प्रतिबिम्बमिन्दो–
र्भेदस्सुपर्वसुरभेर्विकृतिर्निधीनाम्।
द्वित्वं रवेः परिणतिः प्रसवायुधस्य
मूर्त्यन्तरं मुररिपोर्जयतीह रामः।। 29।।

यथा वा[211] –

शिष्टानां पारिजातो जडिमकठिनतावक्रतास्पर्शशून्यो
दुष्टानां कालवह्निर्जलभयमसिताच्छादनातुच्छमूर्तिः।
सीतायाः पञ्चबाणो हरनयनशिखाप्लोष[212]शून्यः प्रजानां
पूर्णेन्दुर्निष्कलङ्को जगति विजयते रामचन्द्रो महीन्द्रः[213] ।। 30।।

अत्रोभयत्रापि गौणसारोपाणां संसृष्टिः सजातीयानाम्।

सजातीयानां शुद्ध[214]सारोपाणां[215] यथा–

कल्याणकेलिकलना कविपुङ्गवानां
कौतूहलं किमपि कंजवि[216]लोचनानाम्।
कीर्त्युद्गमः[217] कमलबन्धु[218]कुलोद्भवानां
कस्योत्सवं न कुरुते भुवि कोसलेन्द्रः।। 31।।

अत्र कल्याणादिपदानां तद्धेतौ रामे विषयनिगरणं विना सादृश्येतर–कार्यकारणभावस[219]म्बन्धनिमित्तप्रवृत्तत्वात् शुद्धसारोपाणां सजातीयानामेव[220] संसृष्टिः।

सजातीयविजातीयसंसृष्टिर्यथा–

सतां सुरतरूद्यानं चिन्तामणिमहीधरः।
सम्पत्सुपर्वणां रामो विपद्विबुधवैरिणाम्।। 32।।

एवमेव सर्वत्र[221] सङ्करसंसृष्टी द्रष्टव्ये।

।। इति श्रीमत्त्रिभुवनपवित्रहरितगोत्रावतंसवाराणसीवंशपद्माकरप्रभात-भानुना पदवाक्यप्रमाणपारावारपारीणश्रीमहोपाध्यायपर्वतनाथसूरि-पण्डितमण्डलेश्वरसूनुना श्रीयल्लमाम्बागर्भरत्नाकरपारिजातेन निर्मलाचारपूतेन चतुर्दशविद्याविभूषणवता श्रीधर्मसंख्यावता विरचिते श्रीमद्रघुकुलतिलकयशोघनसारसुरभिते साहित्यरत्नाकर-नामन्यलङ्कारशास्त्रे लक्षकशब्दार्थवृत्तिनिरूपणं नाम तृतीयस्तरङ्गः।।

आस्थामन्दिरमिन्दिराप्रणयिनो देवस्य रामात्मन-
स्त्वङ्गत्तुङ्गतरङ्गरिङ्गणभरैरङ्गीकृताडम्बरः।
तादृङ्निर्मलधर्मसूरिकविताकल्लोलिनीवेल्लनैः
पूर्णः कर्णमनोहरो विजयते साहित्यरत्नाकरः।। 33।।

धर्मान्तर्वाणिवर्यस्त्रिभुवनविदिते वारणास्यन्वये यः
सञ्जातो यल्लमाम्बाकृतसुकृतफलं पर्वतेशस्य भाग्यम्।
काव्यालङ्कारकृष्णास्तुतिरविशतकोन्नाटकादिप्रणेतु-
स्तस्यालङ्कारशास्त्रे रघुपतिचरितेऽयं तृतीयस्तरङ्गः।। 34।।

---

पाठभेदाः

1. म० 1-2 अ० 1 तन्मूलतया
2. म० 1 लक्षण०
3. अ० 1 विरोध इति
4. म० 1 मैवम् म० 5 उच्यते नास्ति
5. म० 1 स्वार्थांश
6. अ० 1 आश्रीयते
7. म० 1 अ० 2 वाच्येन अधिकम्, म० 5 वाक्येन
8. म० 5 वाक्यार्थेन वा
9. म० 1 अ० 1 वा नास्ति
10. अ० 2 दृष्टं (दुष्टं)
11. म० 1-2, 5 अपि अधिकम्
12. म० 1, 5 यदपि नास्ति
13. अ० 2 विरोधेन
14. अ० 2 भूत

15. अ० 2 इति यल्लक्षणं
16. अ० 2 एतत् नास्ति
17. म० 2 अ० 1-2 लक्षणाव्या०
18. अ० 1 नामकत्वम्
19. म० 1-2, 5 अ० 2 नये
20. अ० 1 तत्प्रख्यनय अधिकरणे नाम सिद्धम्
21. म० 2 ग्निहोत्रसाम्याल्लक्षणया
22. म० 1 प्रमाणा
23. म० 2 वै अधिकम्
24. अ० 2 मात्र नास्ति
25. म० 1-2, 5 वाच्यार्था०
26. अ० 1 तथाहि
27. म० 1-2 लोके नास्ति
28. अ० 2 तन्वन्ति
29. म० 1 म० 5 एव नास्ति
30. अ० 1 अ० 2 त्रिधा
31. म० 1 अ० 1-2 त्रिधा
32. म० 2 लक्षणा नास्ति
33. म० 1 सप्तधेति
34. अ० 2 प्रत्येकं अधिकम्
35. म० 1 लक्ष्यते
36. म० 1, 5 अ० 1 दत्ताः
37. म० 1 भरतशास्त्र
38. अ० 1 दत्ताः
39. अ० 2 धातोरिदं रूपम्
40. म० 1-2, 5 अ० 1 आसु मातृकासु अत्रेदमधिकं पठ्यते-जनपदपक्षे दाताः दा दाने – दानमतन्ति इति दाताः, दत्ता इत्यर्थः। दत्ता इति पाठे तु देङ् रक्षणे इति धातो रूपं ज्ञेयम् इति।
41. अ० 1 इत्युक्तत्वात् नास्ति
42. अ० 2 अपि नास्ति
43. अ० 2 स्वरहिताः नास्ति
44. म० 2 स्वंरूपोक्तिः
45. अ० 2 सम्प्रदाने च नास्ति

46. अ० 2 तु अधिकम्
47. म० 1-2, 5 अ० 1 निन्दा च नास्ति
48. म० 1 अपि अधिकम्
49. म० 2 अ० 1-2 भावः
50. म० 1 अत्र नास्ति
51. अ० 1 अतिशयोक्त्यानु०
52. म० 1 इयं - प्रस्तुतस्य० एतन्मध्यगतो भागो न विद्यते।
53. अ० 2 अत्रा
54. अ० 1 तत्राप्यप्रस्तुत०
55. म० 2, 5 अ० 1-2 चमूसमूहः
56. म० 1 वचनं स्वाभि०
57. म० 1 अ० 2 विपरीतार्थं०
58. म० 1-2, 5 सुजेयत्व०, अ० 2 सुजयित्वम्
59. म० 1 म० 5 दुर्जेयत्वम्, अ० 2 दुर्जयित्वम्
60. म० 1-2 अ० 2 वाच्यया नास्ति
61. अ० 1 अ० 2 वा अधिकम्
62. अ० 2 च नास्ति
63. अ० 2 अजहल्लक्षणाम्
64. म० 1 स्वार्थानामपरित्यागेन, अ० 2 स्वार्थापरित्यागेनैव
65. म० 2 तत्र सा अजहत्स्वार्था अधिकम्
66. म० 2 लक्ष्यन्ते अधिकम्
67. म० 1 दयांदाक्षिण्यादिगुणानाम्, अ० 1 दयागुणानाम्
68. म० 1-2, 5 अ० 1 शब्दस्य नास्ति
69. म० 1-2, 5 अ० 1 तत्र शब्दस्याभिधा
70. म० 1-2, 5 अ० 1 त्येकशब्द०
71. अ० 2 तत्रापि
72. अ० 2 त्स्वार्था०
73. म० 2, 5 पुनः नास्ति
74. अ० 1 लक्षणायास्स्वीकारा०
75. म० 1 बीजं - नैव० एतन्मध्यस्थो ग्रन्थो न पठ्यते। अ० 2 नुपमर्दनेनैव०
76. अ० 1 क्षेपः
77. अ० 1 संनिवेश्य
78. अ० 1-2 व्यवजहार

79. म० 2 काव्यप्रकाशिकाकारः
80. म० 1 यः
81. म० 2 स्वार्थिका भवेत्
82. अ० 2 तु नास्ति
83. म० 1 त्स्वार्थलक्षणा०
84. म० 5 ग्रन्थपातः (लक्षणा-- पदद्वय)
85. अ० 2 धर्मतायाः
86. म० 1-2 काव्यप्रकाशिकाकारो
87. अ० 2 नेयं सम्भवतीति नास्ति
88. म० 1 म० 2 विधद्वय०
89. अ० 1 नाभिधीयते
90. अ० 1 तं अधिकम्
91. म० 1 नाप्युपगन्तव्य०
92. अ० 2 गन्तव्यमिति
93. अ० 2 न द्वितीयः
94. म० 1 तत्तांशमेव
95. म० 1 हित्वा अधिकम्
96. अ० 1 समर्थयति
97. म० 2 त्यस्त्यैवेयं
98. म० 1 तस्यैव हानं नास्ति
99. म० 1 ग्रन्थपातः (आचक्षते-- व्युत्पाद्य तत्त्वमसीत्यादि।)
100. अ० 1-2 विरुद्धयोर्द्वयोरपि
101. अ० 1 पदांशगत०
102. म० 2 रभेदेन प्रतिपादन०
103. अ० 1 म० 5 मैवम् नास्ति
104. म० 2 किं नास्ति
105. म० 2 वा अधिकम्, म० 1 इति नास्ति
106. म० 2 अपि अधिकम्
107. अ० 2 वाभेदेन प्रति
108. म० 1 भिन्नत्वेन नास्ति
109. म० 1, म० 5 अ० 1 शुद्धत्व, अ० 2 शुद्ध
110. म० 1-2 अ० 1-2 पश्येत्यत्र
111. अ० 2 वा नास्ति

112. म० 2 प्रतीतिरपि, द्र०, अ० 2 पदार्थधीद्र०
113. अ० 2 प्रसङ्गस्स्यादिति
114. अ० 1 तत्रा०
115. म० 2 अ० 2 लक्षणसङ्ग्रहः
116. म० 1 लक्षणम्
117. अ० 1 रुप्तौ
118. अ० 2 द्विविधा०
119. अ० 2 इयं सा
120. म० 1 सादृश्येतर नास्ति
121. म० 1 पदार्थतालब्धे० म० 2, 5 अ० 1 पदार्थतो लब्धे० अ० 1 लब्ध०
122. म० 1 वेद
123. अ० 2 यथा नास्ति
124. म० 1– 2, 5 मात्रान्वितेऽर्थे, अ० 1–2 मात्रे स्मृतेऽर्थे
125. म० 1 अपि नास्ति
126. म० 1–2, 5 विमर्शात्स्वार्थसदृशे
127. अ० 2 अत्र
128. अ० 1 पद नास्ति
129. म० 1 अत्र ग्रन्थपातः (प्रयोगानुपपत्तेः– प्रयोगबलात्)
130. अ० 2 देवजाता०
131. म० 1 वशात्
132. अ० 1 त्रे
133. म० 1 अर्थे नास्ति
134. म० 1 पद नास्ति
135. अ० 2 गौणे समानाधिकरण
136. म० 1 म० 5 तर्हि कथम्
137. अ० 2 प्रतीत्यैवेत्यवेहि
138. म० 1 पद नास्ति
139. म० 1 निरपेक्ष एव
140. म० 1 म० 5 अग्नि नास्ति
141. म० 2 सादृश्यादेव
142. म० 1 ब्रूमः
143. म० 1 अ० 1 बीजम्
144. म० 1 किं सन्ति, अ० 1 किं नास्ति

145. म० 1 अ० 2 स्तवायमभि०
146. म० 1 साधारणन्तु, अ० 2 तु नास्ति
147. म० 5 भावादिसम्ब०
148. म० 2 प्रयोजनं तु
149. म० 2 अ० 2 इति नास्ति
150. म० 1 तद्वयी
151. म० 2 दुर्वारश्शमितो महान्बहुमुखस्त्रैलोक्य०
152. म० 1-2, म० 5 अ० 1 सम्बन्धानाम्
153. म० 1-2, ज्वर नास्ति
154. म० 1 निमित्त०
155. अ० 1 च नास्ति
156. अ० 2 प्रयोजनम् नास्ति
157. म० 5 सम्बन्धश्च अधिकम्
158. अ० 2 तादात्म्य
159. अ० 2 स्थूणेन्द्र इति आन्ध्रमुद्रितपुस्तके पाठः।
160. म० 1 हस्ते
161. अ० 2 तादात्म्येन
162. अ० 2 कौशलसामर्थ्य
163. म० 5 अन्येन विषयिणा नास्ति
164. म० 1 अ० 1 लोकानाम् अत्र
165. म० 1 प्ययमिति शब्दः
166. म० 1 सारोपात्व०
167. अ० 1-2 प्राधान्ये त्वति
168. अ० 1-2 लक्षणम्
169. म० 1 ग्रन्थपातः (गौणसारोपा...........ध्यवसानाभ्यामेव)
170. म० 1 अ० 1-2 सानाशुद्धयोश्च
171. अ० 1 शुद्धादिभ्यस्तु
172. अ० 1 संसृष्टिमेलने
173. अ० 1 अपि अधिकम्
174. अ० 1 तु नास्ति
175. अ० 1 यदुक्तम्, अ० 2 यथाहुः नास्ति
176. म० 2 संसृष्ट्याथैंक०
177. अ० 2 तस्या०

178. अ० 2 स्समं ततः
179. म० 2 स्वैः प्रभेदैः लक्षणाभेदैः नास्ति
180. म० 1 मत्सरिणीति
181. म० 1 नैकवाचकानु०
182. म० 1 राशिः
183. म० 2, अ० 2 बल अधिकम्
184. म० 1 गम्यते
185. म० 1 म० 5 जनिता०
186. म० 2 जनिता त्रपा०
187. अ० 2 कर्माचरणा०
188. म० 1 लक्ष्यते नास्ति
189. म० 1 ग्रन्थपातः (सचेतनाकाञ्चनपुत्रि............केत्यादौ)
190. म० 1 म० 5 अ० 2 गुण नास्ति
191. आन्ध्रलिपिमुद्रितपुस्तके एतत्ता
192. आन्ध्रलिपिमुद्रितपुस्तके एतत्ता
193. अ० 2 तु नास्ति
194. म० 1–2, 5 वा अधिकम्
195. अ० 2 भावादेषे
196. अ० 1 भावादेकस्मिन्
197. म० 1 ज्ञान
198. म० 5 द्भवः
199. अ० 2 ताराभर्तरि
200. अ० 2 नूतनश्रिय
201. म० 2 मित्रोत्पन्न०
202. म० 1 इन्द्रहर्ष
203. अ० 2 उलूकानां अधिकम्
204. अ० 2 तपनस्तु
205. म० 2 सर्वत्र नास्ति
206. म० 1 अ० 1–2 तपन नास्ति
207. म० 2 च अधिकम्
208. अ० 2 त्वारोपात्सारोपे
209. म० 1 अ० 2 पदेनात्र
210. अ० 1 अ० 2 तत् नास्ति

211. अ० 2 यथा वा नास्ति
212. अ० 2 श्लेष
213. म० 1 अ० 1 महेन्द्रः
214. म० 1 अ० 1-2 जातीयशुद्ध
215. अ० 1 संसृष्टिः अधिकम्
216. म० 1 पङ्कज
217. अ० 2 कीर्त्युद्भव०
218. अ० 1 कान्त
219. म० 1 भावादिसम्बन्ध०
220. अ० 2 एव नास्ति
221. म० 1 सर्वत्र नास्ति



# ।। अथ चतुर्थो व्यञ्जनातरङ्गः ।।



अथ निष्प्रयोजनलक्षणाभावात् सर्वत्र प्रयोजनं वाच्यमित्यपेक्षायां तस्य व्यञ्जकशब्दैकगम्यत्वात्[1] क्रमप्राप्तत्वाच्च[2] व्यञ्जकं निरूपयति-

**स व्यञ्जकोऽर्थं यश्शब्दो व्यञ्जनेनैव बोधयेत्।। 1।।**

**अन्वितेषु पदार्थेषु योऽस्यार्थान्तरगोचरः।**

**वाक्यार्थोपस्क्रियायै स व्यापारो व्यञ्जनं भवेत्।। 2।।**

व्यञ्जनव्यापारवान् शब्दो व्यञ्जकः। पदार्थेष्वन्वितेषु वाक्यार्थोपस्कारार्थमर्थान्तरविषयः शब्दव्यापारो व्यञ्जनेत्युच्यते। स त्रिविधः, शब्दार्थोभयशक्तिमूलत्वेन। शब्दशक्तिमूलोऽपि द्विविधः- अभिधामूलो लक्षणामूलश्चेति। तत्र यः पूर्वोदाहृतप्रयोजनलक्षणानां प्रयोजनप्रतीतिकृद्[3] व्यापारः, स लक्षणामूलो व्यञ्जनव्यापारः।

इदं तावदिह[4] विचार्यते। 'गङ्गायां घोषः' इत्यादौ तीरगतात्यन्तपावनत्वादिकं प्रयोजनं तावत् प्रतीयते। तत्र शब्दान्वयव्यतिरेकानुविधायितया तत्प्रतिपत्तिः शाब्दीति अवश्यमाश्रयणीयम्। न च यं कञ्चन[5] व्यापारमनवलम्ब्य शब्दो[6] बोधयितुमीष्टे। तत्र किं अभिधया बोधयति लक्षणया[7] वा[8] किं वा[9] तात्पर्येण[10]। न तावद् अभिधया[11], तस्याः सङ्केतितार्थैकविषयत्वात्। न हि गङ्गादिपदानां पावनत्वादौ सङ्केतो दृष्टचरः।

नापि लक्षणया, मुख्यार्थबाधाद्यभावात्। न हि तटं[12] मुख्यार्थः। न वा तस्य बाधः। नापि तस्यात्यन्तपावनत्वादिना सम्बन्धः। नापि प्रयोजनलक्ष्यतायां[13] किञ्चित्प्रयोजनम्[14]। स्वस्यैव प्रयोजनत्वे आत्माश्रयत्वात्[15]। अन्यस्य प्रयोजनत्वे तस्यापि लक्षणामात्रशरणतया[16] प्रयोजनान्तरावश्यम्भावे

प्राचीनप्रयोजनापेक्षायां परस्पराश्रयता[17]। अन्यापेक्षणे तु तस्यापि लक्ष्यत्वेन प्रथमापेक्षणे चक्रकापत्तिः। द्वितीयापेक्षणे अन्योन्याश्रयता। तृतीयापेक्षणे आत्माश्रयता। चतुर्थापेक्षणे[18] तु तस्यापि प्रयोजनान्तराकांक्षित्वं नियतमित्युत्तरोत्तरमाकांक्षायाः[20] क्वचिदप्यविश्रान्तेः[21] प्रथम[22]-प्रयोजनप्रतीतिरेव न स्यादिति ज्ञप्तिप्रतिबन्धिकाऽनवस्था। ननु[23] गङ्गापदेन सप्रयोजनमेव तटं लक्ष्यताम्? मैवम्, प्रमाणविषयातिलङ्घित्वात् प्रयोजनस्य। प्रमाणस्य हि[24] प्रत्यक्षादेर्घटादिकं विषयः, फलं तु ज्ञाततादिकम्। तथा चायं प्रयोगः– 'गङ्गायां घोषः' इत्यादौ पावनत्वादिकं न विषयज्ञानगोचरम्[25], फलत्वात्, ज्ञाततावद्[26] इति।

नापि तात्पर्यगम्यता[27]। 'पदार्थावगमसमनन्तरभाविनी समन्वयशक्ति-स्तात्पर्यं नाम वृत्तिः' इत्यलङ्कारसर्वस्वसञ्जीविनीकाराः[28][29] (अ० स० सं०, पृ० 12)। न च पावकत्वादिरन्योऽन्यान्वयरूपः[30]।

किञ्च तात्पर्यं नाम वृत्त्यन्तरं न सम्भवति। वृत्तित्रयानुस्यूतस्य तस्य[31] वृत्त्यन्तरत्वानुपपत्तेः। क्लृप्तेनैव वृत्तित्रयेण सकलव्यवहारोपपत्तौ बाह्ये-न्द्रियसहकारिणो मनस इन्द्रियान्तरत्वकल्पनावत्[32] तात्पर्यस्य वृत्त्यन्तरत्व-कल्पनमयुक्तमेवेति केचिदित्यलमतिविस्तरेण।

तदेवं प्रयोजनप्रतीतेः अभिधालक्षणातात्पर्यवृत्त्यनिर्वर्तनीयत्वेन तदर्थं व्यापारान्तरमवश्यमभ्युपगन्तव्यं[33][34] भवतापि[35]। वयं तु तत्रैव ध्वनन-व्यञ्जनद्योतनादिसंज्ञां निवेश्य[36] व्यवहरामः।

तच्च व्यंग्यं प्रयोजनं द्विविधं[37] गूढमगूढं च[38]।

गूढं यथा–

वीरश्रीरघुरामभद्र भवतो धाटीसमाटीकने
भेरीभूरिविरावडम्बरभरैराखण्डलश्रीश्चिरात्।
निद्राणा यदजागरीत्तदुचितं दैतेयभूतिश्चिरा-
दुन्निद्रा कथमाशु मुद्रणमगादक्षुद्रनिद्राकृतम्।। 3।।

अत्र निद्राजागरणयोश्चेतनधर्मयोरचेतनसुरासुरविभूत्योरसम्भवात्[39]

तत्कार्यं सङ्कुचितत्वमसङ्कुचितत्वं च लक्ष्यते तेन [40]सकलसुरासुर-रक्षणशिक्षणे व्यज्येते।

अगूढं यथा-

त्रुट्यच्चण्डीशकोदण्डै[41] रामदोर्दण्डचण्डताम्[42]।
व्याचष्ट विष्टपस्पष्टघोषणैश्शत्रुभीषणैः।। 4।।

अत्राचेतने कोदण्डे चेतनधर्मस्य व्याख्यानस्यानुपपन्नतया तत्कार्य[43] ज्ञापनमात्रं लक्ष्यते। तेन च परमोत्कर्षो[44] व्यज्यते। एतत्सर्वं कविभिरुच्य-मानत्वेन वाच्यायमानतया[45] अगूढम्। तदेवं लक्षणामूला व्यञ्जना उक्ता।

अधुना अभिधामूला निरूप्यते। अत्र काव्यप्रकाशकारः-

अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते।
संयोगाद्यैरवाच्यार्थधीकृद्व्यापृतिरञ्जनम्।। 5।। (का० प्र० 2-14)

इत्यभिधामूलव्यञ्जनालक्षणमुक्तवान्[46]। संयोगादयो भर्तृहरिणा ग्रथिताः-

संयोगो विप्रयोगश्च साहचर्यं विरोधिता।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः।। 6।।
सामर्थ्यमौचिती देशः कालो व्यक्तिस्स्वरादयः।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः।। 7।। इति।

तत्र संयोगेन अभिधानियन्त्रणं यथा कृष्णः कौस्तुभभूषित इति कौस्तुभसंयोगाद् वासुदेवे। नार्जुने। कृष्णः कौस्तुभवर्जित इति विप्रयोगात्[47] तत्रैव। रामलक्ष्मणाविति[48] साहचर्याद् दाशरथी। रामरावणाविति[49] विरोधात् तत्रैव। रामं मोक्षाय चिन्तयेद् इति प्रयोजनात् तत्रैव। देवः प्रमाणम् इति प्रकरणाद् युष्मदर्थे। कुपितो गरुडध्वज इति कोपचिह्नस्य अचेतने ध्वजभेदेऽसम्भवाद् विष्णौ। देवस्य रमापतेरिति[50] शब्दान्तरसान्निध्यात् तत्रैव। मधुना मत्तः कोकिल इति सामर्थ्याद् वसन्ते। पातु वो दयितामुखमिति[51] औचित्यात् साम्मुख्ये। भात्यत्र परमेश्वर इति राजधानीरूपाद्देशाद् राजनि। विरोचनो भाति[52] दिवा इति[53] दिवाकरे। रात्रौ चन्द्रे वह्नौ वा। मित्रं दृश्यतामिति नपुंसकरूपया[54] व्यक्त्या सुहृदि, मित्रो दृश्यतामिति रवौ।

इन्द्रशत्रुरित्यत्र पूर्वपदप्रकृतिस्वरेण बहुव्रीह्यर्थनिश्चयः। द्वादशाहीनस्य इत्यत्र[55] द्वादशशब्दस्य संख्यास्वरेण द्वन्द्वार्थनिश्चयः। अहीनशब्दस्य मध्योदात्तत्वेनाहर्गणार्थनिश्चय[56] इति[57] स्वरेणार्थनिश्चयो वेद एव न काव्ये। आदिशब्दादभिनयादयः सङ्गृहीताः। एवं संयोगादिभिरभिधायां नियमितायां यदनेकार्थस्य शब्दस्य अर्थान्तरमपि यत्र क्वचन प्रतीतिगोचरीभवति तत्र व्यञ्जनव्यापार एव प्रगल्भते। लक्षणातात्पर्ययोः सामग्र्यभावेन अन्योन्यान्वयैकविषयत्वेन च[58] प्रकृते अनवकाशपराहतत्वात्।

यथा-

अत्यर्जुनयशोराशिः कृतसंरक्ततर्पणः।

एकवीरोऽपतापश्च रामो राजति राजघः।। 8।।

अत्र दाशरथिपक्षे अत्यर्जुनोऽतिधवलो निष्कलङ्को यशोराशिर्यस्य इति विग्रहः। जामदग्न्यपक्षे तु अर्जुनः कार्तवीर्यस्तस्य[59] यशोराशिमतिक्रान्तवान् नाशितवान् इति विग्रहः[60]। कृतसंरक्ततर्पणः। कृतं संरक्तानां स्वस्मिन् सम्यगनुरागवतां तर्पणं प्रीणनं येन इति प्रकृते। अन्यत्र तु कृतं सम्यग्रक्ततर्पणं शोणितेन निवापो येन इति। सम्यक्त्वं च यथाशास्त्रं यथाप्रतिज्ञं वा अनुष्ठितत्वम्। एकवीरः, अपताप इति पदद्वयं प्रकृते। अन्यत्रैकपदम्, एकवीरानुपतापयतीति। राजघ इति राजघ इति[61] निपातनात् साधुः। अत्र दाशरथिराम एवाभिधायाः प्रकरणादिना नियन्त्रितत्वाद्[62] अप्रकृतजामदग्न्यरूपार्थप्रतीतिस्तु व्यञ्जनव्यापारकृतैव। नन्वत्र श्लेषमहिम्ना अर्थान्तरप्रतीतिरस्तु इति चेत्, न, श्लेषस्य प्राकरणिकगतत्वेन वा अप्राकरणिकगतत्वेन वा[63] नियमनात्[64]। तदेवं द्विविधोऽपि शब्दशक्तिमूलो व्यञ्जनाव्यापारो निरूपितः।

अर्थशक्तिमूलो यथा-

अभिषिषेणयिषौ रघुपुङ्गवे मुदमविन्दत देववरूथिनी।

क्षितिसुतामयमम्बुधिमेखलाकलशसिन्धुसुते तु[65] तदोभयम्।। 9।।

अभिषिषेणयिषौ सैन्यैस्सह[66] शत्रुमभिगन्तुमिच्छति[67] सति।

यत्सेनयाभिगमनमरौ तदभिषेणनम् इत्युक्तत्वात्[68]। अत्र[69] सुरसेनामोदरूप-वस्तुशक्त्या तत्कारणभूतो दैत्यानामत्ययो भविष्यतीति द्योत्यते। क्षितिसुताभयरूपार्थशक्त्या तु[70] तद्धेतुभूता रामचमूचरणाभिघाताद् अवन्याः सीताजनन्या भाविनी आर्तिरिति व्यज्यते। अब्धिमेखलाक्षीराब्धिसुतयोः खेदमोदरूपवस्तुशक्तिभ्यां रामचमूरजसा सागर[71]शोषणे सति भुवो भूषणहानिः सपत्नीपितृहानिश्चेति खेदमोदहेतू। तथा लक्ष्म्यास्तु खेदमोदहेतू निजपितृहानिः सपत्न्या भुवो भूषणहानि[72]श्च भविष्यत इति ध्वन्यते। इत्यर्थशक्तिमूलो व्यञ्जनाव्यापारो दर्शितः[73]।

उभयशक्तिमूलो यथा-.

परशुगतिभीषणात्मा सङ्गरलीलासुबाहुजक्षोभम्।
सोढा रामो रेमे पितृभक्तो विप्रदत्तभूवलयः।। 10।।

अत्र प्रकृते दाशरथि[74]रामे परशुगतिभीषणात्मा परेषां शिष्टानां शुचो दुःखस्य अतिभयङ्क[75]रं स्वरूपं यस्येति विग्रहः। सङ्गरलीलासुबाहुजक्षोभं सोढा। युद्धकेल्यां सुबाहुजक्षोभं[76] सुबाहुनामकासुरजनित[77]विमर्दं सोढा शमितवानित्यर्थः। अत्र सोढेत्यस्य[78] तृन्न[79]न्तत्वात् 'न लोके' (2.3.69) इत्यादिना षष्ठीप्रतिषेधे[80] कर्मणि द्वितीया इति वेद्यम्। जामदग्न्यरामपक्षे[81] तु परशुगत्या कुठारव्यवहारेण[82] भीषणात्मा। सङ्गरलीलास्विति सप्तम्यन्तं भिन्नं पदम्[83]। बाहुजाः क्षत्रियाः। उत्तरार्धमुभयत्राप्यविशेषम्। अत्र पूर्वार्धे शब्दशक्तिमूलः, उत्तरार्धे अर्थशक्तिमूल इत्युभयशक्तिमूलो[84] व्यञ्जना-[85]व्यापारः। अत्र पूर्वत्र च रामो राम इव इत्युपमालङ्कारो[86] व्यज्यते।

न च शब्दशक्तिमूलध्वनावपि[87] शब्दस्यार्थव्यतिरेकादर्शनाद् अर्थस्यैव व्यञ्जकत्वमस्त्विवति वाच्यम्। तत्र[88] शब्दस्यैव प्राधान्याद् अर्थस्य सहकारिमात्रत्वात्। यथाहुः-

अर्थोऽपि व्यञ्जकस्तत्र सहकारितया मतः।। 11।। इति।
(का० प्र० 2-20)

एवमेव अर्थशक्तिमूलध्वनावपि शब्दस्य सहकारिमात्रत्वं द्रष्टव्यम्।

सकृदुच्चरितश्शब्दो न वृत्तिद्वयमर्हतीति निषेधः केवलयोरभिधयोः, लक्षणयोः[89], अभिधालक्षणयोर्वा भवति, न तु अभिधाव्यञ्जनयोर्लक्षणाव्यञ्जन-[90] योर्वा स्यादिति मन्तव्यम्। अनन्यथा[91]सिद्धकार्यबलेन अभिधायकलक्षकयो-र्व्यञ्जनव्यापारवत्त्वस्य पूर्वमुपपादितत्वात्।

तदेवं वाचकलक्षक[92]व्यञ्जकरूपास्त्रिविधाश्शब्दा[93]स्तद्व्यापारा अभिधालक्षणाव्यञ्जनात्मका वाच्यलक्ष्यव्यंग्यरूपास्तदर्था अपि व्याख्याताः।

काव्यप्रकाशकारस्तु सर्वेषामेतेषामर्थानां व्यञ्जकत्वमभिदधौ-

वक्तृबोद्धव्यकाकूनां वाक्यवाच्यान्य[94]सन्निधेः।
प्रस्तावदेशकालादेर्वैशिष्ट्यात्प्रतिभाजुषाम्।। 12।।
योऽर्थस्यान्यार्थधीहेतुर्व्यापारो व्यक्तिरेव सा[95] ।। 13।।

(का० प्र० 3 - 21, 22)

इति[96]। व्यक्तिर्व्यञ्जना। अर्थस्य व्यञ्जकत्वे शब्दोऽपि सहकारितया व्यञ्जक एव। न हि शब्दस्पर्शं विना मानान्तरोपनीतानामर्थानां[97] व्यञ्जकत्व-मवगत[98]चरम्। प्रपञ्चितञ्च एतदुदाहरणमुखेन तेनैव स्वग्रन्थे। अस्माभिस्तु तत्सर्वमर्थशक्तिमूलध्वनावन्तर्भवतीति न पृथक्सम्भ्रमः क्रियते।

।। इति श्रीमत्त्रिभुवनपवित्रहरितगोत्रावतंसवाराणसीवंशपद्माकर-प्रभातभानुना पदवाक्यप्रमाणपारावारपारीणश्रीमहोपाध्यायपर्वत-नाथसूरिपण्डितमण्डलेश्वरसूनुना श्रीयल्लमाम्बागर्भरत्नाकरपारिजातेन निर्मलाचारपूतेन चतुर्दशविद्याविभूषणवता श्रीधर्मसंख्यावता विरचिते श्रीमद्रघुकुलतिलकयशोघनसारसुरभिते साहित्यरत्नाकरनामन्य-लङ्कारशास्त्रे व्यञ्जकशब्दार्थवृत्तिनिरूपणं[99] नाम चतुर्थस्तरङ्गः।।

आस्थामन्दिरमिन्दिराप्रणयिनो देवस्य रामात्मन-
स्त्वङ्गत्तुङ्गतरङ्गरिङ्गणभरैरङ्गीकृताडम्बरः।
तादृङ्निर्मलधर्मसूरिकवितासोल्लासकल्लोलिनी-
पूर्णः कर्णमनोहरो विजयते साहित्यरत्नाकरः।। 14।।

धर्मान्तर्वाणिवर्यस्त्रिभुवनविदिते वारणास्यन्वये यः
सञ्जातः पर्वतेशाच्छुभगुणगणभूर्यल्लमाम्बासुगर्भे।
काव्यालङ्कारकृष्णास्तुतिरविशतकोन्नाटकादिप्रणेतु-
स्तस्यालङ्कारशास्त्रे रघुपतिविभुकेऽयं तुरीयस्तरङ्गः।। 15।।

---

पाठभेदाः

1. अ० 2 शब्दगम्यत्वा०
2. अ० 2 क्रमप्राप्तत्वाच्च नास्ति
3. अ० 2 प्रयोजनमतिकृत्
4. अ० 2 तावदिदानीं
5. म० 1 म० 2 न चायं कंचन, अ० 1 न च कंचन
6. म० 2 शब्दोऽर्थ०
7. म० 1 किं अधिकम्
8. म० 1 म० 5 वा नास्ति
9. म० 2 किं वा नास्ति
10. म० 2 वा अधिकम्
11. म० 2 बोधयति अधिकम्
12. अ० 2 तये
13. अ० 2 प्रयोजनं
14. अ० 2 प्रयोजनम् नास्ति
15. म० 5 श्रयात्
16. म० 1 करणतया
17. म० 1 श्रयत्वप्रसङ्गात्, म० 5 श्रयताप्रसङ्गात्
18. म० 1, म० 2, म० 5, अ० 1 चतुर्थाकांक्षणे
19. अ० 1 नियतं नास्ति
20. अ० 2 त्तराकांक्षायाः
21. म० 1 म० 5 क्वाप्यविश्रान्तेः
22. म० 1 प्रथम नास्ति
23. म० 5 ननु नास्ति
24. अ० 2 हि नास्ति
25. म० 1-2 अ० 1-2 गोचरः, म० 5 विषयः।
26. म० 5 अ० 1 ज्ञाततादिवत्

27. म० 5 अ० 2 तात्पर्यवृत्तिगम्यता
28. म० 1 इति नास्ति
29. अ० 1 सर्वस्व नास्ति
30. म० 5 रन्योन्याश्रयरूपः
31. म० 1 अ० 1–2 तस्य नास्ति
32. म० 1 कलना
33. अ० 2 व्यापारमवश्य
34. अ० 2 गन्तव्यो
35. म० 1 भवतापि नास्ति
36. अ० 2 संज्ञानिवेशेन
37. म० 1 प्रयोजनं द्विविधं नास्ति
38. अ० 2 इति अधिकम्
39. म० 1 भूत्यो०
40. म० 1 – 2, 5 च अधिकम्
41. अ० 1 कोदण्ड०
42. अ० 1 चण्डता०
43. म० 2 तत्कार्यं नास्ति
44. म० 2 पराक्रमो०
45. म० 5 मानत्वाद्वाच्या०
46. अ० 2 मवोचत्
47. म० 1 कौस्तुभविप्र०
48. अ० 1 वित्यत्र
49. म० 5 रामरावणयोरिति, अ० 2 रावणावित्यत्र
50. अ० 2 पतेरित्यत्र
51. म० 1 बोधयिता
52. म० 1 विभाति
53. अ० 1-2 इति नास्ति
54. अ० 1 स्त्रीपुंनपुं० म० 1 स्त्रीनपुं० म० 2 म० 5 पुंनपुं०
55. म० 1 हीनस्य सोम अवैतीत्यत्र
56. म० 2, म० 5, अ० 1, अ० 2 दात्तेना
57. म० 1 णार्थे
58. अ० 1 च नास्ति
59. म० 1 अत्र ग्रन्थपातः (अतिधवलो-----यशोराशि)

60. अ० 1 क्रान्तवानिति विग्रहः
61. म० 1-2, 5 अ० 1 राजघश्चेति
62. म० 1 अ० 1 निगलितत्वा०, अ० 2 निगदितत्वा०
63. म० 1 अप्राकरणिकगतत्वेन वा नास्ति
64. अ० 1-2 नियमात्
65. म० 2 च
66. अ० 2 स्वैस्स्वैस्सह
67. अ० 2 शतृभिरभिगन्तु०
68. म० 2 म० 5 मित्यमरः.
69. अ० 2 तत्र
70. म० 1 तु नास्ति
71. अ० 2 रजसस्सागर०
72. म० 1 अ० 2 भूषणस्वरूपहानि०
73. म० 1, 5 अ० 2 वर्णितः अ० 1 निर्णीतः
74. अ० 1 दाशरथि नास्ति
75. म० 1, 5 अ० 1 भयङ्कर
76. अ० 2 सुबाहुजक्षोभं नास्ति
77. म० 2 जनित नास्ति
78. अ० 1 सोढेत्यत्र
79. म० 1 सोढेशतृन्न०
80. म० 1 अ० 1-2 निषेधे
81. म० 2, 5 तु नास्ति
82. म० 2 व्यापारेण
83. अ० 2 पदं भिन्नम्
84. म० 1 मूल०
85. म० 1 अ० 2 व्यञ्जन
86. म० 2 अ० 1 अलङ्कारो नास्ति
87. म० 1 मूलव्यञ्जकावपि
88. अ० 1 अत्र
89. म० 2 केवलयोर्लक्ष०
90. म० 2 लक्षणाव्यञ्जनयोः नास्ति
91. अ० 2 अन्यथा
92. अ० 2 लक्षकवाचक०

93. अ० 2 शब्दास्त्रिविधाः
94. म० 1 म० 5 अ० 1-2 वाच्यवाक्यान्य०
95. अ० 1 वा
96. म० 1-2, 5 इति नास्ति
97. म० 1, 5 अ० 2 नीतानामेवार्थानां
98. म० 5 मन्त्रगतपरम्
99. म० 5 अ० 1 शब्दार्थनिरूपणं, अ० 2 व्यञ्जकशब्दनिरूपणम्



## ।। अथ पञ्चमो गुणतरङ्गः ।।

तत्र[1]–

**सगुणालङ्कृती काव्यं पदार्थौ दोषवर्जितौ ।। 1 ।।**

(सा० र० 2–63)

इति काव्यसामान्यलक्षणे पदार्थयोर्विशेष्यतया प्रधानत्वात् तरङ्गत्रयेण पदार्थौ न्यरूपिषाताम्। तदनन्तरं तद्विशेषणानां गुणालङ्कारदोषाभाववत्त्वरूपाणां[2] त्रयाणां मध्ये गुणालङ्कारयोर्भावरूपत्वाद् आदौ तयोरुपादानम्। तत्रापि रसे समवायवृत्त्या उपस्कारकाणां गुणानां संयोगवृत्त्या उपस्कारकेभ्योऽलङ्कारेभ्योऽन्तरङ्गत्वात् तेषामादावुद्देशः कृत इति उद्देशानुसारेण[3] गुणास्तावदादौ निरूप्यन्ते।

ननु[4] सगुणालङ्कृती इति[5] विशेषणमनुपादेयमिति चेत् कुतोऽनुपादेयता। तत्किमव्यावर्तकत्वाद् अचारुताहेतुत्वाद् अन्यतरवैयर्थ्याद्वा।

नाद्यः, निर्गुणालङ्कारशब्दार्थेभ्यो व्यावर्तकत्वात्[6]। न द्वितीयः[7], तेषामुभयेषामपि कविताकामिनीकामनीयककारणतया उपादेयत्वे विवादाभावात्। उक्तं हि–

**युवतेरिव रूपमङ्ग काव्यं स्वदते शुद्धगुणं तदप्यतीव।**
**विहितप्रणयं निरन्तराभिस्सदलङ्कारविकल्पकल्पनाभिः[8] ।। 2 ।।**

(स० क० 1–158)

**यदि भवति वचश्च्युतं[9] गुणेभ्यो वपुरिव यौवनवन्ध्यमङ्गनायाः।**
**अपि जनदयितानि[10] दुर्भगत्वं नियतमलङ्करणानि संश्रयन्ते।। 3 ।।** इति।

(स० क० 1–159)

तृतीयेऽपि किमुभयोरभेदाद् अन्यतरवैयर्थ्यम्। कृतकरत्वाद्वा।

आद्येऽपि चारुताहेतुत्वसाम्यादभेदः, परस्परव्यावर्तकधर्माभावाद्वा। नाद्यः। यत्किञ्चिद्धर्मसाम्येनाभेदे सर्वस्याप्यभेदप्रसङ्गः। न द्वितीयः, असिद्धेः। तथा हि[11]- अत्र[12] केचन भोजराजादयः काव्यव्यवहारप्रवर्तका गुणाः, तच्चारुताहेतवोऽलङ्कारा इति व्यावर्तकधर्ममाहुः। तन्नोपपद्यते। तत्किं सर्वे गुणास्तत्प्रवर्तकाः कतिपये वा। नाद्यः। 'रीतिरात्मा काव्यस्य' इति हि तन्मतम्। रीतयश्च गुणाश्लिष्ट[13]वचनरचनात्मिकाः। ताश्च तिस्रः- गौडी वैदर्भी पाञ्चाली चेति। तत्र समग्रगुणा वैदर्भी (का० सू० 1-2-11), ओजःकान्तिमती गौडी (का० सू० 1-2-12), माधुर्यसौकुमार्यधुर्या पाञ्चाली (का० सू० 1-2-13) रीतिरिति हि स्थितिः[14]। तत्र गुण-साकल्यस्य काव्यव्यवहारप्रवर्तकत्वे गौडीपाञ्चाल्योरव्याप्तिः। न द्वितीयः, अतिव्याप्तेः[15]। यत्किञ्चिद्गुणसत्तामात्रेण यत्र कुत्रापि काव्यव्यव-हारप्रसङ्गात्। एवमलङ्कारलक्षणमपि दूषणीयम्।

वयं तु ब्रूमः। समवायवृत्त्या रसोपस्कारकत्वं गुणसामान्यलक्षणम्। संयोगवृत्त्या रसोपस्कारकत्वमलङ्कारसामान्यलक्षणम्। समवायसंयोग-पदाभ्याङ्गुणालङ्कारयोः[16] परस्परव्यावृत्तिः सिद्धा। रसाः शृङ्गारादयो नव[17] वक्ष्यमाणलक्षणास्तद्व्यतिरिक्तव्यतिरिक्तोपस्कार[18]कत्वमिह लक्षणद्वये[19] विवक्षितम्।

नन्वत्र सर्वेषां गुणानां रसोपस्कारकत्वेऽसम्भवः। तत्तद्गुणानां तत्तद्रसप्रतीति[20]नियतेर्वक्ष्यमाणत्वात्। कतिपयानां त्वतिव्याप्तिरिति आत्मीय एव बाणो भवन्तं प्रहरति इति[21] चेत्, मैवम्। रसातिरिक्ते गुणानामवर्तनेन अतिव्याप्तेरभावात्। न हि[22] गुणा गुणिनं विहाय अन्यत्र समवयन्तीति दृष्टम्[23]।

ननु माधुर्यादयो गुणा वर्णेषु प्रतीयन्ते। यत्र सुकुमारवर्णविन्यासः, तत्र माधुर्यप्रतीतिः, अन्यत्र नेत्यन्वयव्यतिरेकाभ्यां वर्णमात्रधर्मत्वावगमात्। अतोऽसम्भव इति चेत्, मैवम्[24]। तत्र माधुर्यविशिष्टरसस्य व्यंग्यत्वेन व्यंग्यगतमाधुर्यस्य व्यञ्जके समारोप्य प्रतीतेः। तत्परिशीलनशालिनां[25] तु

रसिकानां[26] रससमवायितया तदुत्कर्षाधायिनो माधुर्यादयोऽनुभवपद्धतिमध्यासते। अत एवैतेषां[27] गुणत्वव्यवहारः। यद्येते रसशरीरभूतवाच्यवाचकधर्मा एव स्युः, तर्हि न गुणाः स्युः। न ह्यात्मधर्माः शौर्यादय इव शरीरमात्रसंसर्गिणोऽलङ्कारा गुणत्वेन व्यपदिश्यन्ते। ते हि हारादय इव कण्ठादिषु[28] संयोगितयैव शब्दार्थरूपेष्ववयवेषूत्कर्षाधानद्वारा आत्मन इव रसस्योपस्कारिणः[29]।

ननु गुणाः समवायवृत्त्या अङ्गिनि रसे[30] स्थिताः। अलङ्कारास्तु संयोगवृत्त्या अङ्गमात्रगता इत्ययं विभागः कुत इति चेत्- आत्मभूतरसं प्रति व्यवधानाव्यवधानाभ्यां तथानुभवव्यवस्थापितत्वादिति[31] ब्रूमः। माधुर्यादीनां वर्णैर्व्यज्यमानानां यदेव अव्यवधानेन रसपोषकत्वं तदेव तेषां रसे समवायवृत्तित्वम्। उपमादीनां तु वाच्यवाचकोपस्कारकाणां[32] यदेव अभिधादिव्यापारव्यवधानं[33] तदेव तेषां संयोगवृत्तित्वमिति रहस्यम्।

ननु यदि गुणा रसधर्मा एव न शब्दधर्माः, कथं तर्हि[34] तद्विशेषणत्वम्? असम्बन्धादिति चेत्- रसधर्माणामपि तेषां शब्देष्वारोपेण सम्बन्धोपपत्तेः। दृश्यते हि अन्यधर्माणामेव ह्रस्वत्वादीनामारोपितसंसर्गेण वर्णविशेषणत्वं[35] यथार्थव्यवहारजनकत्वं च। अतोऽन्यधर्माणामपि गुणानां वर्णविशेषणत्वं न विरुध्यते। किञ्च लोके पृथुलभुजत्वविपुलोरस्कत्वादिना[36][37] आकारविशेषेण कस्यापि शौर्यमवगम्य अन्यत्राशूरेऽपि[38] तमेवाकारमवलोकयन्तस्तत्रैव शौर्यं व्यवहरन्ति सरसाः[39] सोऽयमाकारश्शूर इति[40]। अतो व्यञ्जके व्यंग्यधर्मारोपदर्शनात् माधुर्यादेर्वर्णनिष्ठताप्रतीतेरौपाधिकत्वाद् युक्तं रससमवेता गुणा इति।

नापि कृतकरत्वादिति तृतीये द्वितीयः[41]। गुणकृतचारुताया अलङ्कारकृतचारुताविलक्षणत्वेन[42][43] कृतकरत्वाभावात्। तथा हि[44] अलङ्कारा हि अङ्गिनि रसे विद्यमाने तदङ्गभूतशब्दार्थवैचित्र्याधानद्वारेण प्राचुर्येण रसोपस्कारकाः[45]। यथा हारादयः कण्ठाद्यवयवसौन्दर्यातिशयाधानद्वारेण[46][47] अङ्गिनोऽतिशयमादधति। क्वचिद् अविद्यमाने रसेऽपि[48] शब्दार्थवैचित्री-

जननमात्रेणापि पर्यवस्यन्ति[49] यथा चित्रे प्रतिमायां[50] वा अविद्यमानेऽप्यात्मनि हारादयः। न चैतावता संयोगवृत्त्या रसोपस्कारकत्वरूपस्य अलङ्कार[51]–सामान्यलक्षणस्य नीरसकाव्यगतेष्वलङ्कारेषु[52] अव्याप्तिराशङ्कनीया[53]। तथा–विधस्थले रसशब्दस्य व्यंग्यव्यञ्जकजातीययोरभेदाध्यवसायेन प्रवृत्तत्वात्। गुणाः पुनर्विद्यमाने रसे तं पुष्णन्ति। अविद्यमाने तु स्वयमेव न विद्यन्ते। रसपोषकत्वं तु[54] दूरतोऽपास्तम्। इत्थं गुणालङ्कारयोश्चारुताहेतुतायां[55] वैलक्षण्यात् कृतकरत्वाभावेन द्वयोरप्युपादेयत्वं सिद्धम्।

**काव्यप्रकाशकाराद्यास्त्रीन् गुणान् पर्यजीगणन्।**
**तांश्चान्यान् सप्त भोजाद्यास्तांश्चतुर्दश चापरे।। 4।।**

माधुर्यौजःप्रसादास्त्रय[56] एव गुणा इति काव्यप्रकाशकारादयः प्राहुः[57]। एतांश्च[58] अन्यानपि श्लेषसौकुमार्यार्थव्यक्तिसमतौदार्यकान्तिसमाधीन् सप्त भोजराजादयः[59], तान्दश चान्यांश्चतुर्दश[60] विद्यानाथादयः।

**श्लेषः प्रसादस्समता माधुर्यं सुकुमारता।**
**अर्थव्यक्तिरुदारत्वं तथा कान्तिरुदात्तता।। 5।।**
**ओजस्सुशब्दता प्रेय और्जित्यमथ विस्तरः।**
**समाधिस्सौक्ष्म्यगाम्भीर्ये संक्षेपो भाविकं तथा।। 6।।**
**सम्मितत्वं तथा प्रौढी रीतिरुक्तिस्तथा[61] गतिः।। 7।।** इति।

**(प्र० रु० 6–1, 2, 3)**

तत्र[62] माधुर्यादयस्त्रयः सर्वसम्प्रतिपन्नाः[63]। आनन्दनिष्यन्दित्वं माधुर्यम्[64]। तस्य प्राचुर्येण पृथक्पदतालक्षणश्शब्दधर्मो[65] व्यञ्जकः। इदं च सम्भोगविप्रलम्भकरुणशान्तानुरूपम्। ओजः पुनर्दीप्त्यात्मकचेतो[66][67]–विस्तारहेतुः। तद्व्यञ्जकं समासभूयस्त्वम्। वीररौद्रबीभत्सभयानकेषु चैतत्प्रयोज्यम्[68]।

**यश्चित्तं ह्यश्नुतेऽह्नाय[69] शुष्केन्धनमिवानलः।**
**सः प्रसादो मतस्सर्वरससाधारणस्थितिः।। 8।।**

**(एकावली 5–6)**

तस्य प्रसिद्धार्थवत्त्वं[70] व्यञ्जकम्।

माधुर्यं यथा-

रामेऽभिमुखे सीता व्रीडाविमुखी[71] तमेव मणिभित्तौ।

दृष्ट्वा ततोऽपि विमुखी समन्दहासं प्रियेण परिरेभे।। 9।।

ओजो यथा-

शुम्भच्छुण्डालशैलाविरलपरिगलद्दानधाराझराणि

भ्राम्यत्कूजद्रथाङ्गान्यसुरहरियुतान्युग्रखड्[72]ग्यावृतानि[73]।

आकर्णाकृष्टचापच्युतनिबिडतरोच्चण्ड[74]काण्डप्रकाण्ड-

ज्वालामालाकरालो दहति रघुशिखी वैरिसेनावनानि[75]।। 10।।

प्रसादो यथा-

चरन्तमम्बरे दृष्ट्वा रामेण प्रेरितं खगम्।

अहीना वैरिणो भीत्या मुञ्चन्ति नगराण्यहो।। 11।।

एते त्रयो भावरूपाः। इतरेषु केचिद्भावरूपाः[76] केचिदभावरूपाः। उभयेषामपि गुणत्वं युक्तम्। न हि काणादतन्त्रे[77] इव गुणत्वं भावत्वनियतं अलङ्कारशास्त्रे सर्वसम्प्रतिपन्नम्। उपस्कारकत्वमात्रेण[78] गुणत्ववादात्।

तत्र अर्थप्रतिपादने वाक्यस्य[79] निराकांक्षत्वेन परिपूर्तौ[80] झटित्यव[81]-बोधकत्वमर्थव्यक्तिः। इयं प्रसिद्धार्थवत्त्वरूपात् प्रसादात्[82] नातिरिच्यते। विकटाक्षरबन्धत्वम्[83] औदार्यम्। श्लाघ्यविशेषणयोग उदात्तता। गाढबन्ध-त्वम् और्जित्यम्। एते त्रय ओजस्यन्तर्भूताः। परिपाकवत्युक्तिः प्रौढिः। विदग्धभणितिः[84] उक्तिः। संक्षेपेणार्थस्योक्तिः संक्षेपः। अनेकार्थशब्दोक्तिः सौक्ष्म्यम्। उक्तार्थसमर्थनोक्तिर्विस्तरः। यावदर्थपदोक्तिः सम्मितत्वम्। प्रियतरवस्तूक्तिः प्रेयः[85]। [86]आरोहावरोहाभ्यामतिरम्योक्तिर्गतिः। अवैषम्येण पादचतुष्टयेऽप्यर्थकथनं समता। एषामष्यनामुक्तिरूपत्वात्। वैदग्ध्यवदुक्ति-रूपगुणेऽन्तर्भाव[87] इत्यष्टानामेकत्वम्[88]। अन्यधर्मस्यान्यत्रारोपेण[89] समाधिः। अस्यारोपगर्भेषु रूपकादिष्वन्तर्भाव[90] इति न गुणत्वम्। अनेकपदानामेकपद-प्रतीतिविषयत्वं[91] श्लेषः। [92]अयं शब्दश्लेषेऽन्तर्भाव्यत इति[93] न गुणः।

[94]बन्धोज्ज्वलता कान्तिः। शब्दसाधुत्वं सुशब्दता। गाम्भीर्यं गूढार्थत्वम्। भावाद्या[95] वाग्वृत्तिः सा भाविकम्। प्रक्रमनिर्वहणं रीतिः। एते पञ्चापि पृथग्गुणाः। सानुस्वारकोमलवर्णता सुकुमारता। इयं[96] माधुर्येऽन्तर्भूता। ततश्च–

ओजःप्रसादमाधुर्याण्युक्तिकान्तिसुशब्दताः।
गाम्भीर्यं भाविकं रीतिमूचुः केचिद्गुणान्नव।। 12।।

तत्र कान्तिर्यथा–

ताराहारहराचलाम्बरसरिन्नीहारहीरामरा–
हारासारपटीरसौवरकरिन्यक्कारभारोद्धुरा।
कीर्तिः कार्तिकचन्द्रमूर्तिविजयिस्फूर्तिस्त्वदीया गुणा
राम श्रीरघुराम काममकरोद्दीप्रा दिशः प्रायशः।। 13।।

रीतिर्यथा–

[97]कल्याणकेलिकलना कविपुङ्गवानां[98]
कौतूहलं किमपि कञ्जविलोचनानाम्।
कीर्त्युद्गमः कमलबन्धु[99]कुलोद्भवानां
कस्योत्सवं न कुरुते भुवि कोसलेन्द्रः।। 14।।

अत्र प्रक्रान्तस्य ककारस्य पुनः पुनर्निर्वहणाद् रीतिः[100]।

उक्तिर्यथा–

मन्दोदरीविलोचनवाष्पोत्कटवृष्टिपूर्वदिग्वात्या।
क्षोणीनग्नङ्कुरणक्षुरप्रदीप्रा[101] प्रभाति[102] कापि कला।। 15।।

अत्र नामग्र[103]हणमकृत्वापि रामप्रत्यायनेन वैदग्ध्यप्रकटनाद् भवत्युक्तिः।

भाविकं यथा–

असारं संसारं जहिहि विरसारम्भबहुलं
मम भ्रातश्चेतः परिचिनु वचोऽतः[104] परमिदम्।
महोदारे धीरे भुवनभरधौरेयविभवे
गुणारामे[105] रामे दशमुखविरामे कुरु रतिम्[106]।। 16।।

अत्र अभिमतार्थप्रवर्तनीये चेतसि प्रियरूपभावनावशाद् भ्रात इति वाग्वृत्तिरिति भाविकम्।

गाम्भीर्यं यथा-

प्रायेण[107] मार्गणै[108] रामो नामरारीनमीमरत्।

छित्वाङ्गान्यकरोत्किन्तु पलायनपरायणान्।। 17।।

अत्र निजकूटस्थस्य[109] मार्तण्डस्य मुहुर्मुहुर्मण्डलभेदो माभूद् इत्यभिसन्धानात्मकस्य अमरद्विषदमारण[110]कारणस्य अर्थस्य गूढत्वाद् गाम्भीर्यम्। उक्तोदाहरणान्येव सौशब्द्यस्योदाहरणानि द्रष्टव्यानि[111]।

एवं सूक्ष्मधियां मार्गमनुसृत्योदाहृतं[112] मया।

माधुर्यौजप्रसादास्तु सौशब्द्येन समन्विताः।। 18।।

गुणाश्चत्वार एवेति मम सूक्ष्मतरेक्षितुः।

त्रय एवेति वात्यर्थं मनसे[113] रोचते मतम्[114]।। 19।।

।। इति श्रीमत्त्रिभुवनपवित्रहरितगोत्रावतंसवाराणसीवंशपद्माकर-प्रभातभानुना पदवाक्यप्रमाणपारावारपारीणश्रीमहोपाध्याय-पर्वतनाथसूरिसूनुना श्रीयल्लमाम्बागर्भरत्नाकरपारिजातेन निर्मलाचारपूतेन चतुर्दशविद्याविभूषणवता श्रीधर्मसंख्यावता विरचिते श्रीमद्रघुकुल-तिलकयशोघनसारसुरभिते साहित्यरत्नाकरनामन्यलङ्कारशास्त्रे गुणनिरूपणं नाम पञ्चमस्तरङ्गः।।

आस्थामन्दिरमिन्दिराप्रणयिनो देवस्य रामात्मन-

स्त्वङ्गत्तुङ्गतरङ्गरिङ्गणभरैरङ्गीकृताडम्बरः।

तादृङ्निर्मलधर्मसूरिकवितासोल्लासकल्लोलिनी-

पूर्णः कर्णमनोहरो विजयते साहित्यरत्नाकरः।। 20।।

धर्मान्तर्वाणिवर्यस्त्रिभुवनविदिते वारणास्यन्वये यः

सञ्जातः पर्वतेशाच्छुभगुणभूर्यल्लमाम्बासुगर्भे।

काव्यालङ्कारकृष्णास्तुतिरविशतकोन्नाटकादिप्रणेतु-

स्तस्यालङ्कारशास्त्रे रघुपतिविभुके पञ्चमोऽयं तरङ्गः।। 21।।

## पाठभेदाः

1. म० 5 अत्र
2. म० 1 अ० 1 भावरूपाणाम्
3. अ० 1 देशक्रमानु
4. म० 2 काव्यसामान्यलक्षणे अधिकम्
5. म० 1 अ० 2 सगुणालंक्रियाविति
6. म० 2 व्यावृत्तत्वात्
7. म० 1 न द्वितीयः नास्ति
8. म० 1 विकल्पनादिभिः
9. म० 1 वचश्श्रुतं
10. म० 1 चरदयितानि
11. म० 2 अ० 1 तथा हि नास्ति
12. अ० 1 तत्र
13. अ० 1 गुणश्लिष्ट०
14. म० 2 पाञ्चालीति हि रीतिस्थितिः
15. म० 1, 5 अतिव्याप्तिः, अ० 2 अतिव्याप्तिः नास्ति
16. म० 1 इव अधिकम्
17. अ० 1 नव नास्ति
18. म० 1–2, 5 अ० 1 तद्व्यतिरिक्तोप०
19. म० 5 कत्वविलक्षण०
20. म० 1, 5 अ० 1–2 तत्तद्रसं प्रति
21. म० 5 प्रतिहरतीति
22. म० 1 ननु
23. म० 1 दुष्टम्
24. म० 1–2, 5 मैवं नास्ति
25. म० 2 शीलनशीलिनाम्
26. म० 2 म० 5 रसिकाणाम्
27. अ० 1 एव तेषाम्
28. म० 5 शरीरमात्रादिषु
29. म० 1–2, 5 अ० 2 स्योपकारिणः
30. म० 1–2, 5 रसे अंगिनि
31. म० 1 अ० 1 नुभवोपस्थापित०

32. म० 1, 5 पस्कारिणां, म० 2 अ० 1-2 पस्कारेण
33. म० 1 यदेवाभेदादि
34. अ० 1-2 तर्हि कथम्
35. अ० 1 वर्ण नास्ति
36. अ० 2 विपुल
37. अ० 2 पृथुलो
38. अ० 2 अपि नास्ति
39. अ० 1-2 सरलाः
40. म० 5 व्यवहरन्ति विपुलोरस्कोऽयं शूरश्शूर इति
41. म० 1 द्वितीयम्
42. म० 1 चारुतायाः
43. म० 1 विलक्ष्यत्वेन
44. म० 1 तथापि
45. अ० 1 रसोपकारकाः
46. म० 1-2, अ० 1-2 करचरणाद्यवयव०
47. अ० 1 द्यवयवातिशया०
48. म० 5 अपि नास्ति
49. अ० 2 पर्यवस्यति
50. म० 1-2, 5 चित्रप्रतिमायाम्
51. म० 1 अत्र ग्रन्थपातः (रूपस्यालङ्कार--- योश्चारुताहेतुतायां वैलक्षण्यात्)
52. अ० 1-2 गतालङ्कारे
53. अ० 1 एव व्याप्तिः शङ्कनीया
54. अ० 1 तु नास्ति
55. म० 2 चारुतायाम्
56. म० 2 अ० 1 प्रसादाश्च त्रय
57. अ० 2 प्राहुः नास्ति
58. म० 5 तां
59. म० 1-2, 5 भोजादयः
60. अ० 1-2 एतान्दश चान्यां, म० 1-2, 5 एतांश्चान्यान्
61. म० 5 प्रौढिरुक्तीरीतिस्तथा
62. अ० 1 अत्र
63. अ० 2 माधुर्यादयस्सर्व
64. म० 2 माधुर्यस्य लक्षणम्

65. म० 1 पृथक्पृथक्पदताशब्दलक्षणम्
66. म० 1 पुनः नास्ति
67. म० 1 अ० 1–2 दीप्त्यात्मकं चेतो
68. म० 1 भयानकेष्वेतत्
69. अ० 1–2 व्यश्नुते, म० 2, 5 व्यह्नुते
70. अ० 1 प्रसिद्धार्थत्वम्, अ० 2 प्रसिद्धार्थकत्वम्
71. म० 1 अ० 1–2 व्रीडाद्विमुखी
72. अ० 2 हरिवृता
73. अ० 1 खड्गा
74. म० 1 निचिरतरो
75. अ० 1–2 रघुपतिर्वैरि०
76. म० 1 द्रावकत्वरूपाः
77. अ० 1 काणादशास्त्र०
78. म० 1 उपस्कारमात्रे
79. म० 1 काव्यस्य
80. अ० 2 परिस्फूर्तौ
81. म० 2 अ० 1 झटित्यर्थ
82. म० 5 अ० 1–2 रूपप्रसादा०
83. म० 2, 5 बन्धवत्त्वम्
84. म० 1 फणिति
85. म० 1, 5 अ० 1–2 प्रेयान् (अयं च पाठभेदः प्रतापरुद्रीयपाठानुसारी ज्ञेयः)
86. म० 1–2, 5 अ० 1–2 ग्रन्थपातः (प्रेयः---अवैषम्येण)
87. म० 1–2, 5 अ० 1 गुणान्त
88. म० 1 अ० 1–2 मेकगुणत्वम्
89. म० 1–2, 5 न्यारोपणम्
90. म० 1 रूपकेष्वन्त०
91. अ० 1 पदत्वप्रतीति
92. अ० 1 तु अधिकम्
93. म० 1 अ० 1–2 न्तर्भाव्य इति
94. म० 1 म० 5 सानुस्वारकोमलवर्णता सुकुमारता इति वाक्यमत्र वर्तते।
95. अ० 2 भावनाद्या
96. म० 1 ग्रन्थपातः (पृथग्गुणाः -- सादमाधुर्याण्युक्ति)
97. म० 1 ग्रन्थपातः (रीतिर्यथा-- मन्दोदरीविलोचन)

98. अ० 1 कविकोविदानां
99. अ० 1 कमलाकान्त
100. म० 1-2 अ० 2 निर्वहणाद्भवति रीतिः
101. म० 1, 5 प्रदीप्ता
102. अ० 2 प्रतिभाति
103. म० 1 अ० 2 अत्र रामरामग्रहण, म० 5 अत्र रामवामग्रहण०
104. म० 1 ग्रन्थपातः (परिचिनु--विगमे कुरु)
105. म० 5 दयारामे
106. म० 1 गतिम्, अ० 2 मतिम्
107. अ० 1 प्रायशो
108. म० 1 मारणे
109. अ० 1 निजकुलकूटस्थस्य
110. म० 1 द्विषदमार्गण, अ० 2 द्विषन्मारण
111. म० 5 द्रष्टव्यानि नास्ति
112. म० 1 अ० 1-2 मार्गमाश्रित्योदाहृतम्
113. म० 1 मनसि
114. म० 2 म० 5 मम



# ।। अथ षष्ठः शब्दालङ्कारतरङ्गः ।।

अथ अलङ्कारा निरूप्यन्ते। तत्र अलङ्कारसामान्यलक्षणं प्रागेवावादिष्म। ते चालङ्कारा द्विविधाः[1] – शब्दगता अर्थगताश्च। तत्र अर्थप्रतीतेः[2] शब्दप्रतीतिपूर्वकत्वात् प्रथमं शब्दालङ्कारा निरूप्यन्ते।

**छेकानुप्रासः**

द्वयोर्द्वयोर्व्यञ्जनयोर्युग्मयोर्या निरन्तरा।
आवृत्तिश्श्रूयते सोऽयं छेकानुप्रास ईरितः[3] ।। 1 ।।

छेका विदग्धास्तदभिमतोऽनुप्रासः छेकानुप्रास इत्यन्वर्थसंज्ञा। यथा–

राजराजसमैश्वर्यश्शास्त्रभासुरधीरधीः।
राजराजद्यशा रेजे रामो दाशरथी रथी।। 2 ।।

**वृत्त्यनुप्रासः**

एकद्वित्र्यादिवर्णानां पुनरुक्तिर्भवेद्यदि।
संख्यानियममुल्लङ्घ्य वृत्त्यनुप्रास ईरितः।। 3 ।।

तत्तद्रससमुचितवर्णविन्यासात्मिकया वृत्त्या उपलक्षितत्वाद् वृत्त्यनुप्रासत्वम्। अत्र पूर्वत्र च स्वरसादृश्यमानुषङ्गिकम्। स्वरव्यञ्जनसमुदायसादृश्यस्य[4] तु यमकप्रयोजकत्वं[5] वक्ष्यते। यथा ममैव[6] कृष्णानदीस्तुतौ–

कृष्णा मुष्णातु सिष्णास्वभिजनवृजिनान्याशु दुर्वारवारा
वाराशेरादिदारा रुचिररुचिरहीभेनभेनाच्छफेना।
शुभ्राशुभ्राम्यदूर्मिभ्रमकरमकरग्रामणीग्रामनीडा[7] –
गाधागाधाररोधो[8] विवरभुवि वलद्धी[9]वरौघा वरौघा।। 4 ।।

यथा वा–

युद्धश्रद्धासमिद्धप्रथमविगणनासिद्धमूर्धन्यभूषा–
योधा बाधाविबोधा रघुधरणिभुजा छिन्नदोस्कन्धबन्धाः।
लङ्कालङ्कारभूता[10] दिविजविजयिनो राक्षसा रूक्षसारा
हन्ताहन्तामहान्तस्समरसमरसाः प्रेततां प्रापितास्ते।। 5।।

अहन्तया अहङ्कारेण[11] महान्तः। अत्र प्रथमार्धे एकवर्णावृत्तिः। तृतीयतुरीय[12]चरणयोर्द्वित्रिवर्णावृत्तिः।

लाटानुप्रासः

तात्पर्यमेव भिन्नं स्यान्न तु शब्दार्थयोर्भिदा।
तयोर्या पुनरुक्तिस्स्याल्ला[13]टानुप्रास इष्यते।। 6।।

यथा[14]–

मन्दारो मन्दारस्सिन्धुस्सिन्धुरपि मेरुरपि[15] मेरुः।
औदार्ये गाम्भीर्ये धैर्ये च न राघवेण ते तुल्याः।। 7।।

यथा वा–

दिक्पाला दिक्पाला भूपालास्साम्प्रतं हि भूपालाः।
त्रैलोक्यहृदयशल्ये[16] रघुकुलतिलकेन रावणे निहते।। 8।।

पुनरुक्तवदाभासः

पुनरुक्तवदाभाति यत्रार्थो[17] न तु तत्त्वतः।
पुनरुक्तवदाभासस्स नामाख्यातगो द्विधा।। 9।।

नामगतो[18] यथा–

कृष्णाच्युत पुरुषोत्तम चतुरानन वागधीश लोकेश।
सर्वज्ञेश्वर शङ्कर राम श्रीराम पालय क्षोणीम् ।। 10।।

श्रीः रामा यस्य तस्य[19] सम्बुद्धिः श्रीराम[20]। यथा[21] वा–

भ्रमरालिसदृशकेशो दाशरथिर्भाति भुवनजीवनदः।
सायकशरेष्वभिज्ञो हरिहयगन्धर्वतुरगमुखकलितः।। 11।।

आख्यातगो यथा-

राजतेऽद्रौ सुधाब्धौ च श्रियमाहत्य राजते।
राजतेजोनिधे कीर्तिस्त्रैलोक्ये रघुराज ते।। 12।।

यमकम्

आवर्त्यतेऽर्थभेदेन सस्वरा[22] व्यञ्जनावलिः।
यदा तदा स्याद्यमकं बहुधाद्यन्तमध्यगम्।। 13।।

स्वरव्यञ्जनसमुदायस्य सादृश्येन[23] ग्रथने यमकम्। तदाद्यन्तमध्यगतत्वेन पादार्धश्लोकगतत्वेन[24] च बहुविधम्। तत्र दिङ्मात्रमुदाह्रियते-

अर्थिनो राम भवतः प्राप्तानेकपराजयः।
[25]प्रत्यर्थी चाभवद्युद्धे प्राप्तानेकपराजयः।। 14।।
जनस्थानं वने रामः खरदूषणवर्जितम्।
राज्यं चक्रे स्थितो राज्ये खरदूषणवर्जितम्।। 15।।

अत्र राज्यपक्षे खरेत्यत्र रलयोरभेदः। खलाः[26] पिशुनाः। पूर्वश्लोके प्रथमैकवचन[27]बहुवचनयोः श्लेषः।

दधत् स रामो युधि भूरि पौरुषं चकार भूमेरधिभू रिपौ रुषम्।
विहाय गोष्ठीमितरां रसाऽऽदरं व्यधत्त तस्मिन्नितरां रसादरम्।। 16।।

अत्र पूर्वोत्तरार्धयोः षट्षडक्षराणामावृत्तिः। अधिभूः[28] नायकः, भूरि महत्, पौरुषं दधत् स रामो युधि रिपौ रुषं चकार। रसा भूः, इतरां शेषादिस्थितिरूपां गोष्ठीं विहाय, अरं शीघ्रं, रसादनुरागात् तस्मिन् आदरं नितरां[29] व्यधत्त इति[30] सम्बन्धः।

चित्रालङ्कारस्वरूपनिरूपणम्

चक्राद्याकारमापन्ना वर्णाश्चित्रमुदाहृतम्।
तद्भेदा एव निष्कण्ठ्य[31]निस्तालव्यादयो मताः।। 17।।

[32]अत्र प्रथमादिशब्देन गोमूत्रिकापद्मादयः संगृह्यन्ते। द्वितीयादिशब्देन निर्दन्त्यनिरूष्मान्तर्लापिकादयः।

ननु कथमस्य शब्दालङ्कारता। चक्राद्याकारताया रेखोपरेखानिष्ठत्वात्[33]।

सत्यम्। वर्णानुमापकरेखानिष्ठानामेवाकाराणाम्[34] अनुमेयनिष्ठत्वाध्यवसायाद् औपचारिकीयं शब्दालङ्कारवाचोर्युक्तिरिति[35] वदामः।

**चक्रबन्धः**

तत्र चक्रबन्धो यथा–

दर्पान्धप्रसरासुरस्थिरमदप्राणप्रहारिक्रियो
विष्णुर्मन्मथमन्मर्थस्स्थिरशिवं[36] भानुक्षपाकृत्प्रभाः।
दत्तां (त्तात्) सूनृतगुर्विपद्धरविधस्फातिः प्रहेतिः परं
रम्यो मे दयया विराधदमनो योगीन्द्रभाव्यश्चिरम्।। 18।।

भानुक्षपाकृत्प्रभा इति सकारान्तप्रथमैकवचनम्। सूनृतगुः सत्यवाक्। विपद्धरविधा[37]–आपन्निवर्तकप्रकारा, स्फातिः[38] स्फुरणं यस्येति विग्रहः। योगीन्द्रैर्ध्येयः। स्थिरशिवं स्थायिमङ्गलम्। विराधासुरहन्ता मे दत्तां (त्तात्) इत्यन्वयः। अत्र तृतीये वलये धर्मसूरिकृतिः। षष्ठे रामगुणनुतिः। अष्टमे रथपदबन्ध इति च प्रतीयते। वबयोरभेदात्[39]। अत्र बन्धानामुद्धारक्रमा[40] विस्तरभयान्न लिख्यन्ते[41]।

**गोमूत्रिकाबन्धः**

गोमूत्रिकाबन्धो यथा–

सुरराजमणी श्यामस्थिरावरसुतापतिः[42]।
विरराज घृणी रामस्सुरासुरकृताननतिः[43] ।। 19।।

मणीशब्द ईकारान्तः। स्थिरा भूमिः[44]। घृणी दयावान्।

**नागबन्धः**

नागबन्धस्तु अस्माभिः सूर्यशतके बिम्बवर्णनप्रस्तावने[45] कथितः–

बिम्बं ध्वान्तव्यधा(था)दं कनकधरशिरश्चारिशोणद्युदाप्तं
पद्माधिप्रेम सोमक्षतदमुरुमदःकर्तृकव्यूहहारि।
शेमुष्या दातृ दैत्याधिपतुदतुलकर्मामयाधानकल्प्यां
कस्येह क्षीणतामुत्क्षिपतु पटु परं दैवमर्चिःकदम्बम्।। 20।।

पद्मेष्वधिकं प्रेम यस्य तत्तथा[46]। कव्यूहं[47] जलव्यूहं हरतीति[48] तत्तथा। दैत्याधिपान् तुदतीति तत्तथा। अतुलं कर्म यस्य तत्तथा। कस्य सूर्यस्य। शिष्टं स्पष्टम्।

**पद्मबन्धः**

अष्टदलपद्मबन्धस्तत्रैवाश्ववर्णने गदितः–[49-50]

या दासत्राणरक्ता ततिरिनहरितां ज्ञाभिनव्यास्तमाया
या मास्तव्यानभिज्ञानवतु मरकतग्रामसश्रीरजेया।
याजेरश्रीसमग्रा यदरिततिरसक्ताऽसरच्चांजरा[51] या
या राजच्चारसक्ता[52]ऽनिशमियमघमुक्ता रणत्रासदा या।। 21।।

अत्र या इति प्रतिविशेषणं सम्बध्यते। ज्ञाभिनव्या – ज्ञैः विद्वद्भिः। अभिनव्या अभिष्टोतुमर्हा। अस्तमाया अस्ता निरस्ता माया परकीया[53] यया सा तथोक्ता[54]। मास्तव्या– श्रीस्तुत्या। यदरिततिः – यद्रिपुपंक्तिः। अश्रीसमग्रा अशिवपूर्णा[55] भवतीति शेषः। राजच्चारसक्ता ललितगतिपरा अघमुक्ता च असरदित्यन्वयः। इयम् इनहरितां सूर्याश्वानां ततिः[56] पंक्तिः अनभिज्ञान् मन्दान् अवतु इत्यन्वयः। शिष्टं स्पष्टम्।

**षोडशदलपद्मबन्धः**

षोडशदलपद्मबन्धो[57] यथा–

मलीमसमतिं मर्त्यमवमत्य महामहम्।
मनाम राममम लं महोमयमनामयम्।। 22।।

**मुरजबन्धः**

मुरजबन्धो यथा–

राम भासुरभावर्ण्य नाम भाति स्वभावतः।
तव भास्वरभावस्थं देव भासुरभावद।। 23।।

भासुरभाभिः निर्मलज्ञानैः वर्ण्यम्। भास्वरभावेषु शुद्धमनस्केषु तिष्ठतीति भास्वरभावस्थं[58] मुमुक्षुभिः स्मर्यमाणमित्यर्थः। भासुरभावद तेजस्वित्वप्रद। शिष्टं स्पष्टम्।

### पादार्धभ्रमकम्

पादार्धभ्रमकं यथा–

शोधी सोममसोऽधीशो धीरसाररसारधी:।

सोऽभावनानावभासो ममतोननतो मम।। 24।।

शोधयितुं पावयितुं शीलमस्यास्ति इति[59] शोधी, भक्तपावन इत्यर्थः। सोमेन मस्यत इति सोममसः, शिवेन परिच्छिन्न इत्यर्थः। मस[60] परिमाणे इति धातुः। धीरसारः पण्डितश्रेष्ठः। रसारधीः[61] सरसंशेमुषीकः[62], रलयोर-भेदात्, पश्चाद्विशेषणसमासः। अभावनया असमाधी(धि)ना[63] नावभासः न व्यक्त इति अभावनानावभासः। ध्यानैकगम्य[64] इत्यर्थः। ममतया ममकारेण ऊनैः शून्यैः नतः। स रामो[65] ममाधीशः स्वामी[66] यद्वा धियि बुद्धौ शेत इति वा[67] धिय ईश इति वा धीशः बुद्धिप्रवर्तक इत्यर्थः।

### सर्वतोभद्रबन्धः

सर्वतोभद्रबन्धो यथा–

शोधी सोममसोऽधीशो धीविभाममभाविधी।

सोऽभावनानावभासोऽममनाममना मम।। 25।।

धिया विभातीति धीविभामा। तादृशी मा लक्ष्मीर्यस्य सः धीविभाममः। भासो विधः व्याप्तिः भाविधः, प्रतापव्याप्तिरित्यर्थः। विधश् विधाविति कविकल्पद्रुमोक्तो धातुः। तस्माद्घञर्थे कप्प्रत्ययः। सोऽस्यास्तीति भाविधी। धीविभाममश्चासौ भाविधी चेति विशेषणसमासः। धीविभाममभाविधी, मन्त्रशक्त्यार्जितसम्पत्तिः, उद्दीपितप्रतापव्याप्तिश्च इत्यर्थः। विभामेत्यत्र 'ततो मनिः' इत्यादिना मनिप्रत्ययः। अममनाममना अममानां निर्ममाणां नामेषु नमस्कारेषु मनो यस्य सः, तथा भक्तप्रणामासक्त इत्यर्थः। शेषं व्याख्यातम्। अत्र चतुर्थपादे द्व्यक्षरत्वमभ्युच्चयः।

### खड्गबन्धः

खड्गबन्धो[68] यथा–

श्याममामनाम भीम भूमधाम धीमयं

यन्त्रितासुरासु रामनाम राजदोजसा।

सारस्रस्य[69] दास्यदास्यमाश्रयद्द्वयं[70] वयं[71]
यन्त्रमन्त्रितं त्रिलोचनस्य शस्यमञ्जसा ।। 26 ।।

**क्षुरिकाबन्धः**

क्षुरिकाबन्धो यथा–
हारहीरवरस्तम्भा भूरिभूभागभोगभा[72] ।
भासते विभु[73]रामेश[74] शमेरा भुवि[75] ते सभा ।। 27 ।।
शमेरा शान्तेर्भूमिः स्थानम् । संसारसन्तापनिवर्तकभूमिः[76] इत्यर्थः[77] ।

**हलबन्धः**

हलबन्धो यथा–
वितथेतरनाराच चरानारतमभ्रमः[78] ।
मन्मानसे[79] रघुपते धीरसाररसारथीः[80] ।। 28 ।।
अभ्रमः[81] भ्रान्तिरहितः[82] ।

**चापबन्धः**

चापबन्धो यथा–
सीतापतियशोलेशो जित्वा दिक्षु स्थितोऽष्टसु ।
कुन्दचन्दननीहारसीरपाणिद्युपादपान् ।। 29 ।।

**गुच्छबन्धः**

गुच्छबन्धो यथा–
हारहीरहर[83]स्फूर्तिमूर्ति[84]कीर्तिपुरस्सर ।
चर वीरवर क्रूरदानवानवन[85]क्रम[86] ।। 30 ।।

**मत्स्यबन्धः**

मत्स्यबन्धो यथा–
राघवाग्निभिया भिन्ना सिन्धुबन्धु[87]मविन्दत ।
तदप्यंजीवनवती परवीरचमूरभूत् ।। 31 ।।

**निरोष्ठ्यनिस्तालव्यादिचित्रालङ्कारभेदाः**

एकाच्कं सर्वलघु निरोष्ठ्यं च यथा–

अघहरणचरणरणचण दशगलगलगहनदहनसरलशर।

[88]अतरलनतरतनयजय[89] जय[90] दशरथतनय जलजदलनयन।। 32।।

निस्तालव्यं यथा–

वसुधानग्नङ्करणा[91]खण्डसको[92]दण्डकाण्डधर[93]पाणौ।

गौतमसुभगङ्करणाद्भुतपदरेणौ मनोऽस्तु[94] पुरुषमणौ।। 33।।

निष्कण्ठ्यं यथा–

पृथिवीपुत्री[95]शितुर्मूर्तिः श्रुतिस्मृतिनिधिश्शुचिः।

निरीतिर्युधि निर्भीतिर्विष्णुशूलि[96]विभूतिधृत्[97]।। 34।।

**निर्दन्त्यं निर्मूर्धन्यं निरन्तस्थं निरूष्मकं च यथा–**

केकिकचा कोककुचा मञ्जुभुजा कापि कापि कामाज्ञा।

कञ्जमुखी कुम्भिगमा बभौ खगाङ्काङ्कभागपङ्कजगा।। 35।।

**द्व्यक्षरैकाक्षरादयः**

द्व्यक्षरं यथा–

नानादानानि दीनानां ददानो नन्दनन्दनः।

नदीननन्दिनीनन्दी नुदेर्देनो दिने दिने।। 36।।

एकाक्षरं यथा–

कोकीकङ्कीकोककङ्ककाकौकोऽकुकाकिका।

कोकाङ्ककाङ्क्षाङ्किकाकुः काकुकेकाङ्ककेकिका।। 37।।

कोकीनां चक्रवाकीनां, कङ्कीनां, कोककङ्कानां, ककाकानां जलकाकानां च ओकः आश्रयभूता। इदं कोकादिग्रहणं हंसादीनामप्युपलक्षणम्। पुनः कथम्भूता? अकुकाकिका–कुकाः कुत्सितवायवः, तत्कृतम् अकं दुःखं कुकाकं[98], तद्यस्यां नास्ति सा अकुकाका। ततः स्वार्थे कप्रत्ययः। 'प्रत्ययस्थात्' ( पा० सू० 7.3.44) इत्यादिना कात्पूर्वस्येकारः[99]। अकुकाकिका[100] हृदयानन्दनगन्धवाहस्पन्दनवतीत्यर्थः। कोकाङ्ककाङ्क्षा–कः

सूर्यः, ओः– शम्भोः, कं–शिरः। कश्च उकं च कोके,[101] ताभ्यां कोकाभ्यां सकाशाद् अङ्कं–निर्गतम्, 'अङ्क–गतिलक्षणयोः' इति धातुः कविकल्पद्रुमकारेणोक्तो द्रष्टव्यः। तथाविधं कं–जलं गङ्गायमुनात्मकम्, अङ्कः–चिह्नं यस्यास्सा कोकाङ्ककाङ्का। काकुकेकाङ्ककेकिका। काकवः शोकभीत्यादिकृता ध्वनिविकाराः, तैः तद्युक्ता ध्वनयो लक्ष्यन्ते। ताश्च केकाश्च अङ्का येषां ते केकिनो यस्यास्सा। ततः कप्रत्ययादि पूर्ववत्। काकुकेकाङ्ककेकिका। एवंविधा का–काचित्, कुः पृथिवी। अङ्कि अगमि। अत्र रामेणेति प्रकरणाल्लभ्यते।

सर्वश्लोकयमकं यथा–

ससारसम्पन्नतमोहितेषु ससारसम्पन्नतमोहितेषु।
ससारसम्पन्नतमोहितेषु ससारसम्पन्नतमोहितेषु।। 38।।

पन्नतमः– पदोः–पादयोर्नता मा–लक्ष्मीर्यस्य सः पन्नतमः, लक्ष्मीसेवितपाद इत्यर्थः। स रामः। ससारसम्पन्नतमोहितेषु। ससारया सबलया सम्पदा करितुरगादिसम्पत्त्या नता उत्कटाः, मोहिता मोहं प्रापिताः शारीरबाह्यबलाभ्यामुद्धता मदान्धाश्चेत्यर्थः, तेषु तथा – ससारसम्पन्नतमोहितेषु। ससारतमैस्सत्त्ववत्तमैः सम्पन्नतमैः प्रभूततमैश्च पुरुषान्तरैरूहितास्तर्किता श्लाघ्यमाना इत्यर्थः। तेषु तथा – सम्पन्नतमोहितेषु सम्पन्नं सम्पूर्णं तमस्तमोगुणो येषां ते सम्पन्नतमसः, ते हिता येषां ते – तेभ्यो हिता इति वा तेष्वहितेषु शत्रुषु। सारसम् अरसं रागाभावस्तेन सहितं सरोषं यथा तथा ससार। शत्रूञ्जेतुं ययावित्यर्थः। एवमन्येऽपि शब्दालङ्कारभेदा द्रष्टव्याः।

।।इति श्रीमत्त्रिभुवनपवित्रहरितगोत्रावंतसवाराणसीवंशपद्माकरप्रभातभानुना पदवाक्यप्रमाणपारावारपारीणश्रीमहोपाध्यायपर्वतनाथसूरिपण्डितमण्डलेश्वरसूनुना श्रीयल्लमाम्बागर्भरत्नाकरपारिजातेन निर्मलाचारपूतेन चतुर्दशविद्याविभूषणवता श्रीधर्मसंख्यावता विरचिते श्रीमद्रघुकुलतिलकयशोघनसारसुरभिते साहित्यरत्नाकरनामन्यलङ्कारशास्त्रे शब्दालङ्कारनिरूपणं नाम षष्ठस्तरङ्गः।।

आस्थामन्दिरमिन्दिराप्रणयिनो देवस्य रामात्मन-
स्त्वङ्गत्तुङ्गतरङ्गरिङ्गणभरैरङ्गीकृताडम्बरः।
तादृङ्निर्मलधर्मसूरिकवितासोल्लासकल्लोलिनी-
पूर्णः कर्णमनोहरो विजयते साहित्यरत्नाकरः।। 39।।
धर्मान्तर्वाणिवर्यस्त्रिभुवनविदिते वारणास्यन्वये यः
सञ्जातः पर्वतेशाच्छुभगुणगणभूर्यल्लमाम्बासुगर्भे।
काव्यालङ्कारकृष्णास्तुतिरविशतकोन्नाटकादिप्रणेतु-
स्तस्यालङ्कारशास्त्रे रघुपतिविभुके षष्ठश्चा( कोऽ )यं तरङ्गः।।40।।

---

पाठभेदाः

1. म० 1 द्विधाः
2. अ० 1 र्थगतप्रतीते
3. म० 2 इष्यते
4. म० 1 सादृश्ये
5. अ० 1 प्रयोजनकत्वम्
6. अ० 2 मदीय०
7. म० 1 ग्रामनीरा
8. म० 1 गाधारशोधो
9. अ० 2 वरद्वीव
10. म० 2 लङ्कारकारा
11. म० 5 अहङ्कारेण अहन्तया
12. अ० 2 द्वितीय तृतीय
13. अ० 1 पुनरुक्तिस्सा
14. म० 5 यथा नास्ति
15. म० 2 अपि नास्ति
16. म० 1 हृदयशौर्ये
17. म० 2 यदार्थो, म० 5 यथार्थो
18. म० 5 नामगो
19. म० 1 अ० 1 श्रीरामः, अधिकम्, अ० 2 सः अधिकम्
20. अ० 2 हे श्रीराम

21. म० 1 तस्य सम्बुद्धिः श्रीराम यथा वा नास्ति म० 5 अ० 1-2 यथा वा नास्ति
22. म० 1 सस्वर, अ० 1 सस्वरम्
23. म० 1 सादृश्ये
24. म० 1 अ० 1 पादार्धश्लोकगतत्वेन नास्ति
25. उत्तरार्धोऽयं म० 1 मातृकायां नास्ति
26. म० 2 रभेदात्खलाः
27. म० 1 प्रथमैकबहु०
28. अ० 2 भूमेरधिपः
29. म० 2 म० 5 नितराम् आदरम्
30. अ० 2 व्यधत्तेति नितराम्
31. म० 1 निष्कण्ठः
32. म० 1 अत्र नास्ति
33. म० 1 म० 2 रेखोपरि रेखानिष्ठत्वात्, अ० 2 रेखोपरेखादिनिष्ठत्वात्।
34. अ० 1 मेवालङ्काराणां म० 1 मेवाकारणम्
35. म० 1 अ० 1-2 लङ्कारतावाचो
36. म० 1 म० 5 मन्मथ नास्ति
37. अ० 2 आपद्धर०
38. अ० 2 स्फूर्तिः
39. म० 1 बलयो०
40. म० 1 म० 5 क्रमो०
41. म० 5 लिख्यते
42. म० 1 स्थिरा नुता
43. अ० 2 नुतिः
44. म० 5 भूः
45. म० 5 प्रस्तावे
46. म० 1-2 अ० 1 तत् नास्ति
47. म० 1 काव्यदाहम् अधिकम्
48. अ० 1 इति नास्ति
49. म० 1 कथितः
50. अ० 2 यथा अधिकम्
51. अ० 1 सत्क्रानरश्चा०
52. अ० 1 राजश्चारनक्ता
53. म० 1 तवकीया

54. अ० 2 तथोक्ता नास्ति
55. अ० 1 म० 1 अशिवसमग्रा०
56. म० 5 अ० 1-2 ततिः नास्ति
57. अ० 2 दलबन्धो०
58. म० 2 अ० 2 तिष्ठतीति तथोक्तम्
59. म० 1 अ० 2 मस्येति
60. अ० 1 मसी०
61. अ० 1 रधिः
62. म० 1 रस
63. अ० 1 असमाधीनो०
64. म० 1 ध्यानैरगम्यः
65. म० 2 म० 5 अ० 2 स प्रकृतो रामो
66. म० 2, 5 अ० 1-2 स्वामी नास्ति
67. म० 2, 5 वा इत्यनन्तरं 'धीशः' इति अधिकम्
68. म० 5 वज्रबन्धो
69. म० 1-2 सारसाख्य
70. म० 5 दास्य नास्ति
71. म० 1-2, 5 वयं नास्ति, अ० 1 सारसारसस्यदास्यदास्यमाश्रयदयं
72. म० 5 भोभगा
73. म० 1 भुवि
74. म० 1 श नास्ति
75. म० 1 मेरारभू०
76. म० 1 संसारसर्वताप्राव्यशमभूमिः, म० 2 अ० 1-2 संसारतापोपशमनभूमिः
77. अत्र आन्ध्रलिपिमुद्रितपुस्तके अत्रोत्तरार्धे पदभ्रमकम् इति अधिकं विद्यते।
78. अ० 1-2 मभ्रम
79. म० 1 मन्मासेन
80. अ० 1 रधिः
81. अ० 1-2 अभ्रम
82. अ० 1-2 रहित
83. अ० 2 वर
84. म० 1 मूर्ति नास्ति
85. म० 5 नतन
86. म० 1 क्रूरवानवोनघनक्रमः, अ० 1-2 दानवोन्मथनक्रम
87. म० 1 सिन्धुराज

88. म० 2 अकारो नास्ति, अ० 1 ततरल
89. अ० 2 नंरतति
90. म० 1 जय नास्ति
91. अ० 1 करिणा
92. म० 1 खंदर
93. म० 1 धरा
94. अ० 2 नो मेस्तु
95. म० 5 पती
96. म० 1 विष्णुश्शूलि
97. म० 1 भृत्
98. म० 1 कुकाकं नास्ति
99. म० 1 अ० 1 स्येकारादेशः
100. म० 1 अ० 1 अकुकाकिका नास्ति
101. म० 1-2, 5 अ० 1 कोके नास्ति



# ।। अथ सप्तमोऽर्थालङ्कारतरङ्गः ।।



अथार्थालङ्कारान्निरूपयिष्यन् आदौ उपमां लक्षयति।

**उपमालङ्कारः**

**साधर्म्यं लोकसिद्धेन भिन्नेन कविसम्मतम्।**
**यदैकवाक्यवाच्यं स्यात्प्रकृतस्य तदोपमा।। 1।।**

एषु शब्दालङ्कारेषु च प्रातिस्विकलक्षणैरेव सजातीयविजातीयव्या-वृत्तिव्यवहारसिद्धेर्न सामान्यलक्षणापेक्षेति विशेषलक्षणानामेवोक्तिः।

इह केचिदुत्प्रेक्षादयोऽलङ्काराः[1] अध्यवसायमूलाः। विभावनादयो विरोधमूलाः। परिसंख्यादयो न्यायमूलाः। परिवृत्त्यादयो लोकव्यवहारमूलाः। तर्कन्यायमूलाः काव्यलिङ्गादयः। शृंखलावैचित्र्यमूलाः कारणमालादयः। अपह्नवमूला व्याजोक्त्यादयः। विशेषणवैचित्र्यमूलाः परिकरादयः। साधर्म्यमूला उपमादयः।

तत्साधर्म्यं[2] त्रिविधम्। भेदप्रधानमभेदप्रधानं भेदाभेदप्रधानञ्चेति। तत्र भेदप्रधानसाध्रर्म्यगर्भा व्यतिरेकादयः, अभेदप्रधानसाधर्म्यगर्भा रूपकादयः, भेदाभेदप्रधानसाधर्म्यगर्भास्तूपमादयः। अत एव उपमामूलस्य[3] साधर्म्यस्य बहुव्यापित्वाद् भेदाभेदोभयप्रधानत्वाच्च उपमायाः प्राङ्निरूपणम्। जिज्ञासासङ्गत्या उत्तरत्र पेटिका[4]सङ्गत्युल्लङ्घनं न दोषमावहति। विधौ लाघवादिति।

प्रकृतस्य वदनादेस्ततो भिन्नेन राकासुधाकरादिना लोकप्रसिद्धेन चै[5]कवाक्यप्रतिपाद्यं[6] कविसमयसम्मतं कान्तिमत्वादिभिर्यत्साधर्म्यं समानधर्मसम्बन्धः सोपमा।

अत्र लोकसिद्धपदेनोत्प्रेक्षा व्यवच्छिद्यते। तत्रोपमानस्य कविप्रौढोक्ति-सिद्धत्वात्। भिन्नपदेनानन्वयालङ्कारनिरासः[7]। तत्रैकस्यैवोपमानोपमेय-

भावालिङ्गितत्वात्। वाच्यमित्यनेन गम्यौपम्यरूपकादिव्यवच्छेदः[8][9]। कविसम्मतमित्यनेन 'कुमुदमिव वदनम्', 'कारणमिव कार्यम्' इत्यादीनां हीनोपमादीनां च निरासः। न हि तत्रोपमानोपमेयभावः कविसम्मतः।

न च[10] कार्यकारणयोस्साधर्म्यमेव नास्तीति शङ्कनीयम्- 'कारणगुणा हि कार्यगुणानारभन्ते'[11] इति न्यायेन तत्रापि साधर्म्यस्य सम्भवात्। तच्च साधर्म्यं कविसम्मतैरेव[12] कान्तिमत्त्वादिभिः स्वीकरणीयम्।

अभिधेयतया विभाति कान्ते वदनं ते शरदीव शुभ्रभानुः।
अपि सुन्दरि चन्द्रिकेव धत्ते दरहासस्तव सत्तया प्रकर्षम्।। 2।।

इत्यादौ उपमानोपमेयभावो न सहृदयहृदयाह्लादाय।

एकवाक्यवाच्यमित्यनेन उपमेयोपमालङ्कारव्यावृत्तिः। तस्य[13] वाक्यद्वयगोचरत्वात्। तच्चैकेनैव श्लिष्टेनाश्लिष्टेन[14] वा पदेनोपादेयम्। श्लिष्टोपादानेऽपि न[15] श्लिष्टशङ्कातङ्कः[16][17]। स्वतो भिन्नयोरपि धर्मयोः श्लिष्टपदोपादानेन भेदे सति अभेदरूपातिशयोक्तिलाभाद् एकत्वधीपथपान्थ-[18] योरुभयानुगतैकधर्मत्वेनाङ्गीकृतत्वात्।[19] तथा च एतादृशस्थले श्लेषप्रति-भोत्थापितातिशयोक्त्यनुप्राणितोपमा इत्युच्यते। तां विभजते-

पूर्णालुप्ताप्रकाराभ्यां सा तावद्द्विविधा भवेत्।। 3।।

उपमानोपमेयसाधारणधर्मोपमाप्रतिपादकानां[20] चतुर्णां प्रयोगे पूर्णा। एतेषामेकद्वित्रिलोपे लुप्ता। पूर्णां विभजते-

श्रौत्यार्थीति द्विधा पूर्णा।। 4।।

साक्षात्सादृश्यवाचकयथेववावतीनां प्रयोगे श्रौती। धर्मिव्यवधानेन[21] तत्प्रतिपादकानां निभसङ्काशादिपदानां[22] प्रयोगे आर्थी[23]। अन्वर्थे चैते संज्ञे।

ननु यथेवादिशब्दानामुपमानविशेषणतया न सादृश्यप्रतिपादन-पटीयस्त्वमिति चेत्, मैवम्। शब्दशक्तेस्तादृशत्वात्[24]। यथा राजशिरोगता षष्ठी पुरुषमाक्षिपन्ती तदुभयनिष्ठसम्बन्धबोधने हि न पर्यनुयोगार्हा, तथा यथादयोऽपि। वतौ तु विशेषः। 'तत्र तस्येव' (अष्टाध्यायी 5-1-116) इति सूत्रोक्तवतिः साक्षात्सादृश्यप्रतिपादकः, इवार्थत्वात्। तेन तत्रैव श्रौती।

'तेन तुल्यम्' (अष्टाध्यायी 5-1-115) इत्यत्र वतिस्तु तुल्यं प्रतिपाद्य[25] तन्निर्वाहाय सादृश्यमाक्षिपतीति तत्रार्थ्येव। तां पुनर्विभजते-

[26]द्विविधा सा पुनस्त्रिधा[27]।। 5।।

द्विविधापि[28] सा वाक्यसमासतद्धितगतत्वेन त्रिधा सती पूर्णोपमा श्रौती आर्थी च भवतीति षट्प्रकारा। क्रमेणोदाहरणानि-

वर्षावद्बहुवाहिनीजुषि रणक्षोणौ रघूणां प्रभो-
र्मूर्तिस्सम्भृतसर्वतोमुखबला विभ्राजति स्माभ्रवत्।
तत्सिंहध्वनिरस्य गर्जितमिव प्रादुर्बभूवोर्जितं
दैत्येन्द्रैर्हरिभिर्यथा पृथुबलैः प्रोत्साहिभिश्शुश्रुवे।। 6।।

वाहिन्यो नद्यः सेनाश्च। सम्भृतसर्वतोमुखबला। राममूर्तिपक्षे, सम्भृतं सर्वतोमुखं सर्वपथीनं, बलं सैन्यं सारो वा यया सा तथोक्ता। मेघपक्षे, सर्वतोमुखं जलं तदेव बलं तत्सम्भृतं यया सा तथोक्ता। वर्षावद् वर्षास्विव। अभ्रवद् अभ्रस्येव। उभयत्रापि तद्धितगा[29] श्रौती पूर्णोपमा। 'तत्र तस्येव' (अष्टाध्यायी 5-1-116) इति विभक्तिद्वयार्थविहितवतेरिवार्थत्वात् श्रौतीत्वम्[30]। गर्जितमिवेत्यत्र समासगता। इवेन सह नित्यसमासस्य वक्तव्यबलेन सिद्धत्वात्। हरिभिर्यथेत्यत्र वाक्यगता। अत्र तद्धितगतयोरुपमयोर्वाहिनीसर्वतोमुखशब्दश्लेषप्रतिभोत्थापितातिशयोक्त्यनुप्राणितत्वाद् अङ्गाङ्गिभावेन सङ्करः।

दोर्दण्डस्तव कुण्डलिप्रभुनिभः प्राचण्ड्यवान्हिण्डते
श्रीखण्डद्रवचर्चिका जयति तन्निर्मोकवन्निर्मला।
तत्कौक्षेयकवल्लरी च तरलश्यामातिभीमाकृति-
र्वीर श्रीरघुराम तद्रसनया संशोभते सन्निभा।। 7।।

कुण्डलिप्रभुनिभ इत्यत्र समासगता आर्थी पूर्णोपमा। तन्निर्मोकवदित्यत्र तद्धितगता। 'तेन तुल्यम्' (अष्टाध्यायी 5-1-115) इत्यादिना तुल्यार्थे वतेर्विधानात्। तद्रसनया सन्निभ इत्यत्र वाक्यगता। एवं श्लोकद्वये पूर्णाः श्रौत्यार्थ्युपमाः[31] षडप्युदाहृताः।

लुप्तां लक्षयित्वा विभजते[32]–

धर्मादिलोपे लुप्ता स्यात्प्रथमं सप्तधा च सा[33] ।। 8 ।।

लुप्ता तु धर्मलोपे, उपमानलोपे, वाचकलोपे, धर्मवाचकलोपे, धर्मोपमानलोपे, वाचकोपमेयलोपे, धर्मवाचकोपमानलोपे च[34] भवन्ती[35] प्रथमं सप्तविधा[36] भवति[37] ।

धर्मलोपवती तासु श्रौत्यार्थीति द्विधा[38] भवेत्[39] ।

समासादित्रिगा त्वा[40]र्थी श्रौती वाक्यसमासगा।। 9 ।।

श्रौती तद्धितगा न सम्भवति। इवार्थे विहितस्य वतेस्सत्त्वेऽपि धर्मानुपादाने असम्भवात् तदितरस्य कल्पबादेरि[41]वार्थे विधानाभावाच्च। एवमनुपात्तधर्मा पञ्चप्रकारा। यथा–

त्वं पारिजात इव राजसि, राम बाहु–

दण्डौ च काण्डसदृशौ ततिरङ्गुलीनाम्।

तुल्या प्रवालपटलेन यथा व्रतत्यो

मुक्तालतास्स्मितमुदञ्चति पुष्पकल्पम्।। 10 ।।

अभीष्टदातृत्वादिधर्मानुक्तेरियं धर्मलुप्ता[42] । अत्र पारिजात इव इत्यत्र श्रौती समासगता। यथा 'व्रतत्यः' इत्यत्र वाक्यगता च दर्शिता। आर्थी तु काण्डसदृशावित्यत्र समासगता। प्रवालपटलेन तुल्या इत्यत्र वाक्यगता[43] । पुष्पकल्पमित्यत्र तद्धितगतेति विभागः।

लुप्तोपमाना द्विविधा वाक्यगा च समासगा।। 11 ।।

[44]द्वयं यथा–

वीराः परे परिवृताश्चतुरङ्गसैन्यै–

श्शत्रूञ्जयन्ति न जयन्त्यथवा[45] म्रियन्ते।

एकस्त्वमेव सुबहूनवधीः खरादीन्

वीरं रघूद्वह समं भवता न विद्मः।। 12 ।।

लोके वीराः[46] के[47]चिच्चतुरङ्गसैन्य[48]परिवृताः शत्रूञ्जयन्ति। अन्ये पराजयन्ते। अपरे[49] स्वयमेव म्रियन्ते। त्वं त्वलौकिकः। यत एकोऽसहायोऽवधीरेव। त्वमेव न[50] त्वादृशोऽन्य इति त्रिविधवीरेभ्यः प्रागुक्तेभ्योऽ–

तिशयो[51] दर्शितः। शत्रवश्च सुबहवः चतुर्दशसहस्रसंख्याकाः,[52] ते च खरादयः। आदिशब्देन प्रकारवाचिना खरतुल्यपौरुषा एव सर्वे पुरुषादा इति[53] ध्वनितम्। इयं लुप्ता लुप्तोपमाना वाक्यगता। न त्वियं लुप्तगुणा। वीरमिति पदेन[54] गुणोपादानात्। 'वीरं रघूद्वह भवत्सदृशं न विद्मः' इति पाठे त्वेषैव समासगा भविष्यति। अनयोश्च नोपमानस्वरूपप्रतिषेधः क्रियते; किन्तु उपमानदर्शनमेव निषिध्यते। तेन नानन्वयालङ्कारभ्रान्तिः कार्या।

**भवेद्वाचकलोपे या लुप्ता सा[55] षड्विधा मता।। 13।।**

समासे कर्मक्यचि आधारक्यचि कर्तृक्यञि[56] कर्मणमुलि कर्तृणमुलि[57] च भवन्ती लुप्ता वाचकलुप्ता[58] षोढा भवति। यथा–

वीर श्रीरघुराम तावकधनुर्धाराधरोदञ्चिता
वृष्टिः काण्डमयी युगान्तविगलत्पर्जन्यभीमा तव।
क्रोधं पूर्वसमीरणीयति गणे[59] तेजस्विनां वैरिणां
अङ्गारीयति किञ्च वर्त्म मरुतामिङ्गालजालायते।। 14।।

इह पर्जन्यभीमेत्यत्र 'उपमानानि सामान्यवचनैः' (अष्टाध्यायी 2-1-55) इति विहिते समासे पर्जन्य इव भीमेति[60] वाचकलोपवती। पूर्वसमीरणीयतीत्यत्र पूर्वसमीरणमिवाचरतीति विवक्षायाम् 'उपमानादाचारे' (अष्टाध्यायी 3-1-10) इति कर्मणि क्यचो विधानाद्वाचकलोपवती। अङ्गारीयतीत्यत्राङ्गारेष्विवाचरतीति विवक्षायाम्[61] – 'अधिकरणाच्चेति वक्तव्यम्' (अष्टाध्यायी 3-1-10 सूत्रे) इति वचनादधिकरणक्यचि वाचकलोपवती[62]। इङ्गालजालायत इत्यत्र इङ्गालजालमिवाचरतीति विवक्षिते 'कर्तुः क्यङ् सलोपश्च' (अष्टा० 3-1-11) इति[63] विहिते क्यङि वाचकलोपवती।

चण्डीशकाण्डासनमिंक्षुकाण्डभञ्जं बभञ्जाद्भुतबाहुदण्डः।
रामस्य सीता च पुलोमपुत्रीचारं चचारेन्द्रसमे च तस्मिन्।। 15।।

अत्रेक्षुकाण्डवद्भंक्त्वेति, पुलोमपुत्रीचारमित्यत्र पुलोमपुत्रीवच्चरित्वेति च विवक्षिते णमुलि वाचकलोपवती। 'उपमाने कर्मणि च' (अष्टा० 3-4-45) इति सूत्रेण कर्मार्थे, चशब्दात्कर्तरि च णमुलो विधानात्।

**धर्मवाचकलोपेन लुप्ता क्विब्गा समासगा।**
**धर्मोपमानलोपे तु वाक्यगा च समासगा।। 16।।**
**यथा–**

पश्यन्ति ये राम[64]मुखेन्दुबिम्बं दुःखानि तेषां तिमिरन्ति सद्यः।
चिरं चरन्तोऽपि न तेन तुल्यं कुत्राप्यहो सम्प्रति सम्प्रतीमः।। 17।।

अत्र राममुखेन्दुबिम्बमित्यत्र राममुखमिन्दुबिम्बमिवानन्दकरमिति 'उपमितं व्याघ्रादिभिस्सामान्याप्रयोगे' (अष्टा० 2-1-56) इत्युपमितसमासे धर्मवाचकलोपवती। तिमिरन्तीत्यत्र तिमिराणीवाचरन्तीति 'उपमानादाचारे' (अष्टा० 3-1-10) इत्यधिकारे 'सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः (अष्टा० 3-1-11, वार्ति० 1722) इति वचनात्क्विपि, तस्य सर्वापहारिणि लोपे च सति समानधर्मस्य आचारस्य वाचकस्य इवशब्दस्य च लोपादियं लुप्ता धर्मवाचकलोपवती[65] विशेषतो धर्मानुपादानाच्च। ननु 'लुप्तप्रत्यया प्रकृतिः प्रत्ययार्थमपि ब्रूते' इति न्यायेन क्विब्लोपेऽपि प्रकृतिमहिम्नैव आचारस्य गम्यमानत्वात् सति सदृशधर्मे कथं लुप्तधर्मा इति चेत्, सत्यम्। तथापि वाचकप्रत्ययलोपाद्वाच्यलोप[66] इत्युपचर्यते। अथवा प्रकृति-व्यतिरिक्तस्य धर्मवाचिनो लोपाद् धर्मलोप इत्यदोषः। उत्तरार्धे समान-धर्माणामुपमानस्य चानुपादानात् लुप्तधर्मोपमाना वाक्यगता। न तत्सदृक्षमिति पाठे[67] सैव समासगा।

**वाचके चोपमेये च लुप्ता या सैक[68]धा मता।**
**सर्वेष्वपि च लुप्तेषु या साप्येकविधा मता।। 18।।**
**यथा[69]–**

यदा तु संयद्गहने कुमारा [70]दितेर्भ्रमन्ति द्विरदेन्द्रसाराः।
तदा रघूणां प्रवरस्य बाणः[71] कण्ठीरवीयत्यपि[72] वा कृपाणः[73] ।। 19।।

अत्र द्विरदेन्द्रस्य सार इव भूरिस्सारो येषामिति 'सप्तम्युपमानपूर्व(पद)-स्य बहुव्रीहिर्वाच्यो वा चोत्तर[74]पदलोपश्च' (म० भाष्यम् 2-2-24) इति वचनेन समासे सति लुप्तवाचकधर्मोपमाना। कण्ठीरवमिवात्मानमाचरतीति

'उपमानादाचारे' (अष्टा० 3-1-10) इति क्यचि लुप्त[75]वाचकोपमेया ज्ञेया।
[76]एवमेकोनविंशतिः लुप्ताभेदाः पूर्णभेदैस्सह षड्भिः पञ्चविंशतिरुदाहृताः।

एकस्यैवोपमेयस्यानेकोपमानोपादाने मालोपमा। यथा-

नद्यस्समुद्रमिव रश्मिगणा इवार्कं तारास्सुधाकरमिव त्रिदशा इवेन्द्रम्।
रामं त्रिलोकजनतानयनाभिरामं कामं भजन्ति कमनीयतरा गुणौघाः।। 20।।

इयं चोपमा[77] वस्तुप्रतिवस्तुभावेन वा[78] बिम्बप्रतिबिम्बभावेन वा[79] सम्भवति। एकस्यैव धर्मस्योपमानोपमेयगतत्वेन पदद्वयेनोपादानं वस्तुप्रतिवस्तुभावः। एकेनैव पदेनैकस्यैव धर्मस्य द्विरभिधाने पौनरुक्त्यप्रसङ्गात्। बिम्बप्रतिबिम्बभावस्तु भिन्नयोरेव धर्मयोर्द्विरुपादानम्। यथा-

भाति रामभुजो भीममण्डलाग्राग्र्यमण्डितः।
उच्चण्डकुण्डलिक्रान्तश्रीखण्डतरुकाण्डवत्।। 21।।

अत्र भीमोच्चण्डपदाभ्यामुभयत्रापि एकस्यैव धर्मस्योपादानाद् वस्तुप्रतिवस्तुभावः।

चक्रीकृतधनुर्मध्यलक्षितं राघवाननम्।
परिवेषान्तरालस्थं बभौ बिम्बमिवैन्दवम्।। 22।।

अत्र चक्रीकृतशरासनप[80]रिवेषयोस्तुल्यतया रघुनन्दनवदनेन्दु[81]बिम्बयोः सादृश्यप्रतीतेर्बिम्बप्रतिबिम्ब[82]भावः।

पुनरप्यस्या द्वैविध्यं सम्भवति- समस्तवस्तुविषया एकदेशवर्तिनी चेति। आद्या यथा-

त्वं पारिजात इव राजसि राम बाहु-
दण्डौ च काण्डसदृशौ, ततिरङ्गुलीनाम्।
तुल्या प्रवालपटलेन यथा व्रतत्यो
मुक्तालतास्स्मितमुदञ्चति पुष्पकल्पम्।। 23।।

द्वितीया यथा-

ज्योत्स्नालेशैरिव परिचिता[83] स्रस्तपाटीरपत्रै-
स्तारापु[84]ञ्जैरिव विगलितैस्तारहारैः परीता।

सन्ध्यामेघच्छदसहचरैर्लाञ्छितालक्तकाङ्कै
रेजे सीतारघुतिलकयोः केलिशय्या प्रभाते।। 24।।

अत्र केलिशय्या अम्बरस्थलीव इत्यनुक्तत्वाद् इयमेकदेशवर्तिनी। एवमन्येऽपि अवान्तरभेदास्सूक्ष्माः प्रेक्षावद्भिर्विवक्षणीयाः[85]। विस्तर-भयादुपरम्यते[86]।

विदुषां प्रमदाय सोपसर्गा गरुडाङ्कस्य मुदे गतोपसर्गा।
अपकारवती प्रियाय शम्भोरुपमेयं प्रतिभात्यनेकरूपा[87] ।। 25।।

उत्प्रेक्षालङ्कारः

अथ उपमालक्षणे प्रथमविशेषणव्यवच्छेद्याया उत्प्रेक्षायास्स्वरूपं निरूपयति–

अन्यत्वाध्यवसायो[88] यः प्रकृतस्य गुणादिना।
सोत्प्रेक्षा[89] कथिता सा स्याद्द्रव्यादिभ्यश्चतुर्विधा।। 26।।

प्रकृतस्य उपमेयस्य गुणादिवशाद् अप्रकृतत्वाध्यवसायो यः सोत्प्रेक्षेत्यर्थः। सम्भावनमध्यवसायस्तर्कोऽभिमान ऊह उत्प्रेक्षेति पर्यायाः। गुणादीत्यादिशब्देन क्रिया विवक्षिता। तथा च अयमध्यवसायो जातिगुणक्रियाद्रव्यगोचरत्वेन चतुर्विधो भवन् तामपि[90] चतुर्धा व्यवस्थापयति। एवञ्च गुणक्रिययोरुत्प्रेक्षाहेतुत्वेन[91] उत्प्रेक्षागोचरत्वेन[92] च द्वेधाप्यनुप्रवेशः[93] सम्भवति। ते च प्रत्येकं भावाभावाभिमानेन द्वैविध्येऽष्टधा[94] जायन्ते। उक्तं हि–

लोकातिक्रान्तविषया भावाभावाभिमानतः।
सम्भावनेयमुत्प्रेक्षा वाच्येवादिभिरिष्यते।। 27।।
(उ० का० अ० सा० सं० 3-4)

इति। ते च अध्यवसायस्य गुणक्रियारूपनिमित्तद्वैराश्ये प्रत्येकं द्विधा भूत्वा षोडश सम्पद्यन्ते। निमित्तस्योपादानानुपादानाभ्यां[95] द्वैविध्ये द्वात्रिंशद्भवन्ति। हेतुस्वरूपफलोत्प्रेक्षणैः पुनरेषामेव प्रत्येकं त्रैविध्ये षण्णवतिः। अमी च वाच्योत्प्रेक्षाभेदाः। तद्वाचकास्तु[96] –

मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः[97][98]।
उत्प्रेक्षा व्यज्यते शब्दैः[99] इवशब्दोऽपि तादृशः।। 28।।
(का० द० 2-234)

इति परिगणिताः। एतच्छब्दाप्रयोगे तु गम्याः।

ननु अध्यवसायमूलत्वाविशेषाद् उत्प्रेक्षातिशयोक्त्योः कथं भेदः[100]?
इत्थम्[101]। विषयविषयिणोरन्यतरनिगरणेन अभिन्नत्वेन प्रतिभानमध्य[102]-वसायः। स द्विविधः- साध्यस्सिद्धश्चेति। यत्र प्रकृतस्याप्रकृतधर्मसम्बन्धात् तदध्यवसायः साध्यस्तत्रोत्प्रेक्षा। तदुक्तम्-

अप्रकृतत्वेनाध्यवसायोऽथ गुणादिसम्बन्धात्[103]।
साध्यः प्रकृतस्य यदा कथितोत्प्रेक्षा तदा तज्ज्ञैः।। 29।।
(एकावली - 8-12, पृ० 231)

इति। यत्र पुनर्गुणसम्बन्धानास्थया प्रौढोक्तिमात्राद् विषयिणो विषय-गतत्वेनारोपणे भिन्नस्यापि विषयनिगरणेन प्रकृतत्वाद् अभेदप्रतीतेरध्यव-सायस्सिद्धस्तत्रातिशयोक्तिरिति विवेकः।

अत्र चमत्कारातिशयशालिनः कियन्तो भेदा उदाह्रियन्ते। तत्र उपात्तगुणनिमित्त[104]जातिभावस्वरूपोत्प्रेक्षा यथा-

त्वन्नासीरवसुन्धराधरमिथश्शिलष्यद्भुजामण्डली-
केयूरश्लथपद्मरागजरजःपुञ्जः प्रवालारुणः।
राम क्षोणिपते प्रतापतपनाद्युद्धे तवोदेष्यतः
पूर्वोदञ्चदनूरुदेहसुषमासन्दोहवद्द्योतते।। 30।।

अत्र सुषमाशब्दो जातिवचनः। आरुण्यगुणो निमित्तम्। प्रतापतपन-प्राचीनानूरुदेहदीप्तेरलोकसिद्धत्वात् नोपमाशङ्का। अत्र प्रवालारुण इति गुणवाचकपदस्थाने[105] 'स्फुरन्नम्बरे' इति क्रियावाचिपदप्रक्षेपे तु इदमेवो-पात्तक्रियानिमित्तजातिभावस्वरूपोत्प्रेक्षाया उदाहरणं द्रष्टव्यम्। समग्रा-कृतिरिति पदोपादाने[106] तु अनुपात्तगुणक्रियानिमित्त[107] जातिभावस्वरूपोत्प्रे[108]-क्षोदाहरणं[109] द्रष्टव्यम्। अत्र उत्प्रेक्षात्रयेऽपि सुषमेति प्रातिपदिकार्थमात्रतया हेतुफलभावोल्लेखाभावात् स्वरूपोत्प्रेक्षात्वम्।

अनुपात्तनिमित्तजात्यभावस्वरूपोत्प्रेक्षा यथा–
भवत्कीर्तिप्रतापाभ्यां रघुराजन्यपुङ्गव[110]।
भुवनानि विभाव्यन्ते प्रसिद्धार्केन्दुशून्यवत्।। 31।।
अत्रार्केन्दुशून्यवदिति जात्यभाव उत्प्रेक्षितः।
जातिहेतूत्प्रेक्षा[111] यथा–
निर्मलयाऽनर्गलया शीतलया रामभद्र तव कीर्त्या।
परितस्सुरसरितेव त्रयमत्र पवित्रितं जगताम्।। 32।।
अत्र गङ्गयेति जातिहेतुत्वम्।
जातिफलोत्प्रेक्षा यथा–
करालः करवालस्ते सत्यं राम रणाङ्गणे।
जहौ चर्ममयं कोशं रत्नकोशाय वैरिणाम्।। 33।।
कोशत्वं जातिः। गुणस्वरूपोत्प्रेक्षा यथा–
ये चिन्तयन्ति रघुनन्दनपादपद्मं
तेषां मनस्सु सुचिरस्थिर एव रागः।
तत्रावतीर्ण इति नूनमवैमि नो चे–
देवं क्व तेष्वनुगतो[112] गलितोऽपि[113] रागः[114] ।। 34।।
अत्र रागगुणस्वरूपमुत्प्रेक्षितम्। गुणहेतूत्प्रेक्षा यथा–
आलिङ्गनाद्रघुपतेरवनीसुताया हारेषु भूरिकुचमण्डलमाश्रितेषु।
उत्सूत्रतामुपगतेषु भयेन नूनं क्षीणं वलग्नममुचत्स्वत एव नीवी।। 35।।
अत्र नीवीगलने भयगुणस्य[115] हेतुत्वम्[116]।
गुणफलोत्प्रेक्षा यथा–
निर्भिन्नासुरकुम्भिकुम्भविगलत्संसक्तमुक्तावली–
गङ्गासङ्गिभवत्कृपाणयमुनाधाराजलस्रोतसि।
सत्यं सङ्गरकण्ठसीमनि[117] जहुर्देहान्प्रतीपा[118] नृपा
निश्शेषस्पृहणीयनिर्वृतिरमासम्भोगसौख्येच्छया।। 36।।

गङ्गायमुनासङ्गमे शरीरत्यागस्य 'सिताऽसिते सरिते' इत्यस्यामृचि प्रसिद्धं मुक्तिहेतुत्वम्। अत्र सौख्यगुणस्य फलत्वम्।

क्रियास्वरूपोत्प्रेक्षा यथा–

खड्गे न्यस्ता त्वया राम त्वङ्गता समराङ्गणे।
रिपुक्षोणीभृदेणीदृग्दृशां तरलता ध्रुवम्।। 37।।

अत्र तारल्यं क्रियास्वरूपम्[119]। क्रियाहेतूत्प्रेक्षा यथा–

पुनः पुनः कृतारातितरलप्राणपारणैः।
नूनं रामस्य तरलो मण्डलाग्रमहोरगः।। 38।।

अत्र तारल्यक्रियाया हेतुत्वम्[120]। यथा वा[121]–

कुसुमाउह तुह करणेम्मुंत्ता सत्ती हरिणो हिअए सत्ता।
मार सुहारससहआ खु जदो[122] जीवं तस्स ण सा हरदि[123] तदो[124]।। 39।।

छा०[125] कुसुमायुध तव करनिर्मुक्ता शक्तिर्हरेर्हृदये सक्ता।
मार सुधारससहजा खलु यतो जीवं तस्य न सा हरति ततः।। 40।।

अत्र शक्तिपदं साध्यवसानलक्षणया लक्ष्म्यां प्रवृत्तम्। तस्यास्सुधारससहजनन[126]क्रियाया जीवने हेतुत्वम्[127]।

क्रियाफलोत्प्रेक्षा यथा मत्कृते बालभागवते महाकाव्ये–

निविश्य[128] नीरन्ध्रनिकुञ्जमध्यमानमी समीरास्सहसा ससम्भ्रमाः।
न शक्नुवन्तीह पुनर्विनिर्गमे लताङ्गनालिङ्गनलालसा ध्रुवम्।। 41।।

अत्रालिङ्गनक्रियायाः फलत्वम्। द्रव्योत्प्रेक्षा यथा–

पातालकोटरकुटीरतले विलीय
भूमीमहं बत वहन्नपि भोगभागे।
केनाप्य[129]नाकलित इत्युदयद्विषाद–
श्शेषो रघूद्वहभुजाकृतिमाप नूनम्।। 42।।

इह रघुपतिभुजस्य शेषत्वेनाध्यवसायाद् द्रव्योत्प्रेक्षा।

द्रव्यहेतूत्प्रेक्षा यथा–

अस्य तार्क्ष्यादिवाहीना भीतास्सीतापतेश्शरात्।
नगराणि विमुञ्चन्ति नाकुलीना विरोधिनः।। 43।।

शत्रुपक्षे अकुलीना न भवन्तीति नाकुलीनाः, सत्कुलप्रसूता इत्यर्थः। सर्पपक्षे नाकुषु वल्मीकेषु लीनाः। श्लेषोत्थापितेयं हेतूत्प्रेक्षा।

द्रव्यफलोत्प्रेक्षा यथा–

ये शृण्वन्ति न राघवस्य चरितं बिम्बं तदीयं च ये
नो पश्यन्ति न संस्पृशन्ति तुलसीं जिघ्रन्ति नांघ्रिस्थिताम्।
नो पादाम्बु पिबन्ति न क्षणमपि ध्यायन्ति वा तत्तनुं
संज्ञायै जननीजनस्य जठराज्जाता जनास्ते ध्रुवम्।। 44।।

पादत्रये षडिन्द्रियाणां वैफल्यमुक्तम्। अत्र[130] संज्ञायै इति द्रव्यस्य फलत्वमुक्तम्[131]। अत्रोत्प्रेक्षात्रयेऽपि शेषताक्ष्र्यसंज्ञाशब्दानां द्रव्यवाचकत्वाद् द्रव्योत्प्रेक्षात्वमवगन्तव्यम्। एवमन्येऽपि भेदा ऊह्याः। विस्तरभयाद्विरम्यते।

अतिशयोक्तिः

पूर्वमुत्प्रेक्षाया यत्साङ्कर्यमाशङ्क्य निराकारि सातिशयोक्तिस्तयो-र्व्यावृत्तताबोधदार्ढ्यायाधुना निरूप्या इत्यभिप्रायेण तां निरूपयति–

अभेदे भेदकथनं भेदे सत्यभिधा भिदा।
अयोगे योगकथनं योगे चायोगवर्णनम्।। 45।।
कार्यकारणयोः कालस्यैक्यं तद्व्यत्ययोऽपि[132] च।
षड्विधातिशयोक्तिर्हि सम्मता चारुचेतसाम्।। 46।।
कविप्रौढोक्तिता तासां षण्णां सामान्यलक्षणम्।
अत्युक्तिरतिशयोक्तिरिति केचिद् बभाषिरे।। 47।।

केचित्तु – अध्यवसायमूलातिशयोक्तिः (अ० र० सू० 37) इति लक्षयित्वा अभिन्नत्वप्रतीतिरूपाध्यवसायाभावापराधात् कार्यकारणपौर्वापर्य-विपर्ययतत्समकालतारूपं भेदयुगं निह्नुवते। अभिनवगुप्तास्तु तयोरप्यति-शयोक्त्यन्तर्भावकटाक्षेणैव कविप्रौढोक्तिजीवनामतिशयोक्तिमभिदधुः[133]। अतोऽर्वाचीनानां निरर्गलगलगर्जनं प्राचीनप्रबन्धभावापरिज्ञाननिबन्धन[134]-मित्यलं प्रपञ्चेन।

अभेदे भेदोक्तिर्यथा[135]–

महोत्ताला[136] हेलालवतुलितकैलासगिरयो
भुजा बाणाः प्राणापहरणधुरीणाश्च सुभटाः।
गताः पूर्वे सर्वे मम पुनरपूर्वे ध्रुवमिमेऽ–
भवन्रामे भीमे रणशिरसि का मे जयकथा।। 48।।

इहापूर्व इत्यत्रासमस्तं[137] पदद्वयम्। इदं रावणवचनम्[138]। अत्र भुजादीनामभेदेऽपि भेदः कल्पितः।

भेदेऽभेदोक्तिर्यथा–

जडध्युत्पन्नस्त्वं न हि न चपलाशप्रकृतिको[139]
न ते सन्ति छिद्राण्यपि न भवतो वक्रिमगुणः।
न वा नित्यं योगो भवति मधुपैर्नापि विटपै–[140]
र्न वा ते कम्प्रत्वं[141] तदपि रघुप त्वं सुरतरुः।। 49।।

अत्र मन्दाररघुनन्दनयोर्भेदे विद्यमानेऽपि अभेदरूपातिशयोक्तिः।

नन्वत्र व्यतिरेकोऽपि प्रतीयत इति चेत्, कामं प्रतीयताम्। न तावतातिशयोक्तेः काचित्क्षतिः।

असम्बन्धे सम्बन्धोक्तिर्यथा–

रामस्योच्चण्डचापादविरलगलितैः काण्डकाण्डप्रकाण्डै–
र्दैतेयैः खण्डिताङ्गैर्विदलितमसकृन्मूर्च्छितं[142] चण्डरश्मिम्।
शुण्डालेन्द्राः प्रचण्डाः परिसरगगनप्राङ्गणे हिण्डमानाः
शुण्डादण्डाग्रमुक्तैर्वमधुकणगणैस्तूर्णमुद्बोधयन्ति।। 50।।

इह सूर्यस्य मूर्च्छासम्बन्धेऽपि[143] [144]तत्सम्बन्ध उक्तः[145]। गजानां[146] च तद्बोधकत्वासम्बन्धेऽपि[147] तत्सम्बन्धश्चोक्तः।

सम्बन्धेऽसम्बन्धोक्तिर्यथा[148]–

यदाभवदपांनिधिर्भवदपाङ्गरागाग्निना
हतो रघुपते! ततः कपिनिबद्धसेतुश्लथः।
तदादि पयसां निधिं परिविमुच्य सोपद्रवं
विकुण्ठभुवने[149] स्थितिं वितनुते स्म लक्ष्मीपतिः।। 51।।

अत्र लक्ष्मीपतेः सिन्धुबन्धुसम्बन्धे[150] सत्येवासम्बन्ध[151] उक्तः[152]।

कार्यकारणयोरेककालता यथा-

तव दाशरथे शरधेर्गलितास्तुलितानला यदा विशिखाः।
अतिविभवपुषो वपुषो निरगुश्च तदैव रावणप्राणाः।। 52।।

कार्यकारणपौर्वापर्यविपर्ययो यथा-

प्रयाणपटहारवात्तव पुरारिशातोदरी
रघुप्रवर गोचरीचरिकरीति भूभृद्दरीः।
बुधेषु मदसिन्धुरप्रकरबन्धुरास्सम्पदः
पदं विदधतेऽथ ते नृप दृशः कृपासंस्पृशः[153] ।। 53।।

अनन्वयालङ्कारः

सम्प्रत्युपमालक्षणे भिन्नेनेति विशेषणव्यावर्त्य[154]मनन्वयालङ्कारं लक्षयति-

ऐक्ये ह्यनन्वयः प्रोक्त उपमानोपमेययोः।। 54।।

यत्र सदृशवस्त्वन्तरनिषेधद्योतनाय एकस्यैवोपमानोपमेयभावः प्रतिपाद्यते तत्रानन्वयालङ्कारः। द्वयोः खलूपमानोपमेयभावयोग्यत्वेन अन्वयः। स नास्तीति अनन्वयत्वमन्वर्थम्[155]। यथा-

उन्मूलने च दुष्टानां शिष्टानां परिपालने।
रामो राम इव क्षोणीमण्डलाखण्डलो बभौ।। 55।।

रूपकालङ्कारः

अथास्य विषयविषयिणोरभेद[156]प्रतीतिमात्रेण रूपकादिसाङ्कर्य[157]मा-शङ्कीत्यभिप्रायेण उपमालक्षणे वाच्यपदव्यावर्त्यतया च रूपकं लक्षयति-

विषयानिह्नवेनाऽन्यस्यारोपे रूपकं मतम्।। 56।।

अन्यस्याप्रकृतस्य। प्रकृतं[158] विषयमनपह्नू[159]यैव[160] यदारोपणं तद्रूपकम्[161]। रूपयति[162] विषयी तदन्यम् आत्मना रूपवन्तं करोतीति रूपकशब्दप्रवृत्तिः[163]।

अत्र चाभेदस्य[164] प्राधान्यमात्रम्। वस्तुतोऽस्त्येव[165] भेदः। तेना-

नन्वयव्यावृत्तिः। अत एव औपम्यगम्यतावाचोयुक्तिश्च[166]। अत्र विषयानिह्नवेनारोप इत्यनेन अतिरोहितस्य विषयस्यारोप्येणोपरक्तत्वं विवक्षितम्। तथा च[167] विषयातिरोधानांशेन सन्देहभ्रान्तिमदपह्नवानां व्यावृत्तिः। तेषां विषयस्य सन्देहभ्रान्त्यपह्नवैस्तिरोहितत्वात्। आरोप्येणेत्यनेनो[168]त्प्रेक्षादेरुपमादीनां च व्यावृत्तिः। उत्प्रेक्षादेरारोपव्यतिरिक्ताध्यवसायमूलत्वाद् उपमा[169]याश्च प्रागेवानारोपमूलत्वात्। अस्यालङ्कारस्यारोपप्राणत्वात्[170]। उपरक्तत्वमित्यनेन परिणामालङ्कारव्यवच्छेदः। तत्रारोप्यमाणस्य प्रकृतोपयोगितया विषयपरिणामरूपत्वेन[171] प्रकृतोपरञ्जकत्वाभावात्। अतः सर्वेभ्यस्सादृश्यमूलालङ्कारे[172]भ्यो विविक्त एवास्यालङ्कारस्य विषयः।

तत्तावत्त्रिविधम्। सावयवं निरवयवं परम्परितं चेति। अवयवावयविसाकल्यवृत्ति सावयवम्। अवयवतो निष्क्रान्तम् अवयविमात्रपर्यवसितं निरवयवम्। परम्परा अस्य सञ्जातेति परम्परितम्। सावयवं द्विविधम्। समस्तवस्तुविषयम् एकदेशवर्ति[173] चेति। निरवयवं च[174] द्विविधम्। केवलं मालारूप[175] चेति[176]। परम्परितं च द्विविधम्। शिलष्टशब्दनिबन्धनं अशिलष्टशब्दनिबन्धनं चेति। द्विविधस्यापि परम्परितस्य[177] केवलमालारूपेण प्रत्येकं द्वैविध्ये रूपकमष्टविधम्। तस्य समस्तव्यस्तत्व[178]भेदेन द्वैविध्ये षोडशविधत्वम्।

तत्र यदा आरोप्यमाणमनेकम्[179] अवयवावयविभावेना[180]वस्थितं श्रुत्यैवोपस्थाप्यते तदा समस्तवस्तुवि[181]षयं सावयवम्। यदा तु किञ्चिच्छ्रुत्या किञ्चिदर्थात् चोपनीयते तदैकदेशवर्ति[182]। तत्राद्यं यथा-

छिन्नेन्द्रा[183]रिशिरोरसार्द्र[184]वटकैस्तत्कन्धरोच्चैरसृ-
ग्धारातैलघृतैस्तवाशिरगदङ्कारस्समृद्धो बभौ।
किं ब्रूमो रघुना[185]थ वीर शुचिना दक्षेण[186] येनाद्भुतं
दुर्वारश्शमितो महान्बहुमुख[187]स्त्रैलोक्यतापज्वरः।। 57।।

बहुमुखो रावणो बहुप्रकारश्च। अत्र खड्गस्य वैद्यत्वं निरूप्य तदुचितावयवनिरूपणात् समस्तवस्तुविषयता।

द्वितीयं यथा–

शुम्भच्छुण्डालशैलाविरलपरिगलद्दानधाराझराणि
भ्राम्यत्कूजद्रथाङ्गान्यसुरहरियुतान्युग्रखड्गयावृतानि।
आकर्णाकृष्टचापच्युतनिबिडतरोच्चण्डकाण्डप्रकाण्ड–
ज्वालामालाकरालो दहति रघुपतिर्वैरिसेनावनानि।। 58।।

अत्रावयवरूपणा[188]देव रामस्याग्नित्वेन अवयविरूपणं गम्यते इत्येकदेशवर्तित्वम्।

केवलं निरवयवं यथा–

मुखेन्दुं रामचन्द्रस्य ये ध्यायन्ति निरन्तरम्।
अपारघोरसंसारपारावारं तरन्ति ते।। 59।।

अत्र मुखस्येन्दुत्वं संसारस्य सागरत्वं च[189] निरूप्यते। न तु तदवयवादिकं किञ्चिन्निवेश्यते।

[190]माला यथा–

आम्रेडितं सुरतरोः प्रतिबिम्बमिन्दो–
र्भेदस्सुपर्वसुरभेर्विकृति[191]र्निधीनाम्।
द्वित्वं रवेः परिणतिः प्रसवायुधस्य
मूर्त्यन्तरं मुररिपोर्जयतीह रामः।। 60।।

इदं निरवयवं मालारूपकम्[192]। एकस्यैवानेकधा रूपणात्। रूपकहेतुकं रूपकं परम्परितम्[193]। तत्र श्लिष्टशब्दनिबन्धनं केवलं परम्परितम्[194], यथा–

चरन्तमम्बरे दृष्ट्वा रामेण प्रेरितं खगम्।
अहीना वैरिणो भीत्या[195] मुञ्चन्ति नगराण्यहो।। 61।।

अत्र बाणस्य तार्क्ष्यत्वेन निरूपणं[196] शत्रूणां सर्पत्वेन निरूपणं च हेतुहेतुमद्भावापन्नो इति परम्परितम्[197]। उभयत्रापि[198] श्लेषोल्लसनात्[199] श्लिष्टशब्दनिबन्धनत्वम् एकवारमेव[200] निरूपणात् केवलत्वं च[201]।

[202]इदं मालया यथा[203] –

कबन्धाडम्बरग्रीष्मस्तारापतिदिवाकरः।
क्षुभ्यद्भूधरजम्भारिर्भासते भरताग्रजः।। 62।।

अत्र रामस्य ग्रीष्मत्वादिरूपणं[204] कबन्धतारापतिभूभृतां कबन्धासुरवालिनृपाणां जलचन्द्रगिरित्वेन रूपणे कारणं जातमिति परम्परितत्वम्। श्लेषसमुल्लसनात् श्लिष्टशब्दनिबन्धनत्वम्। एकस्य रामस्यानेकधा रूपणात् मालारूपत्वं[205] च।

अश्लिष्टशब्दनिबन्धनं[206] केवलं परम्परितं यथा–

श्रीरामचन्द्रवदनराकातारकनायकः।
विद्वन्नेत्रचकोराणां वितनोति कुतूहलम्।। 63।।

अत्र राममुखस्य चन्द्रत्वरूपणं विद्वन्नेत्राणां चकोरत्वरूपणे हेतुरिति परम्परितत्वम्[207]। श्लेषाभावादश्लिष्टशब्दनिबन्धनत्वम्[208][209]। सकृदेव रूपणात् केवलत्वं च।

मालारूपाश्लिष्टशब्दनिबन्धनं परम्परितं साधर्म्येण वैधर्म्येणापि सम्भवति[210]। यथा–

वात्या दैत्याम्बुदानां, विबुधगणविपद्रोगिनां वैनतेयाः
पापाग्नीनां पयोदाः प्रतिभटकरिणां[211] प्रक्रमाः पाकलानाम्।
कुल्या लक्ष्मीलतानां, कविकुमुदरुचां कन्दलाः कौमुदीनां
कल्याः कल्यात्मकानां पटुतरतमसां, केलयो रामकीर्तिः।। 64।।

अत्र पूर्वार्धे वैधर्म्येण उत्तरार्धे साधर्म्येण च प्रवृत्तिरिति द्रष्टव्यम्। एवमष्टविधमपि रूपकं निरूपितम्। अन्येऽष्टौ[212] भेदाः पृथग्वैचित्र्याभावान्न निरूपिताः।

**परिणामालङ्कारः**

अथैतल्लक्षणव्यावर्त्यानां[213] परिणामादीनां क्रमाल्लक्षणान्याह–

**आरोपमूर्त्या विषयः परिणामं भजेद्यदि।**
**प्रकृतार्थोपयोगाय परिणामस्स तु द्विधा।। 65।।**

यत्र विषयः प्रस्तुतकार्योपयोगाय आरोप्याकारेण[214] परिणमते, तत्र परिणामालङ्कारः।

न चायं रूपकेऽन्तर्भवति। तत्र ह्यारोप्यस्य[215] प्रकृतोपरञ्जकत्वमात्र-विश्रान्तत्वात्। इदमुदितं भवति- यत्रारोप्यमाणस्य प्रकृतोपरञ्जकत्वमात्रं तत्र रूपकम्। यत्र प्रकृतकार्योपयोगायारोप्यात्मना[216] विषयस्य परिणतिस्तत्र परिणाम इति। नापि समासोक्तौ[217]। आरोप्यमाणस्य प्रकृतोपयोगित्वेऽपि वाच्यत्वाभावात्। अयं सामानाधिकरण्यवैयधिकरण्याभ्यां[218] द्विधा भवति। यथा-

बोधाय विबुधलक्ष्म्या नष्टाया दशमुखाहिदष्टायाः।
भवतो[219] गारुडमन्त्रा विजयन्ते रामचापटङ्काराः।। 66।।

अत्र धनुर्गुणध्वनीनां सुरलक्ष्मीमूर्च्छाप्रबोधनरूपप्रकृतोपयोगाय आरोप्यमाणगारुडमन्त्ररूपेण परिणतिः। भवतो[220] गारुडमन्त्रा विजयन्ते रामचापटङ्कारैरिति पाठे इदमेव वैयधिकरण्योदाहरणं च।

अपह्नुत्यलङ्कारः

निषिध्य प्रकृतं यत्राप्रकृतारोपणं भवेत्।
तत्रापह्नुत्यलङ्कारस्स त्रिधा परिकीर्तितः।। 67।।

आरोप्य प्रकृतनिषेधः। निषिध्यारोपः। छलादिशब्दादिप्रयोगश्चेति[221]।
क्रमेण यथा-

श्यामक्षौमसमास्तृता रघुपतेः कीर्त्यङ्गनाया महा-
शय्या नाम्बरमत्र[222] जातिकलिकाः क्षिप्ता न तारागणाः।
पेटी राजति राजती हिमरजः पूर्णा, न राकाशशी,
तन्मध्ये मृगनाभिक्लृप्तवटवस्तोमो[223], न चायं मृगः।। 68।।

नेदं मण्डलमैन्दवं, रघुपतेः कीर्त्यङ्गनाया रया-
दावैरिश्चपदं समुज्जिगमिषोस्सोपानहीरोपलः[224]।
नाङ्कोऽयं, तव दानवारिलहरीसंसिक्तसर्वंसहा-
सञ्चाराञ्चितपङ्क[225] एव चरणन्यासेन तत्र स्फुटः।। 69।।

कालिन्दी त्वां सेवते खड्गरूपा, नो चेदेवं राम! तत्सङ्गमेन।
स्वर्वाहिन्या जीवनानां कथं स्याद्वृद्धिस्सूर्यानन्दहेतुश्च न स्यात्।। 70।।

सन्देहालङ्कारः

कविसम्मतसादृश्याद्विषयी विषयो यदा।
सन्दिग्धौ भवतस्तत्र सन्देहालङ्कृतिस्त्रिधा[226] ।। 71 ।।

कविसम्मतसादृश्यादित्यनेन स्थाणुर्वा पुरुषो वा इत्यादिसन्देहव्यावृत्तिः। तत्र हि साधारणधर्मावबोधसध्रीचीनेन विवेचकधर्माग्रहेण[227] सन्देहस्य स्वरसवाहित्वात्। इह तु नानवबोधनिमित्तस्सन्देहः; किन्तु कविः स्वप्रतिभातिशयेन वर्णयितुं सादृश्यदर्शनेन सन्देहमुपनिबध्नाति।

सा त्रिविधा[228] – शुद्धा निश्चयगर्भा निश्चयान्ता चेति।

क्रमाद्यथा–

सचेतना काञ्चनपुत्रिका वा शरीरिणी मन्मथचातुरी वा।
सौदामिनी स्थैर्यवती किमेषा का वा न जाने रघुवीरपार्श्वे।। 72 ।।

अत्र[229] सन्देहमात्रस्य पर्यवसानाच्छुद्धत्वम्[230]।

असावम्बोधिः किं? स वितरणिभावं न भजते
महादेवोऽयं किं? स[231] वहति शिवामिश्रिततनुम्।
विधाता किं ब्राह्मम्? स[232] हि कलितवान्नाभिजननं
विचिन्त्येत्थं रामं दधति कवयस्संशयधियम्।। 73 ।।

अत्र[233] साधारणधर्मातिरिक्तविशेषधर्मोल्लेखात् निश्चयगर्भत्वम्।

भानुः किं? स न भोगमार्गचतुरः किं पावकोऽयं? जनाः
सर्वत्राप्यनलं तमाहुरपि च क्षय्यो जडेनाप्यसौ।
किं चन्द्रः ? स निजोदयैर्न[234] वसुधासम्मोदमङ्कूरय-
त्येवं राममवेक्ष्य निर्मलगुणैः पश्चाद्विनिश्चिन्वते।। 74 ।।

अत्र विशेषधर्मोल्लिखमात्रातिरेकेण[235] अन्ते गुणैर्विनिश्चिन्वत इति निश्चयोररीकारादय[236] निश्चयान्तस्सन्देहः। स च न भोगेत्यादिश्लेषपदोपात्तानां[237] तत्तदर्थानां भेदे सति अभेदाध्यवसायरूपातिशयोक्त्यनुप्राणित[238][239] इत्यङ्गाङ्गिभावेन सङ्करः। सूर्यादिव्यतिरेकस्स्फुट[240] एव। किञ्च निरतिशयतेजस्वित्वादिशालितया सूर्यादिरूपतायामेकदेशमङ्गीकृत्य एकदेशान्तरनिषेधस्य[241] क्रियमाणस्य श्रीरामचन्द्रविषये[242] अनिर्वचनीयातिशायितारूप[243]–

[244]विशेषाक्षेपकत्वाद् आक्षेपालङ्कारप्रभेदः। अपि च प्रसिद्धेषु रविशशि-कृशानुषु एकस्यापि रघुपतितुल्यता नाभूत् किमुतान्येषु तेजस्विष्विति कैमुत्यवशेन दण्डापूपिकास्फूर्तेः अर्थापत्त्यलङ्कारस्य गम्यमानत्वात् संसृष्टिरित्यलं प्रपञ्चेन।

**भ्रान्तिमदलङ्कारः**

**कविसम्मतसादृश्याद्विषये पिहितात्मनि।**
**आरोप्यगोचरा धीश्चेत्स्याद् भ्रान्तिमदलङ्कृतिः।। 75।।**

अतस्मिंस्तद्ग्रहो भ्रान्तिः। तद्वान् भ्रान्तिमान्। यथा[245] –

द्रुतकनकरुचा रामप्रतापतपनेन[246] रूषिताकृतिषु।
स्वर्णागभ्रान्तिरभूत् स्वर्नारीणां समस्तशैलेषु।। 76।।

अत्र कविसम्मतसादृश्यादित्यनेन चाकचक्यादितौल्येन जायमानरजतादिभ्रान्तिव्यावृत्तिः। आरोपविषयस्यात्र भ्रान्तिगम्यत्वादेव[247] आरोपमूलसर्वालङ्कारवैलक्षण्यम्[248]। विरोधाभावाच्च न सन्देहान्तर्भावः। कविसम्मतसादृश्यमूलत्वेऽप्यस्य तत्त्वोल्लेखाभावान्न[249] स्मरणान्तर्भावः।

**स्मरणालङ्कारः**

स्मरणालङ्कारस्तु-
**सदृशार्थानुभूत्यान्य[250]स्मरणे[251] स्मरणं मतम्।। 77।।**

सदृशपदेन अदृष्टादिजनित[252]स्मरणव्यवच्छेदः। यथा-

द्रुतकनकोज्ज्वलकान्त्या रामभुजं वीक्ष्य सीतयाश्लिष्टम्।
चम्पकलतयाकलितं स्मरन्ति मुनयस्तमालतरुकाण्डम्।। 78।।

ननु भवतु भ्रान्तिमतोऽपह्नवादिभ्यो भेदः। उल्लेखात्कथं भेद इति चेत्, उच्यते।

**उल्लेखालङ्कारः**

**उल्लेखो बहुधैकस्य बहुभिस्स्यान्निरूपणम्।। 79।।**

एक एवार्थोऽनेकग्र[253]हीतृभिरनेकधोल्लिख्यत इति यत् सोऽयमुल्लेखालङ्कारः।

यथा–

धर्मश्शरीरभृदसाविति धर्मनिष्ठा
मूर्तो नयोऽयमिति मन्त्रकलाधुरीणाः।
कालो द्वितीय इति कूटकठोरकृत्याः[254]
कैवल्यमित्युपरताः कलयन्ति रामम्।। 80।।

उपरता मुमुक्षवः।

अत्रानेकधोल्लिख्यते[255] इत्यनेन भ्रान्तिमद्व्यावृत्तिः। भ्रान्तिमति अनेकधोल्लेखाभावात्। अनेकैर्ग्रहीतृभिरित्यनेन अतिशयोक्त्यपोहः। तत्रानेकग्रहीतृ[256]कत्वनिबन्धनाभावात्[257]। न च प्रकृते[258]ऽप्रकृतारोपरूपकेऽन्तर्भावशशङ्क्यः। तस्य प्रकृतोपरञ्जकत्वमात्रेणोत्थानात्। वस्तुनस्ताद्रूप्ये पुनः अस्य प्रवृत्तिः।

एवं तावदुपमालक्षणे, लोकसिद्धेन भिन्नेनेति च[259] विशेषणद्वय[260]-व्यावर्त्योत्प्रेक्षाद्यलङ्कारनिरूपणमुखेन व्याख्यातम्। अधुना यदैकवाक्यवाच्यं स्यादिति विशेषणं व्याख्यातुं तद्व्यावर्त्योपमेयोपमां लक्षयति।

उपमेयोपमालङ्कारः

द्वयोः क्रमाद्भवेतां चेदुपमानोपमेयते।
वाक्यद्वयेनोपमेयोपमा सा कथिता द्विधा।। 81।।

अत्र वाक्यद्वयविशेषणेन उपमाव्यवच्छेदः। अत्रोपमानो[261]पमेययोर्मिथः पर्यायेण तादृक्ताकल्पनम् उभयातिरिक्तसदृशवस्त्वभावध्वननाय। इयं द्विधा[262] प्रवर्तते। धर्मस्य वस्तुप्रति[263]वस्तुतया निर्देशेन साधारण्येन चेति। क्रमाद्यथा–

कुलिशकरवालभीषणबाहुः करवालकुलिशभीमकरः[264]।
इन्द्र इव रामचन्द्रो वि[265]राजतीन्द्रोऽपि रामचन्द्र इव।। 82।।

इह रामस्यो[266]पमेयत्वे करवालः कुलिशमिव इत्युपमितसमासाश्रयणेन बाहुविशेषणता। रामकरे कुलिशासम्भवात्। इन्द्रविशेषणत्वे तु कुलिशं करवाल इव इत्युपमितसमासः। इन्द्रस्योपमेयत्वे उत्तर[267]विशेषणमेव[268]

द्रष्टव्यम्। ततश्चात्र[269] भिन्नयोरपि धर्मयोरतिशयोक्तिमहिम्ना एकतयाध्यवसितयोर्वारद्वयोपादानेन वस्तुप्रतिवस्तुभावो न विरुध्यते। वारद्वयोपादानं चात्र समासद्वयेन स्वीकारात्।

श्रीरामचन्द्र भवतः करुणावरुणालय[270]।
प्रतापस्सूर्यवत्तिग्मस्सूर्यो भाति प्रतापवत्।। 83।।

अत्र तिग्मत्वं साधारणधर्म इति साधारण्येनेयमुपमेयोपमा। उपमानोपमेयप्रतिपादकवाक्ययुगले वस्तुप्रतिवस्तुभावेन धर्मनिर्देशसाम्येनास्य[271] प्रतिवस्तूपमादिसाङ्कर्यमाशङ्क्य तां[272] लक्षयति।

**प्रतिवस्तूपमालङ्कारः**

**यत्र वाक्यद्वये वस्तुप्रतिवस्तुतया भवेत्।**
**समानधर्मनिर्देशः प्रतिवस्तूपमा मता।। 84।।**

यत्र हि उपमानोपमेयप्रतिपादकवाक्यद्वये सामान्यधर्मः कथितपदस्य पुनरुक्तदोषग्रस्तत्वात् शब्दान्तरेणोपादीयमानः प्रकृताप्रकृतयोरौपम्यं गमयति सा प्रतिवस्तूपमा। इयं साधर्म्यवैधर्म्याभ्यां प्रवर्तते। साधर्म्येण यथा–

जामदग्न्यप्रतापाग्निग्रसने राघवः प्रभुः[273]।
कालकूटनलज्वालागिलने धूर्जटिः पटुः[274]।। 85।।

अत्र उपमानोपमेयवाक्यद्वयवर्तिभ्यां ग्रसनगिलनपदाभ्यां प्रभुपटुपदाभ्यां[275] च अभिन्नावेव संहरणसामर्थ्यरूपौ धर्मौ स्वीक्रियमाणौ प्रकृताप्रकृतयो रामहरयोरौपम्यं गमयतः।

उपमेयोपमायान्तु औपम्यस्य वाच्यत्वं, धर्मयोश्च स्वतो भिन्नयोरेव अतिशयोक्तिवशादभेदः। इह तु तदुभयवैपरीत्यमिति[276] अनयोर्महान् भेदः। अस्य वस्तुप्रतिवस्तुभावोपजीवितया बिम्बप्रतिबिम्बभावोपजीविनो दृष्टान्तालङ्काराद्भेदः स्फुट[277] एव[278]। वैधर्म्येण[279] यथा–

रामस्य केवलमकुण्ठदशास्यकण्ठ–
वार्टी[280] विपाटनविधौ पटवो विपाट्यः।

भेत्तुं हिरण्यकशिपूग्रभुजान्तरालं
कोऽन्यो नृसिंहनखरान्विभजान्तरालम्।। 86।।
अत्रापि वैधर्म्येण रघुसिंहनरसिंहयोरौपम्यं गम्यते।

दृष्टान्तालङ्कारः

बिम्बानुबिम्बभावाच्चेदुपमानोपमेययोः।
साधर्म्यं पृथगादिष्टं स दृष्टान्तो द्विधा मतः।। 87।।

अत्र पृथक्साधर्म्य इत्यनेन उपमेयोपमाप्रतिवस्तूपमाभ्यां[281] व्यवच्छेदः[282]। भिन्नयोरेव[283] धर्मयोर्वाक्यद्वये वारद्वयोपादानात्[284] प्रकृताप्रकृतयोः औपम्यावगतौ दृष्टान्तालङ्कारः। दृष्टोऽन्तो निश्चय इति दृष्टान्तोऽन्वर्थः। सोऽपि पूर्ववद्द्विधा[285]। यथा[286] –

रघुनाथ एव शक्तो युगपद्दारिद्र्यदारणे[287] विदुषाम्।
रविरेक एव दक्षस्सकृदखिलध्वान्तसन्ततिध्वंसे।। 88।।

अत्र रघुनाथदिननाथयोर्बिम्बप्रतिबिम्बभावेनौपम्यं गम्यते। दारिद्र्यविदारण[288]तमोध्वंसयोः[289] भिन्नधर्मत्वाच्च बिम्बप्रतिबिम्बभावः।

रे राक्षसाः पलायध्वमयमायाति राघवः।
तावदुद्यन्ति खद्योता यावन्न द्युमणिद्युतिः।। 89।।

अत्र यथा रवेरुदयात्खद्योतापगमस्तथा रामागमादसुरनिरास इत्युपमा वैधर्म्येण गम्यते।

तुल्ययोगितालङ्कारः

एवं गम्यौपम्यानां[290] तुल्ययोगितादीनां भेदो बोद्धव्य इति तल्लक्षणान्याह[291] –

प्रकृतानां तथान्येषां[292] तुल्यधर्मानुबन्धतः।
औपम्यं यदि गम्येत[293] सा मता तुल्ययोगिता।। 90।।

यत्र[294] प्रकृतानामप्रकृतानां[295] वा तुल्यधर्मसम्बन्धादौपम्यं गम्यते[296], सा तुल्ययोगिता। इह प्रकृताप्रकृतानां[297] व्यस्तानामेव प्रयोजकतास्वीकारेण प्रकृता[298]प्रकृतसमुदायप्रयोज्याद् दीपकाद्वैलक्षण्यं प्रदर्शितम्[299]। धर्मस्य[300] क्रियागुणरूपतया द्वैविध्ये चातुर्विध्यमस्यालङ्कारस्य केचिदूचुः। अपरे

तु द्रव्यगुणकर्मणां तदभावानां च षण्णां धर्मत्वमङ्गीकृत्य प्रकृताप्रकृतगतत्वेन द्वादशविधत्वे[301] सति अस्य[302] द्वादशविधत्वं कल्पयन्ति। यथा[303] –

डिण्डीरपाण्डुरा राम कीर्तयश्च गुणाश्च ते।
अन्तर्निगूढब्रह्माण्डास्सञ्चरन्ति निरर्गलाः।। 91।।

अत्र प्रकृतानां रामगुणकीर्तीनां द्रव्यगुणकर्मरूपैस्तदभावरूपैश्च धर्मैः[304] षड्भिरौपम्यं गम्यते। पाण्डुरत्वं गुणः। ब्रह्माण्डानि द्रव्याणि। सञ्चरणं क्रिया। निरर्गला इति प्रतिबन्धकाभावः। प्रतिबन्धकत्वं च द्रव्यादित्रयस्यापि सम्भवतीति[305] तदभावा अपि त्रय इति षण्णामुदाहरणम्।

गाम्भीर्येण रघूद्वहेन विजितास्सप्तापि पाथोधयः
प्रायो निस्सुतजीवना हृदि विवृद्धौर्वाग्निचिन्तानलाः।
त्यक्ताश्शैत्यगुणेन पाण्डुरमुखा डिण्डीरपिण्डच्छलात्
कम्पन्ते सततं मनागपि धृतिं नाद्यापि[306] विन्दन्त्यहो।। 92।।

अत्रोपमानत्वेनाप्रकृतानां[307] सप्ताम्बुधीनां द्रव्यादिषड्धर्मैः परस्परमौपम्यं गम्यते। तत्र निस्सुतजीवना इत्यनेन द्रव्याभावरूपो धर्मः कथितः। हृदि विवृद्धेत्यादिना द्रव्यरूपः। त्यक्ताश्शैत्यगुणेनेति गुणाभावरूपः। पाण्डुरमुखा[308] इति गुणरूपः। कम्पन्त इति क्रियारूपः। धृतिं न विन्दन्तीति क्रियाभावरूप इति षण्णामुदाहरणम्।

**दीपकालङ्कारः**

प्रकृतानां[309] चेतरेषामौपम्यं गम्यते यदि।
समानधर्मसम्बन्धाद्दीपकं तत्तु षड्विधम्।। 93।।

प्रकृताप्रकृतसमुदायसम्बन्धी समानो धर्मो यत्रौपम्यं दीपयति तत्र दीपकम्[310]।

तत्र[311] समानधर्मस्य आदिमध्यान्तगतत्वेन त्रैविध्ये गुणक्रियात्वरूपेण[312] द्वैविध्ये च षड्विधत्वं[313] केचिदूचुः। तद्विचारचारुचेतसां नान्तरङ्गमालिङ्गति[314]। धर्मस्य आदिमध्यान्तगतत्वभेदेन काव्यचारुतायां विशेषादर्शनात्। अन्यथा प्रथमद्वितीयादिपादगतत्वप्रकारैर्भेदान्तराण्यपि[315]

किमिति[316] नाजीगणन्। तस्मान्न प्राथमिकं त्रैविध्यमादरणीयम्। नाप्युत्तरं द्वैविध्यम्। द्रव्यादिभेदेन धर्मस्य षाड्विध्योक्तेः।

तस्मात् प्रकृताप्रकृतसमुदायसम्बन्धिसमानधर्मस्य द्रव्यादिरूपेण षड्विधत्वात्[317] तदालम्बनस्य[318] दीपकस्यापि[319] षाड्विध्यं वक्तुं युक्तम्[320]। यथा[321].–

विकटनटन्महानटजयटविकाततटिनी–
जलभररङ्गरङ्गदुरुभङ्गितरङ्गगणाः।
तव च गिरो रघूद्वह सुधारससारधरा
जगति निरर्गलाः परिचरन्ति पटीरहिमाः।। 94।।

अत्र वर्ण्यत्वेन प्रकृतानां रामचन्द्रवचनानाम्[322][323] उपमानत्वेनाप्रकृतानां गङ्गातरङ्गाणां च द्रव्यादिरूपषड्विधसमानधर्मसम्बन्धाद् औपम्यं गम्यते। अत्र[324] सुधारसो द्रव्यम्। शीतलत्वं गुणः। परिचरणं[325] क्रिया। निरर्गलत्वं पूर्ववदभावत्रयमिति[326] षण्णामुदाहरणम्। अन्ये त्वाहुः–

यः प्रस्तुताप्रस्तुतयोर्वर्गे कुत्रापि सङ्गतः।
समानो धर्म[327] एकोऽन्यद्दीपयेत्तत्तु दीपकम्।। 95।। इति।

व्याख्यातं चेदं पूर्वैः[328]। प्रकृताप्रकृतसमुदाये यस्य कस्यापि[329] सन्निहितं साधारणधर्मप्रतिपादकं[330] क्रियापदं गुणपदं वा यदान्यदपि[331] दीपयति साधारणधर्मसम्बन्धित्वेन द्योतयति तद्दीपकमिति। केचित्तु एकस्य कारकस्य अनेकक्रियासम्बन्धेऽपि दीपकमाहुः। तदुभयमपि न परीक्षाक्षमम्[332]मित्युपेक्ष्यते।

## निदर्शनालङ्कारः

अन्यधर्मान्यसम्बन्धासङ्गतौ वस्तुनोर्द्वयोः।
प्रतिबिम्बनमाक्षिप्तं यत्र तत्र निदर्शना।। 96।।

यत्र उपमानोपमेययोर्मध्ये अन्यधर्मस्यान्यसम्बन्धासम्भवेन[333] प्रतिबिम्बक्रिया आक्षिप्यते तत्र निदर्शना। सा द्विधा प्रकृतधर्मस्याप्रकृतसम्बन्धासम्भवमूला अप्रकृतधर्मस्य प्रकृतसम्बन्धासम्भवमूला चेति[334]। यथा–

परिटीकते[335] रघुकिरीटमणेश्चटुलप्रतापशिखिनः[336] पटिमा।
शतकोटिधूर्जटिललाटतटस्फुटलोचनोत्कटमहः[337] पटले[338]।। 97।।

अत्र रामप्रतापपटिम्नो दम्भोल्यादिसम्बन्धासम्भवेन[339] सादृश्याद् दम्भोल्याद्युपमानप्रतिबिम्बनकरणमाक्षिप्यते।

त्वद्दोर्मण्डलमण्डलाग्रलतिका राम क्षमामण्डन-
श्रीखण्डद्रुमकाण्डकुण्डलिगतं पाण्डित्यमाहिण्डते।
शेषात्युग्रफणाग्रनिर्गतविषज्वालाश्रियं[340] संश्रय-[341]
त्यादत्ते प्रलयान्तकोद्भटभुजादण्डाग्रदण्डाकृतिम्[342]।। 98।।

अत्र प्रकृतस्य रामभुजखड्गस्य[343] श्रीखण्डगतकुण्डलि-विषज्वाला-कालदण्डधर्मसम्बन्धासम्भवेन तत्तद्धर्मसदृशधर्मानाकलयतीति प्रतिबिम्ब-करणमाक्षिप्यते। क्वचिन्निषेधाक्षिप्तया प्राप्त्या तदाक्षेपः।

कान्तारान्तरचारिण्यः कान्ता रामविरोधिनाम्।
सरोवारिषु नेत्राभ्यां मुञ्चन्तीन्दीवरश्रियम्।। 99।।

अत्र मुञ्चन्तीति निषेधात् पूर्वमिन्दीवरश्रीराक्षिप्ता।

**व्यतिरेकालङ्कारः**

व्यतिरेकस्तूपमानादुपमेयेऽतिशायिनि।। 100।। यथा-

न ग्रस्तस्तमसा न चाह्नि मलिनो दर्शेन नो कर्शितो,
नैवास्तङ्गतिमान् न चाङ्कितततनुः, नो पाक्षिकश्रीरपि।
लोकालोकनगेन्द्रलङ्घनविधौ नो पङ्गुभावं गतो
निर्दोषो गुणसागराद्रघुपतेर्जातो यशश्चन्द्रमाः।। 101।।

अत्र रामभद्रकीर्तिचन्द्रस्य प्रसिद्धचन्द्रादुपमानादाधिक्योपनिबन्धनेन भेदप्रधानमौपम्यं गम्यते।

**सहोक्त्यलङ्कारः**

एकस्योक्तिप्रधानत्वेनान्यस्य स्यात्सहार्थतः।
औपम्यं गम्यते यत्र सहोक्तिस्तत्र कथ्यते।। 102।।

यत्रोपमानोपमेयभावे विवक्षिते, एकस्य प्राधान्येन निर्देशः, अन्यस्य

च[344] सहार्थसम्बन्धादप्राधान्येन औपम्यं[345] गम्यते तत्र सहोक्तिः। इयं[346] भावाभावाभ्यां प्रवर्तते। यथा-

त्वत्खड्गभिन्नमदबन्धुरसिन्धुरेन्द्र-
कुम्भस्थलोच्चलितमौक्तिकतारकाणाम्।
सङ्घैस्समं समररात्रिमुखे वितन्द्राः
प्रोद्यन्ति राघवमणेस्तव[347] कीर्तिचन्द्राः।। 103।।

उद्दामकार्मुकविजृम्भितरामभद्र-
धाराधरोग्रशरवर्षपरम्पराभिः।
काराजुषां दिविषदां हृदि शोकवह्नि-
दैत्यप्रतापदहनेन समं शशाम।। 104।।

विद्यानाथस्तु कार्यकारणपौर्वापर्यविपर्ययरूपातिशयोक्तिमूला भेदे सत्यभेदाभिधानरूपातिशयोक्तिमूला[348] च सहोक्तिरित्युक्तवान्। (प्र० रु० पृ० 269) तन्मते-

'उत्क्षिप्तं सह कौशिकस्य पुलकैः'।। 105।।

इत्यादौ सहोक्तिर्न स्यात्। अथैतत्प्रतिकोटितया विनोक्तिं लक्षयति।

**विनोक्त्यलङ्कारः**

**विनोक्तिस्सा विनार्थोक्तेर्या[349] स्यादौपम्यगम्यता।। 106।।**

यथा - विना शेषेण पातालं विनेन्द्रेण त्रिविष्टपम्।
विना श्रीरामचन्द्रेण न राजति धरातलम्।। 107।।

अत्र स्वर्गपातालयोः सुरेन्द्रभुजगेन्द्रावन्तरेण यथा न शोभा तथा भूतधात्रीतलमपि रामं विना न शोभत इति वचोभङ्ग्या गम्यमौपम्यम्। यत्र त्वेवमौपम्यपर्यवसानं नास्ति न तत्रायमलङ्कारः।

'विना वत्सं रामं कथमयमयोध्यां प्रविशति'।। 108।। इत्यादौ।

सहोक्तावप्येवमेव वेद्यम्। समासोक्तिं वक्ति।

**समासोक्त्यलङ्कारः**

**विशेषणान्येव परमर्थं गमयितुं यदा।**
**प्रकृतस्य समर्थानि समासोक्तिस्तदा भवेत्।। 109।।**

प्रकृतस्य विशेषणान्येवाप्रकृतमर्थं यदा गमयितुं शक्तानि, न तु विशेष्यपदमपि, तदा समासोक्तिः। समानेन संक्षेपेणार्थद्वयस्योक्तेरियमन्वर्था।

विशेषणविशेष्याभ्यामर्थान्तराप्रतीतेर्न श्लेषता। ननु समासोक्ताव-प्रकृतारोपणस्य गम्यत्वाद् गम्यरूपकसाङ्कर्यशङ्का दुर्निवारा इति चेत्, मैवम्। प्रस्तुतोपरञ्जकत्वमात्रोपयोगादप्रस्तुतस्य। न च परिणामान्तर्भावः। आरोप-विषयस्यारोप्यमाणरूपतया परिणामे आरोप्यमाणप्राधान्येनारोपविषयतिरोधानं हि परिणामालङ्कारप्रयोजकम्। आरोप्यमाणवस्तुसादृश्यवैशिष्ट्यप्रतिभामात्रेण आरोप्यमाणगम्यतानुपमर्दाद् आरोपविषयस्यैव प्राधान्येन प्रतिपत्तिः समासोक्तिप्रयोजिकेति रहस्यम्। यथा–

भवद्बाहामन्थाचलमथितनक्तञ्चरचमू–
समुद्रात्सम्भूता सह विजयलक्ष्म्या रघुपते।
भवत्कीर्तिर्धार्या जयति भुवि सर्वज्ञशिरसा
तमोहन्त्री नित्यं कुमुदमुदयं प्रापितवती।। 110।।

इह कीर्तेश्चन्द्रत्वं ध्वन्यम्। तदपि विशेषणसामर्थ्यादेव, न विशेष्य-सामर्थ्याद् अवगम्यते।

**श्लेषालङ्कारः**

पूर्वं समासोक्तिलक्षणे विशेषणान्येवेत्यनेन व्यवच्छेद्यतया श्लेष उपक्षिप्तः। तन्निरूपयति–

**श्लेषस्साम्ये समादिष्टो विशेषणविशेष्ययोः।। 111।।**

समासोक्तितुल्ययोगितयोस्तु विशेषणमात्रसाम्यमेव, न पुनर्विशेष्य-गतश्लिष्टत्वम्। अत्र तु विशेषणविशेष्योभयसाम्यं प्रयोजकम्। विशेषयोश्चात्र केवलप्रस्तुतयोर्वा केवलाप्रस्तुतयोर्वा श्लेषो भवति। न तु प्रस्तुताप्रस्तुतयोः। तत्र ह्यभिधायाः प्रस्तुतैकार्थप्रत्यायनशृङ्खलिततया अप्रस्तुतार्थप्रतिमानस्य व्यञ्जनैकव्यापारशरणत्वात् शब्दशक्तिमूलानुरणनरूपव्यङ्ग्यध्वनिरेव प्रगल्भते। यथा–

अत्यर्जुनयशोराशिः कृतसंरक्तकतर्पणः।
एकवीरोपतापश्च रामो राजति राजघः।। 112।।

अत्र प्रकृतत्वाद्रामस्य अप्रकृतत्वाज्जामदग्न्यस्य न श्लेषावकाशः। किन्तु ध्वनिरेव।

अयं द्विधा– शब्दश्लेषोऽर्थश्लेषश्चेति। ननु शब्दश्लेषस्थले प्रयत्नादि-भेदात्स्फुट एव शब्दभेद इति चेत्, सत्यं भेदोऽस्ति। तथापि जतुकाष्ठन्यायेन शब्दयोरितरेतरश्लिष्टत्वात् शब्दगतत्वव्यवहारः। अत एव शब्दश्लेषे भङ्गसहिष्णुता। अर्थश्लेषे तु प्रयत्नादिभेदस्य शब्दभेदकस्याभावेन शब्दैक्यनिश्चये सति एकनालावलम्बिफलद्वयरीत्या श्लिष्टत्वमर्थयोरिति शब्दविपरीतवृत्तियोग्यत्वं भङ्गासहिष्णुत्वं च इत्यालङ्कारिकरहस्यम्।

अतः केवलप्रस्तुतगतत्वेन केवलाप्रस्तुतगतत्वेन च द्वैविध्यमस्यालङ्कारस्य। क्रमेण यथा–

महापदोपस्थितयस्सदारामावियोगिनः।
अलङ्काराश्रया राम भवन्ति भवतो हिताः।। 113।।

अहितपक्षे। महापदः। अपस्थितयः। सदा। रामावियोगिनः। अलम्। काराश्रयाः। भवतः। अहिताः। मित्रपक्षे त्वेकपदत्वम्। अत्र रामचन्द्रदान-क्षात्रयोर्वर्ण्यमानतया हितानामहितानां च प्राकरणिकत्वम्।

अपविक्रमसङ्कोचं गोसहस्रोल्लसत्तनुम्।
नाकोल्लासिनमत्येति रामो हर्यश्वमोजसा।। 114।।

अत्र हर्यश्वशब्दवाच्ययोर्दिनकरपुरन्दरयोरुपमानत्वेनाप्राकरणि-कयोरेव श्लेषः।

**परिकरालङ्कारः**

अत्र विशेषणविशेष्यव्यापारमूलस्य श्लेषस्य प्रस्तावे केवलविशेषण-व्यापारमूलः परिकरालङ्कार एकदेशसाम्याद्बुद्धिस्थः। केवलप्रस्तुत-केवलाप्रस्तुतविषयस्य तस्यैव प्रस्तावात् प्रस्तुताप्रस्तुतविषया अप्रस्तुत-प्रशंसादयोऽलङ्काराश्च बुद्धिस्थाः। तेषु तावत्परिकरालङ्कारं निरूपयति–

विशेषणालिस्साकूता यदा परिकरस्तदा।। 115।।

यथा – ऐशं शैशवचेष्टया विदलितं येनाद्भुतं कार्मुकं
यस्मिन्नर्जुनदोस्सहस्रलवनः कुण्ठः कुठारोऽभवत्।
यन्मुक्तैकशरानले शलभतां बाली न लेभे कपिः
किं तस्मिन्नपि राघवे दशमुख त्वद्दोर्लतासम्भ्रमः।। 116।।

अप्रस्तुतप्रशंसालङ्कारः

अप्रस्तुतेन वाच्येन प्रस्तुतं गम्यते यदि[350]।
अप्रस्तुतप्रशंसेयं कथिता पञ्चधा बुधैः।। 117।।

यत्रा[351]प्रस्तुतस्याप्रस्तुतत्वादेव वर्णनमनुचितं सत् प्रस्तुतं गमयति तत्राप्रस्तुत[352]प्रशंसा। अप्रस्तुतात् प्रस्तुताक्षेपश्च यत्किञ्चित्सम्बन्धाभावे न सम्भवतीति सम्बन्धः कोऽप्यङ्गीकार्यः। स त्रेधा[353]। सारूप्यं सामान्य-विशेषभावः कार्यकारणभावश्चेति। तन्निबन्धना चेयं पञ्चधा भिद्यते। सामान्याद्विशेषाक्षेपः,[354] विशेषात्सामान्याक्षेपः, कार्यात्कारणाक्षेपः, कारणात्कार्याक्षेप इति द्वितीयतृतीययोरेकैकस्य द्वैविध्यात्। क्रमेण यथा–

भृङ्गपुङ्गव मरन्दनिर्झरी[355]सद्म पद्ममपहाय साम्प्रतम्।
जाल्म शाल्मलिं[356]मुपैषि[357] किं वृथा शोकमाकलयितुं किमीहसे ।। 118।।

अत्राप्रस्तुतेन भृङ्ग[358]बुद्ध्युपदेशेन सर्वानर्वाचीनान्पुरुषाधमान्विहाय[359] सकलशुभगुणमणिसिन्धुः सीताबन्धुरेव सुधियां सेव्य इति प्रस्तुतमवगम्यते। यथा वा[360] -

भानां भा नान्तरिक्षे विलसति न च संराजते राजतेजो
वह्नावह्नायरोची रजनिषु पिहिताशान्तरं शान्तरंहः।
स्वैरं स्वैरंशुजालैस्सह चरति रवौ कान्तिके कान्तिकेलिः
संवासं वासिशक्तः किमु तिमिरसखद्योत खद्योत कर्तुम्।। 119।।

अत्र रे रावण रामे संमराङ्गणगते सर्वतेजोऽभिभाविनि समक्षं तवावस्थानमेव दुष्करं पौरुषं तु दूरतो निरस्त[361]मिति प्रस्तुतमप्रस्तुतखद्योत-वृत्तान्तकथनेन व्यज्यते। सारूप्यालम्बनेनेदमुदाहरणद्वयं प्रवृत्तम्। सामान्या-द्विशेषधीर्यथा–

राम विक्रमविधूत[362]कौशिकाः कौशिकाध्वरविरोधिनोऽ[363]सुराः।

पत्रिभिः पवनवेगजित्वरैर्जित्वरैः[364] कति न खण्डितास्त्वया।। 120।।

इह महदिदमद्भुतं यद्राम शिशुनैव त्वया कौशिकविरोधिनः सुबाहुप्रमुखाः सुरविरोधिनः[365] खण्डिता इति[366] प्रस्तुते कति न खण्डिता इति सामान्यमुपन्यस्तम्। तेनाप्रस्तुतात्सामान्यात् प्रस्तुतो विशेषो व्यज्यते। विशेषात्सामान्यधीर्यथा–

श्रीरामभद्रे[367] सततमशेषाभीष्ट[368]दायिनि।

दारिद्र्यं विदुषां लेभे[369] स्थैर्यं मध्येषु योषिताम्।। 121।।

अत्र श्रीरामभद्रौदार्येण[370] सर्वेषामर्थिनां दारिद्र्यं हतमिति वक्तव्ये विदुषामिति विशेषस्या[371]प्रस्तुतस्योपादानात् प्रस्तुतमेव सामान्यं व्यज्यते। यथा वा – रामभद्रेण संश्लेषमिन्द्रेणेवा[372]मरावती[373]।

समासाद्य सदामोदमविन्दत वसुन्धरा।। 122।।

अत्र योग्यं वस्तु योग्येन वस्तुना योगमेत्य शोभत इति सामान्ये प्रस्तुते विशेषोऽभिहितः[374]। तेन सामान्यं व्यज्यते। कार्यात्कारणव्यक्तिर्यथा–

श्रीराम वैरिविभुवेश्मविला[375]सशैल–

कासारगर्तसरकासरसारसङ्घे।

क्रोधोत्कटानसकृदुल्ललतो[376] विमार्ग–

सञ्चारिणोऽरुणहयानरुणो रुणद्धि।। 123।।

अत्र श्रीरामभद्रभयेन[377] स्वगृहान्विहाय शत्रवः कुत्रापि चिराय लीना इति कारणे प्रस्तुते तत्कार्यमुपवर्ण्यमानमप्रस्तुतमेव प्रस्तुतं स्वकारणं व्यञ्जयति। कारणात्कार्यधीर्यथा[378] –

औदार्यं रामभद्रस्य[379] विस्पष्टं विष्टपत्रये।

कथं विस्मयसे दृष्ट्वा कामधेनुसुरद्रुमान्।। 124।।

अहो कथमेतत्कामधेनुकल्पद्रुमादीनामर्थिजनेषु दानवैमुख्यमिति विस्मयमानं प्रति कस्यचिदिदं वचनम्। ततश्चाप्रस्तुतेनौदार्यविस्पष्टतारूपेण कारणेन वाच्येन प्रस्तुतस्य लज्जितत्वरूपस्य कार्यस्य[380] प्रतीतिः।

पर्यायोक्त्यलङ्कारः

अथ[381] अन्येनान्यगमनसाम्येन[382] बुद्धिस्थतया पर्यायोक्त्यलङ्कारं लक्षयति–

प्रस्तुतेनोच्यमानेन कार्येण प्रस्तुतं यदि।
कारणं गम्यते तत्र[383] स्यात्पर्यायोक्त्यलङ्कृतिः।। 125।।

प्रस्तुतेनेति विशेषणेन अप्रस्तुतप्रशंसाव्यवच्छेदः। कार्योक्त्या कारणमपि पर्यायेणोक्तमिव भवतीति पर्यायोक्तिपदप्रवृत्तिः। कार्याभिधान-भङ्गीनैपुण्येन कारणस्योक्तप्रायत्वमेवेति न व्यङ्ग्यत्वम्। ननु तर्हि साक्षात्कारणमेव किं नोच्यत इति चेत्। न। कार्याभिधानमुखेन[384] तस्य प्रत्यायने यावती[385] चमत्कृतिस्तावत्यास्तदाऽभावात्। यथा–

खड्गस्य ते युधि विरोधिनराधिपेषु
कोपक्रिया[386] रघुपते यदमी समेताः।
दुष्प्रापदिव्यरमणीरमणीयहैम[387]–
वक्षोजशैलशिखरेषु चिरं चरन्ति।। 126।।

अत्र शत्रुनराधिपानां दुष्प्रापदिव्यकामिनीकुचकाञ्चनाद्रिकूटकेलि-रूपकार्यस्य[388] प्रस्तुतस्यैवोपवर्णनामुखेन तत्कारणभूतं युधि रामखड्गेन[389] खण्डनं प्रस्तुतमेव प्रत्यायते।

पर्यायालङ्कारः

पर्यायत्वसाम्यात्पर्यायं[390] लक्षयति–

क्रमादेकमनेकस्मिन्ननेकमपि यत्र वा।
एकस्मिन्वर्तते तत्र पर्यायालङ्कृतिं विदुः।। 127।।

क्रमविशेषणं[391] युगपदनेकत्रैकस्यावस्थानरूपविशेषालङ्कार-व्यवच्छेदार्थम्[392]। विनिमयाभावान्न परिवृत्तिता। अत्राद्यस्योदाहरणं[393] मद्व्यायोगे[394] वरुणभङ्गनिरूपकं पद्यम्–

तद्धाटीतीव्रघोटीखुरपुटपटलीपाटितक्ष्मातलोद्य[395]–
द्धूलीपालीभिरब्धौ सपदि चुलुकिते तत्प्रतापानलेन[396]।

सैन्याम्भोधौ[397] च दग्धे क्षयमयति भयाच्चाभिमानाम्बुराशौ
प्राविक्षत्तद्दयाब्धिं सुतनु[398] विगलितोपप्लवं[399] स प्रचेताः।। 128।।
अत्रैकस्यैव वरुणस्य क्रमादनेकाब्धिषु वृत्तिः कथिता[400] ।
काष्ठं कपालं कटुकन्दमूलं करै रिपोस्संयति गर्वितस्य।
तिष्ठन्ति पश्चाच्छरणं गतस्य रामं प्रभुं कच्छपशङ्खपद्माः।। 129।।
अत्रानेकेषामेकत्र क्रमाद् वृत्तिः[401] ।

## परिवृत्त्यलङ्कारः

अत्र व्यावर्त्ययोः परिवृत्तिविशेषयोः परिवृत्तिं तावल्लक्षयति–
परिवृत्तिर्विनिमयोऽधिकाल्पसमजस्त्रिधा।। 130।।
विनिमयो नाम वस्तुदानपूर्वको वस्त्वन्तरस्वीकारः। स त्रिधा[402] । अधिकवस्तुदानेनाल्पवस्तुस्वीकारः, अल्पवस्तुदानेनाधिकवस्तुस्वीकारः,[403] समदानेन[404] समस्वीकारश्च[405] इति। क्रमेण यथा–
किरीटशस्त्राम्बरदिव्यभोज्यान्युत्सृज्य[406] तेऽरिर्जगृहे स्म राम।
काष्ठोत्करं मूर्ध्नि करे कपालं कटौ कुचैलं कबले च कन्दम्।। 131।।
प्रणामाञ्जलिमात्रं ते प्रतिपाद्य विभीषणः।
लङ्काराज्यं स्वयं प्राज्यं त्वत्तो जग्राह राघव।। 132।।
वितीर्य हृदयं स्वीयं सीतायै रघुनन्दनः।
तदीयं हृदयं लेभे कुसुमायुधसाक्षिकम्।। 133।।
विशेषमाह–

## विशेषालङ्कारः

एकस्य युगपद्वृत्तिर्यत्रानेकेषु वर्ण्यते[407] ।
विनाधारं तदाधेयं घटना दुर्घटस्य च।। 134।।
विशेषालङ्कृतेर्भेदास्तत्र[408] त्रेधा जगुर्बुधाः[409] ।। 135।।
त्रयो यथा – भेरीभूरिविरावडम्बरभरो धाटीसमाटीकने[410]
शत्रूणां हृदयान्तराणि युगपच्चाशा दश व्यानशे।

त्यक्त्वा तान्परिधावतो गुणयशोरत्नानि संतस्थिरे
राम त्वां शरणागतैस्त्वधिगताश्चिन्ताश्मसन्तानकाः।। 136।।

परिसंख्यालङ्कारः

अथ[411] क्रमयौगपद्यप्रस्तावप्राप्तान् परिसंख्यादीन् लक्षयति–

**वस्तुष्वेकमनेकेषु प्राप्तं यत्र नियम्यते।**
**एकत्रैव भवेत्तत्र परिसंख्या चतुर्विधा।। 137।।**

इयं प्रश्नपूर्विकाऽन्या चेति[412] द्विविधा[413]। पुनः प्रत्येकं वर्जनीयार्थस्य शब्दत्वार्थत्वाभ्यां[414] द्विविधेति सम्भूय चतुर्विधा। परिसंपूर्वस्य ख्याधातोर्वर्जनमर्थः। यथा –

सिताश्शीताः पूताः कथय भुवि के राघवगुणा
न गङ्गायाः पूरा न च शशिकरा नामृतझराः।
हितान्दत्ते धत्ते क्षितिमपि च कः? कोसलपते–
र्भुजादण्डश्चण्डीपतिकठिनकोदण्डदलनः।। 138।।

इदं प्रश्नपूर्विकयोः शब्दार्थवर्जनीययोः परिसंख्ययोरुदाहरणम्। इह द्वितीयार्धे रामभुज एवार्थिनामभिमतार्थान् वितरति[415] स एव क्षितिं च धत्ते इत्युक्तेः, अर्थात् न चिन्तामणिसन्तानकादयो वितरन्ति तथा भुजङ्गपुङ्गव–दिङ्मातङ्गादयश्च[416] न महीं वहन्तीति गम्यमानत्वाद् वर्जनीयानामार्थिकत्वं[417] वेद्यम्।

स्मितज्योत्स्नापूरश्शिशिरमधुरस्ते रघुपते
न गोस्तन्यं गोस्तन्यपि च न सिता नापि च सुधा।
प्रतापस्य स्फूर्तिश्शिशिरधवला कीर्तिरपि ते
महीं लोकालोकाचलवलयितामुज्ज्वलयतः।। 139।।

अत्रापि द्वितीयार्धे रामप्रतापकीर्त्योरेव पृथिवीप्रकाशकत्वोक्तेः, अर्थात् न सूर्याचन्द्रमसोरिति गम्यमानत्वाद् वर्जनीयार्थयोरार्थिकत्वम्[418]।

इदमितरयोरुदाहरणम्[419]।

श्लेषालङ्कारसंश्लिष्टा परिसंख्या विशेषतः।
चमत्करोतीतीदृश्यां कवयः केऽपि लोलुपाः[420] ।। 140।।

यथा– दानाम्बूपशमो रिपुद्विपकरे सस्येष्वनीतिः परं
नीचोपस्थितिपङ्क्योगजडताभङ्गभ्रमास्सिन्धुषु।
स्थाणुष्वेव विपल्लवस्थितिरभूद्वायौ विमार्गभ्रमो
नैतत्किञ्चिदपि प्रजासु ददृशे रामे क्षितिं रक्षति।। 141।।

समुच्चयालङ्कारः

समुच्चयं लक्षयति–
क्रियाणां वा गुणानां वा युगपद्यत्र मेलनम्।
एकत्र वर्ण्यते तत्र द्विविधस्स्यात्समुच्चयः।। 142।।
यथा–
वधूवहनभूनभश्चतुरतूर्णवक्रक्रमै[421]–
स्तुरङ्गति कुरङ्गति द्रुतरिपुर्विहङ्गत्यपि।
भुजङ्गति तरङ्गति ह्रदगतो वने भृङ्गति
स्फुलिङ्गति तमस्यपि त्वयि रणे रघो त्वङ्गति[422] ।। 143।।
अत्र[423] क्रियाणां समुच्चयः। गुणसमुच्चयो यथा[424]–
रामस्य चक्षुषः कोणे क्षणे शोणे रुषा द्विषा।
पाण्डिमा जडिमा चाङ्गे जज्ञे मलिनिमाणिमा।। 144।।

एवं क्रियागुणमेलनवशात् समुच्चयालङ्कारस्य विधाद्वयमेवोचुः[425] प्राञ्चः। वयन्तु[426] द्रव्यजातिसमुच्चययोरपि[427] तद्भेदतां ब्रूमः। क्रियागुणसमुच्चययोरिवानयोरपि[428] चमत्कारकारितायाः[429] प्रागुक्तालङ्कारसामान्य-[430]लक्षणस्य[431] दुरपलापत्वात्। तत्र द्रव्यसमुच्चयो यथा–

काष्ठं कपालशकलं कबलं तृणानां
वैरी करे कलयते[432] त्वयि राम रुष्टे।
तुष्टे[433] तु कल्पतरुकाण्डसुधाङ्कभाण्ड-
चिन्ताश्मधेनुवर[434]कच्छपशङ्खपद्मान्।। 145।।

अत्र पूर्वोत्तरार्धगदितयोः काष्ठादिकल्पतरुकाण्डादिद्रव्यराशि-समुच्चययोर्वैरिभेदेन एकैकस्मिन्करे युगपत्सम्भवाद्[435] द्विवारमुदाहरणं बोद्धव्यम्[436]। तदभेदे [437]युगपदेककरे विरुद्धद्रव्यराशिद्वयस्य मेलना-सम्भवाद्द्रव्यविरोधश्च। तत्प्रापकयो रोषतोष[438]योर्युगपदुदयविरोधाद्[439] राशिद्वयस्यापि क्रममेलनविवक्षायां [440]तु पर्यायालङ्कारता स्यात्। परापरभावशून्यानां विरुद्धसामान्यानां यद्यप्येकत्र समवायो न सम्पनीपद्यते, तथापि कवेरुक्तिचातुर्यात् तत्समवाय[441]स्सम्भवत्येव[442]। यथा-

शुचित्वनरसिंहत्वराजहंसत्व[443]भोगिताः।
भूधरत्वादयश्चान्या जातयो राघवे बभुः।। 146।।

एवं द्रव्यगुणक्रिया[444]सामान्यानां प्रत्येकं मिथश्च मेलने एकादशभेदाः सम्भवन्ति समुच्चयालङ्कारस्य। विस्तरभयान्नोदाह्रियन्ते।

**तत्करालङ्कारः**

तत्करं लक्षयति-

**खलेकपोतन्यसयेन मिलितैर्बहुकारणैः।**
**स्वतन्त्रैः क्रियते कार्यं[445] यत्रैकं तत्र तत्करः।। 147।।**

यथा[446]-

मुग्धा गिरो विहसितानि सितानि हावा[447]
भावाश्च मञ्जि[448]मधुरा मधुरा मृगाक्ष्याः।
कन्दर्पवैभवपुषो वपुषोऽपि शोभा[449]
रामस्य मानसमुदं समुदश्चयन्ति।। 148।।

अत्र खलेकपोतन्यायेन मिलितैरिति विशेषणात् समाधेर्व्यवच्छेदः। तत्र कारणमेलनस्य काकतालीयन्याय[450]सिद्धत्वात्।

**समाध्यलङ्कारः**

समाधिं लक्षयति-

**काकतालनयायातहेतोरन्येन हेतुना।**
**प्रक्रान्तकार्यसौकर्ये समाधिस्स्यादलङ्कृतिः।। 149।।**

काकतालनयेति[451] विशेषणात् तत्कराद्भेदः। यथा-

अन्धान्भयेन रघुराम[452]चमूसमुत्थ-
धूलीचयोऽन्धयति[453] विद्रवतो[454] द्विषस्ते।
नक्तन्तनं तिमिरमापतितं पुनस्तान-
न्धीचकार हतमेव विधिर्निहन्ति।। 150।।

**विकल्पालङ्कारः**

विकल्पं जल्पति-

**तुल्यप्रमाणवैशिष्ट्याद्युगपत्प्राप्तयोः क्वचित्।**
**विरोधश्चेत्सदृशयोर्विकल्पस्तत्र जल्प्यते।। 151।।**

तुल्यं हि विरुद्ध[455]द्वयं युगपदुपस्थितं विकल्पार्हम्। तेन यत्र तुल्य-प्रमाणवैशिष्ट्यात् समबलयोर्द्वयोरेकत्र युगपत्प्राप्तौ विरोधः स्फुरति, तत्र विकल्पालङ्कारः। यथा-

दिवि वा भुवि वा[456] स्थले जले वा
भुजदण्डैरथवा प्रचण्डकाण्डैः।
तव राम यथास्ति यत्र[457] शिक्षा
वद[458] तत्रैव मृधं तथा विधास्ये।। 152।।

इदं रावणवचनम्।

**यथासंख्यालङ्कारः**

अथ यथासंख्यमाख्याति-

**सम्बन्धः प्रथमोक्तानां चरमोक्तैः क्रमाद्यदि।**
**कथयन्ति यथासंख्यालङ्कारं स भवेद्द्विधा।। 153।।**

शाब्दश्चार्थश्चेति द्विविधो यथासंख्यालङ्कारः। तत्रासमस्तानाम-समस्तान्वये शाब्दता। समस्तानां मिथस्सम्बन्ध आर्थता। समस्तयो-र्मिथस्सम्बन्धे शब्दतः प्रतिपन्नेऽपि[459] तदन्तर्वर्तिपदानां क्रमसम्बन्धस्याक्षेप-लभ्यत्वात्। यथा-

रविकविपवीन्विजिग्ये रामो द्युतिनीतिभूभृदुद्धृतिभिः।
तस्य च नेत्रं वक्त्रं गात्रं कमलं कलानिधिं कामम्।। 154।।

अत्रार्थशाब्दयोरुदाहरणद्वयं पूर्वोत्तरार्धयोर्वेद्यम्।

**कारणमालालङ्कारः**

अथ क्रमालम्बनेन शृङ्खलान्यायमूलान् कारणमालादीनलङ्कारान् लक्षयति–

पूर्वपूर्वं यत्र भजेदुत्तरोत्तरहेतुताम्।
तत्र कारणमालाख्यमलङ्कारं प्रचक्षते[460] ।। 155।।
केचित्तद्वैपरीत्येऽपि पोषकत्वेऽपि तं परे।। 156।।

उत्पत्तौ पोषणे वा कारणत्वस्यानपायादिति तेषामभिप्रायः। तेनास्य चत्वारो भेदाः। तत्र दिङ्मात्रमुदाह्रियते–

लङ्कादृप्यद्द्विपवरघटाकर्णताला विलोलाः
स्वर्गस्त्रीणां भृशमजनयन्दीर्घनिश्वासवातान्।
इन्धाश्चक्रू[461] रघुकुलपते त्वत्प्रतापानलं ते
तेन प्लुष्टं दशमुखभुजाकन्धराश्रेण्यरण्यम्।। 157।।

**मालादीपकालङ्कारः**

पूर्वपूर्वकृतोत्कर्षं भजेच्चेदुत्तरोत्तरम्।
तत्र मालादीपकाख्यमलङ्कारं बुधा जगुः[462] ।। 158।।

यथा – भूतिं यौवनमातनोज्जनकजालावण्यशृङ्गारयो–
स्ताभ्यां काचन चातुरी वचनदृग्भङ्गीभिरङ्गीकृता।
कन्दर्पो ववृधे च ताभिरमुना बाणैर्बुभूषे धनु–
स्तेनाप्यस्य विदार्य धैर्यकवचं रामस्य भिन्नं मनः।। 159।।

**सारालङ्कारः**

पूर्वस्मादपि पूर्वस्मात्सारं चेदुत्तरोत्तरम्।
यत्र वर्ण्येत तत्राहुर्बुधास्सारमलङ्कृतिम्।। 160।।

यथा – ब्रह्माण्डसारो भुवनानि सप्त भूमण्डली तेषु च सारभूता।
तत्सारभूतानि पुराणि तेषु सारं पुरं राघवबाहुगुप्तम्।। 161।।

एकावल्यलङ्कारः

विशेषणं पूर्वपूर्वस्योत्तरोत्तरमुच्यते।
एकावलिमलङ्कारमूचिरे तत्र पण्डिताः।। 162।।

यथा – रामबाहुश्शौर्यधुर्यस्तन्नीत्या नित्यमन्वितम्।
नीतिर्वित्तेन सम्पन्ना वित्तं सत्पात्रसात्कृतम्।। 163।।

काव्यलिङ्गालङ्कारः

अथ तर्कन्यायमूलान् काव्यलिङ्गादीनलङ्कारान् लक्षयति–

**हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गं द्विधा हि तत्[463] ।। 164।।**

यत्र हेतुर्वाक्यार्थो वा[464] पदार्थो वा[465] भवन् उक्तार्थसमर्थकः स्यात् तत्र काव्यलिङ्गम्[466]। तच्चोक्तरीत्या द्विधा[467]। पदगतत्वेऽपि विशेषणत्वेनैव हेतुत्वं कार्यम्। यत्र पुनस्तृतीयादिना हेतुत्वधीर्न[468] तत्रासावलङ्कारः। किन्तु हेतुमात्रं चमत्काराभावात्। न चास्यानुमानादभेदशङ्का[469]। ज्ञाप्यज्ञापक-भावाभावात्। व्याप्तिपक्षधर्मतयोरनुपसंहाराच्च[470]। समर्थ्यसमर्थकभावो हि प्रकृतेऽभिप्रेतः। न चार्थान्तरन्यासादभेदशङ्का। प्रकृते समर्थ्यसमर्थक-वाक्यार्थयोराकांक्षासद्भावस्य[471] प्रयोजकत्वस्वीकारात्। अर्थान्तरन्यासे तु समर्थ्यसमर्थकवाक्यार्थयोराकांक्षाभावात्। कथं तर्हि[472] समर्थनम्? उत्थापिताकांक्षयापि तदुपपत्तेः। पदगतं यथा–

मूढास्त्वामेव मन्वाना राम भ्रान्ता[473] द्विषो मिथः।
पलायन्ते स्म न क्वापि पश्यन्तश्च समन्ततः।। 165।।

अत्र भ्रान्तत्वं हेतुः। स च विशेषणत्वेनैव रिपून्विशिनष्टि।

वाक्यगतं यथा–

लङ्केश किङ्करगणैस्सह याहि दूरं चण्डोऽयमापतति राघवकाण्डवह्निः।
रिङ्गत्तरङ्गगणबन्धुरसिन्धुबन्धुनिश्शेषशोषणविभीषणदृष्टसारः।। 166।।

अत्र लङ्केशपलायनरूपसाध्ये प्रथमपादवाक्यार्थे तदुत्तरवाक्येन हेतुर्निरूपितः।

**अर्थान्तरन्यासालङ्कारः**

अत्र व्यावर्त्यतया बुद्धिस्थयोरर्थान्तरन्यासानुमानालङ्कारयोः[474] अर्थान्तरन्यासं लक्षयति–

**सामान्यं वा विशेषेण विशेषो वा तदन्यतः।**
**समर्थ्यते यत्र तत्रार्थान्तरन्यास[475] ईरितः।। 167।।**

अत्र सामान्यविशेषयोर्वाच्यत्वम्। दृष्टान्[476]तालङ्कारे तु सामान्ययोरेव वा विशेषयोरेव वा वाच्यत्वमित्यनयोर्भेदः। अयं द्विविधोऽपि साधर्म्यवैधर्म्याभ्यां प्रवर्तमानश्चतुर्विधो भवति। तत्र साधर्म्यात् सामान्येन विशेषसमर्थनं यथा–

राम त्वत्करिडम्बरात्तव भुजाच्चोक्षिप्तकौक्षेयकात्
सन्त्रस्ता न कुलाचलानपि समारोढुं यतन्ते द्विषः[477]।
वीक्षन्ते च न कुण्डलीन्द्रघटितश्रीखण्डकाण्डांस्तथा
प्रायस्त्रास[478]मुपैति वैरिसदृशात्त्रस्नुस्समस्तादपि।। 168।।

साधर्म्याद्विशेषेण सामान्यसमर्थनं यथा–

जगत्त्रित[479]यजित्वरोऽप्यपजयी कुतश्चिद्भवे-
दवश्यमिति निश्चयादनुमिमीमहेऽमी वयम्।
स तादृगपि रावणोऽसुरवरोऽप्ययाद्[480]भङ्गवान्-
रघुक्षितिपपुङ्गवादहह सङ्गरप्राङ्गणे।। 169।।

वैधर्म्या[481]त्सामान्येन विशेषसमर्थनं यथा–

शेषेण दुर्लभरघूद्वहबाहुसाम्य-
सिद्ध्यै समीरणभुजा शुचिना स्थिरेण।
कूर्मासनेन च तपः क्रियते चिरेण
को वा न दुर्लभतमेऽपि करोति वाञ्छाम्।। 170।।

वैधर्म्याद्विशेषेण सामान्यसमर्थनं यथा–

अन्यद्वस्त्वन्यवस्तुप्रकृतिमनुभवत्येव[482] हेतोः कुतश्चित्
पश्चात्तद्वस्तु पूर्वप्रकृतिमनुसरत्येव हेतोः परस्मात्।

योषा पाषाणभावं न किमु गतवती गौतमोद्भूतरोषात्[483]
पाषाणो वा न योषा पुनरपि किमभूद्रामपादाब्जरेणोः।। 171।।

अनुमानालङ्कारः

अनुमानालङ्कारं[484] लक्षयति–
साध्यसाधनमात्रोक्तावनुमानमुदीरितम्।[485]
तर्कानुमानरूपाभ्यां तत्प्रवृत्तिर्द्वयी भवेत्[486] ।। 172।।

यत्र किञ्चित् ज्ञाप्यं निर्दिश्य तस्य ज्ञापकतयाऽन्यन्निर्दिश्यते तत्रानुमानालङ्कारः। अत्र मात्रचा व्याप्तिपक्षधर्मतयोः प्रदर्शनं निरस्यते[487] । तयोरपि प्रदर्शने तर्कानुमानत्वापातात्[488] । वस्तुतस्तु ताभ्यामत्र भवितव्यमेव। तदभावे काव्यलिङ्गाभेदापत्तेः[489]। किञ्चात्र कविनिर्मितचातुरीमहिम्ना श्लेष[490]रूपकापह्नवातिशयोक्त्याद्यालम्बनेनानुमानोत्थाने न तार्किकपरिपाटीकलङ्क इति चमत्कारकारिताऽप्यस्योपपद्यते। अर्थापत्तिभेदं तत्रैव वक्ष्यामः। इदं तर्करूपेणानुमानरूपेण च द्वेधा[491] प्रवर्तते। यथा–

सीतैव राघव तवासिलता कथं स्या –
न्नो चेदयोनिजतनुर्दनुजार्तिहेतुः।
यद्वोरगीपृथुभुजङ्गतयाऽनया हि
निर्मुक्तया मुहुर[492]पायि परासुवायुः।। 173।।

अत्र पूर्वार्धे तर्करूपेण उत्तरार्धे हिशब्देन [493]हेतुत्वद्योतनाद् अनुमान[494]रूपेण च[495] प्रवृत्तिरिति वेद्यम्। अत्र पूर्वार्धे असिलतायास्सीतारूपत्वं द्वितीयार्धे[496] भुजङ्गीत्व[497] च व्यापकम्। अयोनिजाकृतित्वासुरनाशवैशिष्ट्यं व्याप्यम्। उभयोः सपक्षे सीतायां वृत्तेः पक्षे खड्गलतायां वृत्तेः, व्याप्तिपक्षधर्मताभ्यां खड्गे सीतारूपत्वं गमयति। उत्तरार्धेऽप्येवं वेद्यम्।

अर्थापत्त्यलङ्कारः

अर्थापत्तिं लक्षयति–
कस्मिंश्चिदर्थे निष्पन्ने यद्यर्थान्तरमापतेत्।[498]
दण्डापूपनयेनार्थापत्तिस्तत्र ह्यलङ्कृतिः।। 174।।

न च केनचिदर्थेन कस्यचिदर्थस्य ज्ञापनसामर्थ्याद्[499] अस्यानुमानान्तर्भावशङ्क्यः। समानन्यायो ह्यर्थापत्तेः प्रयोजकः। न च समानन्यायस्य व्याप्तिरूपता। अनुमानं तु[500] व्याप्तिमुपजीव्य प्रवर्तते। ततो न तत्रास्यान्तर्भावः। आक्षेपान्तर्भावस्तु वक्ष्यमाणतल्लक्षणादेव[501] निरसनीयः। अयमलङ्कारः प्रकृतादप्रकृताक्षेपोऽप्रकृतात्प्रकृताक्षेपश्चेति[502] द्विधा। यथा-

जगत्त्रितयजित्वरं किल[503] दशाननं सत्वरं
जिगाय समराङ्गणे किमुत दैत्यमात्रं विभुः।
निपीतजलधिर्मुनिर्झटिति विद्विषन्निल्वलं
निपातुमतिहेलया भवति खल्वलं पल्वलम्।। 175।।

अत्र प्राकरणिको रावणजयोऽप्राकरणिकमसुरमात्रजयं[504] कैमुतिकन्यायेन अर्थादाक्षिपति।

भङ्गोद्भूतविरावडम्बरभरैर्ब्रह्माण्डभङ्गावहैः
कोदण्डं निजमिन्दुखण्डमुकुटो बुध्वा भवत्खण्डितम्।
अस्तौषीत्किल हर्षकम्पितशिरोगङ्गातरङ्गारवै-
स्त्वां राम स्फुटवाग्भरेण किमुतासन्ना जगन्नायकाः।। 176।।

अत्राप्रकृतशिववृत्तान्तः[505] प्राकरणिकसीतास्वयंवरायातसर्वसर्वंसहापतिस्तुतिमर्थादापादयति।

**आक्षेपालङ्कारः**

आक्षेपं लक्षयति-

उक्तं वा वक्ष्यमाणं वा प्रकृतं प्रतिषिध्यते।
कञ्चिद्विशेषं द्योतयितुं तत्राक्षेपं प्रचक्षते[506] ।। 177।।

अत्र प्रकृतस्य प्रकृतत्वादेवाभिधानार्हस्य क्रियमाणो निषेधो बाध्यमानतया आभासीभवन् विधिमाक्षिपति। सोऽयं निषेध उक्तवक्ष्यमाणविषयतया स्वोपजीविनमाक्षेपमपि द्विधा भिनत्ति। तत्रोक्तविषयोऽपि द्विविधवस्तुविषयः कथनविषयश्चेति। वक्ष्यमाणविषयोऽपि द्विविधःसामान्यरूपेणाभिधित्सितस्य विशेषरूपतया कथननिषेधः, अंशाङ्गीकारेणांशान्तरनिषेधश्चेत्येवं चतुर्विधोऽयमाक्षेपः[507] । यथा-

रामो न भवतु धन्वी तथापि रोषेण शोणदृक्कोणः।
विदधे धन्वा नमयन्धन्वानमयं क्षणादुदन्वन्तम्।। 178।।

अत्र[508] रामो धन्वी न भवतीति प्रलपतो रावणस्य प्रतिवचने माल्यवद्वचने क्रियमाणो धन्वित्वरूपस्य[509] वस्तुनः प्रकृतस्य प्रतिषेधो बाधादाभासीभवन् समुद्रस्यापि नियमनाद्राम[510] एव धनुर्धरधुरन्धरो नेतर इति प्रतिपादनपुरस्सरं सत्वरं सीतां रामाय समर्प्य कुशली भवेति विशेषमाक्षिपति। कथननिषेधो यथा–

ब्रह्मन् भृगूद्वह रघूद्वहमण्डनस्य
दोर्दण्डचण्डिमभरं न वयं भणामः।
तद्भुग्नभग्नशशिभूषणचापघोषः
किं नाभ्यधत्त दलितद्रुहिणाण्डभाण्डः।। 179।।

इदं कथय कीदृक्ते भुजसारो मम चापमारोपयेति राममाक्षिपन्तं जामदग्न्यं प्रति लक्ष्मणस्य प्रतिवचनम्। अत्र न भणाम इति क्रियमाणेन भणननिषेधाभासेन तादृक्चण्डीशकोदण्डं खण्डितवतो रामभुजदण्डस्य कियत्तव ब्राह्मणस्य चापारोपणम्, अतोऽस्माद्दुर्व्यसनाद्विरमेति विशेषो व्यज्यते। वक्ष्यमाणविषये[511] सामान्यप्रतिज्ञायां[512] विशेषनिषेधो यथा–

रामभद्रविमुखीमहं सखि त्वां वचः किमपि वक्तुमागता।
न ब्रवीमि ननु वेत्सि जानकि त्वं च पञ्चशरबाणसञ्चयम्।। 180।।

इदं सीतां प्रति सखीकथनम्। इह किमपि वचो वक्तुमागतेति सामान्यं प्रतिज्ञाय विशेषस्य वक्ष्यमाणस्य कथननिषेधाभासेन, सखि वैमुख्यं जहीहि। पादप्रणते[513] रघुपतौ प्रसीद नो चेद्दुस्सहं स्मरशरसन्तापमेष्यसीति विशेषो ध्वन्यते। अंशोक्तावंशान्तरनिषेधो यथा–

चन्द्रः किमेष? न स पाक्षिककान्तिमेति
पूषा किमेष? न स याति नभोगमार्गम्।
वह्निः किमेष? न जलेन[514] स हानिमेती–
त्यामृश्य[515] राम सुगुणैस्त्वयि निश्चयस्स्यात्।। 181।।

अत्र निरतिशयतेजश्शालितया शीतभानुभानुकृशानुरूपतायाम् एकदेशमङ्गीकृत्य एकदेशान्तरनिषेधः क्रियमाणः प्रसिद्धैरपि तेजस्विभिः सोमादिभिरपि तात्साम्यं दुर्लभमभूत् किमुतेतरैस्तै[516]जस्विभिरिति रामतेजसोऽवाङ्मनसपदविषयता व्यज्यते।

व्याजस्तुत्यलङ्कारः

आक्षेपप्रस्तावाद्व्याजस्तुतिं लक्षयति–

**यत्र वाच्या स्तुतिर्निन्दां निन्दा वा स्तुतिमर्पयेत्।**
**तत्र व्याजस्तुतिर्नामालङ्कारं कवयो जगुः[517] ।। 182।।**

यत्राभिधीयमाना निन्दा प्रकृते स्तुत्ये[518] प्रमाणबाधिता सती स्तुतिमर्पयति, स्तुतिर्वा निन्द्ये तादृशी[519] निन्दां तत्र व्याजस्तुत्यलङ्कारः। व्याजस्तुतिशब्दश्च स्तुतेर्वाच्यत्वे निन्दाया व्यङ्ग्यत्वे व्याजरूपा स्तुतिः। तथा तद्वैपरीत्ये[520] व्याजेन स्तुतिरिति च प्रवर्तते। ननु स्तुत्ये[521] निन्दाया अप्रकृतायाः क्रियमाणायाः प्र[522]कृतस्तुत्याक्षेपकत्वमेकत्र, परत्र स्तुतेर्निन्दाक्षेपकत्वमिति अप्रस्तुतप्रशंसात्वमेवेति चेत्, सत्यम्। तथापि स्तुतिनिन्दात्मकविच्छित्त्यन्तरा[523]वलम्बनेन[524] पृथक्परिगण[525]नमिति प्राञ्चः। नवीनास्त्वभेदमेवाहुः। तत्र निन्दया स्तुतिध्वनिर्यथा–

दारिद्र्याह्वयबान्धवैश्चिरतरावस्थायिभिर्दुस्त्यजै-
स्त्वं विश्लेष्य विभूतिमात्रकलितान् कृत्वा विपश्चिद्गणान्।
बध्वा गाढमसंख्यसुस्थिरगुणैर्नित्यं गभीरे कृपा-
कूपारे विनिमज्जयन् रघुपते दीने दयालुः कथम्।। 183।।

अत्र श्लेषरूपकमहिम्ना निन्दया परमकृपालुत्वरूपा स्तुतिरेवावगम्यते।

त्वदुज्झितानां रघुसिंह[526]सिद्धान्गुणच्युतानामपि मार्गणानाम्।
प्राणामिषैः प्रीणयतां रिपूणां विश्राणनं वर्णयितुं न शक्यम्।। 184।।

अत्र स्तुत्या निन्दाध्वनिः।

**विरोधालङ्कारः**

अत्राक्षेपालङ्कारे इष्टनिषेधे बाधितं[527] तया[528] विरोधानुप्रवेशेन तत्प्रस्तावाद् इतः परं विरोधगर्भालङ्कारपेटिकान्तर्गतान् अवशिष्टानलङ्कारान् लक्षयति-

**आभासत्वे विरोधस्य विरोधालङ्कृतिर्भवेत्।। 185।।**

यत्रापाततो विरोधः प्रतीतः[529] पर्यवसाने परिह्रियते तत्र विरोधालङ्कारः[530]। पर्यवसानेऽपि यदि विरोधस्तथैवावतिष्ठते तदा दोष एव[531]। तत्र जातेर्जातिगुणक्रियाद्रव्यैर्विरोधे चत्वारो भेदाः। क्रियायाः क्रियागुणद्रव्यैः[532] त्रयः।

गुणस्य[533] गुणद्रव्याभ्यां[534] द्वौ। द्रव्यस्य द्रव्येण एक इति सम्भूय दशविधो विरोधालङ्कारः[535]। यथा-

राम तवासिर्भुजगस्सोऽप्युग्रः कामपूरकः कालः।
सशुचिस्सपरप्राणानिलभोक्ता[536] कलयते परां काष्ठाम्।। 186।।

अत्र दशविरोधा अपि सङ्गृहीताः। अत्र असिर्भुजग इति जात्योर्विरोधः। असिभुजगशब्दयोर्जातिवाचित्वेन[537] परापरभावशून्यसामान्ययोः[538] सामानाधिकरण्यादर्शनात्। एवं प्रथमविरोधः स्फुरति। स च भुजगशब्दस्य करगतत्वरूपार्थस्वीकारे आभासीभवति। एवमुत्तरत्रापि एकार्थस्वीकारे स्फुरतो विरोधस्य अर्थान्तरस्वीकारे आभासीभवनं द्रष्टव्यम्। सोऽप्युग्र इत्यत्र तच्छब्दार्थस्य शम्भुरूपद्रव्यस्य च विरोधः। उग्रोऽपि कामपूरकः कालश्च इत्यत्र द्रव्यक्रिययोर्विरोधः[539]। शम्भोः कामदाहकत्वेन कामपालनक्रियाविरोधात्। उग्रशब्दस्य दारुणगुणवाचकत्वेन गुणक्रियाविरोधः[540]। दारुणतागुणस्य[541] दुःखजनकत्वेन सुखजनकत्वानुपपत्तेः। कालशब्दस्य यमद्रव्यकालिमगुणवाचकत्वेन[542] शम्भुयमद्रव्ययोर्विरोधः। कालश्शुचिरित्यत्र शुचिशब्दस्य वह्नित्वजातिशुक्लिमशुद्धिगुणानां वाचकत्वेन यमद्रव्यशुक्लिमगुणयोर्विरोधः। यमस्य[543] कृष्णवर्णत्वात्। तथा शुक्लि- मकालिमगुणयोर्विरोधः। कालिमवह्नित्वजात्योश्च विरोधः। तथा[544] स शुचिः प्राणानिलभोक्ता परां काष्ठां कलयत इत्यत्र वह्नित्वजातेः[545], अनिल-

भुजिक्रियायाश्च विरोधः। वह्नेरनिलसखत्वेन तद्भुजिक्रियाया वह्नित्वजातेश्च[546] सामानाधिकरण्यविरोधात्[547]। तथा अनिलभुजिक्रियायाः पश्चिमदिक्पालनक्रियायाश्च विरोधः। क्रियाद्वयस्यापि भुजगवरुणयोः प्रतिनियतत्वात्। तदेवं दशविधोऽपि विरोधालङ्कारोऽत्र निरूपितश्लेषोप- स्थापितः[548]। अयमश्लेषमूलोऽपि सम्भवति। यथा[549]–

शतमखमुखबर्हिर्मुखमुखकमलानां विकासने भानुः।
अद्भुतमसुरमुखाम्बुजनिमीलने राम शीतभानुस्त्वम्।। 187।।

अत्रैकस्यैव रामस्य भानुशीतभानुतादात्म्यकथनाद्विरोधः प्रतीतः स चाभासीभवति, तत्तादात्म्यस्य तदुभयकार्यकारित्वेनौपचारिकत्वात्।

**विशेषोक्तिविभावनालङ्कारौ**

विशेषोक्तिविभावने लक्षयति–

**सति कारणपौष्कल्ये विशेषोक्तिः फलं न चेत्।**
**तस्मिन्नविद्यमानेऽपि कार्यं स्याच्चेद्विभावना।। 188।।**

इह लोकमर्यादातिक्रमेण कारणसद्भावेऽपि कार्यानुदय[550]रूपस्य[551] विशेषस्योक्तेः[552] विशेषोक्तिता[553]। तथा कारणं विनैव कार्यस्योद्भावनं विभावनेत्यन्वर्थत्वमनयोः। अत एव विरोधपेटिकासङ्गतिः। द्वयं यथा–

श्रीराम वीर तव वैरिवराङ्गनानां
वृष्टिर्बभूव नयनेषु विना पयोदैः।
चित्तं न सा शमयति स्म निरन्तराल-
धारालतामुपगतापि तदङ्गतापम्[554] ।। 189।।

अत्र प्रसिद्धकारणं मेघं निषिध्य कार्यं निक्षिप्यते[555]। अप्रसिद्धकारणं[556] दुःखमस्त्येव। तथा प्रसिद्धजलधाराकारणेऽपि तापशान्त्यभावो निबद्धः। अप्रसिद्धकारणं[557] नैश्चिन्त्यं नास्त्येव। निमित्तोपादानानुपादानाभ्याम् अनयोर्द्वैविध्यम्। अत्र वैरिसम्बन्धरूपस्य निमित्तस्योपादानादेकः प्रभेद उदाहृतः। इतरप्रभेदयोरेतद्वैपरीत्येनोदाहरणे सुबोधे।

### विषमालङ्कारः

विषमालङ्कारं लक्षयति–

**हेतोर्विलक्षणोत्पत्तौ घटने च विरूपयोः।**
**अनिष्टजनने च स्याद्विषमालङ्कृतिस्त्रिधा।। 190।।**

एषां त्रयाणामपि भेदानां वैषम्यगर्भत्वाद्विषमशब्दप्रवृत्तिः। कारण-विलक्षणकार्योत्पत्तौ परस्परविरूपघटने इष्टप्राप्तौ[558] व्याप्रियमाण-स्यानिष्टनिष्पत्तौ च विरोधस्य जागरूकत्वात् पेटिकासङ्गतिः[559]। तत्र कारणविरुद्धकार्योदयो यथा–

रघुराट्प्रतापबडवानलादहो[560] द्विषदुन्मिषद्बलसमुद्रजीवनम्[561]।
रभसेन शोषयितुमुद्यतादभूद्रणरङ्गमूर्धनकबन्धबन्धुरा[562]।। 191।।

अत्र जलशोषकाद्बडवानलात् जलोदयलक्षणविलक्षणकार्योदयः[563]। रूपकश्लेषानुप्राणितोऽयं प्रभेदः।

काकुत्स्थकर्कटककोमलमर्कटैस्त्व-
मस्मादृशोग्रसमरे किमरे प्रवृत्तः।
बद्धुं दृढं[564] व्यवसितो बिसतन्तुपाशै-
स्संवर्तसागरतरङ्गमतङ्गजेन्द्रान्।। 192।।

इदं रामं प्रति रावणवचनम्। अत्र विरूपयोर्दुर्बलप्रबलयोर्युद्धघटना।

यान्यात्मरक्षणकृते निशितानि शस्त्रा-
ण्यादाय योद्धुमभिजग्मुररातिवीराः।
रामं विनेशुरवनीशमवेक्ष्य मुक्तै-
स्तैरेव सङ्कटपदे[565] चकिता द्रवन्तः।। 193।।

अत्र रिपूणां निशितहेतिधारणमात्मरक्षणकारणं नाभूद् इति यत् तावदास्ताम्, प्रत्युत निधनसाधनमेवाभूदित्यनिष्टनिष्पत्तिः।

### समालङ्कारः

अथ विरोधमूलालङ्कारत्वाभावेऽपि[566] विषमालङ्कारद्वितीयप्रभेद-विपर्ययरूपतया[567] तत्प्रस्तावात् समालङ्कारं लक्षयति[568]–

समानयोश्चेद्घटना[569] समालङ्कृतिरुच्यते।। 194।।

अस्य[570] विषमवैधर्म्यरूपत्वाद् विषमस्य च त्रिविधत्वाद् विरूप-घटनात्मकविषमप्रभेदप्रातिभट्येन[571] अन्योन्यानुगुणवस्तु[572]घटनात्मक एकस्समालङ्कारस्य प्रभेदः परिगणितः प्राचीनैः। अपरे तु विसदृश-कार्योत्पत्तिवैधर्म्येणापि समालङ्कारप्रभेदं सरूपकार्योत्पत्तिमुखेनावतारयन्ति। अनिष्टनिष्पत्तिवैधर्म्येणोत्पादनं वैचित्र्यात् (वैचित्र्याभावात्) सर्वैरप्यु-पेक्षितम्[573]। अनुगुणघटना यथा-

अन्योऽन्यानुगुणो योगो जानकीरघुरामयोः।
रेजे प्रत्यग्रतारुण्यलक्ष्मीशृङ्गारयोरिव।। 195।।

अनुगुणकार्योत्पत्तिर्यथा-

राम तव खड्गधूमः कोमलतापिंच्छपल्लवश्यामः।
उचितं मलिनीकुरुते रिपुधरणीभृद्यशोमुकुरम्।। 196।।

### अधिकालङ्कारः

आधारानानुगुण्यञ्चेदाधेयस्याधिकं भवेत्।। 197।।

आधाराधेययोरानुगुण्याभावेऽपि विरोधदत्तहस्त[574] एवेत्यस्याप्यत्र निरूपणम्। यथा-

रामप्रतापयशसां प्रकरैरनन्तै-[575]
स्संपिण्डितैरणुतराण्डकटाहमध्ये।
आस्थीयते कथमहो हिमहेमशैल-
व्यूहैरिव ह्रदझरीमणिदर्पणौघे।। 198।।

### असङ्गत्यलङ्कारः

असङ्गतिं लक्षयति-

असङ्गतिर्हेतुफले भिन्नाधिकरणे यदि।। 199।।

व्यधिकरणयोः कार्यकारणभावस्य विरुद्धत्वादसङ्गतिः[576]। न च विरोधान्तर्भावशशङ्क्यः। सामानाधिकरण्ये विरोधो वैयधिकरण्ये त्वसङ्गति-रिति व्यवस्थापितत्वात्[577]। यथा[578]-

कोणाघातः कृतो घाटीपटहे रामकिङ्करैः।
द्विषां हृदि भिदां चक्रे घोषं तेषां[579] च योषिताम्।। 200।।

**व्याघातालङ्कारः**

व्याघातं लक्षयति-

**विहिते केनचित्कर्त्रा कार्ये केनापि हेतुना।**
**तेनैवान्योऽन्यथयति तच्चेद्व्याघात्यलङ्कृतिः[580]।। 201।।**

तेनैव हेतुना तस्यैव कार्यस्यान्यथाकरणे विरोधस्फूर्तेः सङ्गतिः। यथा ममैव व्यायोगे नरकासुरविजये[581] -

त्यक्तप्रभञ्जनाधममाक्रान्तपुरन्दरालयं वीरम्।
श्लाघन्ते किंपुरुषाश्चर्वितबर्हिर्मुखं मृधेष्वेनम्।। 202।।

अनेन पद्येन जीमूतनामा नरकासुरसारथिः स्वस्वामिनः स्तुतिं कृतवान्। कृष्णसारथिर्दारुकस्तु त्यक्तप्रभमित्यादिरूपेण तदेव पद्यं पठित्वा स्तुति- मन्यथयति स्म।

**युक्त्यलङ्कारः**

युक्तिं लक्षयति-

**दुर्घटार्थस्य घटनाचातुर्यं युक्त्यलङ्कृतिः।। 203।।**

यथा -

सप्तसालान्महोत्तालान् सकृदेकेन पत्रिणा।
सहस्रं[582] चातपत्राणां रावणस्यालुनाद्विभुः।। 204।।

अस्य दुर्घटघटनासाम्यादवान्तरसङ्गतिः।

**भाविकालङ्कारः**

अथ भाविकालङ्कारस्य लोकव्यवहारमूलत्वेन विरोधमूलत्वाभावेऽपि तल्लक्षणपर्यालोचनायां कथञ्चिद्विरोधस्फूर्तेरवान्तरसङ्गतिं मन्वानस्तल्ल-क्षणमाह-

**भवेद्यत्राद्भुतार्थस्य वर्णनाद्भूतभाविनोः।**
**अपरोक्षायमाणत्वं तत्र भाविकमुच्यते।। 205।।**

यत्राद्भुतवस्तुवर्णनया भूतभाविनोरपि वस्तुनोर्भावकानां[583] हृदि भावनावशेन प्रत्यक्षायमाणत्वं तत्र भाविकालङ्कारः। अध्यवसायाभावात् नायमुत्प्रेक्षा अतिशयोक्तिर्वा। भ्रान्तेर्वा रसादेर्भाव्यत्वस्य वात्राभावान्न भ्रान्तिमद्रसवदाद्यन्तर्भावः। भावनावशेन हृदि तथैवोदीयमानतया न विरोधाभासतापि। यथा–

रोषेण शोणं दृक्कोणं कृत्वा रामे स तादृशः।
उदन्वानप्यभूद्धन्वा धन्वानमयति क्षणात्।। 206।।

अत्र सकलनदीपयःपूरविश्रान्तिभूमितया कदाचिदप्यसम्भावित-शोषणस्य अमितस्याब्धेः[584] मरुभूमिता[585]द्भुतार्थो[586]क्त्या[587] तथा भावनायाम-परोक्षताधीरिति भवति भाविकत्वम्।

**अन्योन्यालङ्कारः**

अन्योन्यं लक्षयति–

तत्रान्योन्यं मिथो यत्र कार्यकारणता भवेत्।। 207।।

द्वयोः परस्परोपकार्योपकारकभावेऽपि[588] विरोधस्य लब्धप्रसरतया[589] सङ्गतिः[590]। यथा[591] –

गुणैर्विभूषितो रामस्ते च रामेण भूषिताः।
रत्नैरिव स्वर्णशैलस्स्वर्णशैलेन रत्नवत्।। 208।।

**विचित्रालङ्कारः**

विचित्रं लक्षयति–

विचित्रं स्याद्विरुद्धस्य फलस्याप्त्यै समुद्यमे[592] ।। 209।।

यथा[593] –

परमौन्नत्यलाभाय सर्वसर्वंसहाधिपाः।
नमन्ति रघुवीरस्य पादपीठाग्रभूतले।। 210।।

तस्य कारणविपरीतकार्योत्पादाद् विरोधस्फूर्तौ पेटिकासङ्गतिः। न चास्य[594] विसदृशकार्योत्पत्तिरूपविषमालङ्कारप्रभेदाभेद इति[595] वाच्यम्। कारणप्र[596]तिषेधद्वारात्र कार्यवैपरीत्यप्रतीतिः। कार्यवैपरीत्यप्रतीत्या कारण-

निषेधस्तत्रेति[597] भिन्नविषयत्वात्। राजानो यदि परमौन्नत्यमभिलषन्ति किमिति तर्हि नमन्तीति कारणप्रतिषेधमुखेन कार्यवैपरीत्यं विचित्रालङ्कारविषयः। विषमालङ्कारे तु कार्यवैपरीत्यप्रतीत्या कारणनिषेधदृष्टिरिति ध्येयम्। यथा वा -

रामकार्मुकजीमूतः कुलं वैरिमहीभृताम्।
कर्तुं निर्जीवनं घोरशरासारं प्रवर्षति।। 211।।

**सामान्यालङ्कारः**

सामान्यं लक्षयति–

**सामान्यं गुणसाम्येन यत्र वस्त्वन्तरैकता।। 212।।**

यत्रैकस्य वस्तुनो गुणसाम्येन वस्त्वन्तरतादात्म्यप्रतीतिर्भवति तत्र सामान्यालङ्कारः। अत्र गुणसाम्येनेत्यनेन मीलित[598]व्यावृत्तिः। न हि मीलिते[599] गुणतः परेण[600] परतिरोधानम्। अपि तु वस्तुना वस्त्वन्तराच्छादनमात्रम्[601]। साम्यपदेन तद्गुणव्यावृत्तिः[602]। न हि तद्गुणे गुणसाम्यं निमित्तम्। न च[603] व्याजोक्तिः। व्याजस्यानुक्तेः। किन्तु तिरोधानात्[604]। नापह्नवः। अनपलापात्। अत एव सामान्यपदप्रवृत्तिः। यथा–

त्रैलोक्येऽपि विजृम्भिते रघुपतेश्शुभ्भद्यशस्सम्भ्रमे
पेयद्रव्यकृतः कलिर्द्रवतया सौरीचकोरीगतः।
शान्तो वाहनगोचराश्शवशचीप्राणेशयोस्सास्नया
पक्षैरायुधवाहनभ्रमकृतो लक्ष्मीशवागीशयोः।। 213।।

इह रामयशोधवलिम्ना सुधाचन्द्रिकयोः, वृषभोच्चैःश्रवसोः, शङ्ख-हंसयोश्च[605] भेदस्तिरोहितः। अत एव द्रवत्वादेर्भेदकत्वमुक्तम्।

**मीलितालङ्कारः**

अथ एतल्लक्षणवाक्यस्थपदव्यावर्त्यानां मीलिताद्यलङ्काराणां लक्षणा-न्याह -

**मीलितं[606] वस्तुनैकेन वस्त्वन्तरनिगूहनम्।। 214।।**

एतद्द्विविधम्–सहजेनागन्तुकतिरोधानमागन्तुकेन सहजतिरोधानं चेति।

यथा[607] –

कनकमुकुट[608]रम्यरामरामाकलितकपोलकलाविलासलक्ष्मीः।
तिरयति नवचम्पकावतंसश्रवणकलापकलाप[609]कान्तिलीलाम्।।215।।

अत्र सहजेन कपोलकान्तिरूपेण वस्तुना आगन्तुकचम्पककन-कता[610]टङ्कादिशोभारूपं वस्तु तिरोधीयते।

रामहेतिहतारातिकामिनीकुचकुम्भयोः।
ऊष्मा तिरोहितः पुष्पचापशोकज्वरोष्मणा।। 216।।

इह युवतिकुचयोः सहज ऊष्मा आगन्तुकेन कामशोक[611]ज्वरोष्मणा तिरोधीयते।

तद्गुणालङ्कारः

तद्गुणस्स्वगुणत्यागात् प्रबलान्यगुणाहृतिः।। 217।।

अयमिह विवेकः। यत्र समानगुणसम्बन्धे सत्येव अन्यस्यान्यगुणाच्छा-दकत्वं[612] तत्र सामान्यालङ्कारः। यत्र गुणवैसादृश्ये सत्येव दुर्बल-निजगुणहानेन सन्निधिमहिम्ना प्रबलपरगुण[613]स्वीकारः, तत्र तद्गुणालङ्कारः। यत्र गुणोपादानविवक्षया[614] वस्तुनो वस्त्वन्तरेणाच्छादनं तत्र मीलनालङ्कारः। यत्र सादृश्येन कस्यचिदपलापस्तत्रापह्नव इति। स्वगुणहानेन तस्य परस्य गुणोऽत्रेति तद्गुणपदप्रवृत्तिः। यथा–

विस्रम्भस्थितये भुवोऽवधिगिरेः[615] पाश्चात्त्यसानूगता[616]
नित्यध्वान्तमषीमलीमसतमा रामस्य विद्वेषिणः।
कीर्त्या हारपटीरहीररुचिरस्फूर्त्या विलिप्ता बत
त्यक्त्वा कार्ष्ण्यमनादिसिद्धमपि ते स्फूर्तिं[617] ययुस्स्फाटिकीम्।। 218।।

यथा वा–

रामकीर्त्या धवलिते त्रैलोक्ये वाहने कलिः।
बभूव भर्गयमयोर्वाताग्न्योर्विधिशार्ङ्गिणोः।। 219।।

अतद्गुणालङ्कारः

एतत्प्रातिपक्ष्यादतद्गुणं[618] लक्षयति–

**सति हेतौ परगुणास्वीकारे स्यादतद्गुणः[619] ।। 220 ।।**

हेतुः सन्निधिः[620] प्रबलगुणस्य। अस्य कार्यकारणभावानादरान्न विशेषोक्त्यभेदशङ्का[621] । यथा-

तमालदलनीलाभिः कीर्तिभिश्शत्रुभूभृताम्।
रामकीर्तिः परीतापि परभागं प्रपद्यते ।। 221 ।।

**व्याजोक्त्यलङ्कारः**

व्याजोक्तिं लक्षयति[622] -

**यत्नेन संवृतं वस्तु कुतश्चिद्विवृतं यदि।**
**निगूह्यतेऽन्यविधया व्याजोक्तिस्तत्र कथ्यते ।। 222 ।।**

ननु अपह्ववालङ्कारादस्य कथं भेद इति चेत्, उच्यते[623] - तत्र हि प्रकृतस्य अप्रकृतसादृश्यलक्षणफलकट[624]ाक्षेण प्रकृतमपलप्याप्रकृतमारोप्यते। इह तु सिद्धमेव सादृश्यं साधन[625]तयावलम्ब्य निह्ववः क्रियते। तेन उभयोरप्यपह्ववपूर्वकत्वाविशेषेऽपि सादृश्यफलत्वसाधनत्वाभ्यां भेदः। यथा-

श्रीरामापरिमेयवैभव भवद्धाटीभटैरुद्भटैः।
स्वामात्यान्महतो हतान्युधि हितानाकर्णयन्तो द्विषः।
त्वद्भीत्या जनितान्प्रकम्पजडिमश्वासाश्रुमोहादिकान्
भावान्बन्धुविपद्व्यथाप्रकटनोपायैस्समाच्छादयन् ।। 223 ।।

अत्र रामभद्रभयजनिताः प्रकम्पजाड्यादयो भावा[626] यत्नेन संवृता अपि कथञ्चिदभिव्यक्ता बन्धुवियोगशोकाभिनयेन निह्नुता इति भवति व्याजोक्तिः।

**स्वभावोक्त्यलङ्कारः**

अथ उक्तित्वसाम्यात् स्वभावोक्त्यादीन् कतिचिदलङ्कारान् लक्षयति-

**स्वभावोक्तिर्भवेच्चारु[627] यथावद्वस्तुवर्णनम् ।। 224 ।।**

यथा[628] मदीये कंसवधनाटके-

वक्षोजाङ्गणचुम्बितुम्बिरुचिरामाबिभ्रती वल्लकी-
मीषद्दर्शित[629]बाहुमूलसुषमा[630] तन्त्रीस्स्पृशन्ती नखैः।
मन्दस्पन्दितकुण्डलालकभरा माधुर्यधुर्यस्वरा
किञ्चित्कुड्मलितेक्षणा स्मितमुखी केयं शनैर्गायति।। 225।।

प्रश्नोत्तरिकालङ्कारः

**मिथश्चमत्क्रियालापो[631] यः प्रश्नोत्तरिका हि सा।। 226।।**

यथा[632] -

भोस्ताक्ष्याग्रज! किं नु किन्नर! रवेः कार्श्यं कुतो दृश्यते?
सम्मोहेन, मुहुर्मुहुर्बत कुतो? बिम्बस्य निर्भेदनात्।
के भिन्दन्ति? हताऽहिता रघुभुवा क्रुद्धेन युद्धे, पुनः
के मूर्च्छां शमयन्ति? शीकरकिरा[633]श्शुण्डालशुण्डालताः।। 227।।

इयमुत्तरस्य प्रश्नगतत्वे[634] विशेषतश्चमत्करोति। यथा[635] -

किंशुकमुखमनुकुरुते कामार्तिं वदति[636] दुस्सहां धीरः।
किन्नरगीतं मधुरं किंपुरुषमुखं तुरगमुखसदृशम्।। 228।।

उत्तरालङ्कारः

उत्तरं प्रश्नपूर्वं चेदुत्तराद्वा बहिर्यदि।
प्रश्न उन्नीयते तत्र भवेद्विविधमुत्तरम्।। 229।।

अत्र परिसंख्याव्युदासाय व्यवच्छेद्यं विनैव इति विशेषणं देयम्। यत्र प्रश्नपूर्वकमुत्तरमुपनिबध्यते तत्रैकमुत्तरम्। यत्र अनुपनिबद्धस्यैव प्रश्नस्य उत्तरसामर्थ्याद् बहिरुन्नयनं तत्रापरम्। क्रमेण यथा-

कौ राजपरिव्राजौ पूज्यतरौ कथय सङ्गरहितौ यौ।
कौ वा पण्डितगुच्छौ श्लाघ्यतरौ भ्रमरहिततयोपेतौ। 230।।

तादृग्भोज्य[637]समस्तवस्तुसहितं संत्यज्य राज्यं वयं
भोः पुत्रा भयविह्वला रघुपतेरध्यास्महे काननम्।
एते वन्यगजा न पोषितगजास्तस्मान्नमन्ते न वा[638]
नामी वन्यतयोपयान्ति च मृगा[639] युष्माभिराकारिताः।। 231।।

अत्र यथापूर्वं दन्तिनः किमिति[640] न नमन्ते[641] किमित्याहूता[642]

हरिणाश्च[643] न[644] सन्निधिमुपयान्तीति[645] शिशुप्रश्नः पितृदत्तोत्तरसामर्थ्याद् बहिरुन्नेयः। नमन्त इति कर्मकर्तरि रूपं 'न दुहस्नुनमां यक्चिणौ' इति [अष्टाध्यायी 3-1-89] निषेधात्सिद्धम्[646]।

वक्रोक्त्यलङ्कारः

अन्यथोदितवाक्यस्य काक्वा श्लेषेण वान्यथा।
योजनं क्रियते तत्र वक्रोक्तिस्स्यादलङ्कृतिः।। 232।।

तत्र[647] श्लेषेण यथा-

कान्ते कुप्यसि किं मया त्वयि कृतं? लक्ष्म्या न किञ्चित्कृतं
प्रेमस्फारगिराशये मम दरं रम्भोरु! दूरींकुरु।
शङ्खश्शत्रुजये करे तव भवेन्नो साम्प्रतं तिष्ठती-
त्यालापैः कुपिता विदेहतनया रामं व्यधान्मौनिनम्[648] ।। 233।।

अत्र रामेण[649] मयेत्यस्मच्छब्दाभिप्रायेण[650][651] वाक्ये[652] प्रयुक्ते देव्या माशब्दमवलम्ब्य अन्यथा योजितम्। तथा आशये[653] दरं भयं दूरीकुरु इति रामेण वाक्यं प्रयुक्तम्। देव्या तु शये-करे, दरं-शंखं दूरीकर्तुं न शक्नोमि[654], अधुना करे शंखस्याभावाद् इति तद्वाक्यमन्यथा योजितम्।

काकूदाहरणं यथा-

दधाने धरणीचक्रमेकस्मिन् राम ते भुजे।
शेषनागा न लज्जन्ते बहवो भूधुरन्धराः।। 234।।

अत्र[655] हे[656] राम त्वद्भुजेनैकेन धार्यमाणां धरणिं शेषदिग्गजाः सम्भूय दधाना लज्जन्त एव। अतस्त्वद्भुजस्य इतरधराधुरन्धरसाधारण्यं[657] कि-मित्यापादयसीति काक्वा प्रतीयते।

प्रत्यनीकालङ्कारः

अथ लोकव्यवहारमूलेष्वलङ्कारेषु अवशिष्टानलङ्कारान्[658] लिलक्षयिषुः प्रत्यनीकं तावल्लक्षयति[659] -

प्रतिपक्षस्य बलिनः प्रतीकारे सुदुष्करे।
तदीयस्य तिरस्कारः प्रत्यनीकमुदीर्यते।। 235।।

यथा–

जगदुपकृतौ लावण्ये च त्वया रघुभूपते
सरसिजसुहृद्राकासोमावुभावपि निर्जितौ।
तव वितनुतो धाम्नां भूम्ना मुखेन च तुल्यतां
बत गतवतोः कान्तिक्लान्तिं कृशानुसरोजयोः।। 236।।

अत्र जगदुपकारलावण्यगुणयो[660][661] रामेण पराभूतौ रविशशिनौ तत्प्रतीकाराक्षमौ तत्तेजोमुखसखयोः कृशानुकमलयोः कान्तिक्षयं कुरुत इत्युच्यते। तेन अनीकाभिभवाशक्तस्य कस्यचित्प्रत्यनीकाभिभावकत्व-दर्शनादिदमपि तादृगिति प्रत्यनीकमित्युच्यते।

## प्रतीपालङ्कारः

प्रतीपमाह–

यत्रोपमानस्याक्षेपः कैमर्थक्येन कथ्यते।
यद्वोपमेयभावोऽत्र प्रतीपं स्या[662]दलङ्कृतिः।। 237।।

यत्रोपमेयस्य लोकोत्तरतामभिव्यक्तुम्[663] उपमानस्य कैमर्थक्यमुप-पाद्यते। यद्वा उपमानस्योपमेयता[664] क्रियते, सोऽयं द्वेधा[665] प्रतीपालङ्कारः। पक्षद्वयेऽप्युपमानस्वरूपापेक्षया प्रातिकूल्यवाचोयुक्तेः[666] प्रतीपपदप्रवृत्तिः।

यथा–

अश्रान्तविश्रान्तिकलाधुरीणपाणौ रघूणां प्रवरे विधाता।
वियद्द्रुमादीन्विफला[667]न्विचिन्त्य स्वर्लोकशोभाजनने न्ययुंक्त।। 238।।

अनेकमुखमाणिक्यवलयोल्लसिताकृतिः।
पतिः कुण्डलिनां रामदोर्दण्ड इव हिण्डते।। 239।।

अत्रोपमानतया प्रसिद्धस्य शेषस्योपमेयीकरणं रामभुजापेक्षया तस्या-पकर्षमभि[668]व्यनक्ति।

## सूक्ष्मालङ्कारः

सूक्ष्ममाह–

यदसंलक्षितं सूक्ष्मं[669] सूक्ष्मं स्यात्तत्प्रकाशने।। 240।।

अत्र सूक्ष्मत्वं नाम निपुणतरमात्रविज्ञेयत्वं तादृगर्थस्य कथञ्चित्प्रकाशने सूक्ष्मालङ्कारः। यथा–

साक्षैस्सङ्ग्रामरुक्षैरिह शतमखजित्कुम्भकर्णातिकायैः
त्रातां सीतां चतुर्भिः कथमिव मनुजो नेतुमेकः[670] क्षमेत।
इत्युत्सेकप्रलापान् सदसि निगदते रावणायानुजन्मा
पर्यन्तस्तम्भसंस्थं स्फटिककिटिमुपादर्शयद्बुद्धिशाली।। 241।।

यथा श्वेतवराह एकोऽपि महासत्त्वतया चतुःसमुद्रसमावृतामपि[671] विश्वम्भरां दंष्ट्रामात्रसहाय उद्दधार, तथा रामभद्र एकोऽप्यपरिमेयशक्तिरनुजमात्रसहायो भवदुक्तैर्महावीरैरक्षप्रमुखैश्चतुर्भिर्गुप्तामपि[672] सीतां नेष्यत्येवेत्यर्[673]वरूपः सूक्ष्मार्थस्सूचितः[674]।

उदात्तालङ्कारः

[675]उदात्तालङ्कृतिस्सा स्याद्यत्समृद्धार्थवर्णनम्।। 242।।

अर्थवर्णनमात्रस्य स्वभावोक्त्यतिप्रसञ्जकत्वात्[676] समृद्धेत्युक्तम्। न च भाविकाभेदः[677]। तत्रापि यथास्थितस्यैव वस्तुनो भूतभविष्यत्ताकारेणानुभवग्रथनात्। यथा[678]–

अन्तर्लीनेन्द्रनीलोपलदलसुषमापङ्किले हारहीर-
स्फारांशूदारनीरे रुचिरमरकतस्फूर्तिशैवालजाले।
नानारत्नात्मकेलीगिरिविवरजुषिस्मेरकासारसारे
विद्वन्नारीविहारा विदधति विशदां राघवौदार्यलीलाम्।। 243।।

अनुकल्पालङ्कारः

अनुकल्पं जल्पति–

अनुकल्पस्तु गौणोक्तिर्मुख्योक्तेस्समनन्तरम्[679]।। 244।।

मुख्यं किञ्चित्प्रधानत्वेनाभिधाय तदितरमुख्यासम्भावनया[680] गौणाभिधानमनुकल्पः। यथा–

श्लाघ्यः कोदण्डविद्यायां राघवो रावणोऽपि वा[681]।
यथा ध्वान्तहृतौ[682] दक्षस्तपनो दहनोऽथवा।। 245।।

ननु उभयोर्वैकल्पिकत्वेन विकल्पालङ्कारः किं न स्यात्। मैवम्। तुल्यबलत्वे हि विकल्पः। न चात्र तुल्यबलता। तपनापेक्षया दहनवद् रामापेक्षया रावणस्य[683] जघन्यत्वात्।

### अथ रसवदाद्यलङ्काराः

अथ रसवदाद्यलङ्काराणां लक्षणोदाहरणानि दर्शयति-

अङ्गभावं[684] रसो यत्र भावं प्रत्यथवा रसम्[685]।
भजेत तत्र रसवदलङ्कार उदीर्यते।। 246।।
प्रेयोऽलङ्कृतिरङ्गं चेद्भावो भावान्तरं प्रति।
रसाभासोऽथवा भावाभासो यत्र रसस्य वा।। 247।।
भावस्याङ्गं भवेत्तत्र प्राहुरूर्जस्व्यलङ्कृतिम्[686]।
समाहितालङ्कृतिस्स्याद्भावाङ्गे भावसंक्षये[687]।। 248।।

यथा[688] -

गौरी सा त्वरितं[689] ममाद्य दुरितं दूरीकरोतु स्वत-
श्चित्रं स्थाणुरशोकतामुपगतो मूलोज्झितो नीरसः।
यस्याः पादहतः प्रणामनिरतः कोपप्रशान्त्याशया
लाक्षालक्ष्ममिषेण पुष्पकलिकालक्ष्मीं समालम्बते।। 249।।

इह शृङ्गारः कविनिष्ठस्य गौरीमुद्दिश्य प्रवृत्तस्य अङ्गतां भजति भक्तिभावस्य[690]।

घोटीघोर[691]खुरक्षतक्षितिरजस्स्फारान्धकारावृते
संयद्रात्रिमुखे कृपाणलतिकादूतीकृता[692]लम्बना।
शुण्डालद्युतिडम्बराम्बरधरा शूरो[693]पभोगोन्मुखी
शत्रुश्रीरभिसारिका रघुपतेरङ्गं समालिङ्गति।। 250।।

अत्र वीरशृङ्गारयो[694]रङ्गाङ्गिभावः।

त्वत्सेनापटमण्डपाग्रनिहितौ सौवर्णकुम्भाविमौ
किं त्वद्बन्धुरगन्धसिन्धुरविभोः कुम्भाविमौ किन्विति[695]।
कान्तारान्तरगोचरौ रघुपते कान्ताजनानां कुचा-
भोगौ वीक्ष्य वितर्कयन्ति चकिताः प्रत्यर्थिनः पार्थिवाः।। 251।।

अत्र त्रासवितर्कयोर्व्यभिचारिभावयोरङ्गाङ्गिभावः।

राम त्वद्वैरिणः कान्ता कान्तारान्तरचारिणी।
विलोक्य हस्तिनो क्रीडां कण्ठमालम्बते[696] रसात्।। 252।।

अत्र तिर्यग्गतो रसाभासश्शृङ्गाररसाङ्गम्।

दुर्वारा युधि पत्रिणो रघुपते मा संहरन्ते[697] पुरा
मा[698] सन्देहधरोऽस्मि भामिनि ततस्स्वास्थ्यं ममापादय।
इत्थं जल्पति रावणे जनकजा त्वं सत्यमेवोक्तवा-
नस्मीत्यन्तपदावलिं पठ पुनर्दैत्याधमेत्यब्रवीत्।। 253।।

अत्र कामुकस्य रावणस्य गर्वाभासः सीताया अमर्षभावं प्रत्यङ्गम्।

दयितजनवियोगाद्दारुणग्लानिभाजा-
वतिकृशशशि[699]तुल्यौ रामसीतामुखेन्दू।
तदनु पवनसूनुप्रापितान्योन्यभूषौ[700]
प्रशमितपरिखेदौ प्राप्तपूर्णेन्दुशोभौ।। 254।।

अत्र ग्लानिशान्तिः हर्षस्याङ्गम्।

**अथ संसृष्टिसङ्करालङ्कारनिरूपणम्**

अथ निरूपितानामेवैषामलङ्काराणां[701] द्विविधानामपि[702] अन्योन्या-लिङ्गनभङ्ग्या लब्धस्वरूपौ संसृष्टिसङ्करसंज्ञौ अलङ्कारौ निरूपयितुमारभते। नन्विदमनुपपन्नम्[703]। शब्दार्थालङ्काराणामेवैषामन्योन्य[704]मिलितानां संसृष्टि-सङ्करपद[705]वेदनीयत्वात् कथमनयोः पार्थक्येन परिगणनार्हता इति चेत्, तत्राह-

सौवर्णाभरणानि लोकविदितान्येकैकशश्शोभना-
न्यप्यन्योन्यकरम्भितान्यभिनवां पुष्णन्ति शोभां यथा।

**कुर्वन्त्योऽपि चमत्क्रियां पृथगिमाः काव्ये द्विधालङ्क्रियाः**
**संसर्गेण च सङ्करेण च तथा भूयश्चमत्कारिकाः।। 255।।**

तत्र[706] संसृष्टिमाचष्टे-

**तिलतण्डुलसंश्लेषभङ्ग्या या स्यात्परस्परम्।**
**अलङ्कृतीनां घटना सा संसृष्टिर्निगद्यते।। 256।।**

आसामलङ्कृतीनामवान्तर[707]भेदभिन्नानां परस्परनैरपेक्ष्येण एकत्रैव तिलतण्डुलन्यायेन संयोगवृत्त्या संस्थितिः[708] संसृष्टिः। सा[709] शब्दार्थोभयालङ्कारगतत्वेन त्रिविधा। तत्र शब्दालङ्कारसंसृष्टिर्यथा-

युद्धश्रद्धासमिद्धप्रथमविगणनासिद्धमूर्धन्यभूषा-
योधा बाधाविबोधा रघुधरणिभुजा छिन्नदो[710]स्कन्धबन्धाः।
लङ्कालङ्कारभूता[711] दिविजविजयिनो राक्षसा रूक्षसारा
हन्ताहन्तामहान्तस्समरसमरसाः प्रेततां प्रापितास्ते।। 257।।

अहन्तया अहङ्कारेण महान्तः। अत्र वृत्त्यनुप्रासच्छेकानुप्रास[712]यमकानां संसृष्टिः।

अर्थालङ्कारसंसृष्टिर्यथा-

संवर्तावसरप्रसारि[713]दिनकृत्सर्वस्वपाटच्चरो
दैत्यध्वान्तहरः प्रतापतपनो रामस्य कोऽप्युद्भवन्।
भूमिं द्यामपि कौशिकोत्सववतीं चक्रेऽद्भुतं वर्धयं-
स्तारानेतरि नूतन[714]श्रियमधात्पौरस्त्यदेशे तमः।। 258।।

अत्र पूर्वार्धे दिनकृत्सर्वस्वपाटच्चर इत्यत्र सर्वस्वशब्देन तेजस्समृद्धेर्लक्षितत्वात् तस्याश्च संवर्तवर्तिविकर्तनमात्रवृत्तित्वेन रामप्रतापतपना[715]संभवात् तत् सादृश्य[716]माक्षिप्यत इति निदर्शना। तथा दैत्यध्वान्तहर[717] इत्यत्र रूपकमिति[718] तयोस्संसृष्टिः। तदुभयोपस्थापितयोः[719] अतिशयोक्त्यर्थश्लेषयोश्च। तथोत्तरार्धे कौशिकोत्सवशब्दश्लेषप्रतिभोत्थापितौ व्यतिरेकविरोधाभासौ। तथा तारानेतृश्रीशब्दश्लेषाभ्यां तथा तमःपौरस्त्यशब्द[720]श्लेषाभ्यां चेति तेषां सर्वेषां संसृष्टिः। शब्दार्थालङ्कारसंसृष्टि[721]र्यथा-

भोस्ताक्ष्याग्रज! किन्नु किन्नर! रवेः कार्श्यं कुतो दृश्यते?
सम्मोहेन, मुहुर्मुहुर्बत कुतो? बिम्बस्य निर्भेदनात्।
के[722] भिन्दन्ति? हताहिता रघुभुवा क्रुद्धेन युद्धे, पुनः
के मूर्च्छां शमयन्ति? शीकरकिरश्[723]शुण्डालशुण्डालताः।। 259।।

अत्र वृत्त्यनुप्रासयमकाभ्यां सह प्रश्नोत्तरिकातिश[724]योक्त्योश्च[725] संसृष्टिः।

विरञ्चिवनिताकराञ्चितविपञ्चिकासञ्चर-
त्स्वरप्रसरमाधुरीरसरमाधुरीणा गिरः।
जयन्ति मम मन्दरक्षुभितसिन्धुबन्धुभ्रमी-
निरर्गलविनिर्गलद्बहुलभङ्गभङ्गीभृतः।। 260।।

अत्र विपञ्चिकास्वरधर्मस्य माधुर्यस्य[726] तरङ्गधर्मस्य निरर्गलत्व-भङ्ग्याश्च वचनेष्वसम्भवात् तत्सादृश्याक्षेपात् निदर्शनाभ्यां सह[727] वृत्त्यनुप्रासस्य संसृष्टिः। एवमन्यत्रापि द्रष्टव्यम्।

सङ्करं लक्षयति-

क्षीरनीरनयाद्योगस्सङ्करस्समुदीर्यते।
अङ्गाङ्गिभावात्सन्देहाद्वाचकैक्यात्स तु त्रिधा।। 261।।

तत्राङ्गाङ्गिभावेन सङ्करो यथा-

संवर्धयन्तं[728] निजजीवनेन शुचिं सदा बाडवमम्बुराशिम्।
संहृत्य रामस्य शरस्त्रपावान्निषङ्गगर्भं निभृतोऽधिशेते।। 262।।

अत्र जीवनशुचिबाडवशब्दश्लेष[729]मूलातिशयोक्त्या भेदे सत्य-भेदाध्यवसायरूपया सागरः स्वप्राणेन शुद्धब्राह्मणपोषक इति प्रतीयते। तद्विनाशरूपा[730]नुचितकर्माचरणजनिता लज्जा[731] श्रीरामशरस्य निषङ्गकोटर-शयन[732]हेतुतयोत्प्रेक्ष्यते। सा च वाचकाभावा[733]द्गम्येति श्लेषातिशयोक्त्युत्प्रेक्षाणां सङ्करः। यथा वा[734]-

भानुः किं? स नभोगमार्गचतुरः, किं पावकोऽयं? जना-
स्सर्वत्राप्यनलं तमाहुरपि च क्षय्यो जडेनाप्यसौ।
किं चन्द्रः? स[735] निजोदयान्न[736] वसुधासम्मोदमङ्कूरय-
त्येवं राममवेक्ष्य निर्मलगुणैः पश्चाद्विनिश्चिन्वते।। 263।।

अत्र रामे[737] तेजस्वितादिरूपधर्मसाम्यात्[738] सूर्यादिरूपेण सन्दिह्य पश्चाद्विशेषधर्मोल्लेखाद्[739] अन्ते[740] गुणैर्निश्चिन्वत इति निश्चयोररीकारात् निश्चयान्तस्सन्देहः[741]। स च नभोगेत्यादिश्लेषपदोपात्तानां तत्तदर्थानां भेदे सत्यभेदाध्यवसायरूपातिशयोक्त्यनुप्राणित इत्यङ्गाङ्गिभावेन सङ्करः। सूर्यादिव्यतिरेकश्च स्फुट एव[742]। किञ्च निरतिशयतेजस्वितादिरूपेण[743] सूर्यादिरूपतायामेकदेशमङ्गीकृत्यैकदेशान्तरनिषेधस्य[744] क्रियमाणस्य श्रीरामचन्द्रविषये निर्वचनागोचरतारूपविशेषाक्षेपकत्वाद् आक्षेपालङ्कार-प्रभेदः। अपि च प्रसिद्धेषु रविशशिकृशानुष्वेकस्यापि[745] रघुपतितुल्यता नाभूत्[746] किमुतान्येषु तेजस्विष्विति कैमुतिकन्यायेन[747] दण्डापूपिकास्फूर्ते-रर्थापत्त्यलङ्कारस्य गम्यमानत्वात् संसृष्टिरपीत्यलं प्रपञ्चेन। अत्र पूर्वत्र च विजातीयार्थालङ्कारसङ्कर[748] उक्तः। अधुना[749] सजातीयसङ्करमाह-

दोर्दण्डकिरणध्वस्तनक्तञ्चरतमस्ततिः।
गजोदयाचलारूढो रामो रविरिवाबभौ।। 264।।

अत्र रामो रविरिवेत्युपमया दोर्दण्डकिरणयोर्निशाचरतमसोर्गजोदया-चलयोश्चोपमाः प्रसाध्यन्त इति सजातीयसङ्करः। सन्देहसङ्करो यथा-

सेनाधिपा रघुपतेस्सितरक्तनीला-
स्तस्थुः प्लवङ्गपतयः परिवार्य लङ्काम्।
व्यालोलवारिनिधिवीचितटोपनीत-
फेनप्रवालदलशैवलराशिकल्पाः।। 265।।

अत्र सिन्धुसलिलगतानां फेनविद्रुमशैवालानां तरङ्गसंहत्याहत्या[750] तटे राशीभावस्य सन्देहात् तटगतकपीनां तटगतफेनाद्यभेदाध्यवसायस्य पाक्षिक-समुन्मेषतया उपमोत्प्रेक्षयोस्सन्देहसङ्करः। यथा वा-

पवलप्पदावदहणो तुह जाणइ विरअवेअणासहणो।
आअच्चइ रहुवीरो तुरिअं सअं कोटिसारपरिवारो[751] ।। 266।।

छा० [752]प्रबलप्रतापदहनस्तव जानकि विरहवेदनासहनः।
आगच्छति रघुवीरस्त्वरितं सह कोटिसारपरिवारः।। 267।।

इदं सीताश्वासनपरं त्रिजटावचनम्। अत्र प्रताप एव दहन इति वा[753]

प्रतापो दहन इवेति वा समाससन्देहो जायते। 'मयूरव्यंसकादयश्च' (अष्टाध्यायी 2-1-71) 'उपमितं व्याघ्रादिभिस्सामान्याप्रयोगे' (अष्टाध्यायी 2-1-56) इति च समासद्वयस्यापि अनुशासनाद्भवतीति[754] [755] रूपकोपमयोः सन्देहसङ्करः। साधकबाधकमानाभावसन्देहस्य[756] स्वरसवाहित्वात् तदन्यतरसद्भावे तु भवति[757] सन्देहनिवृत्तिः।

म होदु णअणणलिणं सहि तुह[758] बहण संपदं मलिणं।
आयादि रामभद्दो कइणीअ णएंद संयअसमुद्दो।। 268।।

छा० मा भवतु नयननलिनं सखि तव बाष्पेण साम्प्रतं मलिनम्।
आयाति रामभद्रः कपिनीतनरेन्द्रसंयतसमुद्रः।। 269।।

अत्र नयनं नलिनमिवेत्युपमालङ्कारे बाष्पेण मलिनमिति विशेषणमेव साधकं मानम्। नयन एव बाष्पाम्बुसम्भवात्।

अपविक्रमसङ्कोचो धारणे धरणीभृताम्।
निर्धूतारिबलाटोपो रेजे रामपुरन्दरः।। 270।।

अत्र[759] तु रामपुरन्दर इत्यत्र रूपकालङ्कार एव। नोपमा। तां प्रति अपविक्रमेत्यादिसाधारणधर्मप्रयोगस्यैव बाधकत्वात्। 'उपमितं व्याघ्रादिभिः' (अष्टाध्यायी 2-1-56) इत्यादिना सामान्याप्रयोग एवोपमितसमासविधानात्। एकवाचकानुप्रवेशेन सङ्करो यथा-

अपविक्रमसङ्कोचो धारणे धरणीभृताम्।
समग्रैश्वर्यसम्पन्नो राम इन्द्र[760] इवाबभौ।। 271।।

अत्र पूर्वार्धे शब्दश्लेषः। तृतीयचरणेऽर्थश्लेषश्च। ताभ्यां सह इन्द्र इवेत्युपमाया एकस्मिन् इवेतिवाचकशब्देऽनुप्रवेशेन सङ्करः। यथा[761] वा-

अशेषाभीष्टदानेन परितुष्टत्रिविष्टपः।
रामभद्रोऽयमाभाति रामभद्र इव स्वयम्।। 272।।

अत्र लाटानुप्रासेन सहानन्वयालङ्कारस्यैकवाचकानुप्रवेशेन सङ्करः।

।। इति[762] श्रीमत्त्रिभुवनपवित्रहरितगोत्रवतंस[763]वाराणसीवंश[764]पद्माकरप्रभातभानुना पदवाक्यप्रमाणपारावारपारीणश्रीमहोपाध्यायपर्वतनाथसूरि[765]पण्डितमण्डलेश्वरसूनुना श्रीयल्लमाम्बागर्भरत्नाकरपारिजातेन

निर्मलाचारपूतेन चतुर्दशविद्याविभूषणवता[766] श्रीधर्मसंख्यावता[767] विरचिते श्रीमद्रघुकुलतिलकयशोघनसार[768] सुरभिते[769] साहित्य-रत्नाकरनामन्यलङ्कारशास्त्रेऽर्थालङ्कारनिरूपणं नाम सप्तमस्तरङ्गः।।

[770]आस्थामन्दिरमिन्दिराप्रणयिनो देवस्य रामात्मन-
स्त्वङ्गत्तुङ्गतरङ्गरिङ्गणभ[771]रैरङ्गीकृताडम्बरः।
तादृङ्निर्मलधर्मसूरिकवितासोल्लासकल्लोलिनी-
पूर्णः कर्णमनोहरो विजयते साहित्यरत्नाकरः।। 273।।

धर्मान्तर्वाणिवर्यस्त्रिभुवनविदिते वारणास्यन्वये यः
सञ्जातः पर्वतेशाच्छुभगुणगणभूर्यल्लमाम्बासुगर्भे[772]।
काव्यालङ्कारकृष्णास्तुतिरविशतकोन्नाटकादिप्रणेतु-[773]
स्तस्यालङ्कारशास्त्रे रघुपतिविभुके[774] सप्तमोऽयं तरङ्गः।। 274।।

---

पाठभेदाः

1. म० 2 अलङ्काराः नास्ति
2. म० 1, अ० 1 तत् नास्ति
3. अ० 1 पमाया मूलस्य
4. अ० 1 वेदिका
5. म० 1, अ० 1 प्रसिद्धेन एक०
6. म० 1 वाक्यप्रसिद्धम्०
7. म० 1, अ० 1 लङ्कारव्यावृत्तिः
8. अ० 1 गम्यौपम्यस्य रूप०
9. म० 1, अ० 1 रूपकादेर्व्यवच्छेदः
10. म० 1 हिं०
11. म० 1 नारंभंत०
12. म० 2, म० 5 कविसमयसम्मते०
13. म० 2, अ० 1, अ० 2 तस्या०
14. म० 2 तच्चैकेन श्लि०
15. म० 5 पादाने न०
16. म० 2 श्लेषशङ्का०
17. अ० 1 टङ्कः

18. म० 1, अ० 1 शयोक्तिबलादेकत्व०
19. म० 1, म० 2, अ० 1 पान्थतया उभया०
20. म० 2 मोपमावाचकानां०
21. अ० 1 धर्म०
22. म० 2 सङ्काशनीकाशादि०
23. म० 2, म० 5 तु अधिकम्
24. अ० 1 शक्तेस्सादृश्यत्वात्
25. म० 5, अ० 1 वतिस्तुल्यत्वं प्रतिपाद्य
26. म० 2 साक्षात् अधिकम्
27. म० 1, अ० 1 स्त्रिविधा
28. म० 1 द्विविधा
29. म० 1 गता०
30. म० 1, अ० 1 च्छ्रौतत्वम्
31. अ० 1 श्रौतार्थ्युपमा
32. म० 5 उदाह्रियते
33. म० 1, म० 2, म० 5 सप्तधा मता
34. अ० 1 च० नास्ति
35. म० 2 भवन्ती० नास्ति, म० 5 भवन्ति
36. म० 1, म० 5 सप्तधा
37. म० 5 भवन्ति
38. म० 5, अ० 2 र्थी तद्विधा
39. म० 2 र्थी द्विविधा मता, म० 1 द्विविधा भवेत्
40. अ० 1 सार्थी
41. म० 2 कल्पप्रत्ययादे०
42. म० 1, म० 2, अ० 1 धर्म० नास्ति
43. म० 1, म० 2 च० अधिकम्
44. म० 1, म० 5 अ० 2 द्वयं० नास्ति
45. म० 1 जयन्ति न वा, अ० 1 जयन्ति च वा
46. म० 5 अत्र ग्रन्थपातः (वीराः --चतुर्दशसहस्र)
47. म० 1 केचित्० नास्ति
48. म० 1, म० 2, सैन्य० नास्ति
49. म० 1, म० 2, तु अधिकम्
50. अ० 1 त्वमेव त्वादृशः न०

51. अ० 1 वीरेभ्योऽति०
52. म० 2 लक्ष०
53. म० 2, म० 5 पुरुषा वीरा इति
54. अ० 2 वीरपदेन
55. म० 5 सा लुप्ता
56. म० 2, म० 5 कर्तृ० नास्ति
57. म० 5, अ० 1 कर्तृणमुलि कर्मणमुलि
58. म० 1 लुप्तवाचका०
59. म० 2, म० 5 रणे०
60. म० 1 म० 5 इवोदारेति० अ० 1 पर्जन्य इह भाषेति०
61. अ० 1 तीत्यर्थविवक्षायां०
62. म० 2 लोपव्रतीयम्०।
63. अ० 1 कर्तुः अधिकम्
64. अ० 1 काम०
65. अ० 1 दियं लुप्तधर्मवाचकवती
66. म० 1 लोप० नास्ति
67. म० 2, म० 5 पादे०
68. म० 2 सा त्वेक०
69. म० 1 यथा० नास्ति
70. म० 2, म० 5 कुमारा भीते
71. म० 1 म० 2, म० 5 बाणाः
72. म० 2, कण्ठीरवीयंत्यपि
73. म० 1, म० 2 कृपाणाः
74. म० 1, म० 2, म० 5, अ० 1 वाच्योत्तर०
75. अ० 1 आत्मनः स्वरूपस्य लोपात्० अधिकम्
76. अ० 1 अत्रेदमधिकं वर्तते– ननु कृपाणस्योपमेयस्योपादानात् कथमुपमेयलोप इति चेत्– न। समानविभक्तिकस्यैव उपमानोपमेयत्वादात्मानमिवेत्यस्यैव उपमेयत्वम्, न कृपाणस्य। भिन्नविभक्तिकत्वात् – इति।
77. म० 5 इयं च मालोपमा
78. म० 5 वा० नास्ति
79. म० 1, म० 2 वा० नास्ति म० 5 अपि
80. म० 1 शरासन० नास्ति
81. म० 2 रघुनन्दनेन्दु०

82. अ० 1 भावेनोपमा
83. अ० 1 विरचिता०
84. म० 2 ताराजालै०
85. अ० 1 वह्निर्वीक्षणीयाः, म० 1 वह्निरभीक्षणीयाः।
86. म० 1, म० 2 द्विरम्यते
87. म० 1 अ० 1 त्यचिन्त्यरूपा
88. अ० 1 अन्यस्याध्यव०
89. अ० 1 उत्प्रेक्षा
90. म० 2 भवति। एवं तामपि
91. म० 1 उत्प्रेक्षागोचरत्वेन०
92. म० 1 उत्प्रेक्षाहेतुत्वेन
93. म० 1 द्वैधानुप्रवेशः
94. म० 5 द्वैविध्येऽप्यष्टधा
95. म० 1 निमित्तस्य चोपादानात्
96. म० 1, म० 5 वाचकशब्दास्तु
97. म० 1, म० 2 म० 5 ध्रुवं नूनं प्राय इत्येव०
98. म० 1, म० 2 म० 5 मादयः
99. म० 1, म० 2, म० 5 उत्प्रेक्षा व्यञ्जकाश्शब्दा०
100. म० 1, म० 2 इति चेत् अधिकम्।
101. म० 2 सत्यम्
102. म० 1, म० 2 प्रतिपादन०
103. म० 1, अ० 1 गुणादिभिस्सम्ब०
104. म० 1 निमित्ता जाति०
105. म० 1, अ० 1 वाचि०
106. म० 1 कृतिपदो०
107. म० 1, म० 2, म० 5 गुणनिमित्त०
108. म० 1, अ० 1 निमित्तकजाति०
109. म० 1, म० 5, त्प्रेक्षायाम् उदाहरणं० म० 2, त्प्रेक्षाया उदाहरण०
110. म० 1 पुङ्गवे
111. म० 1 हेतुरुत्प्रेक्षा
112. म० 1 देवंविधेष्वनु०
113. म० 1, म० 2, अ० 1 गलितो हि
114. म० 5 विगतोऽनुरागः

115. अ० 1 भयस्य०
116. म० 1 वाक्यस्यास्य स्थाने एवं विद्यते-अत्र भयगुणस्याहेतोरेव नीवीस्रंसनहेतुत्वोत्प्रेक्षणाद् इयं गुणहेतूत्प्रेक्षा इति
117. अ० 1 सङ्गत
118. म० 5 प्रविष्टा
119. म० 1, म० 2, अ० 1 वाक्यमिदं नास्ति
120. म० 1 क्रियाहेतुत्वम् अ० 1 क्रियाहेतुत्वोत्प्रेक्षा
121. म० 5 यथा वा नास्ति
122. म० 5 सहजा खु जदो
123. म० 2 हियय
124. म० 1 त ऊ
125. म० 1, म० 2, म० 5 छायाश्लोको नास्ति
126. म० 1, म० 5, अ० 1 सुधासह०
127. म० 1 जीवनहेतुत्वम्
128. म० 1 निवेश्य
129. म० 1 केनाप्यसौ
130. म० 1 अत्र नास्ति
131. अ० 1 वाक्यमिदं नास्ति
132. म० 1 द्व्यत्यये०
133. अ० 1 जीवनामभिदधुः
134. म० 1 प्रबन्ध०
135. म० 1, म० 2, म० 5, अ० 1 भेदे अभेदोक्तेः अभेदे भेदोक्तेश्च उदाहरणे स्थानेन विपर्यस्ते
136. अ० 1 महोत्साला०
137. म० 1 म० 2, म० 5 इत्समस्तम् अ० 1 इत्यसमञ्जस
138. अ० 1 इदं च रावण०
139. म० 5 प्रकृतिता
140. अ० 1 भवति विटपैर्नापि मधुपैः
141. म० 1 कम्पत्वं
142. म० 2 भूषिताङ्गै०
143. म० 1 सूर्यमूर्च्छा०
144. अ० 1 तत् नास्ति, म० 5 ग्रन्थपातः (तत्सम्बन्ध ----श्लोकः)
145. म० 1, म० 2, अ० 1 उक्तो नास्ति

146. म० 1 ततः गजानां
147. म० 1, अ० 1 बोधकत्वधर्मासम्बन्धे
148. म० 1 उक्तिः नास्ति
149. म० 5 भवने
150. म० 2, म० 5 सिन्धुसम्बन्धे
151. म० 1 सम्बन्धेऽसम्बन्ध०, म० 2 सम्बन्धेऽप्यसम्बन्ध०, म० 5 अ० 1 सम्बन्धेऽपि तदसम्बन्ध
152. म० 1 उक्तः नास्ति
153. म० 2 अत्रेदमधिकं विद्यते- अरिशातोदरी शत्रुकान्ता। गोचरी- चरिकरीति अगोचरा अपि दरीः प्रवेष्टुं दृष्टिविषयीकरोति इत्यर्थः। विदधते अथ ते इति पदच्छेद इति।
154. म० 5 विशेषणे व्यावर्त्य, अ० 1 विशेषणेन व्यावर्त्य
155. म० 1 अनन्वयालङ्कारः अन्वर्थसंज्ञः।
156. म० 2 ग्रन्थपातः (विषयिणोर---प्रकृतस्य)
157. म० 1 रूपकादीनां साङ्कर्य०
158. म० 1, म० 2 प्रकृत, म० 5 प्रकृते
159. म० 2 विषयानप०
160. म० 1 अ० 1 हुत्यैव०
161. म० 5 एव अधिकम्
162. म० 2 विषयानिह्नवेनान्यस्यारोपे रूपकं मतम् इति अधिकम्।
163. अ० 1 रूपकप्रवृत्तिः
164. म० 5 अत्राभेदस्य
165. म० 5 वस्तुतोऽत्रास्त्येव
166. म० 2, म० 5 एवोपमायाः गम्यता०
167. म० 2 विषयि अधिकम्
168. अ० 1 आरोप इत्यनेनो०
169. म० 5 उपमायाः
170. म० 1 प्राणकत्वात्, म० 2 मूलत्वात्
171. म० 2 परिणामत्वेन
172. अ० 1 मूलेभ्योऽलङ्का०
173. म० 5 विवर्ति०
174. अ० 1 च नास्ति
175. म० 1, म० 2 रूपकं

176. म० 1, म० 5 इति नास्ति
177. म० 1 अस्यापि, म० 5 परम्परितस्य नास्ति
178. अ० 1 त्व नास्ति
179. अ० 1 यदारोप्यावयवा०
180. म० 1 मवयवाभावेना०
181. म० 5 विषयकं
182. म० 5 विवर्ति
183. म० 1 छिन्नेन्द्रादि, म० 5 भिन्नेन्द्रारि
184. म० 1 शिरोधराद्रि० म० 5 रसादि
185. म० 2 रघुराम
186. अ० 1 पक्षेण
187. अ० 1 महान्दशमुख० म० 1 दशमुख० इत्यपि पाठन्तरं निर्दिष्टम्
188. म० 1 वयवनिरूप०
189. म० 1 च नास्ति
190. म० 1 मालया
191. म० 1 विवृति०
192. म० 1 वयवमाला०
193. मा ० 5 रूपं परं
194. म० 2 केवलं परम्परितं नास्ति
195. म० 1 दुष्टा
196. म० 2, म० 5 निरूपणमपि
197. म० 2 द्भावपरं
198. म० 5 द्भावपरंपरितमित्युभयत्रापि
199. म० 1 श्लेषोंल्लासाच्छ्लिष्ट०
200. म० 2, इदमेव अधिकम्
201. म० 2 केवलं च
202. म० 1, अ० 1 इदमेव
203. म० 5 माला यथा
204. म० 1 निरूपणं
205. म० 5 रूपकत्वं च
206. अ० 1 शब्द० नास्ति
207. अ० 1 परम्परितम्
208. म० 1, म० 2, म० 5, अ० 1 शब्द० नास्ति

209. अ० 1 च अधिकम्
210. म० 1 संभवति वैधर्म्येणापि, म० 5, अ० 1 साधर्म्येण संभवति वैधर्म्येणापि।
211. म० 2 भय०
212. म० 1 अन्यथा
213. म० 1, म० 2 ह्लक्षणे
214. म० 5 रोप्यमाणाकारेण
215. म० 5 रोप्यमाणस्य
216. म० 5 रोप्यविषय्यात्मना
217. म० 5 समासोक्तेः
218. अ० 1 वैयधिकरण्यभेदाभ्यां
219. अ० 1 ग्रन्थपातः (नष्टायाः ---भवतो)
220. म० 1 भगवता
221. म० 1 म० 2 म० 5 अ० 2 छलादिशब्दप्रयोगाश्चेति
222. अ० 1 मन्त्र
223. अ० 1 पटक०
224. म० 1 समं जिग०
225. म० 1 सर्वंसहास्सञ्चारा०
226. अ० 1 लङ्कृतिस्तदा
227. म० 1 विवेचकसन्देहधर्मा०
228. म० 1, म० 5 त्रिधा
229. अ० 1 अत्र नास्ति
230. म० 1 मात्रपर्यव०
231. म० 5 न
232. म० 5 न
233. अ० 1 अथ
234. म० 1 निभोदये०, म० 2, म० 5 नवोदये०
235. म० 2 अत्र धर्मो०
236. म० 1 निश्चयाङ्गीकारादयं, म० 2 निश्चयाकारादयं, अ० 1 निश्चयादयं
237. म० 2 श्लिष्ट०
238. म० 2 भेदे सत्यप्यभेदरूपाध्यव०
239. अ० 1 अभेदरूपा०
240. म० 1 सूर्यातिरेक०
241. म० 5 त्येकदेशनिषे०

242. म० 2, म० 5, अ० 1 विषय
243. म० 1, म० 5 निर्वचनाति०
244. म० 5 शायिरूप०
245. म० 5 यथा नास्ति
246. अ० 1 प्रतापानलेन
247. अ० 1 भ्रान्तिमत्वा०
248. म० 5 वैलक्षण्यात्
249. म० 1 तत्रोल्लेखा०
250. अ० 1 सदृशार्थे
251. अ० 1 भूतेऽन्य०
252. अ० 1 दृष्टजनित०
253. म० 1, म० 2 नेकैर्ग्रही०
254. अ० 1 भृत्याः
255. म० 2 नैकधोल्लेख्यत०
256. म० 1 ग्रहीतृकत्वे
257. म० 1 निर्बन्धाभावात्, म० 2 कत्वसम्बन्धाभावात्, म० 5 निबन्धाभावात्
258. म० 2, म० 5 प्रकृते नास्ति
259. म० 1, म० 2 च नास्ति
260. म० 2, म० 5, अ० 1 द्वयं
261. म० 2 द्वयोपमानो०
262. म० 1, अ० 1 द्वेधा
263. अ० 1 धर्मस्य प्रति०
264. अ० 1 भीषणकरः
265. म० 2 वि नास्ति
266. म० 1 रामचन्द्रस्यो०
267. म० 2 तूत्तरमेव विशे०
268. म० 5 तूत्तरमेवमेव विशेषणं
269. म० 1 ततश्चात्रा०
270. अ० 1 वरुणालयः
271. म० 5, अ० 1 निर्देशमात्रसाम्ये
272. म० 1, अ० 1 माशङ्कीति तां
273. म० 2 पट्ठः
274. म० 5 प्रभुः

275. म० 1 पटुशब्दाभ्यां, अ० 1 प्रभुपटुपदाभ्यां नास्ति
276. म० 2 वैलक्षण्य०
277. म० 1 लङ्कारादिभिः स्फुट०
278. अ० 1 भवति अधिकम्
279. म० 1, म० 5, अ० 1 वैधर्म्येण नास्ति
280. म० 1 पादी० म० 2 पाली, म० 5 पाटी
281. अ० 1 ग्रन्थपातः (नोपमेयोपमा---गतत्वेन द्वादशविधत्वे)
282. म० 2 पमयोर्व्यव०
283. म० 2, म० 5 एव नास्ति
284. म० 1 वापदद्वयो०
285. म० 1 द्विविधः
286. म० 1 यथा नास्ति
287. म० 2, म० 5 वारणे
288. म० 1 दारिद्र्यदारण०, म० 2, म० 5 दारिद्र्यवारण०
289. म० 1 ध्वंसनयोः
290. म० 5 पम्यादीनाम्
291. म० 1 ह्लक्षणादीन्याह
292. म० 1 मुतान्येषाम्
293. म० 1 गम्यते यत्र
294. म० 1 यत्र नास्ति
295. म० 1 तानां वाप्रकृ०
296. म० 1 यत्र अधिकम्
297. म० 1 प्रकृतानाम्
298. अ० 1 स्वीकारात्प्रकृता०
299. म० 1, म० 2, म० 5 दर्शितम्
300. म० 1 च अधिकम्
301. म० 5 ग्रन्थपातः (द्वादशविधं--कल्पयन्ति)
302. म० 1 सति तस्य, म० 2 ग्रन्थयातः (द्वाद......स्य)
303. म० 5 यथा नास्ति
304. अ० 1 धर्मैः नास्ति
305. म० 2 इति नास्ति
306. अ० 1 चाद्यापि
307. म० 2, म० 5 प्रस्तुतानां

308. अ० 1 पाण्डुरगुणा०
309. म० 2 प्रस्तुतानाम्
310. अ० 1 तत्र दीयत इति तद् दीपकम्
311. म० 1 ततः
312. अ० 1 क्रियास्वरूपेण
313. अ० 1 षड्विधम्
314. म० 5 मालिङ्गते
315. म० 5 अपि नास्ति
316. अ० 1 कति
317. म० 1 षाड्विध्यात्
318. म० 2, म० 5 अपि अधिकम्
319. म० 2, म० 5, अपि नास्ति
320. म० 2, म० 5 शक्यम्
321. म० 5 यथा नास्ति
322. म० 1, म० 2 म० 5 अ० 1 प्रकृतराम०
323. म० 1, म० 2 म० 5 अ० 1 वचनरचनानाम्
324. म० 1, अ० 1 तत्र
325. म० 1 भरणं, अ० 1 चरणम्
326. म० 2 त्रयाणामपि, म० 5 त्रयाणामिति
327. म० 5 अ० 1 समानधर्म०
328. म० 5 चैतत्पूर्वैः
329. अ० 1 समुदायस्य कस्य वा
330. अ० 1 समान०
331. अ० 1 यदन्य०
332. म० 1 क्षम० नास्ति
333. म० 2, अ० 1 स्यान्यत्रासम्भ०
334. अ० 1 चेति नास्ति
335. म० 1 पटीरशते
336. म० 1 प्रतापमहसः
337. म० 5 तटीपुट०
338. म० 2 ज्वल०
339. अ० 1 ल्यादिष्वसम्भवेन
340. म० 1 निर्गल

341. म० 5 ज्वालाचयं
342. अ० 1 कौद्धवि०
343. म० 1 रामभुजदण्डमण्डलाखड्गस्य
344. म० 5 च नास्ति
345. म० 2, अ० 1 चौपम्ये०
346. म० 5 च अधिकम्
347. अ० 1 राघवरणे
348. अ० 1 भेदातिशयोक्ति
349. म० 1, म० 5 विनोक्तिस्स्याद्विना०
350. अ० 1 यदा
351. म० 1 यथा
352. अ० 1 तत्राप्यप्रस्तुत
353. अ० 1 त्रिधा
354. म० 1, म० 5 विशेषस्याक्षेपः
355. म० 1 निर्भरी
356. म० 5 शाल्मल०
357. म० 1 मुपैति
358. म० 5 भृङ्गराज०
359. म० 1 धमानपहाय
360. म० 1 वा नास्ति, म० 5 यथा वा नास्ति
361. अ० 1 दूरनिरस्त०
362. म० 1, म० 2 विघात
363. म० 2, म० 5 विघातिनो
364. म० 5 सत्वैः
365. म० 1 विजयिनः
366. म० 2, अ० 1 अत्र ग्रन्थपातः (इति -- सामान्य०)
367. म० 5, अ० 1 श्रीरामचन्द्रे
368. म० 2 सततमभीष्टफलदायिनि
369. म० 1 लाभे
370. म० 2, अ० 1 श्रीरामचन्द्रौदार्येण
371. अ० 1 विशेष्यस्या०
372. म० 1 मिन्द्रेणैवा०
373. म० 2, म० 5 संश्लेषं यथेन्द्रेणामरावती

अयं वाक्ये यथा–

कस्त्वं मानवरत्न धीवरपते राजास्मि राज्यं कुतः
सन्त्यज्य त्वमिहागतो रघुपतेर्निस्त्रिंशनिष्कासितः।
कष्टं तिष्ठ तमालकोटरगतः प्रच्छन्नमस्मिन्वने
रामाः किं किममी तमालतरवस्तन्नोचितात्र स्थितिः।। 40।।

अत्र सन्देहालङ्कारेण रामस्य किमपि वीरायितं वस्तु[212] शत्रोर्भयरूपं वा वस्तु वाक्येन व्यज्यते। अयमलङ्कारेणालङ्कारध्वनिः पदे यथा–

भो धातः प्रणमामि मातुरधुना भूमेः कुतो नूतनो–
ल्लासानां सदनं विभाति वदनं पूर्वं त्वभून्नेदृशम्।
लोलक्ष्वेलशिखान्यहीश्वरमुखान्युत्सृज्य पूर्वाण्यसौ
दोर्दण्डे रघुमण्डनस्य[213] लभते[214] सौख्यस्थितिं साम्प्रतम्।। 41।।

इह भूमेर्नित्यं भुजगराज[215]भोगभागयोगेऽपि तदयोगप्रतिपादनाद् अतिशयोक्त्यलङ्कारेण रामभुजदण्डस्य कुण्डलिपतेर्व्यतिरेको लोलक्ष्वेलशिखानीति पदेन व्यज्यते। अयं वाक्ये यथा–

मालिन्यं यमुने त्यजान्तक कथं जह्यां प्रतापैः पिता
धूतो दाशरथेर्जलेषु जलधेर्हा[216] लज्जितो मज्जति।
शुष्कोऽब्धिर्बलरेणुनास्य, यवनासृग्भिः पुनः पूरितः
पीतः प्रेतशतैरपूरि पुनरप्येषां हि योषाश्रुभिः।। 42।।

अत्र यमुनामालिन्यस्य रघुपतिप्रतापपरिभूतपितृमरणोद्योगानुसन्धानहेतूत्प्रेक्षया तथा तिरस्कारलज्जयोरसम्बन्धेऽपि तत्सम्बन्धप्रतिपादनादतिशयोक्तिभ्यां रघुपतिप्रतापस्य तपनप्रतापाद्[217] व्यतिरेकालङ्कारो वाक्येन पूर्वार्धे द्योत्यते[218]। उत्तरार्धवाक्ये चातिशयोक्तिभिर्विशेषाद्यलङ्कारध्वनयोऽपि द्रष्टव्याः। एवं प्रबन्धगत[219]त्वेन चत्वारोऽपि भेदा[220] द्रष्टव्याः। उभयशक्तिमूलानुरणनरूपव्यङ्ग्यध्वनिस्तु वाक्य एव सम्भाव्यत इत्येकविध एव[221]। स यथा–

रराज जिष्णुश्शतकोटिदानस्थिरीकृतोत्तुङ्गसपक्षगोत्रः।
असम्मितश्रीरमणारिवैरी रघूद्वहोऽनस्तमितप्रतापः[222] ।। 43।।

अत्र रामभद्रसुरेन्द्रयोरुपमालङ्कारो ध्वन्यते। अत्र पूर्वार्धे शब्द-शक्तिमूलता, उत्तरार्धेऽर्थशक्तिमूलतेति विवेकः।

एवं ध्वनिभेदेषु दिङ्मात्रमुदाहृतम्। कात्स्न्र्येन तूदाहर्तुं न शक्यते। ध्वनीनां परस्सहस्रत्वात्।

तथा हि[223] – लक्षणामूलस्याविवक्षितवाच्यस्य ध्वनेर्भेदाश्चत्वारः (4)। अभिधामूलयोर्विवक्षितान्यपरवाच्ययोः संलक्ष्यक्रमासंलक्ष्यक्रमव्यङ्ग्य-योर्मध्ये संलक्ष्यक्रमव्यङ्ग्येषु शब्दार्थतदुभयशक्तिमूलेषु त्रिविधेषु मध्ये शब्दशक्तिमूलव्यङ्ग्यस्य भेदाश्चत्वारः (4)। अर्थशक्तिमूलव्यङ्ग्यस्य भेदाष्षट्त्रिंशत् (36)। उभयशक्तिमूलव्यङ्ग्यस्य भेद एकः (1)। एवं मिलित्वा संलक्ष्यक्रमव्यङ्ग्यस्य ध्वनेर्भेदा एकचत्वारिंशत् (41)। असंलक्ष्यक्रमव्यंग्यस्य ध्वनेः प्रबन्ध-वाक्य-पद-पदैकदेश-रचना-वर्णगतत्वेन भेदाष्षट् (6)। एवं विवक्षितान्यपरवाच्यध्वनेर्भेदाः[224] सप्तचत्वारिंशत् (47)। अविवक्षितवाच्यप्रभेदैः प्रथममुक्तैश्चतुर्भिस्सह ध्वनेः प्रथमं शुद्धभेदा एकपञ्चाशत् (51)। एषां प्रत्येकमेकैकस्यैकैकेन सम्बन्धे प्रथमस्य भेदा[225] एकपञ्चाशत् (51)। द्वितीयस्य पञ्चाशत् (50)। तृतीयस्यैकोनपञ्चाशत् (49)। एवमुत्तरोत्तरमेकैकह्रासे षड्विंशत्युत्तरशत-त्रयाधिकसहस्रसंख्याका मिश्रभेदाः (1326)। पुनरप्येषामङ्गाङ्गिभाव-संशय एकव्यञ्जकानुप्रवेशरूपतया त्रिविधेन सङ्करेणैकविधया संसृष्ट्या च सङ्कलने चतुरधिकशतत्रयोत्तरपञ्चसहस्राणि भेदा भवन्ति (5304)।

व्यङ्ग्यस्य प्राधान्य एव ध्वनिर्व्यपदेशः[226]। तद्युक्तं काव्यमपि ध्वनिरित्युच्यते। अयञ्चोदाहृतः।

### मध्यमकाव्यनिरूपणम्

तदेवं व्यङ्ग्यप्रधानमुत्तमकाव्यं[227] निरूप्य[228] गुणीभूतव्यङ्ग्यं मध्यमकाव्यं प्रागुक्तलक्षणानुस्मरणपूर्वकं विभज्य निरूपयति-

मध्यमं तु गुणीभूतव्यङ्ग्यं तच्चाष्टधा मतम्।। 44।।

तदुक्तं काव्यप्रकाशे (5-45)-

अगूढमपरस्याङ्गं वाच्यसिध्यङ्गमस्फुटम्।
सन्दिग्धतुल्यप्राधान्ये काक्वाक्षिप्तमसुन्दरम्।। 45।।
व्यङ्ग्यमेवं गुणीभूतव्यङ्ग्यस्याष्टौ भिदास्स्मृताः।। 46।।

इति। अत्र[229]गूढं नाम[230] स्फुटतरप्रतीतिविषयम्[231]। तदुक्तम्-

तरुणीकुचमण्डलमिव गूढं यस्माच्चमत्कुरुते।
वाच्यायमानमस्माद्व्यङ्ग्यमगूढं[232] गुणीभूतम्।। 47।।

अयं भावः- अत्यन्तस्फुटतरधीविषयत्वे व्यङ्ग्यस्य वाच्यायमानतयाऽगूढत्वम्। अतिगूढत्वे तु मृग्यमाणदशापन्नत्वेनास्फुटत्वं दोषः। तेन स्फुटास्फुटकोटिद्वय[233]मध्यबुद्ध्यध्वन्येन[234] ग्राह्येण भवितव्यम्। अगूढं यथा-

त्रुट्यच्चण्डीशकोदण्डं रामदोर्दण्डचण्डताम्।
व्याचष्ट विष्टपस्पष्टघोषणैश्शत्रुभीषणैः।। 48।।

अत्राचेतने कोदण्डे चेतनधर्मस्य व्याख्यानस्या[235]नुपपन्नतया तत्कार्य-[236]सूचनमात्रं लक्षयद् व्याचष्टेति पदं स्फुटत्वे पर्यवस्यति। तेन परमोत्कर्षो व्यज्यते।

एतत्सर्वं[237] कविभिरुच्यमानत्वेन[238] वाच्यायमानत्वेनागूढम्[239]। अपरस्याङ्गं यथा-

घोटीघोरखुरक्षतक्षितिरजस्स्फारान्धकारावृते
संयद्रात्रिमुखे कृपाणलतिकादूतीकृतालम्बना।
शुण्डालद्युतिडम्बराम्बरधरा शूरैकभोगोन्मुखी
शत्रुश्रीरभिसारिका रघुपतेरङ्गं समालिङ्गति।। 49।।

इह शृङ्गारं प्रति वीररसस्याङ्गत्वम्। वाच्यसिद्ध्यङ्गं यथा-

तव राघव दुर्वारशरसम्पत्तिनिर्भरा[240]।
प्रतीपजगतीपालकूलं कषति वाहिनी।। 50।।

अत्र रामसैन्यस्य नदीरूपत्वं व्यङ्ग्यं तद्रिपुनृपाणां[241] कूलत्वरूपणस्य वाच्यस्य सिद्धावङ्गमिति गुणीभूतम्[242]। अस्फुटव्यङ्ग्यं यथा-

श्रीरामचन्द्र भवतः प्रतापः कोऽप्यनर्गलः।
द्विषां विधत्ते[243] चित्तेषु संक्षिप्य त्रिजगत्तमः।। 51।।

अत्र रघुवीरप्रतापस्य सूर्याद्व्यतिरेक[244]प्रतीतेरस्ति व्यतिरेकध्वनिः[245]। स तु न द्राक्प्रतीयत इत्य[246]स्फुटत्वम्। सन्दिग्धप्राधान्यं यथा–

चमूं समीक्ष्य रामस्य प्रतीपजगतीपतिः।
ददर्श घनगम्भीरकन्दरं मन्दरं गिरिम्।। 52।।

अत्र गम्भीरकन्दरे मन्दरे[247] विलीय स्वात्मानं संरक्षितुमरिक्षितिपतिराकांक्षतीतीदं[248] व्यङ्ग्यं वा प्रधानं किं वा गिरिदर्शनं भयानुभावरूपं वाच्यं प्रधानमिति सन्देहादिदं सन्दिग्धप्राधान्यमुच्यते। यथा वा–

सीताकपोलफलके लावण्यामृतवर्षिणि।
भृशं दृशस्स्मरस्मेरा मग्ना दाशरथेश्चिरम्।। 53।।

अत्र व्यज्यमानायाश्चुम्बनवाञ्छायाः किं प्राधान्यं कपोलावलोकनस्य वाच्यस्य वेति सन्देहः। तुल्यप्राधान्यं यथा–

अयत्नसिद्धपाटीरमकरप्रकरश्रियम्।
पाण्डिमा गण्डयोश्चक्रे रामविद्वेषियोषिताम्।। 54।।

इह विरोधिधराधिना[249]थवधूनां कपोलपालिपाण्डिम[250]रूपस्य कार्यस्य वाच्यस्य तत्कारणस्य रघुवीरवीरायितस्य व्यङ्ग्यस्य च समं[251] प्राधान्यम्[252]। यथा वा–

चिन्ताश्मसंघटितचित्रवितर्दिकासु
सन्तानसन्ततविलासवनान्तरेषु।
रम्येषु हर्म्यवलयेषु च हाटकेषु
क्रीडन्ति कोसलपतेः कविराजकान्ताः।। 55।।

अत्र विद्वदैश्वर्यस्य कार्यस्य[253] वाच्यस्य तत्कारणस्य राघवौदार्यस्य व्यङ्ग्यस्य[254] च समं प्राधान्यम्। काक्वाक्षिप्तं यथा–

कैलासकें[255]लिखुरलीशिलावलयतोलनैः[256]।
मत्तो मांसलदोर्दण्डाद् बलीयान् रघुनन्दनः।। 56।।

यथा वा–

युगपद्भास्वद्राजग्रसनव्यग्रमहोग्रकरवालम्।
समुदीक्ष्य[257] सैंहिकेयो न लज्जते रामभद्र भवदीयम्।। 57।।

अत्रोभयत्रापि काक्वनुसन्धानेन बलीयान् लज्जत एवेति च व्यङ्ग्य-प्रतीतेरिदं काक्वाक्षिप्तमुच्यते। असुन्दरं यथा–

रामप्रचण्डभुजमण्डलहिण्डमान-
कोदण्डनिर्यदिषुमण्डलकुण्डलीन्द्राः।
मन्दोदरीमृदुलसुन्दरमन्दहास-
लीलापयांसि परिपीय शुभं लभन्ते।। 58।।

अत्र दाशरथिर्दशवदनगलदलनं[258] कृतवानिति वस्तु व्यङ्ग्यम्। तदपेक्षया वाच्यमेव चमत्कारकारीत्यसुन्दरमित्युच्यते[259]।

तदेवं मध्यमकाव्यं सावान्तरभेदमुदाहृतम्। एषामष्टानामपि भेदानां प्रागनुक्रान्तैर्ध्वनिभिस्सह सङ्करसंसृष्टिवशादसंख्येयता भवति।

अस्फुटव्यङ्ग्यमधमं काव्यमिति प्रागेव (सा० र० 9–5) लक्षितम्। तत्त्रिविधम्– शब्दचित्रमर्थचित्रमुभयचित्रञ्चेति। अस्योदाहरणं शब्दार्थालङ्कारतरङ्गे द्रष्टव्यम्।

रीतीनां वृत्तीनां च स्वरूपनिरूपणम्

रीतयो वृत्तयश्चापि गुणालङ्कारमूर्तयः।
व्यपदेशं पृथङ्[260] नीतास्तथापि रसवेदिभिः।। 59।।
रीतयस्तासु[261] वैदर्भी गौडी पाञ्चालिकेति च।। 60।।
बन्धपारुष्यरहिता शब्दकाठिन्यवर्जिता।
नातिदीर्घसमासा च वैदर्भी रीतिरिष्यते।। 61।।
ओजःकान्तिगुणोपेता गौडीया रीतिरिष्यते।। 62।।
पाञ्चाली गौडीवैदर्भ्योर्मेलनं कथ्यते बुधैः।। 63।।
कैशिक्यारभटी चैव सात्वती भारतीति च[262]।
चतस्रो वृत्तयो ज्ञेया रसावस्थानसूचिकाः।। 64।।

रीतिभ्यः केवलं शब्दगुणस्थाभ्यस्त्वमूः पृथक्।। 65।।
रसौ शृङ्गारकरुणौ सुकुमारतरावुभौ।
वृत्त्यैव तासु कैशिक्या व्यज्येते सुकुमारया।। 66।।
प्रोद्धतौ रौद्रबीभत्सावारभट्यैव तादृशौ।
हास्यशान्ताद्भुताः किञ्चिन्मृदवो[263] भारतीस्फुटाः।। 67।।
सात्वत्यैव स्फुटौ नातिप्रौढौ वीरभयानकौ।। 68।।
अत्यन्तसुकुमारार्थसन्दर्भा तासु कैशिकी।। 69।।
अत्युद्धतार्थसन्दर्भा वृत्तिरारभटी मता।। 70।।
किञ्चिन्मृद्वर्थसन्दर्भा भारती वृत्तिरिष्यते[264] ।। 71।।
ईषत्प्रौढोक्तिसन्दर्भा सात्वतीवृत्तिरीरिता।। 72।।

तत्र कैशिकी यथा-

रतिरिव नवकामं राममालोकयन्ती
नवतरुणिमलीलोन्मेषसञ्चार्यमाणैः।
ललितवलित[265]लज्जालोलरङ्गैरपाङ्गैः
कलयति किमपीयं कौशलं पुष्पकेतोः।। 73।।

चरमोद्दिष्टानामपि वृत्तीनां रसाविर्भावहेतुतयाऽन्तरङ्गत्वाद् आदा-वुदाहरणमिति मन्तव्यम्[266] ।

आरभटी यथा-

प्रक्षुभ्यच्छम्भुजम्भान्तकमुखमखभुग्गुम्भदोस्स्तम्भशुम्भत्
प्रागल्भ्यारम्भदम्भप्रमथनविभवाडम्बरोज्जृम्भमाणः।
त्वत्खड्गः क्रुद्धकल्पक्षयसमयकृतान्तोग्रदंष्ट्रान्तरङ्ग-
त्वङ्गज्जिह्वातिरंहाः[267] कथमिह[268] सहते मानवं दानवेन्द्र।। 74।।

इदं रावणं प्रति सूतवचनम्।

सात्वती यथा-

रे रे लङ्केश रामं किमिति मृगयसे तिष्ठ रे निष्ठुरा मे
प्रौढप्रायातिकायक्षतजरसझरैस्सम्यगाचम्य पूर्वम्।

नीत्वा प्राणाहुतीनां पदमतिकठिनानिन्द्रजित्प्राणवायून्
काण्डास्त्वत्कालखण्डाचलकवलविधौ व्यग्रभावं भजन्ते ।। 75 ।।

**भारती यथा**[269] –

जेतव्यो राक्षसेन्द्रो द्विगुणदशभुजो मन्त्रिभृत्याश्च दैत्याः
पुत्रस्सुत्रामजैत्रस्सततरणकलासादरस्सोदरश्च ।
स्वात्मा मर्त्यो द्विबाहुस्सचिवपरिजना भल्लुकाश्च प्लवङ्गा
भ्राता च क्षीरकण्ठस्तदपि विजितवानद्भुतं रामभद्रः ।। 76 ।।

**अथ रीतयः । वैदर्भी यथा–**

पाणौ न केलिकुररीमुररीकरोति
नालोकते प्रियमरालमरालकेशी ।
विन्यस्य सा करसरोजमुरोजभागे
बाला विचिन्तयति राम भवन्तमेव ।। 77 ।।

**गौडी यथा–**

शुम्भच्छुण्डालशैलाविरलपरिगलद्दानधाराझराणि
भ्राम्यत्कूजद्रथाङ्गान्यसुरहरियुतान्युग्रखड्ग्यावृतानि ।
आकर्णाकृष्टचापच्युतनिबिडतरोच्चण्डकाण्डप्रकाण्ड–
ज्वालामालाकरालो दहति रघुशिखी वैरिसेनावनानि ।। 78 ।।

**पाञ्चाली यथा–**

वीरश्रीरघुरामभद्र भवतो धाटीसमाटीकने
भेरीभूरिविरावडम्बरभरैराखण्डलश्रीश्चिरात् ।
निद्राणा यदजागरीत्तदुचितं दैतेयभूतिश्चिरा–
दुन्निद्रा कथमाशुमुद्रणमगादक्षुद्रनिद्राकृतम् ।। 79 ।।

**शय्यापाकादिनिरूपणम्**

**शय्या सा गीयते या स्यात्पदमैत्री परस्परम् ।। 80 ।।**
**यत्स्यादर्थस्य गाम्भीर्यं पाकस्स कविभिर्मतः ।। 81 ।।**

द्राक्षापाको नारिकेलपाकश्चेति द्विधा च सः[270] ।। 82 ।।
द्राक्षापाको भवेत्सोऽयं बहिरन्तः स्फुरद्रसः ।। 83 ।।
बहिः खरो नारिकेलपाकस्त्वन्तर्मृदुर्भवेत् ।। 84 ।।

द्राक्षापाको यथा-

हारस्फारमरीचिवीचिरचितश्रीखण्डचर्चाञ्चिता
साकूतस्मितचातुरीपरिचित[271]प्रत्यग्रनासामणिः ।
रत्नस्मेरललाटिकांशु[272]लहरीसिन्दूरबिन्दूत्करा
रामा राममनङ्गमङ्गलकलासङ्गैरपाङ्गैरपात् ।। 85 ।।

इदमेव शय्योदाहरणमपि ।

नारिकेलपाको यथा-

प्रायेण प्रचलत्पयोधरगलद्धाराभिरामक्रमे
प्रक्षोभं प्रतिपद्य हंसकगणैः प्रारब्धकोलाहले ।
प्राचीनस्फुरणप्रहीणतिलके प्राञ्चत्कलापोज्ज्वले
प्रेयस्याः पुरुषायिते रघुपतिः प्रीतिं प्रपेदे पराम् ।। 86 ।।

अत्र प्रकृतविशेषमहिम्नाऽप्रकृतप्रावृषेण्यवृत्तान्तप्रतीतिर्विशेषण-मात्रादेवेति समासोक्तिः, न श्लेषः । एवं रसालादिपाकान्तरमप्यूह्यम् ।

सामान्येनैतादृशं काव्यमामनन्ति । तदेतत् पद्यगद्यतदुभयविधया त्रिविधमिति प्रागेवावादिष्म ।

पद्यं पादचतुष्टयीपरिमितं काव्यं तु तत्संहति-
स्तत्राष्टादशवर्णना यदि महाकाव्यं तदोदीर्यते ।
गद्यं हृद्यमपाद[273]बन्धमुभयोपेता तु चम्पूर्मुदे
सा स्याद्यौवनबाल्यमेलनवती कान्तेव यूनः कवेः ।। 87 ।।

गद्यादीनां प्रबन्धानां स्वरूपं विस्तरभयान्नेह प्रपञ्च्यते ।

।। इति श्रीमत्त्रिभुवनपवित्रहरितगोत्रावतंसवाराणसीवंशपद्माकर-प्रभातभानुना पदवाक्यप्रमाणपारावारपारीणश्रीमहोपाध्याय-पर्वतनाथसूरिपण्डितमण्डलेश्वरसूनुना श्रीयल्लमाम्बागर्भ-

रत्नाकरपारिजातेन निर्मलाचारपूतेन चतुर्दशविद्याविभूषणवता श्रीधर्मसंख्यावता विरचिते श्रीमद्रघुकुलतिलकयशोधनसारसुरभिते साहित्यरत्नाकरनामन्यलङ्कारशास्त्रे ध्वनिभेदनिरूपणं नाम नवमस्तरङ्गः।।

आस्थामन्दिरमिन्दिराप्रणयिनो देवस्य रामात्मन-
स्त्वङ्गत्तुङ्गतरङ्गरिङ्गणभरैरङ्गीकृताडम्बरः।
तादृङ्निर्मलधर्मसूरिकवितासोल्लासकल्लोलिनी-
पूर्णः कर्णमनोहरो विजयते साहित्यरत्नाकरः।। 88।।

धर्मान्तर्वाणिवर्यस्त्रिभुवनविदिते वारणास्यन्वये यः
सञ्जातः पर्वतेशाच्छुभगुणगणभूर्यल्लमाम्बासुगर्भे।
व्याख्याविख्यातकीर्तेर्विवरणगुरुवाक्सांख्यमुख्यागमानां
तस्यालङ्कारशास्त्रे विलसति नवमो रामवर्ण्ये तरङ्गः।। 89।।

---

पाठभेदाः

1. म० 1 म० 5 बंधम्
2. अ० 1 चतुष्टयम्
3. म० 5 गीयते
4. अ० 1-2 अत्र
5. म० 1 अ० 1 केचनोचुः
6. म० 1 ध्वनिरस्ति च
7. म० 1 म० 5 विरुद्धार्थयोः
8. म० 1 म० 2 म० 5 अ० 2 एकत्रा
9. म० 2 म० 5 स्यात् अधिकम्
10. म० 1 तु नास्ति
11. म० 1 विधेयांशवत्
12. म० 1 वृत्तिरीतीना
13. म० 5 तस्य नास्ति
14. म० 1-2 च अधिकम्
15. म० 5 दिव
16. म० 1 मैवम् नास्ति

17. म० 1 अ० 2 हि नास्ति
18. म० 1 अ० 1 लोके नास्ति
19. म० 2 तत्कथं तदन्त
20. म० 1 ग्रन्थपातः (अभिधीयते-अलङ्कारा:)
21. अ० 1 ततः नास्ति
22. म० 5 कथं नास्ति
23. म० 5 कथं स्यात् अधिकम्, म० 2 स्यात् नास्ति
24. म० 1 अ० 1 हि नास्ति
25. म० 1 म० 5 अ० 1-2 वृक्षत्वशिंशुपात्वयोः
26. अ० 1 तावत् अधिकम्
27. म० 1 शिंशुपात्वं साध्यते। म० 5 शिंशुपायाः शिंशुपात्वं वृक्षतादात्म्येन वृक्षत्वं साध्यत इति वाक्यविन्यासः अधिकम्
28. अ० 1 अत्र नास्ति
29. म० 2 म० 5 प्रतीतेः
30. म० 2 सक्त, म० 5 सक्ति
31. म० 1 उपेक्ष्य
32. अ० 2 मैवम्
33. अ० 2 तदुक्तम्
34. म० 5 तदसंभवात्
35. म० 1 अ० 1 वाक्य नास्ति
36. अ० 2 रनियतपदपूर्वत्वात्
37. म० 1 वशेन सकल
38. म० 1 णान्तरगोचरः
39. म० 2 अ० 2 रूप०
40. म० 5 भूतमपि विप्र०, अ० 2 भूतमति विप्र०
41. अ० 2 ध्वनिमभि०
42. म० 1 अ० 1 च
43. अ० 1 धायकत्वेऽप०, अ० 2 धायकत्वाङ्गीकारेऽप०
44. म० 1 म० 5 सिद्धान्तैश्च
45. म० 1 धेयसाम्राज्ये
46. म० 1 इति अधिकम्
47. म० 1 अपि नास्ति
48. अ० 2 ध्वनिर्नाभिधेय०

49. अ० 2 नयनानुरूपया
50. म० 1 म० 2 म० 5 अ० 1 पोद्धाराभ्याम्
51. अ० 1 प्रयोजक, अ० 2 प्रयोजनस्य
52. म० 1 वाक्ये नास्ति
53. अ० 2 स्व नास्ति
54. म० 5 नायम्
55. म० 1-2, 5 दीर्घ नास्ति
56. म० 1 भिधाविषय०
57. म० 1 म० 5 अपि नास्ति
58. म० 1 अ० 2 अपि नास्ति
59. म० 1 काव्यस्यात्मा
60. म० 2 बाधापुरस्कारप्रवृत्ततया
61. म० 5 वाच्य इति संज्ञां
62. म० 1 ग्रन्थपातः (भावरूप-सहकारि)
63. अ० 1-2 संक्राम
64. म० 1 संक्रमित नास्ति
65. म० 1 म० 5 च नास्ति
66. म० 1 तद्गुण०
67. म० 2 वानराद्यैरल्पसारैः
68. अ० 1-2 च नास्ति
69. अ० 1 च अधिकम्, अ० 2 अपि अधिकम्
70. म० 1 रावणोक्त्या
71. म० 1 समवायत्वात्, म० 2 अ० 1-2 समवायित्वात्
72. अ० 1 प्रस्फुट
73. अ० 1 नीरन्ध्रकोर
74. म० 1 ज्वलदनलकणा
75. म० 1 टेपलीला
76. म० 2 वर्तसे, म० 5 वर्धते
77. म० 5 अ० 1 स्पर्धते
78. म० 1 अ० 2 वच्मीति, म० 5 ब्रुवे वच्मीति
79. अ० 1 पुनः नास्ति
80. म० 1 अ० 1-2 द्विविधः पूर्ववत्
81. म० 1 म० 5 अ० 1-2 तत्र नास्ति

82. सर्वासु मातृकासु तद्घाटीत्यादि इति विद्यते।
83. म० 5 अत्र नास्ति
84. अ० 2 रूपस्वार्थ०
85. म० 1 ध्वनिरेवेत्युच्यते, अ० 2 ध्वनिरुच्यते।
86. सर्वासु मातृकासु वीरश्री रघुरामेत्यादि इति विद्यते।
87. अ० 2 जागरणयो
88. म० 1 बाधात्
89. अ० 2 व्यज्येते
90. म० 1 शौर्यं
91. म० 1 अनेन वीरश्री, म० 5 अनेन श्री०
92. म० 5 प्रतिश्रुतम्
93. म० 1 निवर्तित०
94. अ० 2 लक्षणामूलप्रयो०
95. म० 1 न अधिकम्
96. म० 1 च नास्ति
97. म० 1 म० 2 म० 5 अ० 2 ग्रन्थपातः
(मुख्यार्थ--धर्मादिकमेव)
98. म० 1 न नास्ति
99. अ० 2 इति अधिकम्
100. म० 2 व्यङ्ग्य नास्ति
101. म० 1 अ० 1-2 अपि नास्ति
102. म० 1 विभावाद्य०
103. म० 2 वेधवन्न, म० 5 भेदनवन्न
104. म० 1 म० 5 इत्ययमसंलक्ष्य
105. म० 5 तदिदम्
106. म० 5 रसान्तर०
107. म० 1 रूप नास्ति
108. म० 1 वाक्यगतस्सन्
109. म० 5 व्यंग्ये
110. म० 1 पदे नास्ति
111. म० 1 च
112. अ० 1 मूल अधिकम्
113. म० 1 यथा वा नास्ति

114. अ० 1-2 चिरां गिराम्
115. म० 1 काननशब्दस्य
116. अ० 2 व्यज्यते
117. म० 2 वनान्य
118. म० 1 रामचन्द्र
119. म० 1 परिभूतिरिति पदेन
120. अ० 2 रूप नास्ति
121. म० 5 राघवः
122. म० 5 दोष नास्ति
123. अ० 1 दाशरथिर्जामदग्न्ययोः
124. म० 5 यथा वा नास्ति
125. म० 1 स्सिन्धुरत्लो०
126. अ० 2 बन्धुरबन्धुः नास्ति
127. अ० 2 विरामः
128. म० 1 म० 5 अत्रैकैक
129. म० 1, 5 अ० 1-2 यथा वा नास्ति
130. म० 1 पादावघात, म० 5 पादादिघात, अ० 2 पादाविघात
131. म० 1 दिवाकराघ्न, म० 5 भास्कराघ्न, अ० 1-2 प्रभाकराघ्न
132. म० 1 स्यादित्यादि
133. म० 1 तस्यैवा, अ० 1 स्वस्यैवा अ० 2 तत्त्वे स्वस्यैवा
134. म० 5 लङ्कारतायाः०
135. अ० 1-2 न तत् त्रैवि०
136. अ० 2 न केवलं
137. म० 1 निष्ठः, म० 2 म० 5 निष्पन्नः
138. अ० 1 भावनादिविषय०
139. म० 5 द्वादशभेदा, अ० 2 द्वादशविधा
140. अ० 1 तत्रैकाङ्ग
141. म० 5 संभवत्येव।
142. म० 5 शक्ति नास्ति
143. म० 1 र्भीषणैः
144. म० 2 द्योत्यते
145. म० 5 वाङ्मनसा
146. अ० 2 वाङ्मनसां सीम
147. म० 5 व्यज्यते

148. म० 2 महीपालनरूप अधिकम्
149. म० 5 केयूराङ्गदपद्म
150. अ० 2 रागजरज
151. म० 1 रजसामनूरु
152. अ० 1-2 देह नास्ति
153. म० 5 अ० 2 रागजं रजः
154. अ० 2 सुषमेत्येवमपह्न०
155. म० 1-2, 5 अ० 1 वा अधिकम्
156. अ० 2 पह्नवो वा व्यज्यते
157. म० 1 अ० 1 रूप नास्ति
158. म० 1 अ० 1-2 मुहूर्तमपि
159. म० 2 रघुसिंह
160. म० 1 पूरयताम्
161. अ० 1-2 पटीयस्त्वरूपम्
162. म० 1 अ० 1 रूप नास्ति
163. म० 2 म० 5 रौप्या
164. म० 2 रामभूप
165. अ० 2 रानुगुण्याभावरूपा०
166. म० 5 रौप्या
167. अ० 2 पेक्षयात्याधिक्य०
168. म० 1 बाण नास्ति
169. म० 1 पर्यायालङ्कारो
170. म० 5 अत्र अधिकम्
171. म० 2 पदैस्सञ्जेरिर इति
172. म० 2 स एव
173. म० 5 व्यतिषङ्ग
174. म० 2 प्रपञ्चः
175. म० 5 घोषैः
176. म० 1 म० 5 निधे महेश्वर
177. अ० 1 विहर्तुं तत्यजुरिति
178. अ० 1 व्याप्त
179. म० 5 (डी० 12 972) ग्रन्थः समाप्तिमगात्।
180. म० 2 विशिष्टनिर्माणादि अधिकम्

181. म० 2 लोकवासिनां
182. म० 2 वाक्येन नास्ति
183. म० 2 अयं नास्ति
184. म० 2 उप्त्यै
185. अ० 2 यशसस्सकल
186. म० 1 व्यज्यते
187. म० 1 अयं अधिकम्
188. अ० 1 पटह नास्ति
189. म० 1 ग्रन्थपातः (स्फूर्तेः.....बिभर्ति)
190. अ० 1-2 भुजेन सारं
191. अ० 2 एव नास्ति
192. म० 1 अ० 2 पूर्णेन सारेणेति, अ० 1 पूर्णेनेति
193. म० 1 रूप नास्ति
194. अ० 1 अ० 2 नृत्य
195. अ० 1-2 क्षुरप्रारक्षः
196. म० 2 जातीयांत्समूल
197. म० 2 भयसन्तोषादिरूपवस्तुना अधिकम्
198. म० 1 अ० 2 व्यज्यते
199. अ० 1 स एव नास्ति अ० 2 सोऽयं
200. अ० 2 शाखाः
201. अ० 1 त्यमीभिर्वने
202. म० 1 मेतत्कुतो
203. अ० 1-2 मुंचन्त्येत
204. म० 2 पिण्डीभावमोचनादिरूप अधिकम्
205. म० 2 व्यज्यते
206. म० 1 अ० 1-2 एव नास्ति
207. म० 1 यत्पिबसि
208. म० 2 प्राणपारणादि अधिकम्
209. म० 1 पदे नास्ति
210. म० 1 एषा किंपुरुष किल श्रीरघुवर
211. म० 1 अ० 1 द्योत्यते
212. अ० 2 वीरायितरूपं वस्तु
213. अ० 1 मण्डलस्य

214. अ० 1 लभसे
215. अ० 2 भुजङ्ग
216. अ० 1–2 शरधे
217. म० 2 तपनाद्व्यति
218. म० 1–2 पूर्वार्धेन ध्वन्यते
219. अ० 1–2 एतद्भेदाः अधिकम्
220. अ० 1–2 भेदा नास्ति
221. म० 2 अ० 2 एव नास्ति
222. म० 2 अ० 1–2 प्रभावः
223. अ० 2 तत्रापि
224. अ० 2 वाच्यस्य ध्वने०
225. म० 1 प्रथमस्य भेदस्य भेदा
226. म० 1 प्राधान्ये ध्वनि०
227. अ० 1–2 ध्वनिप्रधानं
228. म० 1 मुत्तमं निरूप्य
229. म० 1 अ० 2 तत्रा०
230. म० 2 गूढत्वं नाम
231. म० 2 विषयत्वम्
232. म० 1 अगूढं नास्ति
233. अ० 1 कोटिविषय०
234. म० 1 अ० 1–2 बुध्या ध्वन्येन
235. अ० 1 व्याख्यानुरूपस्या०
236. म० 2 पपन्नत्वात्तत्कार्य०
237. म० 1 तत्सर्वम्
238. म० 2 मानतया
239. म० 1 अ० 1–2 मानतयागूढम्
240. अ० 2 दुर्भरा
241. अ० 1 तद्रिपूणां
242. म० 2 वाच्यसिद्ध्यङ्गम्
243. अ० 2 निधत्ते
244. म० 2 अ० 2 सूर्यातिरेक०
245. अ०. 1–2 व्यतिरेको ध्वन्यः
246. अ० 2 प्रतीत्या ध्वन्य इत्य०

247. अ० 2 मन्दकन्दरे
248. अ० 2 क्षिपतिर्व्यकांक्षीदितीदं
249. अ० 1 धराधिनाथ नास्ति
250. म० 2 कपोलपाण्डिम०
251. म० 1-2 सम
252. म० 1 उच्यते अधिकम्, अ० 1-2 प्राधान्यमिति इदं तुल्यप्राधान्यमुच्यते अधिकम्
253. अ० 2 कार्यस्य नास्ति
254. म० 1 अ० 1-2 व्यंग्यस्य नास्ति
255. अ० 1-2 शैल०
256. अ० 1 लोलनैः
257. म० 2 समवेक्ष्य, अ० 2 संप्रेक्ष्य
258. म० 2 अ० 2 गल नास्ति
259. अ० 1-2 चमच्चरीकरोतीति तदिदमसुन्दरमुदीर्यते।
260. अ० 1 म० 1 म० 2 व्यपदेशपथं नीता०
261. म० 1 तयस्तास्तु
262. म० 2 तथा
263. म० 2 मृदुला
264. म० 2 रीर्यते
265. म० 1 गलित
266. म० 2 बोध्यम्
267. म० 1 अ० 2 रंहः
268. अ० 2 मिव
269. म० 1 भारती यथा नास्ति
270. अ० 2 मतः
271. अ० 1 चातुरीव रचिता
272. म० 1 स्मेरबलादिकांशु
273. म० 1 बद्ध०



# ।। अथ दशमो रसतरङ्गः ।।

एवं तावत् काव्यलक्षणं तद्भेदाँश्च सप्रपञ्चं[1] निरूप्येदानीं[2] तस्य प्राणायमानं रसं निरूपयितुकामो वृत्तसङ्कीर्तनमुखेन तं प्रस्तौति–

सारश्लेषविशेषचित्रपरिणामोदात्तसद्रूपकैः
व्याघातव्यतिरेकवद्भिरुपमित्यन्योऽन्यदृष्टान्तकैः।
एतैर्धर्मसुधीवरेण घटितैस्सम्यग्गुणोज्जृम्भितै–
र्निर्दोषैर्विविधैरलङ्कृतिगणै[3] रम्यो रसो राजते।। 1।।

ननु रससद्भावे [4]किं प्रमाणम्[5]। न तावत्प्रत्यक्षं प्रमाणं तत्र[6] क्षमते[7], विकल्पासहत्वात्।

तथा हि– प्रत्यक्षग्राह्यो भवन् रसः किं निर्विकल्पकेन गृह्यतां सविकल्पकेन वा। नाद्यः[8]। विशिष्टवाक्यार्थानु[9]सन्धानलब्धात्मनो रसस्य नित्यं विभावादिघटिततया प्रतीतिरिति [10]हि रसवादिनो वर्णयन्ति। तथा सति तथाविधस्व[11]रूपे तस्मिन् स्वरूप[12]मात्रावगाहि निर्विकल्पकं कथङ्कारं क्षमते। नापि[13] द्वितीयः। निर्विकल्पकाभावे[14] सविकल्पकस्यानुदयात्[15]। तयोः कार्यकारणभावावधारणात्। न हि निर्विकल्पकेनागृ[16]हीते विशेषणे स्वरूपमात्रे सविकल्पकं[17] नाम विशिष्टज्ञानमुत्पत्तुमर्हति। 'नागृहीतविशेषणा विशेष्यबुद्धिः' (त० वा० 1–3) इति[18] न्यायात्। न च कारणं विनाऽपि[19] कार्योत्पत्तिः, व्याघातात्।

न च समवायादिवत् निर्विकल्पकनिरपेक्षसविकल्पकगोचरत्वमस्य इति[20] वाच्यम्। तत्प्रतियोगिविशेषणां[21]शस्य प्राक्सविकल्पकेन ग्रहणाद् अनुमानादिवत्तदुपपत्तेः[22]। प्रकृते तु विभावादेर्विशेषणस्य प्राक्स्वातन्त्र्येणा–नुपलब्धेः, अगृहीतविशेषणायाश्च बुद्धेर्विशेष्यानुपसंक्रमात्[23] कथमेवं स्यात्।

अस्तु वा यत्किञ्चित्प्रत्यक्षम्, तथापि [24] किं पूर्वसिद्धमेव रसं तद्गोचरयेत्। विभावाद्यनुसन्धानेन तदानीमुत्पन्नं वा। नाद्यः। विशिष्ट-काव्यार्था[25]ननुसन्धातॄणामपि सदा प्रतीतिप्रसङ्गात्। न द्वितीयः। यदि रसो विभावादिकार्यं स्यात् तर्हि कुलालादिनिमित्तनाशे कलशस्येव तन्नाशे[26]ऽपि तस्यानुवृत्ति[27]स्स्यात्।

ननु निमित्तकारणापाये[28]ऽपि कार्यमपैति। यथा वैशेषिकाणाम-पेक्षा[29]बुद्धिनाशाद् द्वित्वनाशः, लोके हस्तसंयोगापाये कटविवरणापायः सवितृकिरणसंयोगापाये कमल[30]विकासापायश्च दृश्यत इति चेत्, मैवम्। वैशेषिकाणां द्वित्वादिनाशकल्पना प्रक्रियामात्रम्। द्वित्वादेर्वस्तु[31]सहभा-वित्वात्। न चापेक्षाबुद्धिवैयर्थ्यम्। स्वरूपसिद्धभेदस्य प्रतीतिं प्रति[32] प्रतियोगिप्रतीतिवद् अपेक्षाबुद्धेरपि द्वित्वादिप्रतीतिं प्रति हेतुत्वात्[33]। न च परस्परविरुद्धानां द्वित्वादीनां सहावस्थानानुपपत्तिः। ह्रस्वदीर्घादिवद-विरोधात्[34]। चिरकाल[35]संवेष्टनाहितसंस्कारबलादुत्पन्नसंवेष्टनकार्येण पूर्वप्रसरणापायः, न निमित्तापाय[36]मात्रात्। कमलविकासापायोऽपि मुकुलीभावलक्षणविरोधिकार्यादेव, न सवितृकिरणसंयोगापाय[37]मात्रादिति।

एतेन भट्टलोल्लटप्रभृतीनां मतमपास्तम्। ते हि[38] विभावैरुत्पादितोऽ-नुभावैः प्रत्यायितः सञ्चारिभिरुपचितो रामादिगतो रसस्तदभेदभावनया भाविते[39] नटे[40] प्रतीयत इत्युत्पत्तिवादिनः। उत्पत्तिपक्षस्य दूषितत्वात्।

किञ्च तन्मतपर्यालोचने[41] रसस्यानुकार्यानुकर्तृनिष्ठता प्रतिभाति। न च सा युक्ता। अनुकार्यस्य रामादेरतीतत्वात्। तत्प्रतीतेर्लौकिकत्वेन दुःखात्मक-त्वाच्च। अनुकर्तुर्नटस्याप्यभिनयसभारञ्जनधनार्जनाद्यभिनिविष्टचेतस्कतया रसानुभवाभावात्। भावे वा तस्यापि सामाजिकान्तर्भावात्। किञ्च उत्पत्तिवादे[42] रसस्यात्मनिष्ठतया कामिन[43] एव रसनीयत्वं स्यात्।

ननु मा भूत् प्रत्यक्षं प्रमाणं, चित्रतुरगन्यायेन सम्यङ्मिथ्या-संशयसादृश्यप्रतीति[44]वैलक्षण्येन रामाद्यभेदभावनया भाविते[45] नटे तत्प्रकाशितैरेव विभावादिभिः शिक्षाभ्यासपाटवातिशयप्रकटिततया कृत्रिमैरपि तथात्वेनानभिमन्यमानैरनुमितः स्थायी सामाजिकैश्चर्व्यमाणो रस

इत्यनुमितिवादिनः श्रीशङ्कुकस्य मतानुसारेणानुमानं तत्प्रमाण[46]मस्त्विति चेत्, मैवम्। अनुमितिपक्षस्याप्ययुक्तत्वात्।

तथा हि – मालत्यादिसंयोगवियोग[47]जनितसुखदुःखपरवश[48]माधवादि-विभावानुभावादिकमभिनयति यथावदेव कोविदे नटे, तद्दर्शनसमय-समुद्बुद्धतत्तत्स्वकीयविभावाद्यनुभवसंस्काराः सामाजिकाः स्वदृष्टा[49]न्ता-वष्टम्भेन माधवादेः प्रथमं रसवत्तामनुमिमते। माधवः सुखदुःखातिशयपरवशो भवितुमर्हति। तादृग्विभावादिकारणयोगित्वात्। य एवं स एवम्। यथा वयमिति। ततस्तेनानुमीयमानेनापि लोकोत्तर[50]स्वादुस्वभावतया वस्तु-सौन्दर्यबलाद् रसनीयत्वेनान्यानुमीयमानविलक्ष[51]णेन माधवादिनिष्ठेनैव रसेन स्वयमपि सुख्यन्तीति हि[52] तन्मतम्।

अत्र पृच्छामः- विभावादीनां किं लोकसिद्धकार्यकारणरूपेण[53] लिङ्गत्वम्, उत विभावाद्याकारेण। न चरमः। विभावाद्याकारस्य लोके कुत्राप्यप्रसिद्धत्वेनासिद्धि[54]प्रसङ्गात्। अस्तु तर्हि आदिमः पक्षः। दृश्यते च[55] कार्यात्कारणानुमानमपि[56]। तद्वद्विभावादीनामपि लोकसिद्धरीत्या कार्य-कारणरूपेणैव[57] लिङ्गत्वमिति चेत्, मैवम्। विभावादीनां व्यञ्जकतया-भिमतानां लौकिककार्यकारणरूपतायाः शास्त्रे त्यागात्। तेन विभावादेः कार्यकारणतारूप[58]व्यापकतानिवृत्तौ[59] व्या[60]प्यलिङ्गरूपतापि व्यावर्तते[61]। तन्निवृत्तौ च कथमनुमानवार्ता।

ननु मा भूद् विभावादीनां कार्यकारणरूपता, लिङ्ग[62]त्वं तु[63] अन्वयव्यतिरेकमहिम्ना भविष्यति। दृश्यते हि कृत्तिकोदयादकार्याद-कारणादेव रोहिण्यासत्तिप्रतीतिः। अतोऽन्वयव्यतिरेकयोरेवाविनाभा-वावधारणोपायतया[64]ऽवधारितत्वात् प्रकृते रसप्रतीतेर्विभावाद्यन्वयव्यति-रेकानुविधायितया विभावादीनां रसानुमाप[65]कत्वं भविष्यतीति चेत्, हन्त, स एव घट्टकुटीप्रभातवृत्तान्तः। यतो विभावादिरूपतया लोकाप्रसिद्धत्वात् न तद्रूपेण लिङ्गता इत्युक्ते तद्दोषपरिजिहीर्षया पुनरन्वयव्यतिरेक-मार्ग[66]मवलम्बमानस्य तव स एव दोषः प्रत्यावर्तते। न हि विभावादीनां शास्त्रैकसमधिगम्याना[67]मलौकिकानामन्वयव्यतिरेकग्रहः शक्यशङ्कः।

यच्चोक्तम्- वस्तुसौन्दर्यबलाद् अनुमीयमानस्याप्यन्यानुमीय-मानवैलक्षण्येन[68] चर्वणीयत्वम्[69] इति, तदतिमन्दम्, विरुद्धत्वात्। न ह्यतिसुन्दरमपि वस्त्वन्यगतमनुमीयमानमत्यन्तपरोक्षमपरोक्षतया[70] चर्वणीयं भवति। परोक्षत्वापरोक्षत्वयोरेकस्मिन्धर्मिण्येकदा[71] स्थितिविरोधात्। विभावादिप्रतीतेः[72] पूर्वं सिद्धस्य तस्याभावाच्च।

नाप्यनुमानं तत्र प्रभवति, तस्य साधर्म्यवैधर्म्यमात्रैकविषयत्वात्।

न चागमस्तत्र प्रगल्भते। रसस्यालौकिकत्वेन त्वदभ्युपगतस्य सङ्केताभावेनाभिधागोचरताभावात्[73]।

अत एव न लक्षणागोचरतापि। कुत्राप्यनभिधेयस्य लक्ष्यत्वादर्शनात्। किञ्च विभावादयो मुख्यार्थबाधादिसध्रीचीना[74] रसमवगमयन्तीति[75] वक्तव्यम्[76]। न हि बाधाविनाभावौ[77] विना लक्षणा सम्भवति।

न च गौण्यपि तं बोधयति[78]। न हि विभावादयः कलयापि सादृश्यमवलम्ब्य रसं बोधयन्ति।

नापि तात्पर्यगम्यो रसः। तथा हि-विधेयदृष्ट्याऽभिधानं[79] तात्पर्यम् इत्याचार्याः। युक्तं चैतत्। 'विधिरत्यन्तमप्राप्तौ'[80] इति न्यायेन त्रैकाल्या-संसृष्टस्यैवार्थस्य[81] विधानयोग्यता। यथा[82] 'दध्ना जुहोति' इत्यादौ गुणसम्भक्तभावार्थस्थले गुणमात्रस्यैव विधानपर्यवसानम्। विधिर्हि क्षीरनीरविवेचनशाली हंस इव प्राप्ताप्राप्तसमभिव्याहारे प्राप्तादप्राप्त-मदग्धदहनन्यायेन विभज्यैव विषयीकरोति। एवमेव रक्तं पटं वय इत्यादावपि द्रव्यगुणक्रियाणामेकं द्वयं त्रयं वा यावदप्राप्तं तावदेव विधीयते[83]। अन्येषां तु मानान्तरप्राप्तानां तत्सन्निहितानामर्थानां तादर्थ्येनैवान्वयो युक्तः, भूतभव्यनयात्। यथा तत्रैव जुहोतिपदस्य 'अग्निहोत्रं जुहोति' इति वाक्यान्तरप्राप्तहोमानुवादिनो[84] गुणविधिपरत्वम्। अतो विधेयानुवाद्यसम-भिव्याहारस्थलेऽनुवाद्यवाचकपदानां विधेयार्थदृष्टिरेव तात्पर्यमिति निर्णयः। न चानभिहिते[85] तात्पर्यं जाघटीति[86]। 'लोहितोष्णीषा ऋत्विजः प्रचरन्ति' इत्यादौ 'वधूं स पश्यन्नृजुनैव[87] चक्षुषा' (कु० सं० 5-32) इत्यादौ च[88] लौहित्यार्जवादौ विधेये पदान्तराभिहित एवानुवाद्यवाचकपदानां

तात्पर्यस्वीकारात्। प्रकृते रसस्याभिधागन्धवैधुर्योपपादनान्न तात्पर्यगम्यतेति[89] युक्तमुत्पश्यामः।

नाप्यर्थापत्तिस्तमालिङ्गति, रसं विनानुपपद्यमानार्थादर्शनात्। ननु विभावादय एव रसं विनानुपपद्यमानास्तं कल्पयन्तीति चेत्, वार्तमेतत्, तस्यानु[90]मानादव्यतिरेकात्[91] तस्य च निराकृतत्वात्। अनुमानव्यतिरेके वा तज्जन्यायाः प्रतीतेः परोक्षत्वाद् अपरोक्षतया[92] चर्वणविरोधात्।

अनुपलब्धिस्त्वभावैकगोचरा न रसस्वरूपमवगमयितुमलम्।

नापि तत्र लक्षणं प्रणेतुं शक्यम्। प्रमाणसिद्धार्थस्ये[93]तरव्यावृत्तिबोधनार्थं[94] [95]लक्षणप्रणयनम्। प्रमाणञ्च न किञ्चिदपि [96]रसं स्पृश[97]तीत्यवोचाम[98]। अतो रसाभावाद् रसोपजीविकाव्यमीमांसाशास्त्रमेवानारम्भणीयमिति।

अत्रोच्यते[99]। न तावल्लक्षणासम्भवः। विभावानुभावसात्त्विकव्य-भिचारिसामग्रीसमुल्लसितः स्थायीभावो रस इति लक्षणसद्भावात्। तदुक्तं दशरूपके–

विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः।
आनीयमानस्स्वादुत्वं स्थायीभावो रसस्स्मृतः।। 2।।

(द० रू० 4-1)

भावस्य स्थायित्वं नाम सजातीयविजातीयानभिभूततया यावदनुभव-मवस्थानम्। तथो[100]क्तं तत्रैव–

सजातीयैर्विजातीयैरतिरस्कृतमूर्तिमान्।
यावद्रसं वर्तमानस्स्थायि[101]भाव उदाहृतः।। 3।।

इति। न च प्रत्यायकाभावादप्रतीतार्थस्य[102] लक्षणप्रणयनं दुष्करमिति शङ्क्यम्। उक्तसामग्र्या एव रसव्यञ्जकत्वात्। तथा चोक्तं भरतेन सूत्रकृता– 'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः' (भ० ना० षष्ठोऽध्यायः, पृ० 272) इति। उक्तञ्च काव्यप्रकाशकारेण[103] –

कारणान्यथ कार्याणि सहकारीणि यानि च।
रत्यादेस्स्थायिनो[104] लोके तानि चेन्नाट्यकाव्ययोः।। 4।।

विभावा अनुभावाश्च[105] कथ्यन्ते[106] व्यभिचारिणः।
व्यक्तस्स[107] तैर्विभावाद्यैस्स्थायीभावो रसः स्मृतः।। 5।। इति।
(का० प्र० 4-27, 28)

विभावानुभावादिविवरणम्

तत्र[108] रसाभिव्यक्तिकारणं दयिताजनो विभावः। स द्विधा, आलम्बनोद्दीपनभेदात्। उद्दीपनविभावश्चतुर्विधः। [109]आलम्बनस्य गुणो रूपयौवनादिः। हावभावादिकाश्चेष्टाः[110]। हारनूपुरादिस्तदलङ्कारः। चन्दनचन्द्रिकादिस्तटस्थश्चेति।[111] कार्यभूतः कटाक्षभुजाक्षेपादिरवयव-विकारविशेषोऽनुभावः। उक्तं हि रतिरहस्ये-

रसतां गच्छति स्थास्नौ यत्कार्यमुपलक्ष्यते।
अनुभावस्स विज्ञेयो रसावस्थानसूचकः।। 6।। इति।

परगतसुखदुःखभावनया[112] भावितमन्तःकरणं[113] रसत्वं, ततो भवाः सात्त्विकाः। ते च[114]-

स्तम्भप्रलयरोमाञ्चास्स्वेदो वैवर्ण्यवेपथू।
अश्रुवैस्वर्यमित्यष्टौ सात्त्विकाः परिकीर्तिताः।। 7।।
(प्र० रु० 4 पृ० 248)

विविधमभितश्चरन्तीति व्यभिचारिणः। ते च[115]-

निर्वेदग्लानिशङ्काश्रमधृतिजडताहर्षदैन्यौग्र्यचिन्ता-[116]
त्रासेर्ष्यामर्षगर्वस्मृतिमरणमदास्सुप्तिनिद्रावबोधाः।
व्रीडापस्मारमोहास्सुमतिरलसतावेगतर्कावहित्था[117]
व्याध्युन्मादौ विषादोत्सुकचपलयुतास्त्रिंशदेते त्रयश्च।। 8।।[118]
रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा।
जुगुप्साविस्मयशमास्स्थायिभावा[119] नव स्मृताः।। 9।।
शृङ्गारहास्यकरुणा रौद्रवीरभयानकाः।
बीभत्साद्भुतशान्ताख्या[120] रसा नव समीरिताः।। 10।।
(प्र० रु० 4 पृ० 246)

व्यभिचार्यादीनां लक्षणान्युपरिष्टाद्वक्ष्यन्ते।

एवं स्थिते सूत्रार्थः कथ्यते[121]। विभावानां[122] रसस्य च कार्यकारण-भावस्सम्बन्धः। अनुभावानां रसस्य च ज्ञाप्यज्ञापकभावस्सम्बन्धः[123]। व्यभिचारिणां रसस्य च पोष्यपोषकभावस्सम्बन्धः[124]। एवञ्चै-तादृशात्संयोगाद् यथाक्रममुत्पत्तिः, ज्ञप्तिः, पुष्टिश्च भवति।

नन्वालम्बनं रसं जनयतु। उद्दीपकं तु कथं[125] जनयति[126]। उद्दीपकत्वाभावप्रसङ्गात्। अनुत्पन्नस्योद्दीपनायोगात्। आलम्बनोद्दीपन[127]-विभागायोगाच्चेति[128] चेत्, सत्यम्। उत्पन्नमप्यनुद्दीपितमनुत्पन्नप्रायमेवेत्यु-द्दीपनमप्युत्पादकमित्युपचर्यते[129]। यद्वाऽऽलम्बनेन किञ्चिदुत्पाद्यते, उद्दीपनेन तु सम्यगिति तदुत्पादकत्वम्। ननूद्दीपनमपि पोषकमेवेति[130] वक्तव्यम्। तच्च व्यभिचारिभिरेवेति किमुद्दीपनेनेति चेत्, मैवम्[131]। ईषदतिशयाधानहेतु-त्वसम्यक्पोषणाभ्यां[132] तद्व्यवस्थासिद्धिरिति भट्टलोल्लटप्रभृतीनामु[133]-त्पत्तिवादिनां मतम्।

ज्ञप्तिपक्षे[134] विभावादीनां सर्वेषां रसस्य च ज्ञाप्यज्ञापकभावलक्षणः सम्बन्धः। ततो रसस्य निष्पत्तिः[135] ज्ञप्तिरेव। सापि लोकप्रतीतिविलक्षणा। राम एवायम् अयमेव राम, इति न रामोऽयम् इत्यौत्तरकालिके बाधे रामोऽयम् इति रामः स्याद्वा न वाऽयम् इति रामसदृशोऽयम् इति च[136] सम्यङ्मिथ्या संशयसादृश्यप्रतीतिवैलक्षण्येन रामोऽयम् इति नटे जायमानत्वात्। एवञ्च[137] नटेनाभिनीयमानैः[138] शिक्षाभ्यासपाटवप्रकटिततया[139] कृत्रिमैरपि[140] तथात्वेनाभिमन्यमानैः[141] कटाक्षभुजाक्षेपादिभिरलौ-किकप्रतीतिगोचरैरेव ज्ञापकैः स्थायिनो रत्यादेर्ज्ञाप्यस्य प्रतीतिलक्षणा रसानुभूती रसानुमितिरेवेति[142] ज्ञप्तिवादिनां मतम्।

रसो नोत्पाद्यते नानुमीयते च। उभयत्रापि पूर्वोक्तदूषणानां[143] जागरूकत्वात्। किन्तु काव्यनाटकशब्दव्यापारसहकृतेन साधारणीकृत-विभावादिकेन भावकव्यापारेण[144] नद्यादिगतत्वपरिहारेण साधारणतयाऽनु[145]-सन्धीयमानः स्थायी सत्त्वोद्रेकप्रकाशानन्दसंविन्मयेन भोगापरनाम्ना भावनाख्यव्यापारेण भुज्यत इति भुक्तिवादिनो भट्टनायकस्य मतम्।

अस्मिन्पक्षे विभावादीनां संयोगात् साधारणीकरणरूपात्सम्बन्धाद् रसस्य निष्पत्तिर्भुक्तिरिति सूत्राक्षरयोजना।

नन्वत्र संविन्मयेन भावनाख्य[146]व्यापारेण रसो[147] भुज्यत इति पक्षे भुजिधातुना रसविषयोऽभ्यवहाररूपः क्रियाविशेषो विवक्षितः। तद्विषयमवगत्यन्तरं वा। कल्पद्वयेऽप्यनुपलब्धिर्बाधः[148]। विभावाद्यनुसन्धानसमनन्तर[149]भाविरस[150]संविद्व्यतिरेकेण क्रियाविशेषस्य वा संविदन्तरस्य वाऽनुपलब्धेः। प्राथमिकसंविदैव रसव्यवहारोपपत्तौ तदतिरिक्तकल्पने गौरवदोषः। संविदः संविदन्तरजनकत्वेनानवस्थादोषश्च प्रसज्यति[151]। अतो नायमपि पक्षः साधीयानिति चेत्, बाढमसाधीयान्[152]। अत एव[153] पक्षत्रयमप्युपेक्ष्य[154] श्रीमदाचार्याभिनवगुप्तपादैरभिव्यक्तिपक्ष एव सिद्धान्तितः। (ध्व० लो० 2-3 पृ० 190) स एव परीक्षकाणामन्त[155]रङ्गमवगाहत इत्यस्माभिरपि सत्[156]सम्प्रदायलोभेन तमेव पक्षमनुसृत्य रसो निरूप्यते। अत्र विभावैरनुभावैश्चेत्यादिना पूर्वाचार्यपरिगृहीतमेव रसलक्षणमनुक्रम्यते।

लोके नायकनायिकादिरूपैरालम्बनकारणैरुत्पादितः स्रक्चन्दनचन्द्रिकादिभि[157]रुद्दीपनकारणैः संवर्धितः कटाक्षभुजाक्षेपादिभिः कार्यैः[158] प्रतीतिपदवीं नीतश्चिन्ता[159]निर्वेदादिभिः सहकारिभिः परां काष्ठां प्रापितः, अयमस्यां रतिमान् तदुचितकारणयोगित्वाद् य एवं स एवं यथा वयम्[160] इत्येवंरूपानुमानेऽभ्यासपाटववतां श्रोत्रियब्रह्मचर्यादिव्य[161]तिरिक्तानां काव्ये गुणालङ्का[162]रमहिम्ना[163] नाट्ये चतुर्विधाभिनयमहिम्ना तैरेव कारणादिभिः कारणत्वादि[164]रूपपरिहारेणालौकिकविभावनादिव्यापारवत्त्वाद् अलौकिकविभावादिपदव्यपदेश्यैः[165] 'ममैवैते शत्रोरेवैते तटस्थस्यैवैते न ममैवैते न शत्रोरेवैते न तटस्थस्यैवैते' इति सम्बन्ध[166]विशेषस्वीकारपरिहार[167]नियमानवसायात् साधारण्येन प्रतीतैरभिव्यक्तः सामाजिकानां हृदये वासनात्मतया चिरादवस्थितो रत्यादिः स्थायी प्रतिनियतप्रमातृनिष्ठोऽपि सर्वसाधारणकाव्य[168]नाट्या[169]द्यनुसन्धानसामर्थ्यसम्पन्नालौकिकसर्वसाधारणविभावनादि-

व्यापाररूपकारणबलात्[170] प्रमातृविशेषसम्बन्धपरिहारेण प्रमातृमात्र-साधारण्येन सकलहृदय[171]संवादभाजा तत्कालप्रमुषितवेद्यान्तरसम्पर्केण प्रमात्रा स्वाकार इवाभिन्नोऽपि गोचरीकृतश्चर्व्यमाणतैकप्राणो विभावादिजीविता-वधिर्विभावादिनानापदार्थमिलितोऽपि पानकरसन्यायादैकध्येन चर्व्यमाणः पुरः[172] परिस्फुरन्निव हृदयं प्रविशन्निव सर्वाङ्गान्यालिङ्ग[173]न्निवान्यत्सर्वं तिरोदधद्[174] ब्रह्मानन्दास्वादं सम्पादयन्निवालौकिकचमत्कारकारी रस इत्युच्यते।

अत्र प्रमातृमात्रसाधारण्येन साक्षात्करणं न युक्तिमात्रात्[175]। अपि तु सकलहृ[176]दयसाक्षिकमपीति ज्ञापयितुं सकलहृदयसंवादभाजेति विशेषणम्। साधारणप्रतीतिकत्वादेव प्रतिनियतप्रमातृनिष्ठतया प्रतीयमानाल्लौकिक-सुखाद् वैलक्षण्येन रसस्यालौकिकत्वमुक्तं भवति। ब्रह्मानन्दास्वादं सम्पादयन्निवे[177]त्यनेन तस्य ब्रह्मानन्दरूपत्वमुक्तं भवति। 'रसो वै सः' (तै० उ० आनन्दवल्ली) इति श्रुतेः। तस्यालौकिकत्वे चर्व्यमाणतैकप्राण इति हेत्वन्तरम्। अनुभवैकरस[178] इत्यर्थः। अनुभवस्य स्वप्रकाशत्वात्[179] तदभिन्नस्य रसस्यापि स्वप्रकाशतयाऽलौकिकत्वसिद्धिरिति भावः।

ननु सर्वं सुखमीदृशमेव, ज्ञाततैकरसत्वात्। एतावता कथ-मलौकिकत्वमिति चेत्, उच्यते। यथा योगिनां नित्यसिद्धोऽपि ब्रह्मानन्दो विजातीयप्रत्यया[180]तिरस्कृतमूर्तौ सजातीयज्ञानसन्ताने[181] धारावाहिनि सति स्वयमेव प्रकाशते न[182] प्रागूर्ध्वञ्च, तथा रसोऽपि नित्यसिद्धानन्दात्मा[183] काव्यार्था[184]नुसन्धानचतुरचेतसां व्यञ्जक[185]व्यापारसहकृतान्तःकरण-वृत्तिनिरस्तावरणतया विगलितवेद्यान्तरवत्त्वेन स्वयमेव भासते। न चैवं लौकिकसुखमिति कथं ना[186]लौकिकत्वम्?

विभावादिजीविता[187]वधिरिति। विभावादिसमसमय[188]वृत्तिरित्यर्थः। अनेन विशेषणद्वयेन रसस्य विभावादिभिरकार्यत्वमज्ञाप्यत्वं चोक्तं भवति। कारकज्ञापककोटिबहिर्भूतविभावादिनिष्पाद्यत्वमस्य विरुद्धमिति चेत्, न, तस्यालौकिकत्वादेव विरोधगन्धस्याप्यस्फुरणात्। ननूत्पत्ति[189]ज्ञप्त्यनुप-योगिनो विभावादेः कुत्र हेतुत्वमिति चेत्[190], ब्रह्मणि वेदान्तानामावरणभञ्जन

इव विभावादीनां तत्र[191] चर्वणमात्रे[192] उपयोग[193] इत्यवेहि। तथा हि-विभावादिगतव्यञ्जनव्यापाराख्यालौकिकमहा[194]सहायलब्ध[195]बलान्तः-करण[196]वृत्तिविशेषनिरस्त[197]समस्तावरणस्यात्मानन्दसागरस्यैव रसपदव्यपदे-[198]श्यस्य लोकोत्तरचमत्कारकारिणः[199] सकललौकिकप्रमाणनिरपेक्षः स्वयंप्रकाशात्मा[200] विगलितवेद्यान्तरस्फुरणविशेषश्चर्वणं स्वादनमिति चाख्यायते। तन्मात्रोपयोगाद् विभावादीनां हेतुतानिर्वाहः। अत एवैतेषां[201] व्यञ्जकत्वं, व्यङ्ग्यत्वं च रसस्येति सर्वमलौकिकमेव। अतो[202] न किञ्चिदसमञ्जसम्।

आगन्तुकचर्वणमपर्यालोच्यैव भट्टलोल्लटादिभिरुत्पत्त्यादिपक्षा उत्प्रेक्षिताः।

विभावादिनानापदार्थमिलित इत्यनेन विभावादिपरामर्शप्रधानत्वाद् रसानुभवो न निर्विकल्पक इत्युक्तं भवति। ऐकध्येन चर्व्यमाण इत्युक्त्या चर्व्यमाणालौकिकानन्दमयस्य तस्य स्वसंवेदनसिद्धत्वान्न[203] सविकल्प-को[204]ऽपीत्युक्तं[205] भवति। उभयाभावरूपस्य चोभयात्मत्व[206]मपि पूर्ववल्लोकोत्तरतामेवावगमयति, न विरोधमावहति। तथा चोक्तम्-

**यो लौकिकोऽप्यतिजनः कारकसिद्धोऽप्यकार्यभूतश्च।**
**सविकल्पोऽप्यविकल्पस्स रसः केनोपमीयेत।। 11।।**

इति[207]। लोकविदितत्वाल्लौकिकः। तत्र विदित इत्यर्थे[208] लोकसर्वलोकाभ्यां ठञ्।

लोकोत्तरसहृदयैकवेद्यत्वाद् अलौकिकश्च। विभावादिशब्दव्यपदेश्य-कारणसाध्यत्वात् कारक[209]सिद्धः[210]। तैरभिव्यज्यते न तूत्पाद्यत इत्यकार्यभूतश्च। विभावादिविशेषणविशिष्टत्वात् सविकल्पः। तथापि स्वसंवेद्यत्वाद् अविकल्प इत्यप्रति[211]मोऽयमित्यर्थः।

ननु किं विभावादीनां व्यञ्जकत्वकल्पना[212]निर्बन्धेन सामान्यवाचिना रसपदेन विशेषवाचिना शृङ्गारादिपदेन वा रसोऽभिधीयतामिति चेत्, मैवम्। शतकृत्वस्तदुभयपदप्रयोगेऽपि काव्यार्थानुसन्धानशून्यानां रसप्रादुर्भावा-

भावात्। प्रत्युत विभावादि(पद)प्रयोगे रसशृङ्गारादिपदाप्रयोगेऽपि[213] रसाभिव्यक्तेः[214]। अतोऽन्वयव्यतिरेकयोर्विभावादिमात्रपर्यवसितत्वात् तस्यैव[215] व्यञ्जकत्वपक्षः सरसानां मनसे[216] रोचते।

ननु तर्हि[217] शृङ्गारादिपदानां निरर्थकत्वमापद्येत, तेषां[218] रसाभिधायकत्वनिषेधादिति चेत्, न हि वयं तेषां घटादिशब्दवत् समयबलेनार्थावबोधकत्वं निषेधामः। न हि परोक्षरसप्रतीतिरपि तेभ्यो निषिध्यते। किं तर्हि काव्यार्थानुसन्धानसमनन्तरभाविनी ब्रह्मानन्दास्वादसोदरी[219] येयं नित्यापरोक्ष[220]ब्रह्मानन्दप्रकाशात्मिका प्रतीतिस्तस्या एवायमभिधावृत्ति[221]-विषयतानिषेध इति सन्तोष्टव्यम्।

किञ्चेयमीदृशी रसप्रतीतिर्न केनाप्यपह्नोतुं शक्यते। काव्यार्था[222]नुसन्धाननिपुण[223]सरस[224]तरचेतसां समुन्मेषादिति द्योतयितुं पुरः[225] परिस्फुरन्नित्यादिविशेषणकदम्बकम्। विभावादीनां संयोगाद् व्यङ्ग्यव्यञ्जकभावलक्षणात् सम्बन्धाद् रसस्य निष्पत्तिरभिव्यक्तिरिति सूत्राक्षरयोजनाऽत्र। विभावानुभावव्यभिचारिणां तत्र तत्र रसश्लोकेषु केवलानामेव स्थिति[226]र्दृश्यते। तथापि तेषामसाधारणानां परस्पराविनाभावबलाद् अन्योन्याक्षेपकत्वे[227] सति नानैकान्तिकत्वमिति सूत्रे मिलितानां ग्रहणमिति बोद्धव्यम्।

अयमसंलक्ष्यक्रम एव रसः। विभावादिव्यज्यमानतया[228] क्रमस्य विद्यमानत्वेऽपि रसास्वादातिशयमहिम्ना तस्यासंलक्ष्यमाणत्वात्।

**रसनवकत्वसमर्थनम्**

ते च रसाः शृङ्गारादयः[229] पूर्वोद्दिष्टा नवैव। नन्वयं नियमो न सिद्ध्यति। तथा हि- रस्यते स्वाद्यत[230] इति व्युत्पत्त्या रसशब्दस्य सुखास्वाद[231]रूपशृङ्गा[232]र एवार्थो युक्तः, सुखस्यैवा[233]स्वाद्यत्वात्। इतरेषां तु[234] सुखास्वाद[235]रहितानां प्रत्युतानवधिकदुःखानुभवसम्भिन्नानां करुणादीनां रसशब्दार्थतैव न घटते इत्यभिप्रायेण शृङ्गारप्रकाशे (शृ० प्र० प्रथमस्तबकारम्भे, श्लो० 4-5) भोजराजो व्याजहार-

वीराद्भुतादिषु रसेषु[236] रसप्रसिद्धि-
स्सिद्धा कुतोऽपि वट[237]यक्षवदाविभाति[238]।
लोके गतानुगतिकत्ववशादुपेता-
मेतां निवर्तयितुमेष परिश्रमो नः।। 12।।
शृङ्गारवीरकरुणाद्भुतहास्यरौद्र-
बीभत्सवत्सलभयानकशान्तनाम्नः।
आम्नासिषुर्दश रसानपरे वयं तु
शृङ्गारमेव रसनाद्रसमामनामः।। 13।।

इति[239]। अन्ये तु

न[240] शान्तं मेनिरे रसम्।। 14।।

इति प्रमाणयन्तोऽष्टानेव रसानभिप्रेत्याहुः-

रागद्वेषविलाससम्भृतरसं विश्वं जगच्चेष्टते
तावेतौ सुतरामनादिसुमहा[241]कालप्रवाहोल्बणौ।
नैकोऽपि क्षमते पुमांस्तदनयोरामूलमुन्मूलने
तेनात्यन्तपरीक्षणे तु[242] भुवने का नाम शान्तेः कथा।। 15।।

अपि च-

यदि नवमतया शमो मतस्स्यात्किमिति मुनिस्स च नाललक्षदेनम्।
अपि परिगणयन् रसेषु भावान् रतिमुखरानललङ्घदस्य[243] किं वा।। 16।।

इति। इह स्थायिनोऽपरिगणनमुपलक्षणं विभावानुभावव्यभिचारिणामप्रदर्शनाच्च[244]। तेन[245] न शान्तो रस इति[246]। अपरे तु वत्सलेन सह[247] दशरसानुररी[248]कुर्वते (सा० द० 3-251, पृ० 186)। परे[249] पुनः स्नेहभक्तिभ्यां द्वादशरसानवतिष्ठन्ते[250]। ततो[251] नवैवेति नियमो न सिध्यतीति[252]। अत्रोच्यते- न तावद्भोजराजपक्षश्शोभते[253]। काव्यनिबद्धविभावादिमहिम्ना लोकोत्तरभावकत्व[254]व्यापारेण सर्वोऽपि हि स्थायी तदानीमानन्दात्मकतयैव समुल्लसति। उक्तं हि-

विलसति[255] सुखस्वरूपं विगलितवेद्यान्तरत्वमेव पुनः।
यदि नाम तदिदमास्ते करुणादावपि कुतो न रसः।। 17।।

इति। अयं भावः – विगलितवेद्यान्तरत्वमानन्दस्य स्वरूप-[256] मित्यविवादम्[257]। तत्करुणादावस्ति[258] वा[259] न वा। न चेत् तत्र कथं विभावादिसामग्री। अस्ति चेत् कथमानन्दप्रादुर्भावेऽपि न[260] रसरूपता। अथ यदि वेद्यान्तरविगलनस्यैवानन्दरूपतायां विवादस्तत्कथं शृङ्गारस्यापि रसरूपतासमर्थनम्। तस्य[261] विप्रलम्भात्मकप्रभेदस्य कलयाप्यानन्दप्रादु-र्भावस्यैवाभावात्[262]। मदुक्तविधायां च विवादात् शृङ्गारमात्रश्रद्धालोरपि तस्यार्थहानिस्स्यादिति दुरुत्तरं[263] व्यसनं स्यात्। तस्माद् विभावादिमहिम्ना वेद्यान्तरन्यक्कारेण चेतोनिरतिशयपारवश्यलक्षणस्य[264] आनन्दप्रादुर्भावस्य[265] विप्रलम्भे सत्त्वाङ्गीकारेणैव[266] रसत्वस्य प्रसाधनीयत्वात्[267] तयैव रीत्या करुणादीनामपि रसत्वमकामेनाप्युररीकरणीयम्[268]। किञ्च यदि करुणादौ नानन्दोन्मेषः[269] कथं तर्हि सामाजिकानां करुणादिरसप्रधानप्रबन्धाभिन-यानन्तरमेतावन्तं कालं महान्तमानन्दमन्वभूम इत्यानन्दात्मताप्रतिसन्धानं[270], कथञ्च[271] पुनरपि तत्र[272] प्रवृत्तिरपि[273]। यद्यपि सर्वत्र न शान्तिसम्भवः, तथापि शमदमादिसम्पन्नेषु नित्यनैमित्तिककर्मानुष्ठाननिर्मलीकृतस्वान्तेषु श्रवणादिनिरतेषु पण्डितेषु[274] सम्भवत्येव शान्तो नाम रसः। न चास्य स्थायिनोऽपरिगणनम्। स्थायिव्यभिचारिमध्यपाठादेव निर्वेदस्योभयरूपता स्वीकृतेति मुनेरभिसन्धेर्ज्ञायमानत्वात्।

न स्थायिव्यभिचारिते यदि पुनश्चित्ते मुनेस्सम्मते
निर्वेदस्य निरूप्य तान्प्रतिमुखानष्टावपि स्थायिनः।
तेषूद्देश्यतया[275] स्थितेषु बहुशो भावेषु सञ्चारिणां
नित्यामङ्गलमुद्दिशेत्[276]कथमसौ निर्वेदमेवादितः।। 18।।

अस्य च विभावो भवभङ्गुरत्वादिभावना। रोमाञ्चलोचननिमीलनादि-रनुभावः। मतिस्मृतिधृत्यादयो व्यभिचारिणः। किञ्च जुगुप्साविस्मयशमा-स्स्थायिभावाः।। 19।। इति वचनानुरोधाच्छम[277] एवास्य स्थायी भवतु[278]।

केचिदुत्साह[279]स्थायिनमाहुः। कोहलस्तु[280] उत्साहो वा निर्वेदो वा[281] शमो वास्य स्थायीत्युवाच। केचिज्जुगुप्सास्थायिनमेनमाहुः[282]। तदसङ्गतम्। रसानां प्रतिनियतस्थायित्वनियमात्।

ननु सर्वव्यापारोपरमरूपस्य तस्याभिनयप्रधानेषु नाट्यप्रबन्धेषु कथमुपयोग इति चेत्, मैवम्। न हि वयं नाट्यप्रबन्धेष्वपि शान्तरस[283]-प्रचारमाद्रियामहे; किन्तु वर्णनात्मककाव्यभेदे[284]ष्वेव। अत एव-

**अष्टौ नाट्ये रसाः स्मृताः।। 20।। (का० प्र० 4-29)**

इति काव्यप्रकाशकारः[285]। भरतमुनिना तदसङ्कीर्तनं तु नाभावाभिप्रायेण; किन्तु न सार्वत्रिकलोकयात्रोपयोगितेत्यभिसन्धिना।

ननु सूत्रकारैः कण्ठतोऽनुपात्तस्य निर्वेदस्य स्थायिताकल्पनमतिसाहस-मिति चेत्, मैवम्[286]। सूत्रकृतां सर्वेषामेवाय[287] स्वभावो यद्यत्नेन किञ्चित् सूचयन्ति। यथा कणादो[288] रूपादीन् कतिचिद्गुणान् कण्ठतो[289] निरूप्य[290] पश्चात् शब्देन सप्त[291] गुरुत्वादीनसूचयत्। तस्मादस्ति नवमो रसः शान्तः।

ननु पित्रादेः पुत्रादौ प्रीतिस्थायिको वत्सलो नाम रसस्सकलजन-साक्षिकः, मित्रादिष्वार्द्रतास्थायिकः स्नेहोऽपि रसः, सेवकानां सेव्य-गुरुदेवतादिगोचरस्तात्पर्यस्थायिको[292] भक्तिनामा[293] रसश्चास्तीति चेत्, उच्यते। रतिर्हि[294] कामिनीविषया विभावादिसमुल्लसिता शृङ्गाररसतामापद्यते। सैव देवतागुरुनृपपुत्रमित्रविषया चेत् भावशब्दभागिनी[295] भवति। एवं व्यवस्थापिते वत्सलस्नेहभक्तीनां रतिभावान्तर्भूतानामेव[296] विषयभेदमात्राद् भेदव्यपदेशान्न रसभूमिकाविन्यासेन[297] रसनवत्वविघटनपटुता। इममेवा[298]-भिसन्धायाह काव्यप्रकाशकारः-

**रतिर्देवादिविषया व्यभिचारी तथाञ्जितः।**

**भावः प्रोक्तः------।। 21।। (का० प्र० 4-35)**

इति। अतो निर्व्यूढं नवैव रसा इति।

रसानां मिथस्स्नेहविरोधा उच्यन्ते-

अथैतेषां मिथस्स्नेहविरोधानाह[299] -

विकासविस्तरक्षोभविक्षेपाख्या[300]श्चतुर्विधाः।
जायन्ते चेतसो धर्मा विभावादिसमागमे।। 22।।
विकासः कुसुमस्येव पादपस्येव विस्तरः[301]।
चेतसोऽब्धेरिव क्षोभो विक्षेपो[302] मरुतो यथा।। 23।।
विकासमूलश्शृङ्गारो वीरो विस्तरमूलकः।
संक्षोभोपाधिको रौद्रो बीभत्सः क्षेपमूलकः।। 24।।
एतन्मूला हास्यचित्रभयानकदयाः क्रमात्।
शृङ्गारहास्ययोर्वीराद्भुतयो रौद्रभीमयोः।। 25।।
बीभत्सकृपयोर्मैत्री स्यादेकोपाधिकत्वतः।
रसौ शृङ्गारबीभत्सौ तथा वीरभयानकौ।। 26।।
रौद्राद्भुतौ तथा हास्यकरुणौ वैरिणौ मिथः।। 27।।

तत्र शृङ्गारवीररौद्राद्भुतानां लोकोत्तरनायकाश्रयत्वे[303]न परिपोषातिशयः[304]।

अत एव शृङ्गाररसस्य[305] म्लेच्छादिविषयत्वेनाभासत्वम्। उक्तं हि शृङ्गारतिलके-

एकत्रैवानुरागश्चेत्तिर्यङ्म्लेच्छगतोऽपि वा।
योषितो बहुसक्तिश्चेद्रसाभासस्त्रिधा मतः।। 28।। इति।

शृङ्गाररसनिरूपणम्

एषां नवानां रसानां रत्यादयो नव स्थायिभावाः। तत्र शृङ्गारस्य[306] रतिः स्थायिभावः। रतिः सम्भोगविषय इच्छाविशेषः। सैव विभा-वा[307]दिभिस्स्वादुतां नीता शृङ्गार इत्युच्यते। शृङ्गं प्राधान्यमियर्तीति शृङ्गारः। तत्प्राधान्यं ध्वनिकारेणोक्तम्-

शृङ्गार एव मधुरः परः प्रह्लादनो[308] रसः।
तन्मयं[309] काव्यमाश्रित्य माधुर्यं प्रतितिष्ठति।। 29।।
(ध्व० आ० 2-7)

इति। अत्रैवकारेण प्राधान्यमभिसंहितमिति लोचनकारः। स द्विविधः- सम्भोगो विप्रलम्भश्च। तत्र सम्भोगो रतिरहस्ये लक्षितः –

अनुकूलौ निषेवेते[310] यत्रान्योऽन्यं विलासिनौ।
दर्शनस्पर्शनादीनि[311] स सम्भोगो मुदान्वितः[312] ।। 30।।

इति। स सप्तावस्थः[313] । उक्तं हि[314] –

प्रेमाभिलाषो रागश्च स्नेहः प्रेम रतिस्तथा।
शृङ्गारश्चेति सम्भोगस्सप्तावस्थः प्रकीर्तितः।। 31।।

विवृतं चैतद्रसाकरे–

प्रेमा दिदृक्षा रम्येषु तच्चिन्ता त्वभिलाषकः[315]।
रागस्तत्सङ्गबुद्धिस्स्यात्स्नेहस्तत्प्रवणक्रिया।। 32।।
तद्वियोगासहं प्रेम रतिस्तत्सहवर्तनम्।
शृङ्गारस्तन्मयक्रीडा सम्भोगे सप्तधा[316] क्रमः।। 33।।

इति। स द्विविधः – संक्षिप्तो विस्तृतश्चेति[317]। तत्राद्यो भूपालेनोक्तः-

युवानौ यत्र संक्षिप्तां साध्वसव्रीडितादिभिः।
उपचारान्निषेवेते[318] स संक्षिप्त इतीरितः।। 34।।

(र० सु० 2-222)

इति। आद्यस्त्रिविधः, नवीनविरहमाना(न)न्तरजत्वभेदात्। विस्तृतोऽपि त्रिविधः- मध्यप्रवासशापानन्तरजत्वभेदात्[319]। तत्र नवीने रते[320] लज्जासाध्वससम्भवेन[321] विरहानन्तरभाविनि प्रणयमानसतया[322] माना-(न)न्तरभाविनि प्रणयेर्ष्यामानानुवृत्त्या च सम्भोगाङ्गानां कामशास्त्र-प्रतिपादितानामुपचाराणां संक्षेपात्संक्षिप्तः। तदतिरिक्तेषु मध्यमादिषु सम्भोगेषु प्रवासशापानन्तरभाविनोश्च[323] तद्विस्तराद्विस्तृतः[324]। तत्र नवीनो यथा–

पर्यायोन्नमितेन बाहुशिरसा प्रच्छन्नगण्डस्थली
हस्तस्वस्तिकसंवृतस्तनभरा[325] हस्ताग्ररुद्धाधरा।
यत्नात्तल्पमवापितापि शयिता सन्दानितोरुद्वयी[326]
सीता नूतनसङ्गतौ रघुपतेर्जातस्तथाप्युत्सवः।। 35।।

विरहानन्तरभावी यथा–

विलम्ब्य समयं किञ्चित्कान्ते[327] केलिगृहागते[328]।
स्मरव्यग्रतया सीता चक्रे किमपि चेष्टितम्।। 36।।

अत्र[329] स्मरव्यग्रतयेत्यनेन सम्भोगाङ्गानां व्यापाराणामभाव उक्तः। किमपीत्यनेन सहजप्रेमरमणीया केलिस्तदानीमतिमनोहरा[330] जातेति द्योत्यते। माना(न)न्तरजा यथा–

सख्या कौतुककल्पितागसि गते रामे समीपं प्रिया
वैमुख्यं परमागता[331] न तु जहौ[332] तस्यान्तिके सङ्गतिम्।
सा वाचंयमतां गताप्यचकलत्तच्चाटुवाचं स्वतो[333]
नाश्लेषप्रवणापि तत्कृतहठाश्लेषं न सावारयत्।। 37।।

अत्र कोपात् कतिपयोपचारसङ्कोचः। प्रेमातिशयाच्च सम्भोगोऽपीति[334]। तदेवं त्रिविधस्संक्षिप्तस्सम्भोगो वर्णितः।

अथ विस्तृतः। तत्र मध्यजो नाम नवीनविरहमानानन्तरजेभ्योऽन्योऽनन्तरकालभावी। यथा–

प्रौढालिङ्गनचुम्बनामितसुखप्रच्छन्नवेद्यान्तराः[335]
प्रायः क्लृप्तपरस्पराधरसुधापानप्रशान्तश्रमाः।
प्रान्ताकूणित[336]लोचनाः प्रतिमुहुः क्षामोक्तिसीत्कारिणः
सीताराघवयोस्समग्रविभवाश्शृङ्गारलीला बभुः।। 38।।

अयं सर्वोपचार[337]सम्पन्नत्वाद्[338] विस्तृतस्सम्भोगः। अयमेव प्रवासानन्तरं वर्ण्यमानः प्रवासानन्तरजो[339] भवतीति तस्यापीदमेवोदाहरणम्। शापा[340]नन्तरजस्त्वन्यत्र द्रष्टव्यः। वात्स्यायनेनास्य[341] द्विविधस्यापि प्रकारान्तरेण द्वैविध्यमुक्तम्–

बाह्यमाभ्यन्तरश्चेति द्विविधं रतमुच्यते।
तत्राद्यं चुम्बनाश्लेषनखदन्तक्षतादिकम्।। 39।।
द्वितीयं तु [342]रतं साक्षान्नानाकरणकं मतम्।। 40।।

करणानि धैनुकादिबन्धविशेषाः। अथ कतिचन क्रीडाविशेषान् दर्शयति–

बिभ्राणाः परिवादिनीः कुचभरोत्सङ्गे[343] कुरङ्गीदृशः
शश्वद्दर्शितबाहुमूलसुषमं तन्त्रीस्स्पृशन्त्यो नखैः।
मन्दस्पन्दितकुण्डलालकभरा माधुर्यधुर्यस्वराः
किञ्चित्कुञ्चितलोचना मृदुपदैर्गायन्ति सीतापतिम्।। 41।।

युगपदुभयपार्श्वे योजितौ कन्दुकौ द्वा-
वुपरि भुवि च वेगादुत्पतन्तौ[344] पतन्तौ।
करकमलतलाभ्यां[345] कौशलाद्[346] घट्टयन्ती
कलयति कमलाक्षी कौतुकं कोसलेन्दोः।। 42।।

स्वेदाम्भोपनयच्छलात्कुचभरं रागान्मुहुस्संस्पृशन्
फूत्कारोपधिना परागपिहिते प्रायेण चुम्बन्दृशौ।
श्लिष्यन्नुद्गहनच्छलात्प्रतिमुहुः प्रांशुप्रसूनाप्तये
कान्ताभिः कुसुमापचायमकरोद्रामो वसन्ते वने।। 43।।

कर्पूररेणुसिकताकमनीयगर्भे पन्नीरशीतलशिलातलपुष्पतल्पे।
केलीमुशीरदलकल्पित[347]कायमाने धारागृहे रघुपतिर्विदधे निदाघे।। 44।।

नीपे[348] प्राप्तावलेपे स्फुटति न कुटजे सुप्रवृद्धे च लोध्रे
कन्दल्यां क्रीडदल्यां विरचित[349]कुसुमोपार्जनेष्वर्जुनेषु।
धाराले ऽभ्रान्तराले सतमसि दिवसे गर्जिते स्फूर्जिते ऽसौ
रामो[350] रेमे[351] सरामो नभसि शुभसितोत्सेधवत्[352]सौधगर्भे।। 45।।

चापैः पुण्ड्रेक्षुरूपैः कमलकुवलयोत्फुल्लगल्लीक्षुरप्रै-
र्दीप्तैर्दृप्तैश्च सप्तच्छदमधुमदवद्गन्धवाहद्विपेन्द्रैः।
निर्बाधैर्हंसयोधैश्शरदुपनमितैर्जैत्रयात्राप्रवृत्तः[353]
काम[354]स्सङ्ग्रामकामो युवतिपरिजनो रामम[355]भ्याजगाम।। 46।।

नवतरुणिमसञ्चितोष्म[356]गर्भं मृगमदसङ्कु[357]मदाञ्चिताङ्गरागम्।
कुचभरशयनं कलावतीनां हिमशिशिरोपगमे ऽध्यशेत रामः।। 47।।

अत्र कलावतीनामिति बहुवचनं पुराणान्तरापेक्षयैकपत्नीकत्वे ऽपि शापाद्बहुत्ववत्त्वात् ज्ञेयम्[358]। एवं सम्भोगं सप्रपञ्चं निरूप्य सम्प्रति विप्रलम्भं निरूपयितुकामस्तस्य करुणाद् भेदं वक्तुं तदभेदमाशङ्कते।

ननु निर्वेदग्लानिदैन्यादिबहुतरभावसाधारण्येन विप्रलम्भस्य करुणा-त्कथं भेद इति[359] चेत्, मैवम्। यतो[360] विप्रलम्भस्य कालान्तरभावि-सम्भोगाकांक्षावतः कालत्रयेऽपि तदाकांक्षाशून्यात् करुणाद् अस्त्येव भेदः।

स हि अयोग-विरह-मान-प्रवास-शापहेतुकतया पञ्चविधः। अयोगो योगप्रागभावः। विरहो योगध्वंसः। इतरे त्रयोऽप्यस्यैव भेदाः। तत्रायोग एव हि रतिर्दशावस्थावतः[361] क्रमादुपचीयते[362]।

**चक्षुःप्रीत्यादिदशावस्थाविवरणम्**

काः पुनरवस्थाः-

दृङ्मनस्सङ्गसङ्कल्पा( ल्पो ) जागरः कृशतारतिः।
ह्रीत्यागोन्मादसम्मोहा मरणं च दशा दश।। 48।।

दृक्सङ्गो नामादरनिरीक्षणम्। यथा-

लज्जारागवशंवदां सखि[363] दलन्नीलोत्पलस्पर्धिनीं[364]
रामे पश्य गतागतं विदधतीमस्याः कटाक्षावलिम्[365]।
कर्णोत्तंसितचम्पकाम्बुजदलत्रासस्पृहाभ्यामियं
यातायातविधायिनी मधुकरश्रेणी किमुज्जृम्भते।। 49।।

मनस्सङ्गस्तदेकप्रवणता। यथा-

अन्यद्विधेयमपरत्र सखीं नियुङ्क्ते
वक्तव्यमन्यदपरं वचनं ब्रवीति।
आलोकते प्रियसखीं न तु निश्चिनोति
रामैकतानहृदया सखि सम्प्रतीयम्।। 50।।

सङ्कल्पो यथा[366]-

कंढे घेत्तूण संअं परिरंहमहूसवो कआ हवि आ।
अहररसपाणसोख्खं मह होज्ज[367] कआ[368] णु रामस्स।। 51।।

छा० कण्ठे गृहीत्वा स्वयं परिरम्भमहोत्सवः कदा भविता।
अधररसपानसौख्यं मम भवेत्कदा[369] नु रामस्य।। 52।।

**अथ जागरः**[370] –

मदनेन चित्तसदनेन सन्ततोज्झितपत्रिपत्रपवनैरिवायतैः[371] ।
श्वसितैर्हताधरमपास्य शोणिमा किमु जानकीनयनयोरजृम्भत ।। 53 ।।

अत्र नयनरागेण जागरो गम्यते। यथा वा ममैव प्राकृतभाषाविरचिते हंससन्देशे–

जाअं सीआणअणजुअलं लोहिअं जाअरावा[372]
किं वा तम्मं मअणदहणज्जालजालाहिदावा[373] ।
चित्तारद्धे सुरअविहए चुंबणाणं पहेदे[374]
रत्तं किं वा[375] रहुपइमुहे वीडिआराअजोआ ।। 54 ।।

छा० जातं सीतानयनयुगलं लोहितं जागराद्वा
किं वा ताम्रं मदनदहनज्वालजालाभितापात्[376] ।
चित्तारब्धे सुरतविभवे चुम्बनानां प्रभेदे
रक्तं किं वा[377] रघुपतिमुखे वीटिकारागयोगात् ।। 55 ।।

**अवयवसान्द्रः कृशता। यथा–**

किं पञ्चबाणशरवर्षणवारणाय[378]
[379]नूनं वियोगदहनज्वरशान्तये वा।
नाभीसरस्तटकुचार्चलमूलभाजो[380]
मध्यस्य मूर्तिमखिलाङ्गमधान्मृगाक्ष्याः[381] ।। 56 ।।

यथा वा–

सूक्ष्मलक्ष्यदलने न कौशली काम इत्यवनिजा विचिन्त्य वा।
राममानसविविक्षयाऽथवा[382] सा तनुं तनुमगाद्वियोगिनी ।। 57 ।।

**अरतिः प्रियवस्तुद्वेषः**[383] । **यथा–**

पाणौ न केलिकुररीमुररीकरोति
नालोकते प्रियमरालमरालकेशी।
विन्यस्य सा करसरोजमुरोजभागे
बाला विचिन्तयति राम भवन्तमेव ।। 58 ।।

**ह्रीत्यागो यथा–**

नवीनसङ्गे नलिनेक्षणानां विस्रम्भसम्भोगविहारविघ्नम्।
मत्वेव लज्जां महिला विहाय त्वां राम गन्तुं त्वरयाभ्युपैति।। 59।।

**उन्मादो यथा–**

आरादवेक्ष्यामृतभानुबिम्बं राम त्वदीयाननविभ्रमेण।
समग्रहर्षा स्फुरदोष्ठबिम्बा सा चुम्बितुं धावति सारसाक्षी।। 60।।

**सम्मोहो यथा–**

रहुवर तंतीसद्दं पाऊण मणोहरं वि सोत्तेण।
मिञ्चुहसितं मणंति सम्मोहं जाइ स विओआन्ता।। 61।।

छा० रघुवर तन्त्रीशब्दं पीत्वा मनोहरमपि श्रोत्रेण।
मृत्युहसितं मन्वाना सम्मोहं याति सा वियोगार्ता।। 62।।

प्रियसङ्गमस्य सर्वथा दुर्लभत्वे प्राणत्यागोद्योगो मरणम्। तस्या-मङ्गलत्वाद्[384]रसविघाताच्च साक्षादवर्णनीयता[385]। यथा–

साशोकचूतकलिकानवमल्लिकाब्ज[386]-
नीलोत्पलप्रभृतिकामशराग्निशय्याम्।
आलिङ्गितुं रघुपते यतते त्वदुग्र-
विश्लेषवह्निहतजीवनहानबुद्ध्या।। 63।।

एकदेशस्थयोर्यूनोर्मध्ये यूनि केनचिन्निमित्तेन विलम्बमाने[387] नायि-कायास्सन्तापो विरह इति कथ्यते। अत्र[388] नायिका विरहोत्कण्ठितेति गम्यते। विरहोत्[389]कण्ठितास्वरूपोदाहरणमेवात्रानुसन्धेयम्। मानजो मानद्वैविध्याद् द्विविधो भवति। मानद्वैविध्यं नाटकसञ्जीवने[390] कथितम्–

अपराधभवः कोपो यूनोर्मान उदाहृतः।
स च प्रणयमानस्स्यादीर्ष्यामान इति द्विधा।। 64।।
तत्र प्रणयमानस्स्यादन्योन्याज्ञातिलङ्घने।
रमणेन रमण्या वा कृतं तच्च द्विधा भवेत्[391] ।। 65।।

इति[392]। तत्र रमणकृतं यथा–

कन्दर्पोत्सवदर्शनाय भवता वेगात्समागम्यता[393]-
मित्यालीवचसोपसृत्य दयिते प्रच्छन्नवेषे स्थिते।
सीताया मुखमुद्यदिन्दुसुषमं पूर्वं कषायं रुषा
पश्चाद्वीक्ष्य तमुद्यतस्मित[394]मभूज्ज्योत्स्नाञ्चितेन्दुप्र[395]भम्।। 66।।

कर्तव्यः कमलेक्षणे मम शिखाबन्धस्त्वया सम्प्रती-
त्युक्त्वा भूमिसुता वधूसमुचितं धम्मिल्लबन्धं व्यधात्।
सभ्रूभङ्गमुखाम्बुजेऽथ[396] दयिते ज्ञात्वा शिखाविक्रियां
अन्तर्गुम्भित[397]हासभासुरमुखी जग्राह कण्ठं[398] स्वयम्।। 67।।

इदं रमणीकृतम्।

पत्यौ कोपो भवेन्मानो ज्ञातकान्तान्तरस्पृहे।। 68।।

यथा-

राजानो बहुवल्लभप्रकृतयो[399] रामस्तु नैवंविधः
सम्प्रत्येष सवेपथुः पुलकितो वैवर्ण्यवान्वर्तते।
भर्ता वास्तु यथा तथा विमुखता स्त्रीणां तु नो युज्यते
मुग्धेऽन्तर्जनुषः प्रसूनधनुषो माभूश्शरव्यं रुषः।। 69।।

मानस्य शान्त्युपायाः कतिचन कामशास्त्रे कथिताः[400]। उक्तं हि रतिरहस्ये-

मानस्य शान्त्युपायास्तु वैक्लव्यं भूविलेखनम्।
गद्गदाभाषणं बाष्पत्यागश्चरणवन्दनम्।। 70।।

यथा-

वहइ विवण्णं वअणं भूमिं विलिहइ सगग्गअं भणइ।
बाहं मुञ्चइ रामो पाअवअणं कुणइ जादु सहि कोपो।। 71।।

छा० वहति विवर्णं वदनं भूमिं विलिखति सगद्गदं भणति।
बाष्पं मुञ्चति रामः पादपतनं करोति यातु सखि कोपः।। 72।।

प्रवासविप्रलम्भश्च द्विविधः- भूतप्रवासजो भाविप्रवासजश्चेति। तत्राद्यस्योदाहरणं प्रागुक्तप्रोषितभर्तृकोदाहरणमेव द्रष्टव्यम्[401]। द्वितीयो यथा-

राम त्वत्तनुवीक्षणेषु विरहो जातो निमेषेण यो
यश्चैकाङ्गनिरीक्षया तदितराङ्गालोकने[402] निर्मितः।
तावेव प्रथमं कथञ्चिदपि सा सोढुं न शक्ताधुना
त्वं चेच्छत्रुजयाय गच्छसि तदा का वा भवित्री कथा।। 73।।

शापविप्रलम्भस्तु मेघसन्देशादौ द्रष्टव्यः। द्विविधस्याप्यस्य शृङ्गार-स्यानुगुणा व्यभिचारिभावाः शृङ्गारतिलके परिगणिताः[403]-

शङ्कासूया भयग्लानी व्याधि[404]श्चिन्ता स्मृतिर्धृतिः।
औत्सुक्यविस्मयावेगा निद्रोन्मादो मदस्तथा।। 74।।
विषादो जडता व्रीडाऽवहित्था चापलं मृतिः।
इति भावाः प्रयोक्तव्याश्शृङ्गारे व्यभिचारिणः।। 75।। इति।।
(शृ० ति० 3-42, 43)

हास्यरसनिरूपणम्

एवं तावत्सप्रपञ्चं शृङ्गारं निरूप्याधुना तत्कार्यं हास्यरसं निरूपयति। शृङ्गारहास्ययोः कार्यकारणभावश्शृङ्गारतिलके कथितः-

हास्यो भवति शृङ्गारात्करुणो रौद्रकर्मणः।
अद्भुतश्च तथा वीराद्बीभत्साच्च भयानकः।। 76।। इति।
(शृ० ति० 3-36)

हासो विकासो मनसो विकृताकारदर्शनात्।। 77।।

कुब्जवामनविकलाङ्गविदूषकादयः पुरुषाः स्त्रियश्चालम्बनविभावाः। असत्प्रलापश्रवणमपि विभाव एव[405]। ओष्ठविवरणदशनदर्शननासाकपोल-विकृतस्पन्दनदृगाकुञ्चनादयोऽनुभावाः। व्यभिचारिणस्तु-

श्रमश्चपलता निद्रा स्वप्नो ग्लानिस्तथैव च।
शङ्कासूयावहित्था च[406] हास्ये भावा[407] भवन्त्यमी।। 78।।
(शृ० ति० 3-44)

अयं स्मितादिभेदेन षड्विधः। उक्तं हि भारतीये-

स्मितमथ[408] हसितं विहसितमुपहसितं चापहसितमतिहसितम्।
द्वौ द्वौ भेदौ स्यातामुत्तममध्यमाधमाभिधप्रकृतौ[409]।। 79।।
(ना० शा० 6-53)

स्मितहसिते श्रेष्ठानां मध्यानां विहसितोपहसिते च।
अधमानामपहसितं तथातिहसितं च विज्ञेयम्।। 80।।
ईषद्विकसितैर्गण्डैः कटाक्षैस्सौष्ठवान्वितैः।
अलक्ष्यदशनं[410] धीरमुत्तमानां स्मितं भवेत्।। 81।।
उत्फुल्लाननेत्रं तु गण्डैर्विकसितैरथ।
किञ्चिल्लक्षितदन्ताग्रं हसितं तद्विधीयते।। 82।।
एतद्द्वयमुत्तमस्वभावानाम्।
आकुञ्चिताक्षिगण्डं यत्सुस्वरं मधुरं तथा।
कालागतं सास्यरागं तद्वै विहसितं भवेत्।। 83।।
उत्फुल्लनासिकं यच्च जिह्मदृष्टिनिरीक्षणम्।
निकुञ्चिताङ्गकशिरस्तथोपहसितं भवेत्।। 84।।
एतद्द्वयं मध्यमस्वभावानाम्।
अथापहसितं यत्तु सास्त्रनेत्रं तथैव च।
उत्कम्पिताङ्गकशिरस्त[411]च्चातिहसितं[412] भवेत्।। 85।।

एतद्द्वयमधमस्वभावानाम्। ते पुनरप्यङ्गवचननेपथ्यजन्यतया त्रिविधा भवन्ति। अत्र[413] दिङ्मात्रमुदाह्रियते--

रामस्य गोपुरमुदग्रशिलातलाभि-
घाताद्भिया झडि(टि)ति वामनकुब्जलोकाः।
आकुञ्चिताङ्ग[414]भुजशीर्षगलं विशन्तः
कुर्वन्ति हासमुपकण्ठजुषां जनानाम्।। 86।।

प्रथमं मधुरस्सम्भोगशृङ्गारो[415] निरूपितः। तदनन्तरं मधुरतरो विप्रलम्भः। ततो मधुरतमः करुणो निरूपणीयः (ध्व० आ० 2-8)। अत्रान्तरे प्रसङ्गाच्छृङ्गाररससाध्यतया हास्यो निरूपितः।

करुणरसनिरूपणम्

अधुना प्रासङ्गिकं परिसमाप्य प्रकृतं मधुरतमं करुणं निरूपयति-
इष्टजननाशस्थानभ्रंशादि[416]विभावो[417] वक्षश्शिरोवदनताडनमही-

विलुण्ठनहाहाकारदैवोपालम्भाद्यनुभाव[418]: सकलसात्त्विकवान् निर्वेददैन्यालस्योन्मादव्याधिसुप्तिमोहभ्रमग्लानिचिन्तामरणचापलविषादजाड्यौत्सुक्यशङ्कास्मृत्यपस्मृतिव्यभिचारिकः शोकस्थायिक[419]: करुणः। यथा–

भेरीभूरिविजृम्भणं रघुपतेराकर्ण्य धाटीमुखे
वैरिक्षोणिभुजां विहाय नगराण्येकैकशो धावताम्।
दारा[420] निर्भरगर्भगाश्शिशुगणैर्व्याहन्यमानक्रमाः
क्रन्दन्तो[421] बत मज्जयन्ति करुणापूरे कपोतानपि।। 87।।

## रौद्ररसनिरूपणम्

एवं कार्यभूतकरुणनिरूपणानन्तरं तत्कारणं रौद्र[422] निरूपयति–

असुहृद्दर्शनाद्यालम्बनो घर्षणाधिक्षेपावधूननवञ्चनवाक्यपारुष्याभिद्रोहमात्सर्योद्दीपनः स्वेद–निर्भर्त्सन–भ्रूकुटिकपोलस्फुरणमुखराग–भुजोद्यमन–बाहुघट्टनाद्यनुभावः स्तम्भप्रलयातिरिक्त- सकलसात्त्विक[423]: क्रोधस्थायिको रौद्रः[424]। व्यभिचारिणस्तु[425] –

[426]हर्षासूये तथा गर्व उत्साहो मद एव च।
चापल्यमुग्रता चैव रौद्रे भावा भवन्त्यमी।। 88।।

यथा–

कुप्यत्कल्पान्तकालान्तकविवृतमुखोदग्रदंष्ट्रान्तराल–
त्वङ्गज्जिह्वोग्रखड्गं स्फुरदधरहनुभ्रूकुटीभीमवक्त्रम्।
रोषात्कर्षाकषायस्फुटविकटदृशं[427] स्फूर्जथुस्फूर्जदुग्र[428] –
क्ष्वेडाक्रीडत्प्रघोषं रघुपतिमसुरा वीक्ष्य दिक्षु द्रवन्ति।। 89।।

## वीररसनिरूपणम्

अथ कारणरसप्रस्तावाद् रौद्रानन्तरं वीररसं लक्षयति–

उत्साहस्स्याद्वीररसः कार्ये लोकोत्तरे महान्।। 90।।

अलोकसाधारणेषु दुर्जयशत्रुजयादिषु सातिशयः[429] प्रयत्न[430] उत्साहः। स एव विभावादिभिरभिव्यक्तो वीररसो भवति। अस्य चोत्तमप्रकृतिको रामादिः परमपुरुष आलम्बनविभावः। असम्मोहाध्यवसाय–नय–विनय–

बलपराक्रम-शक्ति-प्रताप-प्रभावादय उद्दीपन-विभावाः। असम्मोहाध्यव-सायो नाम युक्तायुक्तत्वनिर्णयपूर्वकः कार्यनिश्चयः। नयः सामादिप्रयोगः। विनयः जितेन्द्रियता। बलं शरीरम्। पराभिभवोद्योगे मानसः पराक्रमः। प्रभुमन्त्रोत्साहरूपा शक्तिः। प्रतापः शत्रूणां दुःखकारित्वम्। प्रभावस्तेजोऽधिक्षे-पाद्यसहिष्णुत्वम्। गाम्भीर्यादय आदिशब्दार्थः। स्थैर्य-धैर्य-शौर्यौदार्य-वैशारद्याक्षेपवाक्यादिभिरनुभावैर्नाट्येऽभिनेयः काव्ये वर्णनीयश्च।

व्यभिचारिणस्तु-

[431]अमर्षः प्रतिबोधश्च वितर्कोऽथ मतिर्धृतिः।
क्रोधासूयेऽथ सम्मोह आवेगश्चोपधर्षणम्[432]।
गर्वो मदस्तथोग्रत्वं भावा वीरे भवन्त्यमी।। 91।।

अत्र भरतवाक्यम् (ना० शा० 6-67, 68)-

[433]उत्साहाध्यवसायादविषादित्वादसम्मोहात्[434]।
विविधादर्थविशेषाद्वीररसो नाम सम्भवति।। 92।।
स्थितिर्वीर्यधैर्यशौर्यैरुत्साहैः प्रभावैः पराक्रमैः[435]।।
(रुत्साहपराक्रमप्रभावैश्च)
वाक्यैश्चाक्षेपकरैर्वीररसस्सम्यगभिनेयः।। 93।। इति।

अयं त्रिविधः- युद्धवीरो दानवीरो दयावीरश्चेति[436]। क्रमाद्यथा-

रे रे लङ्केश रामं किमिति मृगयसे तिष्ठ रे निष्ठुरा मे
प्रौढप्रायातिकायक्षतजरसझरैस्सम्यगाचम्य पूर्वम्।
नीत्वा प्राणाहुतीनां पदमतिकठिनानिन्द्रजित्प्राणवायून्
काण्डास्त्वत्कालखण्डाचलकवलविधौ[437] व्यग्रभावं[438] भजन्ते।।94।।

[439]अन्तर्लीनेन्द्रनीलोपलदलसुषमापङ्किले हारहीर-
स्फारांशूदारनीरे रुचिरमरकतस्फूर्तिशैवालजाले।
नानारत्नात्मकेलीगिरिविवरजुषि स्मेरकासारसारे
विद्वन्नारीविहारा विदधति विशदां राघवौदार्यलीलाम्।। 95।।

राम[440] एव दयावीरो नापरश्शरणागतम्।
काकासुरमरक्षद्यस्सापराधमपि[441] प्रभुः।। 96।।

**भयानकरसनिरूपणम्**

अथ वीरप्रति[442] भटभीरुत्वादिसम्भव[443]प्रस्तावाद् वीररसानन्तरं[444] भयानकरसं निरूपयति–

**रौद्रसन्दर्शनोद्भूत[445]मनर्थाशङ्कनं भयम्।**

**तदेव च रसीभावं प्रपन्नं स्याद्भयानकः।। 97।।**

शस्त्रास्त्रक्रूरदृष्टितर्जनादि–भीषणाकार–प्रतिभट–व्याघ्रादिविभावकं कम्पकातराक्षिविलोकना–क्रोशनाद्यनुभावकं भयमेव भयानकरसः। व्यभिचारिणस्तु[446] –

**सन्त्रासो मरणं दैन्यं ग्लानिश्चैव भयानके।। 98।।**

यथा–

सास्फोटान् समरोद्भटान्रघुपतेस्संवीक्ष्य धाटीभटान्

दिक्षु व्यापृतचक्षुषः क्लमजुषः क्षीणत्विषश्च द्विषः।

गाहन्ते गहनानि तेषु च समारोहन्ति पृथ्वीधरा[447] –

स्तत्रापि प्रविशन्ति दारुणदरीस्तत्रापि नाकूदरान्।। 99।।

**बीभत्सरसनिरूपणम्**

अथ भयानकनिरूपणानन्तरं तद्धेतुं बीभत्सं निरूप[448]यति–

**सा जुगुप्सैव बीभत्सो या मांसास्त्रादिदृष्टिजा।। 100।।**

अस्य मांसरक्तादि[449]रालम्बनविभावः। नासापिधानवैवर्ण्यवैमुख्यादि–रनुभावः। व्यभिचारिणस्तु[450] –

**अपस्मारो विषादश्च भयं रोगो मतिर्मदः।**

**मरणं चेति विज्ञेया भावा बीभत्ससम्भवाः[451] ।। 101।।**

स द्विविधः– क्षोभी चोद्वेगी चेति। रक्तमांसादिभिश्चेत् क्षोभी। पूयक्रिमिलालादिभिश्चेद् उद्वेगी। द्वयं यथा–

डाकिन्यः कौतुकिन्यः करिकरनिकरै रामसङ्ग्रामजातै–

र्निस्सङ्कोचाः पिशाचा गतरसतरसै[452]श्चास्रपूयैश्च[453] विस्रैः[454] ।

कूष्माण्डाः[455] कालखण्डाचलकुलगिलनाद्भूरि तृप्ताश्च दृप्ता
भेताला हस्ततालान्विदधति मुदिता मुक्तनक्तञ्चरान्त्राः।। 102।।

अद्भुतरसनिरूपणम्

अथाद्भुतं निरूपयति-

**विचित्रार्थे क्षणोद्भूतो हृद्विस्तारोऽद्भुतो रसः।। 103।।**

अस्य विचित्रवस्तुवीक्षणा[456]दिर्विभावः। कम्पनिर्निमेषतादिरनुभावः। व्यभिचारिणस्तु[457] -

**आवेगो जडता मोहोऽमर्षणं विस्मयस्स्मृतिः।**
**इति भावा निबद्धव्या रसज्ञैरद्भुते रसे।। 104।।**

यथा-

जेतव्यो राक्षसेन्द्रो द्विगुणदशभुजो मन्त्रिभृत्याश्च दैत्याः
पुत्रस्सुत्रामजैत्रस्सततरणकलासादरस्सोदरश्च।
स्वात्मा मर्त्यो द्विबाहुस्सचिवपरिजना भल्लुकाश्च[458] प्लवङ्गा
भ्राता च क्षीरकण्ठस्तदपि विजितवानद्भुतं रामभद्रः।। 105।।

यथा वा ममैव नाटके कंसवधे-

आरूढः कुरथं रजोन्धितदृशा सूतेन सञ्चोदितै-
रश्वैराशुविनश्वरैरयुगपत्प्रक्रान्तचक्रं द्रुतम्।
चापे हीनगुणे विप[459]त्त्रविशिखं सन्धाय निन्येऽद्भुतं
शूलोत्कम्पिकरो रथी विषमदृक्तिस्त्रः पुरः पञ्चताम्।। 106।।

अत्र[460] कुरथं भूरथम् अन्यत्र कुत्सितं रथमारूढ इति योजना। कुरथमित्यत्र कोर्न समासः। कुः पापार्थे आङीषदर्थ इत्यादिगणसूत्रेषु क्वादीनां पापाद्यर्थविशेषे नित्यसमासस्योक्तत्वात्। पापकुत्सेषदर्थानां कोरर्थत्वात्। अप्रकृते तु कुत्सार्थस्याभिप्रेतत्वात्तेन न कदादेशः।

शान्तरसनिरूपणम्

अथ चरमं शान्तरसं निरूपयति-

**दुःखद्वेषाद्यसम्बद्धो भावश्शान्तरसो मतः।। 107।।**

अस्य भवभङ्गुरतादयो विभावाः। पुण्याश्रमवास–पुलक–नयन–निर्निमेषतादयोऽनुभावाः। स्तम्भादयस्सकलास्सात्त्विकाः।[461] जुगुप्साधैर्य–मतिस्मृतिश्रमहर्षविबोधादयो व्यभिचारिणः। यथा–

श्रीरामबाहुशमितासुरविप्लवेषु पुण्याश्रमेषु मुनयः पुलकाप्लुताङ्गाः।
मोक्षाय मोहरहिता मुहुरामृशन्ति तद्धाम धीमयमनामयमादिमं यत्।। 108।।

**विभावानुभावादिस्वरूपनिरूपणम्**

एवं रसस्वरूपं सावान्तरभेदं सप्रपञ्चं निरूप्य सम्प्रति विभावादीनां लक्षणान्याह[462] –

**श्रुतेन वाथ दृष्टेन येन भावो विभाव्यते।**
**स विभावो द्विधालम्बनोद्दीपनविभेदवान्।। 109।।**

भावो रत्यादिर्निर्वेदादिश्च। विभाव्यते व्यक्तीक्रियते येन स[463] विभावनव्यापारयोगाद् विभाव इत्यर्थः।

**आलम्बनं तु रत्यादेर्विषयो नायकादिकः।[464]**
**उद्दीपनं तदुत्कर्षहेतुस्तच्च चतुर्विधम्।। 110।।**
**आलम्बनगुणश्चैव तच्चेष्टा तदलङ्कृतिः।**
**तटस्थाश्चेति[465] विज्ञेयाश्चतुर्थोद्दीपनक्रमाः[466][467] ।। 111।।**
**आलम्बनगुणो रूपयौवनादिरुदाहृतः।**
**तच्चेष्टा यौवनोद्भूतहावभावादिका मता[468] ।। 112।।**
**नूपुराङ्गदहारादि तदलङ्करणं[469] मतम्।**
**मलयानिलचन्द्राद्यास्तटस्थाः परिकीर्तिताः।। 113।।**

**तच्चेष्टास्तु[470]–**

**भावो हावश्च[471] हेला च माधुर्यं धैर्यमित्यपि।**
**लीला विलासो विच्छित्तिर्विभ्रमः किलिकिञ्चितम्।। 114।।**
**मोट्टायितं कुट्टमितं बिब्बोको ललितं तथा।**
**कुतूहलं च चकितं विकृतं[472] हास इत्यपि।। 115।।**

एवं शृङ्गारचेष्टास्स्युरष्टादशविधा मताः।
अनुभावो भवेत्सोऽयं भावो येनानुभाव्यते।। 116।।
कार्यभूतोऽनुभावस्स्यात्कटाक्षादिश्शरीरजः।
सुखदुःखसमावेशादन्तःकरणविप्लवः।। 117।।
सत्त्वमित्युच्यते प्राज्ञैस्तद्भावास्सात्त्विका मताः।। 118।।
ते च स्तम्भादयोऽष्टौ प्रागुक्ताः[473]।
एकत्रानियता भावाः कथ्यन्ते व्यभिचारिणः।
त एवान्यत्र सञ्चारात्सञ्चारिण इति स्मृताः।। 119।।
ते च निर्वेदादयः प्रागुक्ताः[474]। तत्र शृङ्गारस्य[475]आलम्बनविभावो यथा-
शरीरिणी शम्बरवैरिशक्तिश्शृङ्गारशृङ्गाटकमङ्गलाङ्गी।
विधेर्वधूनिर्मितिनैपुणैकलीला मुदे राम तवास्तु बाला।। 120।।
उद्दीपनविभावस्तद्‌गुणादिर्यथा-
मुग्धा गिरो विहसितानि सितानि हावा
भावाश्च मञ्जिमधुरा मधुरा मृगाक्ष्याः।
कन्दर्पवैभवपुषो[476] वपुषोऽपि शोभा
रामस्य मानसमुदं समुदञ्चयन्ति।। 121।।
अनुभावो यथा-
भ्रूवल्लरीं रतिपतेर्नवचापयष्टि-
माकुञ्च्य तत्र विनिवेश्य तदस्त्ररूपान्।
शृङ्गारभङ्गिरसनिर्मीलितानपाङ्गान्
लज्जालसान्रघुपतौ किरति[477] स्म बाला।। 122।।
अथ सात्त्विकविकाराणामेकैकशो लक्षणोदाहरणे[478] चाह-
स्तम्भस्स्यान्निष्क्रियाङ्गत्वं राग[479]भीत्यादिसम्भवम्।। 123।।
प्रलयस्सुखदुःखाद्यैर्बाढ[480]मिन्द्रियमूर्च्छनम्।। 124।।
द्वयं यथा-
शय्योपान्तगतेव भूमितनया चित्राङ्गनेवाचला
नीवीप्रान्तकुचस्पृशं प्रियकरं रोद्धुं कथं शक्नुयात्।

किञ्चास्यास्सकलेन्द्रियाण्यपि तदा सम्मोहमापेदिरे
स्वान्तस्थैर्यजुषि[481] प्रिये किमु लयं नीतानि चेतो भुवा।। 125।।
सुखाद्यतिशयाज्जाता रोमाञ्चो रोमविक्रिया।। 126।।
यथा–
आपुङ्खमग्नकन्दर्पपत्रिपत्रावलीमिव।
रामोत्सङ्गङ्गताङ्गेषु रोमाञ्चमवहद्वधूः।। 127।।
वपुर्जलोद्गमस्स्वेदो रतिघर्मश्रमादिभिः।। 128।।
रागरोषभयादिभ्यो वेपथुर्गात्रकम्पनम्।। 129।।
द्वयं यथा–
स्मरेषुपत्रानिलघट्टितेव प्रवेपमाना पुलकाप्लुताङ्गी[482]।
मुक्तामयी काञ्चनयन्त्रपुत्री यथा प्रियाङ्के विललास सीता।। 130।।
विषादमदहर्षादेर्वर्णान्यत्वं विवर्णता।। 131।।
यथा–
दट्ठूण सहि तवकेम्मि कवोले पांडुरत्तणं।
रामे धुह मणं सत्तं संपतां[483]रेसि कित्ति मं[484]।। 132।।
छा० दृष्ट्वा सखि तर्कयामि[485] कपोले पाण्डुरत्वम्।
रामे तव मनस्सक्तं सम्प्रतारयसि किमिति माम्।। 133।।
अश्रुनेत्रोद्भवं वारि दुःखरोषप्रहर्षजम्।। 134।।
यथा–
तमो निगरणत्रस्यन्मृगबाष्पाकुलेन्दुवत्।
अलक्ष्यत मुखं सास्रं रामविद्वेषियोषिताम्[486]।। 135।।
मतं गद्गदभाषित्वं वैस्वर्यं प्रमदादिजम्।। 136।।
यथा–
क्षामक्षामाक्षरालापा मुग्धाया मुखनिर्गताः।
अमूमुहुर्मुहू रामं मारमौर्वीरवा इव।। 137।।
इति। अथ निर्वेदादीनां व्यभिचारिभावानां लक्षणोदाहरणान्याह–
दुःखेर्ष्यातत्त्वबोधादेर्निर्वेदो निष्फलत्वधीः।। 138।।
ग्लानिर्बलस्यापचयशशङ्कानिष्टादिचिन्तनम्।। 139।।

श्रमः खेदोर्ध्वरत्यादेश्चेतसस्स्थैर्यं धृतिर्भवेत्।। 140।।

पञ्चानामुदाहरणानि–

व्यर्थास्सर्वोपचारा मलयजसलिलासेचनाद्याश्शरीरं

तस्याश्शुष्यच्छिरीषप्रतिभटमधुना लज्जया तच्च गूढम्।

यातायातैस्सखीनां गुरुरजनि तवाह्वान[487]जन्यः प्रयासो

राम ध्यानेन लब्धे त्वयि तु बत सखी चेतसस्स्थैर्यमेति।। 141।।

अत्र सेचनाद्या इत्यन्तेन निर्वेदो निबद्धः। ततोऽधुनेत्यन्तेन ग्लानिः। गूढमित्यनेन शङ्का। तृतीयपादे श्रमः। तुरीये धृतिरिति ज्ञेयम्[488]।।

जाड्यमप्रतिपत्तिस्स्यादिष्टानिष्टागमोद्भवा[489]।। 142।।

उत्सवाद्यैः प्रसक्तिर्या हर्षस्स्वेदादिकारणम्।। 143।।

द्वयं यथा–

समीक्ष्य रामं समराङ्गणस्थं न योद्धुकामा न च गन्तुकामाः।

क्षणं बभूवुः क्षणदाचरेन्द्राः प्रापुः प्रसादं परमं सुरेन्द्राः।। 144।।

सत्त्वत्यागादनौद्धत्यं दैन्यं कार्पण्यसम्भवम्।। 145।।

व्यक्तेऽपराधे चण्डत्वमुग्रता तर्जनादिकृत्।। 146।।

ध्यानमिष्टानधि[490]गमाच्चिन्ता शून्यत्वतापकृत्।। 147।।

त्रयं यथा[491]–

सन्त्रस्तानां भवति शरणं भूभृतां[492] वारिराशि-

स्त्रातास्माकं स हि वयमपि त्रस्नवो भूभृतस्स्मः।

रामः क्रोधादभिपतति नो चीक्ष्य किञ्चिद्व्यलीकं

सेनानीर्नागमदिह कथं सोऽपि भीतो[493] गतो हि।। 148।।

अत्र प्रथमार्धे दैन्यं निबद्धम्। उत्तरचरणयोरौग्र्यचिन्ते।

चित्तक्षोभं जगुस्त्रासमाकस्मिकभयोदितम्।। 149।।

यथा–

विषमायुधमालोक्य राघवं रक्षसां चमूः।

[494]कम्पस्विन्नचलन्मूर्तिर्भीरुभावमदर्शयत्।। 150।।

परोत्कर्षासहिष्णुत्वं प्राहुरीर्ष्यां मनीषिणः।। 151।।
अपराधिनि चित्तस्यामर्षः प्रज्वलनं भवेत्।। 152।।
आत्मोत्कर्षबलादन्यन्यक्कारो गर्व उच्यते।। 153।।
यथा–
न हि मत्तोऽधिका लक्ष्मीस्तस्यां तव कथं रतिः।
इति राघव बध्नाति भ्रुकुटीं त्वयि मे सखी।। 154।।
न चञ्चलाहं न च पङ्कजन्मगता न दोषाकरसोदरी च।
इति श्रियं न्यक्कुरुते सखी मे त्वं राम तस्यां न जहासि रागम्।।
155।।

अत्रादिमश्लोके ईर्ष्यामर्षौ निबद्धौ[495]। द्वितीये गर्व इति वेद्यम्।
स्मृतिः पूर्वानुभूतेर्धीर्मरणं स्यात्तदुद्यमः।। 156।।
यथा–
राम त्वया मम सखी ललितानि पूर्व–
माश्लेषचुम्बनमुखान्यनुभावितानि।
आलोच्य दुर्लभतराण्यधुना विहातुं
प्राणान्पटीरपवनाभिमुखं प्रयाति।। 157।।
मदिरादिकृतहर्षमोहयो[496]र्मेलनं मदः।। 158।।
यथा[497]–
शीधुपानविवशास्स्मरातुरा घूर्णमाननयनास्स्खलद्गिरः।
हर्षयन्ति सुरवारयोषितो रामसायकलताहताहितान्[498]।। 159।।
मनसो मीलनं निद्रा सुप्तिस्तस्याः प्रगाढता।
अवबोधश्चेतनायाः प्राप्तिर्जृम्भादिकारणम्।। 160।।
त्रयं यथा–
रघुपतिभुजोत्सङ्गे तुङ्गे निधाय निजं शिरः
सुरतविरतौ निद्रामुद्राक्षिणं[499] क्षणमागता।
सहितमथ तं स्वप्ने दृष्ट्वा कयाचन कान्तया
कृतविकृतसञ्जल्पा तल्पादहं त्वरितोत्थिता।। 161।।

स्वान्तसङ्कोचनं व्रीडा कामरागस्तवादिभिः।। 162।।

यथा–

आलीजनेन गमिता चतुरेण शय्यां

तस्मिन्क्रमेण गलिते[500] मिलिते च कान्ते।

किं वा विधेयमविधेयम[501]पीह किं वे–

त्यालोचनं नतमुखी कुरुते स्म सीता।। 163।।

आवेशो दुःखमोहाद्यैरपस्मारोऽङ्गतापनः।। 164।।

चिन्तादुःखभयोद्बुद्धं मूर्च्छनं मोह उच्यते।। 165।।

यथा–

तमालानुत्तालान्वनभुवि विलोक्याहितनृपा

बतेहाप्यायातो रघुपतिरिति भ्रान्तमतयः।

वने भ्रामं भ्रामं विकटविटपाग्रै[502]रभिहता

हतास्स्मो हा खड्गैरिति झटिति मूर्च्छामुपगताः।। 166।।

तत्त्वमार्गानुसन्धानादर्थनिर्धारणं[503] मतिः।। 167।।

यथा–

अणवत्तदेहदाहो सच्च[504] कामो ह[505] दासरहि रामो।

ण हि अण्णस्सिं पुरिषे एआरिस रूपचाउरी दिट्ठा।। 168।।

छा० अनवाप्तदेहदाहस्सत्यं[506] काम एव दाशरथी रामः।

न ह्यन्यस्मिन्पुरुषे, त्वेतादृश[507]रूपचातुरी दृष्टा।। 169।।

मन्दोद्योगत्व[508]मालस्यं कार्येष्वार्यैरुदीर्यते।। 170।।

आवेगाच्चित्तसम्भ्रान्तिरिष्टानिष्टागमोद्भवा।। 171।।

संशयात्कल्पनानन्त्यं वितर्क इति क[509]थ्यते।। 172।।

यथा–

पुष्पास्तृतेषु बत या भवनेषु मन्दमुद्युञ्जते स्म रिपुवामदृशो विहर्तुम्।

ता रामधाटिपटहक्षुभितान्तरङ्गाश्चक्रुर्जवेन बहुधा वनधा[510]वनानि।। 173।।

धर्मश्शरीरभृदसाविति धार्मिकाणां

मूर्तो नयोऽयमिति मन्त्रविशारदानाम्।

कालान्तकोऽयमिति कूटविचेष्टितानां
सञ्जायते रघुपतौ बहुधा वितर्कः।। 174।।
अत्र प्रथमपद्यमालस्यावेगयोरुदाहरणम्। द्वितीयं वितर्कस्येति वेद्यम्।
हर्षाद्याकारगुप्तिर्या सावहित्थेति कथ्यते।। 175।।
यथा-
वैतालिकादिकृतराघवबाहुसारप्रस्तावनाजनितवेपथुरोमहर्षः[511]।
मध्येसभं मसृणचन्दनपङ्कचर्चाव्याजेन गोपयति वैरिवसुन्धरेन्द्रः।।176।।
व्याधिर्ज्वरादिरुन्मादस्तुल्यचेष्टा जडान्ययोः।। 177।।
यथा-
काकुत्स्थखण्डितविरोधिवधूजनानां
गात्रेषु गाढमदनज्वरदूषितेषु।
हारास्स्फुटन्ति हरिचन्दनमेति शोषं
धूमायते च नलिनीदलक्लृप्तशय्या।। 178।।
स्थानाय संघटय मन्दर कन्दरं नो
रक्ष्या वयं कृशबलाश्शबरा! भवद्भिः।
इत्यस्तचेतनसचेतनतुल्यवृत्त्या
भ्राम्यन्ति राम विमताश्चकिता वनेषु।। 179।।
विषादश्चेतसो भङ्ग उपायाभावचिन्तनैः।। 180।।
विलम्बाक्षमतौत्सुक्यं[512] चेतस्तापत्वरादिकृत्[513]।। 181।।
चापलं त्वनवस्थानं रागद्वेषादिहेतुकम्।। 182।।
क्रमेण यथा-
बद्धस्समुद्रो बलभेदिजेता हतस्सुतस्संयति देवरोऽपि।
प्रत्यर्पयेद्दैत्यपतिर्न सीतां को वा क्रमस्स्यान्मम कण्ठसूत्रे।। 183।।
अह्नां प्रभोरचिरमस्तमयेत बिम्बं
सज्जीकुरुष्व[514] सहसा सखि पुष्पतल्पम्।
तूर्णं प्रसाधय ममाङ्गमनङ्गतप्तं
संक्षिप्य वा व्रज समानय रामचन्द्रम्[515]।। 184।।

[516]भ्रूभङ्गसङ्गवदपाङ्गतरङ्गरङ्गै-
रानङ्गशार्ङ्गशरसङ्गमनप्रसङ्गम्।
तच्छिञ्जिनीरणितमाभरणैः क्वणद्भिः
प्रस्तौति राममभितश्चलिता सखीयम्।। 185।।

[517]अत्राभितश्चलनाच्चापल्यम्।[518]

भावहावादिशृङ्गारचेष्टानां लक्षणोदाहरणानि

अथ प्रागुद्दिष्टानां हावादीनां[519] लक्षणोदाहरणानि दर्शयति-

**रसाभिज्ञानयोग्यत्वं भावमाहुर्मनीषिणः।**
**हावस्तु भाव एव स्यादीषद्विस्पष्टविक्रियः।। 186।।**

द्वयं यथा-

आलोकते पूर्वमविक्रियैव यूनो जनानद्य तु जानकीयम्।
आरोपयन्तं हरचापमेनं किञ्चित्समञ्चत्पुलकाञ्चिताङ्गी।। 187।।

अत्र किञ्चित्समञ्चत्पुलकेत्यनेन हावो निबद्धः। शिष्टेन भाव इति वेद्यम्।

**सुव्यक्तविक्रियो भावो हेलेति परिकीर्त्यते।। 188।।**

यथा-

चारुस्मितैस्स्मरसुधाम्बुधिचन्द्रपादै-
श्शृङ्गारमङ्गलतरङ्गभरैरपाङ्गैः।
सर्वाकृतिव्यतिकरैः पुलकैश्च रामे
प्रादुर्भवन्ति सुतनोः प्रणयप्ररोहाः।। 189।।

**अभूषणेऽपि रम्यत्वमार्यैर्माधुर्यमिष्यते[520] ।। 190।।**

यथा-

रघुवररामावयवैः[521] प्रकृतिशुभैर्भूषणानि[522] भूष्यन्ते।
उडुभिर्न हि शशिकिरणा विभान्ति तान्येव तैस्तु शोभन्ते।। 191।।

यथा वा-

ताटङ्कग्रैवेयककेयूरमुखानि भूषणान्यस्याः।
स्वयमतिशयमाधातुं न शक्नुवन्त्यङ्गकान्तिमग्नानि।। 192।।

शीलाद्यलङ्घनं यत्तु धैर्यमार्यैरुदीर्यते।। 193।।

यथा–

तापितापि मदनास्त्रवह्निभिर्मर्दितापि मलयाचलानिलैः[523]।

प्रेरिताप्यवनिजालिभिः पतिं साब्रवीन्न परुषा रुषा गिरः।। 194।।

यथा वा–

हृतोत्तरीया रामेण स्तनयोस्तनया भुवः।

हस्तस्वस्तिकमाधाय नामुञ्चद्धैर्यकञ्चुकम्।। 195।।

लीलाप्रियानुकरणं वाग्भिर्गत्याथ चेष्टया[524]।। 196।।

यथा–

रघुपुङ्गवस्य वचनं वचसा चेष्टां च चेष्टया दृष्टिम्।

दृष्ट्या चानुसरन्ती[525] सीता जाता सती च दयिता च[526]।। 197।।

[527]तात्कालिको विलासस्स्याद्विकृतिर्वल्लभेक्षणात्।। 198।।

यथा–

[528]प्राणेशमन्तिकगतं प्रसमीक्ष्य बाला

वक्षोजयोरघटयन्मुहुरुत्तरीयम्।

आलीमुखे नखमुखैरकिरत्परागं

पौष्पं मुखं च मुकुरे मुहुरालुलोके।। 199।।

विच्छित्तिरल्पभूषाभिरपि रम्यत्वमुच्यते।। 200।।

यथा–

ताटङ्कद्युतिलोललोचनरुची चाम्पेयनीलोत्पलो-

त्तंसौ ते तनुतश्शुचिस्मितलवौ निर्माति नासामणिम्।

हारस्फारमरीचि[529]रारचयति श्रीखण्डचर्चाश्रियं

बाले शेषविभूषणैः कृतमियद्रामस्य धीरं मनः[530]।। 201।।

[531]विभ्रमस्त्वरया बाले भूषास्थानविपर्ययः।। 202।।

यथा–

रामासङ्ग[532]व्यसनरभसस्वान्तया कान्तयासीत्

पाणौ हारो झटिति घटितः कङ्कणं कण्ठनाले।

काञ्चीसूत्रं कचपरिसरे काञ्चनस्रङ्नितम्बे
लाक्षालक्ष्मीर्नयननलिने कज्जलं पादपद्मे।। 203।।
[533]हर्षामर्षाश्रुभीत्यादेस्सङ्करः[534] किलिकिञ्चितम्।। 204।।
यथा–
प्रगाढं संदष्टाधरकिसलयामर्षपरुषा
प्रभूतानन्दाश्रुः प्रतिकलमिलद्[535]गद्गदरवा।
समुद्यत्सन्त्रासा सपुलकशरीरा जनकजा
न कान्तं नात्मानं किमपि बुबुधे नापरमपि।। 205।।
मोट्टायितं भवेदिष्टकथादौ भावसूचनम्[536] ।। 206।।
यथा–
रामकथाप्रस्तावे नमयति वदनं निगूढदरहसितम्।
सपुलककपोलफलका घटयति कुचयोः पटाञ्चलं बाला।। 207।।
सम्मर्देऽपि सुखाधिक्यं रतौ कुट्टमितं मतम्।। 208।।
अन्ये त्वाहुः–
केशाधरा[537]दिग्रहणे मोदमानापि[538] मानसे।
दुःखितेव बहिः कुप्येद्यत्र कुट्टमितं हि तत्।। 209।।
इति। यथा–
हृदि मुष्टिनिघातसम्भवा नखदन्तक्षतजापि वेदना।
प्रियसङ्गसुखाब्धिमग्नया बुबुधे नाल्पतरापि बालया।। 210।।
मानात्कान्तस्य सँल्लापे बिब्बोकोऽनादरक्रिया।। 211।।
यथा–
वाक्यैरमुष्य विविधैर्न मनो मदीयं
प्रत्येति किं मम कृते सखि यासि चिन्ताम्।
कामस्य मे गिलतु[539] पञ्चशरी शरीरं
या वल्लभास्य सखि सास्तु परं कृतार्था।। 212।।
सुकुमाराङ्गविन्यासो यत्तल्ललितमीरितम्[540] ।। 213।।
यथा –

घनसारतुषारगन्धसारैः किमु पीयूषशिरीषचम्पकैर्वा।
सखि तेऽवयवास्स्मरेण सृष्टा दयितो यान्भजते मृदूपचारैः।। 214।।
यथा वा–
मृदुशिञ्जानमञ्जीरकाञ्चीवलयकङ्कणैः।
सस्मिता सेवते रामं रामा रहसि विभ्रमैः।। 215।।
**रम्ये कुतूहलं लौल्यं चकितं भयसम्भ्रमः।। 216।।**
क्रमेण यथा–
विलोकते तन्मुखमेव बाला शृणोति तस्यैव शुभं चरित्रम्।
तदङ्गसङ्गं विजहौ न चापि[541] छायावदाहारविहारकाले।। 217।।
परीहासोद्योगं प्रियसहचरीं वल्लभगतं
गृहीत्वा नेपथ्यं झटिति निकटोपागतवतीम्।
समीक्ष्योत्तिष्ठन्तीं सपदि शयनात्सस्मरमयां
स्थितो गूढं रामस्स्मितसख[542]मुखः पश्यति मुहुः।। 218।।
**विहृतं प्राप्तकालस्य वचसोऽकथनं ह्रिया।। 219।।**
अन्ये त्वाहुः–
**ईर्ष्यया मानलज्जाभ्यामदत्तं योग्यमुत्तरम्।**
**क्रियया व्यज्यते यत्र विहृतं तदुदाहृतम्।। 220।।**
इति। यथा–
कान्तेन नर्मवचनं सखि किं किमुक्त-
माराधितस्सखि कथं मदनो युवाभ्याम्।
पृच्छन्तमालिजनमित्यसकृत्सरोषा
बाला ददर्श न च किञ्चिदुवाच वाक्यम्।। 221।।
**हसितं यौवनमदोद्भूतं हासोऽनिमित्तकम्।। 222।।**
यथा–
पअडाणुराअवंदा विवसा घणजुव्वणेण महरक्खी।
मअणतिरोहिअलज्जा[543] रामं दट्ठूअ हसदू अणिमिद्दं।। 223।।

छा० प्रकट्यनुरागबन्धा[544] विवशा घनयौवनेन मदिराक्षी।
मदनतिरोहितलज्जा रामं दृष्ट्वा हसत्यनिमित्तम्।। 224।।
।। इति रसभावनिरूपणम्।।

रसाद्रसान्तरोत्पत्तिक्रमः

अत्र रसाद्रसान्तरोत्पत्तिरपि कविभिस्सम्मता। यथोक्तं शृङ्गारतिलके-

**हास्यो भवति शृङ्गारात्करुणो रौद्रकर्मणः।**
**अद्भुतश्च तथा वीराद्बीभत्साच्च भयानकः।। 225।।** इति।
**रसस्सर्वोऽपि सम्पूर्णस्तिरोधत्ते रसान्तरम्।। 226।।**

इति भारतीयोक्तरीत्या यद्यप्येकैक एव रसश्चर्व्यते[545] तथापि रससङ्करोऽपि महाकविभिरङ्गीकृतः। स चास्माभी रसवदलङ्कारोदाहरणे दर्शितः। रसाभासस्तु त्रिविधो लक्षित ऊर्जस्व्यलङ्कारोदाहरणे दर्शितः। भावाभासोऽप्यूर्जस्व्यलङ्कारोदाहरणे दर्शितः। रसभावयोराभासत्वमनुचितविषयप्रवर्तनम्।

भावशान्तिभावोदयादिविवरणम्

रसे मुख्येऽपि क्वचिदास्वादातिशयवशाद् भावशान्त्यादयोऽप्यङ्गित्वम् अपि[546] भजन्ते। [547]उक्तं हि काव्यप्रकाशे (4-37)-

**रसे मुख्येऽपि तेऽङ्गित्वं प्राप्नुवन्ति कदाचन।। 227।।**

ते भावशान्त्यादयः। अङ्गित्वं च राजानुगतविवाहप्रवृत्तभृत्यवद् इति। तत्र भावशान्तिः समाहितालङ्कारोदाहरणे दर्शिता। भावोदयो यथा-

आलीजनेन गमिता चतुरेण शय्यां
तस्मिञ्छलेन[548] गलिते मिलिते च कान्ते।
किं वा विधेयमविधेयमपीह[549] किं वे-
त्यालोचनां नतमुखी कुरुते स्म बाला[550] ।। 228।।

अत्र लज्जाभावस्योदयः। यत्रान्योन्यविरोधिनौ भावौ परस्परस्पर्धयो-[551]पनिबध्येते तत्र भावसन्धिः। स यथा-

आकर्षन्निटलेक्षणस्य[552] रभसादाकर्णपूर्णं धनु-
र्वैदेह्यां पितुरङ्कभाजि निदधे लज्जास्मरावर्जितान्।
ईर्ष्यामर्षिणि तत्स्वयंवरकृते नानादिगन्तागते
वृन्दे भूमिभृतां रुषा च परुषान् रामः कटाक्षाङ्कुरान्।। 229।।

अत्र रतिक्रोधयोस्सन्धिः। यथा वा[553] ममैव नाटके कंसवधे-

रोषाद्दक्षिणमीक्षणं विपुलयन्वामं भयान् मीलयन्
वक्त्रार्धे क्वचिदीरयन् कटुगिरं चाटूक्तिमप्यन्यतः[554]।
एकेनाशु पदा पुरःपरिसरन्नन्येन पश्चाद्व्रजन्
कश्चिज्जातु रणोन्मुखे मयि दशां लेभेऽर्धनारीश्वरः।। 230।।

अत्रामर्षदैन्ययोस्सन्धिः। यत्र बहूनां भावानामन्योन्योपमर्दकतया निबन्धः क्रियते तत्र भावशबलता। सा यथा-

आयातो न ममान्तिकं रघुपतिः किं तेन जातागसा
यास्यामि स्वयमेव तस्य सविधं[555] किं वा वदेन्मां सखी।
आयातस्स्वयमेव[556][557] नन्विह पुनर्द्रक्ष्यामि नैतन्मुखं
तूर्णं तद्घटनं[558] भवेन्मम कथं का वा भवित्री कथा।। 231।।

अत्र चिन्तास्मृतिदैन्यशङ्काहर्षामर्षौत्सुक्यविषादानां शबलता।

।। इति श्रीमत्त्रिभुवनपवित्रहरितगोत्रावतंसवाराणसीवंशपद्माकर-प्रभातभानुना पदवाक्यप्रमाणपारावारपारीणश्रीमहोपाध्यायपर्वत-नाथसूरिपण्डितमण्डलेश्वरसूनुना श्रीयल्लमाम्बागर्भरत्नाकरपारिजातेन निर्मलाचारपूतेन चतुर्दशविद्यास्थानसिद्धान्तरहस्यविज्ञानवता श्रीधर्मसंख्यावता विरचिते श्रीमद्रघुपतिगुणमणिगणधामनि साहित्यरत्नाकरनामन्यलङ्कारशास्त्रे रसनिरूपणं नाम दशमस्तरङ्गः।।

आस्थामन्दिरमिन्दिराप्रणयिनो देवस्य रामात्मन-
स्त्वङ्गत्तुङ्गतरङ्गरिङ्गणभरैरङ्गीकृताडम्बरः।
तादृङ्निर्मलधर्मसूरिकवितासोल्लासकल्लोलिनी-
पूर्णः कर्णमनोहरो विजयते साहित्यरत्नाकरः।। 232।।

धर्मान्तर्वाणिवर्यस्त्रिभुवनविदिते वारणास्यन्वये यः
सञ्जातो यल्लमाम्बाकृतसुकृतफलं पर्वतेशस्य भाग्यम्।
व्याख्याविख्यातकीर्तेर्विवरणगुरुवाक्सांख्यमुख्यागमानां
तस्यालङ्कारशास्त्रे विलसति दशमो रामवर्ण्ये तरङ्गः।। 233।।

प्राचीनाभिनव[559]प्रबन्धृविहितग्रन्थानुसन्धायिना
सोऽयं साहसिकेन सम्प्रति मया नूत्नः प्रबन्धः कृतः।
कस्तुष्येदमुनाधुना ह्यसुलभो बोद्धा च निर्मत्सरः
सर्वज्ञो गतमत्सरोऽस्ति हि रमारामस्स सन्तुष्यतु।। 234।।

भो मातः कविते हि[560]तं मम वचः किञ्चित्समाकर्णय
श्रीमद्रामगुणस्तवामृतवती मर्त्यस्तुतिं मा कृथाः।
कस्तूरीघनसारचन्दनरसन्यासोत्सवास्वादवित्
को वा विस्त्रवसास्त्रपूयपिशितालेपाभिलाषी भवेत्।। 235।।

सञ्जातो हरितान्वये महति यश्श्रीपर्वतेशस्सुधी-
ष्षण्णां दर्शनकारिणां सुमनसामैकात्म्यलीलाकृतिः।
धर्माख्येन मनीषिणा विरचितस्तत्सूनुना तादृशा[561]
सोऽयं यावदिलातलं विजयतां साहित्यरत्नाकरः।। 236।।

।। साहित्यरत्नाकरस्समाप्तः।।

---

पाठभेदाः

1. अ० 1 सप्रपञ्चं नास्ति
2. म० 2 प्याधुना
3. म० 1 गुणै अ० 2 वरै
4. म० 1 वा अधिकम्
5. म० 1 इति अधिकम्
6. म० 1 म० 6 न तावदध्यक्षं तत्र
7. अ० 1 न तावत्प्रत्यक्षं क्षमते
8. अ० 1-2 न तावत् आद्यः
9. अ० 2 काव्यार्थानु, म० 6 काव्यानु
10. अ० 2 हि नास्ति

11. म० 1 सति त्रिविध, म० 6 सतिह्यतथा वा
12. अ० 1-2 स्वलक्षण
13. म० 1 अपि नास्ति
14. अ० 1 कस्याभावे, अ० 2 काभावे न
15. म० 1 कानुदयात्
16. म० 1 निर्विकल्पेना०
17. म० 1 सविकल्पं
18. अ० 1 विशेष्ये बुद्धिरुदेतीति, अ० 2 बुद्धिर्विशेष्ये उदेतीति
19. म० 2 म० 6 अपि नास्ति
20. म० 1 मप्यस्येति
21. म० 1-2 अ० 1-2 तद्विशेषणांश
22. म० 2 तदुत्पत्तेः
23. म० 1 म० 2 नुभवसंक्रामा०
24. म० 6 अ० 1-2 किं नास्ति
25. म० 1 विशिष्टकाव्याननु, म० 2 म० 6 अ० 1 विशिष्टवाक्यार्थाननु०
26. म० 1 अ० 1-2 अपि नास्ति
27. म० 2 तस्योत्पत्ति, म० 6 तस्यानुत्पत्ति
28. म० 1 कारणनाशेऽपि
29. म० 1 वैशेषिकाणां मते अपेक्षा
30. अ० 2 किरणापायात्कमल०
31. म० 1 सम
32. म० 1 प्रति नास्ति
33. अ० 2 प्रतीतिहेतुत्वात्
34. म० 6 भावप्रधानेऽयं निर्देशः अधिकम्
35. अ० 1 काल नास्ति
36. अ० 1 निमित्तनाश
37. म० 1-2, 6 अ० 2 किरणापाय
38. म० 6 तेऽपि
39. म० 1-2, 6 भाविते नास्ति
40. म० 1-2, 6 अ० 1 रसः अधिकम्
41. अ० 2 लोचनया
42. म० 1 अपि अधिकम्
43. अ० 2 निष्ठत्वात्कामिन

44. म० 6 सादृश्यस्यैकप्रतीति०
45. म० 1-2, 6 अ० 1 द्यभेदभाविते
46. अ० 1 अनुमानं तत्र प्रमाणं, अ० 2 सारेण तत्रानुमानं प्रमाणं
47. म० 6 अ० 2 विभाग
48. म० 1 परवशे, अ० 2 परवशो
49. म० 6 तद्दृष्टान्ता, अ० 1 जिकाश्च दृष्टान्ता
50. म० 6 लोकान्तर
51. अ० 2 मीयमानेन विल०
52. म० 1 हिं नास्ति
53. अ० 2 एव अधिकम्
54. म० 1 अ० 1 त्वेनाज्ञातासिद्धि, म० 2 त्वेनाज्ञातसिद्धि
55. अ० 1-2 हि
56. म० 2 नुमानमिति, अ० 2 नुमानं कारणात्कार्यानुमानमपि
57. अ० 2 भावेनैव
58. अ० 1 कारणरूपतारूप
59. म० 6 अ० 1-2 व्यापकनिवृत्तौ
60. अ० 2 तद्व्याप्य
61. अ० 1 निवर्तेत
62. म० 1 कारणरूपतालिङ्गत्वं, म० 2 रूपतया लिङ्गत्वम्
63. म० 2 किन्तु
64. अ० 1 धारणो हेयतया
65. म० 1 रसानुरूप
66. म० 1 मात्र
67. म० 1 गम्यमानानाम्
68. म० 6 अन्यानुमान
69. म० 6 वर्णनीयत्व०
70. अ० 1 अनुमीयमानं नास्ति
71. म० 1 म० 6 अ० 1-2 एकदा नास्ति
72. म० 6 अ० 1-2 प्रवृत्तेः
73. म० 2 गोचरतात्यागात्
74. म० 1 बाधापि सध्रीचीन, म० 2 अ० 2 बाधासध्रीचीना०
75. म० 2 न अधिकम्
76. म० 1 वाच्यम्

77. म० 6 बाधाभावौ
78. अ० 1-2 बोधयितुमीष्टे
79. अ० 2 हि अधिकम्
80. म० 2 नियमः पाक्षिके सति। तत्र चान्यत्र च प्राप्ते परिसंख्येति गीयते अधिकम्
81. म० 1 संस्पृष्ट
82. म० 6 तथा
83. म० 1 तावदभिधीयते
84. म० 1-2 वादेन
85. म० 2 चानभिधाने
86. अ० 1 सञ्ज्ञाघटीति
87. म० 1-2 अ० 1-2 स पश्यनृजु०
88. म० 1 च नास्ति
89. म० 6 तात्पर्यमवगम्यते
90. अ० 1 तस्या अनु०
91. म० 6 दप्यतिरेका
92. अ० 2 तदपरोक्ष
93. अ० 2 सिद्धस्य
94. अ० 1 व्यावृत्त्यर्थं
95. अ० 2 हि अधिकम्
96. म० 1 रसं नास्ति
97. अ० 1 स्फुरती०
98. म० 6 त्यलोलाम
99. अ० 1-2 अत्राभिधीयते
100. म० 1 तदुक्तम्
101. म० 1 म० 6 स्स्थायी०
102. म० 6 प्रतीतादर्थस्य
103. म० 6 प्रकाशिकाकारेण
104. म० 6 रत्यादिस्थायिनो०
105. म० 1 भावश्चानु०
106. म० 2, 6 भावास्तत्
107. म० 1-2, 6 अ० 1 स्सर्वै
108. म० 6 तत्र नास्ति, अ० 1-2 अत्र
109. म० 2 आलम्बनगुणश्चैव तच्चेष्टा तदलङ्कृतिः। तटस्थश्चेति विज्ञेयाः चतुर्थोद्दीपनक्रमाः।। अधिकम्

110. अ० 1 भावविकारादिश्चेष्टा, अ० 2 दिकास्तच्चेष्टाः
111. अ० 1 नाचलानिलचन्द्रि
112. म० 1 वि अधिकम्
113. म० 1 भावितान्तःकरणत्वं
114. म० 6 च नास्ति, अ० 2 ते च नास्ति
115. अ० 2 च नास्ति
116. म० 6 दैन्योग्र
117. म० 1 मोहाः कुमति
118. म० 1 म० 2 विषादौ
119. म० 6 अ० 2 स्स्थायी
120. म० 1 शान्ताश्च, अ० 1 शान्ताद्या
121. अ० 2 कथ्यते नास्ति
122. म० 6 अ० 2 वादीनाम्
123. अ० 1 भावरूपः स
124. अ० 1 भावरूपस्सः
125. म० 2 पनं कथम्
126. म० 1 जनयति नास्ति
127. म० 2 ग्रन्थपातः (योगात्-चेत्-सत्यम्)
128. म० 1, 6 अ० 1 विभाग नास्ति, अ० 2 पनभेदायोगा
129. म० 1 क
130. अ० 2 पोषण
131. अ० 2 न
132. अ० 2 धानत्व
133. अ० 1-2 लोल्लटादीनामु०
134. अ० 2 च अधिकम्
135. म० 1 निवृत्ति०
136. अ० 1-2 च नास्ति
137. अ० 1-2 सति अधिकम्
138. म० 1 नाभिधीय
139. अ० 2 पाटव नास्ति
140. म० 6 प्रकटिततयार्थप्रियैरपि
141. म० 1 नाभिधीयमानैः, म० 6 धात्वेनाभिधीयमानैः
142. म० 1 भूतिरनुमिति
143. म० 1 म० 6 दोषाणां

144. म० 2 अ० 2 भावकत्वव्या०
145. म० 6 परिहारे साधा०
146. म० 6 भोगाख्य
147. म० 1 अ० 1 रसो नास्ति
148. अ० 1अ० 2 लब्धिबाधः
149. अ० 1 सन्धानं तदनन्तर
150. म० 1 रस नास्ति
151. म० 6 प्रतिसजति, अ० 2 प्रसज्यते
152. म० 1 इति चेद् बाढमसाधीयान् नास्ति।
153. अ० 2 एव नास्ति
154. म० 1 त्रयमुपेक्ष्य
155. अ० 2 अन्तःकरणमव०
156. अ० 2 तत्सम्प्र०
157. म० 1 रुद्दीपनकारिभिः अधिकम्
158. म० 6 क्षेपादिकार्यैः
159. म० 1 चिन्ता नास्ति, म० 6 नीतः तच्चिन्ता
160. म० 1 अ० 1 अहं
161. म० 1 चारिव्यति
162. म० 6 आदि अधिकम्
163. म० 6 ग्रन्थपातः (महिम्ना--तैरेव)
164. अ० 2 रूप नास्ति
165. म० 1-2 म० 6 पदापदेश्यैः, अ० 1 पदवाक्यैः
166. अ० 1 अ० 2 सम्बन्धि०
167. अ० 2 परिहारस्वीकार०
168. अ० 2 ग्रन्थपातः (सर्वसाधारण-विभावनादि)
169. म० 1 अ० 1 नाट्यानु०
170. अ० 2 कारणादिबलात्
171. म० 6 सकलसहृदय०
172. म० 1 पुरः प्रस्फु०
173. अ० 2 सर्वांगमालिङ्ग०
174. म० 1 तिरोदधन्निव ब्र०
175. अ० 2 युक्तिमत्
176. म० 1 म० 6 अ० 2 सकलसहृदय०

177. म० 6 दयन्नित्य
178. म० 2 वैकरम्यो रस
179. म० 6 प्रकाशित्वात्
180. म० 1 म० 6 प्रत्यय नास्ति
181. अ० 1 ज्ञानानुसन्धाने
182. म० 1 न नास्ति
183. अ० 1 दात्मको
184. म० 6 नन्दात्मकाद्यनु
185. म० 6 व्यञ्जन०
186. म० 2 अ० 1 वा, म० 1 कथं लौकि
187. म० 6 जनिता
188. म० 2 वादिसामग्रीसमय०
189. अ० 1 ननु रसोत्पत्ति
190. अ० 1 न अधिकम्
191. म० 6 तस्य, अ० 1-2 रसस्य
192. म० 1 चर्व्यमाणमात्रे
193. म० 1 अ० 2 मात्र उपयोग, म० 6 उपयोगि
194. अ० 1 महा नास्ति
195. अ० 1 सहायोपलब्ध
196. अ० 2 लब्धान्तःकरण
197. अ० 2 निवृत्त
198. म० 1 म० 6 अ० 1 रसव्यप०
199. म० 1 अ० 2 चमत्कारिणः
200. म० 6 प्रकाशितात्मा
201. म० 1 तथैषां, म० 6 एवैषां
202. अ० 2 मेवेत्यतो०
203. अ० 2 संवेदनीयत्वात्
204. म० 1 म० 6 अ० 2 कल्पकमपि
205. अ० 1 कल्पक इत्युक्तं
206. म० 2 अ० 1 रूपस्योभया
207. म० 2, 6 अ० 1-2 इति नास्ति
208. अ० 2 इत्यनुवृत्तौ
209. अ० 1 कारण

210. म० 2 सिद्धिः
211. अ० 2 तथा सर्वसंवेदनत्वादविकल्पप्रतिमो
212. म० 2 कल्पन
213. अ० 2 रसशृङ्गारादिपदाप्रयोगेऽपि नास्ति
214. अ० 1 इति अधिकम्
215. म० 6 तस्यैव नास्ति
216. म० 1 मनसि, म० 2 मानसे
217. अ० 1 तर्हि नास्ति
218. म० 1-2 निरर्थकत्वे इतरेषां, म० 6 निरर्थकस्य रूपस्य इतरेषां
219. अ० 1 ब्रह्मास्वादनसो, म० 1 म० 6 ब्रह्मस्वादनसो
220. म० 1 अ० 1 परोक्षा
221. म० 1 अ० 1 भिधादिवृत्ति०
222. म० 2 काव्यवाक्यार्था०
223. अ० 2 निष्पन्न
224. म० 6 सरस नास्ति
225. म० 1 पुरः नास्ति
226. म० 2 मस्थिति
227. म० 6 न्यापक्षेपकत्वे
228. म० 6 अ० 1-2 व्यञ्जनीयतया
229. अ० 2 शृङ्गारादयः नास्ति
230. अ० 1 आस्वाद्यत
231. म० 1 स्वादन
232. अ० 1 रूपः
233. म० 6 स्यैव
234. म० 1 म० 6 तु नास्ति
235. म० 1 अ० 2 स्वादन०
236. म० 1 अ० 2 चयेषु
237. म० 1 पट०
238. अ० 2 सिद्धिस्सैषा वनेऽस्ति खलु यक्ष इतीव भाति।
239. अ० 2 इति नास्ति
240. म० 6 न नास्ति
241. अ० 1-2 मनादिममहा
242. अ० 1 न

243. म० 1 मुखकानमलंघवस्य
244. अ० 1 च नास्ति
245. अ० 2 तेन नास्ति
246. म० 1 म० 6 अ० 1-2 इति नास्ति
247. म० 1 म० 2 सह नास्ति, अ० 1 वत्सलेन सह नास्ति
248. म० 6 वाक्यमिदं नास्ति
249. म० 2 म० 6 अपरे
250. अ० 2 नातिष्ठन्ते
251. अ० 2 अतो
252. म० 1 अ० 2 इति नास्ति, म० 2 चेत् अधिकम्
253. अ० 2 पक्षः क्षमते
254. म० 6 त्व नास्ति अ० 2 भावकत्व नास्ति
255. अ० 2 हि अधिकम्
256. म० 2 म० 6 नन्दस्वरू०
257. अ० 2 इति निर्वि
258. म० 1 दावप्यस्ति
259. अ० 1 अ० 2 वा नास्ति
260. म० 6 स
261. अ० 2 अपि अधिकम्
262. म० 2 म० 6 स्याभावात्
263. म० 1 महतां अधिकम्
264. म० 2 अ० 2 शव्यापारवत्वलक्ष०
265. म० 1 अपि अधिकम्
266. म० 1 लम्भकताङ्गी
267. म० 6 प्रसाद
268. म० 1-2 प्युररीकर्तव्यम्
269. अ० 2 णादिना नानन्दो
270. म० 1 त्मकप्रति, अ० 2 त्मकत्वप्रति
271. म० 1 कथं च नास्ति
272. अ० 1 रप्यत्र प्र
273. अ० 1-2 रिति
274. म० 6 पण्डितेषु नास्ति
275. अ० 1 उद्देष्टव्यतया

276. अ॰ 2 मादिशे॰
277. म॰1–2 च्छुत
278. म॰ 1–2 स्थायिभावः
279. म॰ 1 दुत्साहं
280. अ॰ 1 कौहक
281. अ॰ 2 निर्वेदो वा नास्ति
282. म॰ 1 अ॰ 1 स्थायिनमाहुः
283. अ॰ 1 रस नास्ति
284. अ॰ 2 काव्यबन्धे
285. अ॰ 2 व्याजहार अधिकम्
286. म॰ 1 मैवम् नास्ति
287. अ॰ 1–2 मयं
288. अ॰ 1 – 2 काणादो
289. अ॰ 2 चित्कण्ठतो
290. अ॰ 1 कण्ठत एवादौ नि॰
291. म॰ 1 समस्त
292. म॰ 6 स्थायिका
293. म॰ 6 भवितर्नामा, अ॰ 2 भक्तिर्नाम
294. म॰ 6 रतिर्हि नास्ति
295. म॰ 1 अ॰ 1 योगिनी, म॰ 2 भाविनी
296. म॰ 1–2 एव नास्ति
297. अ॰ 1 न अधिकम्
298. म॰ 1 म॰ 2 एवमेवा॰
299. अ॰ 2 वाह
300. अ॰ 2 विक्षोभा
301. म॰ 1 वारिदस्यैव विस्तरः, अ॰ 1–2 विस्तृतिः
302. अ॰ 2 विक्षोभो
303. अ॰ 2 त्तराश्रय
304. म॰ 1 परितापातिशयः
305. म॰ 2 अ॰ 2 भृङ्गारस्य
306. म॰ 1 भृङ्गाररसस्य
307. म॰ 6 इच्छाविवेचनसरसविभावा
308. म॰ 1 म॰ 6 अ॰ 1 प्रह्लादको

309. म० 1–2, 6 यन्मयं
310. म० 1 निषेवते, म० 2 अ० 1–2 निषवेते
311. म० 6 स्पर्शनाभ्यां च
312. अ० 2 स्पर्शनादीनि सम्भोगोऽयमुदाहृतः
313. अ० 2 अ० 1 स सप्तावस्थः नास्ति
314. म० 1 म० 6 उक्तं हि नास्ति
315. म० 1 अ० 1–2 न्ताप्यभि०
316. म० 1 अ० 1–2 सम्भोगस्सप्त
317. म० 1–2 अ० 2 इति नास्ति
318. म० 1 निषेवन्ते
319. अ० 1 मध्यमप्रवासकोपा०
320. म० 1 म० 6 रते नास्ति
321. म० 6 तल्लज्जा
322. अ० 1 सत्तया, म० 2 अ० 2 मानवत्तया
323. म० 2 अ० 1 कोपा०
324. म० 1–2 तत्तद्विस्तरा, अ० 2 द्विस्तरा
325. म० 1 संभृत
326. म० 2 म० 6 सन्धानितो
327. म० 1–2 त्काले
328. म० 1–2, 5 केली
329. म० 2 इह
330. म० 1 मतीवमनो
331. म० 1 वरमङ्गता
332. अ० 2 गतापि न जहौ
333. म० 1 वाचां श्रुतिं
334. अ० 2 संक्षेपः अधिकम्
335. म० 6 प्रच्छन्नमध्यान्तराः
336. अ० 2 प्रन्ताघूर्णित
337. म० 6 सर्वसञ्चार
338. अ० 1 सम्पन्नाङ्गत्वात्
339. म० 1 म० 6 अ० 1–2 प्रवासजो
340. म० 2 अं० 1 कोपा०
341. म० 1–2, 6 वात्स्यायनीयेनास्य, अ० 1 वात्स्यायनयो नास्य०

342. म० 1 द्वितीयं सुरतं, म० 2 चान्तरं
343. म० 1 कुचयुगो०
344. अ० 2 प्रतिमुहुरुपरिष्टादुत्प०
345. अ० 1 कमललताभ्यां
346. म० 6 कौशलं
347. म० 1–2 अ० 1 दलि०
348. म० 6 नीप
349. म० 1 परिचित
350. म० 6 वामो
351. अ० 1 रामे
352. म० 1 सितशुभोत्सेध
353. म० 6 प्रवृतम्
354. म० 6 अ० 2 राम
355. म० 6 अ० 2 काम
356. म० 6 चितोत्कर्षगर्भः, अ० 2 तोष्णगर्भ
357. अ० 1 सङ्कुमुदा
358. म० 6 अ० 1–2 वाक्यमिदं नास्ति
359. म० 1 करुणाद्भेदः कुत इति
360. अ० 1 यतः नास्ति
361. म० 1 वस्थादति, म० 6 दशावती, अ० 2 वस्थावशात्
362. म० 6 दुपचीयन्ते
363. म० 2 दर
364. म० 6 दरंलीलो
365. म० 6 अ० 1 बलीम्
366. म० 1 अथ सङ्कल्पः
367. अ० 1 होय्य
368. म० 1 होज्जिय कआ
369. म० 1 भवेच्च कदा
370. अ० 1–2 जागरो यथा
371. म० 1 रिवायातेः
372. म० 2 जागरा आ०
373. म० 1 हि पाता०
374. म० 1 पहाय, अ०1 पहिए, म० 2 पएए

375. म० 1 अ० 1–2 रत्तं वा किम्
376. म० 1 भिपातात्
377. अ० 1 रक्तं वा किम्
378. अ० 1 घर्षण, म० 6 वर्णन
379. म० 6 गानम्
380. म० 1 कुचातल
381. अ० 2 मगान्मृ०
382. म० 2 म० 6 अ० 1–2 विवक्षया
383. म० 1 वस्तुविद्वेषः, अ० 1–2 वस्तुषु द्वेषः
384. अ० 1 माङ्गल्यत्वा
385. अ० 2 वर्णनीयत्वात्तदुद्योगो वर्णनीयः
386. म० 1, 6 अ० 1 मालिका
387. अ० 1 विलम्ब्यमाने
388. म० 1 तत्र
389. म० 6 कलहो०
390. म० 6 अ० 1 जीवके
391. अ० 2 तद्द्विविधं
392. म० 1 इति नास्ति
393. अ० 2 गेहात्समा
394. म० 1 द्यतस्मर
395. म० 2 अ० 2 रमणीकृतं यथा अधिकम्
396. म० 1 जे च
397. म० 1 मन्तर्मन्थित
398. अ० 2 कण्ठे
399. अ० 1 प्रभृतयो
400. अ० 2 विहिताः
401. म० 1 द्रष्टव्यं नास्ति
402. म० 1 तदपराङ्गा
403. अ० 1 प्रसिद्धाः
404. अ० 1 भयं ग्लानिर्व्याधि०
405. म० 1 एव नास्ति
406. अ० 2 हित्याश्च
407. अ० 2 हास्यभावा०

408. म० 2 म० 6 मपि
409. अ० 1 अ० 2 प्रकृतीनाम्
410. म० 1 अलक्षितं स्थितं, म० 2 अलक्षितस्थितिं, अ० 2 आलक्षितं स्थितं
411. म० 1 उत्कण्ठितानम्रशिरः
412. म० 1 ग्रन्थपातः (स्ताच्चाति-ते पुनः)
413. म० 6 अ० 1 तत्र
414. म० 1 म० 6 तांस, म० 2 अ० 2 तास्य
415. म० 1-2, अ० 2 मधुरश्शृङ्गारः
416. म० 1 अ० 1 भ्रंशादिः
417. म० 2 अ० 1-2 विभावाः
418. म० 6 लम्भनानु०
419. अ० 1 अ० 2 शोक नास्ति
420. म० 6 धाता
421. म० 6 क्रीडन्तो
422. म० 1-2 अ० 1 रसं अधिकम्
423. म० 1 अ० 2 सर्व
424. अ० 1 रसः अधिकम्
425. म० 1 उपरिष्टाद्वक्ष्यामः अधिकम्
426. म० 1 श्लोकोऽयं नास्ति
म० 6 श्लोकस्यास्य स्थाने बीभत्सव्यभिचारिनिरूपकः श्लोकः, उत्तरार्धारम्भे उत्साहश्चेति इति पाठेन लिखितः। अ० 1 एतस्मात् श्लोकात्पूर्वं बीभत्स-व्यभिचारिनिरूपकः श्लोको विद्यते। तस्य उत्तरार्धं तु एवं विपरिणमितम्- उत्साहश्चेति विज्ञेया भावा रौद्रस्य पण्डितैः।। इति।
427. अ० 1 त्कर्षात्कषाय
428. म० 1 म० 6 स्फूर्जितोग्र०
429. म० 1 अ० 1 यः अधिकम्
430. म० 1 अ० 1 सः अधिकम्
431. म० 6 श्लोकादस्मात् पूर्वं रौद्ररसीयव्यभिचारिनिरूपकः श्लोको लिखितः।
432. म० 1 अवशश्चावमर्षणां, अ० 1 श्चोपमर्षणः
433. अ० 1 उत्साहो
434. म० 1-2 अ० 2 दित्वाच्च स०
435. म० 6 अ० 1 रुत्साहैः पराक्रमैः प्रभावैश्च
436. म० 1-2 अ० 2 इति नास्ति

437. म० 1 अ० 1 कबलहृतौ
438. म० 1 व्यक्त
439. म० 2 अ० 2 दानवीरो यथा अधिकम्
म० 2 श्लोकस्यास्य स्थाने अन्तर्लीनेत्याद्यलङ्कारतरङ्गे इति विद्यते।
440. म० 2 अ० 2 दयावीरो यथा अधिकम्
441. म० 6 द्यत्सापरा
442. म० 6 वीररसप्रति
443. अ० 2 संभव नास्ति
444. म० 1 वीरानन्तरं
445. म० 6 र्शनोद्यात
446. म० 6 व्यभिचारिणस्तु नास्ति
447. अ० 1 धात्रीभयं
448. म० 1 रस अधिकम्
449. अ० 1 रक्तमांसादि
450. म० 1 म० 6 अ० 1 व्यभिचारिणस्तु नास्ति
451. म० 1 योनयः
452. म० 1 रससरसैः
453. म० 1 पूतैश्च
454. अ० 1 दीप्रैः
455. म० 6 अ० 1 अ० 2 कूश्माण्डाः
456. म० 1 वस्तुनिरीक्ष
457. म० 1 म० 6 अ० 1 व्यभिचारिणस्तु नास्ति
458. म० 1 फल्गुकाश्च
459. म० 6 पवित्र
460. म० 1 म० 2 म० 6 अ० 1 ग्रन्थपातः
(पञ्चतां -----अथ चरमं)
461. म० 1 अ० 1 दयश्च सक
462. अ० 1 णादीन्याह
463. म० 1 स नास्ति
464. अ० 1 नायिका
465. म० 2 अ० 2 स्यश्चेति
466. म० 2 अ० 2 यश्च
467. म० 2 अ० 2 क्रमः

468. म० 1 अ० 1 मताः
469. म० 1 अ० 1 हारादिस्तद
470. म० 6 अ० 1 तत् नास्ति
471. म० 1 अ० 1 हावो भावश्च
472. म० 1 विहृतं
473. म० 1 अ० 1 प्रागुपदिष्टाः, म० 6 प्रागुद्दिष्टाः
474. म० 1 प्रागुपदिष्टाः, अ० 1 प्रागुद्दिष्टाः
475. म० 1 रस अधिकम्
476. म० 6 न्दर्पदर्पवपुषो
477. म० 1 किरते
478. म० 1-2 अ० 1 लक्षणमुदाहरणम्
479. म० 1 काम
480. म० 2 बंद्ध
481. म० 1 स्थैर्यमुषि
482. म० 1 म० 6 पुलकांचिताङ्गी
483. म० 1 म० 2 सम्प्रता
484. अ० 1 स अं वतारेसे कित्तमं
485. म० 2 कथयामि
486. म० 1 म० 2 अ० 1 योषितः
487. म० 1 तदा
488. म० 1 विज्ञेयम्
489. म० 1 गमोद्यता
490. अ० 1 नाभि०
491. म० 1 म० 6 त्रयं नास्ति, अ० 1 यथा नास्ति
492. म० 1 मांदृशां
493. म० 1 भर्ता
494. म० 6 अ० 1 कम्प्र
495. म० 1 निबद्धौ नास्ति
496. म० 1 मोहहर्षयो
497. म० 6 यथा नास्ति
498. म० 6 लताहतान्
499. म० 1 मुद्रां
500. म० 1 गमिते

501. अ० 1 मभिधेय
502. अ० 1 विटपाद्यै
503. म० 6 निर्धारणा
504. म० 6 अ० 1 सहि
505. म० 1-2 एप्प अ० 1 च अ
506. म० 6 अ० 2 स्सखि
507. म० 1 म० 6 अ० 1 एतादृश
508. म० 1 दोद्यमत्व
509. म० 1 कीर्त्यते
510. अ० 1 बहुधा
511. म० 1 म० 2 म० 6 हर्षान्
512. म० 1 क्षममौत्सु
513. म० 1 मन
514. म० 1 बिम्बस्सज्जी
515. अ० 1 रामभद्रम्
516. म० 1 म० 6 अ० 1 श्लोकस्यास्य स्थाने विलासोदाहरणं प्राणेशमन्तिके इत्यादि श्लोको वर्तते। म० 6 प्राणेशेत्यादि रघुवीररामावयवैः इत्यन्तं ग्रन्थः पत्रान्तरे लिखितः।
517. म० 1 अ० 1 वाक्यमिदं नास्ति
518. म० 2 इति निर्वेदादिनिरूपणम् अधिकम्
519. म० 6 अ० 2 भाव
520. म० 1 अ० 1 मीर्यते
521. म० 1 म० 2 वरदाराव
522. म० 1 प्रकृतिमगैर्भूष
523. म० 2 मलयानिलैस्तथा
524. अ० 2 चेष्टितैः
525. म० 1 म० 2 अ० 2 सरन्ति
526. म० 6 जाता सैव दयिता च, म० 2 जाता पतिव्रता दयिता
527. म० 6 अ० 1 अनयोः ग्रन्थयोः प्रथमं रम्यत्वं लक्षितमुदाहृतं च। तदनन्तरं विलासः लक्षित उदाहृतश्च।
528. म० 1 म० 6 अ० 1-2 श्लोकस्यास्य स्थाने चापलोदाहरणं ममाङ्गसङ्गेत्यादि-श्लोको लिखितः।
529. म० 1 मरीचिका
530. म० 1-2, 6 अ० 1 जनं

531. म० 6 चापलोदाहरणं प्राणेशमन्तिकेत्याद्यारभ्य माधुर्यमिष्यते इत्यन्तमन्यत्र लेख्यो ग्रन्थः प्रमादादत्र लिखितः।
532. म० 1 रामानङ्ग
533. म० 1 अथ किलिकिञ्चितं अधिकम्
534. अ० 1 रसञ्चयः
535. म० 2 प्रतिपद
536. म० 6 अ० 1 सूचकम्
537. म० 2 केशाम्बरादि
538. अ० 1 मोदमानेऽपि
539. म० 1 विशतु
540. म० 1 मुच्यते
541. म० 1 अ० 1 बाला
542. म० 1 सखि
543. म० 2 म० 6 अ० 1-2मअणदिरोहिदलज्जा
544. म० 1 बन्ध
545. म० 1 यद्यप्येक एव रसः, अ० 1 यद्यप्येकदैक एव रसः
546. म० 1 अपि नास्ति
547. म० 6 यथा अधिकम्
548. म० 1 तस्मिन्क्रमेण
549. अ० 1 मभिधेय
550. म० 6 अ० 1 सीता
551. म० 6 अ० 2 स्पर्धितयोप०
552. म० 1 र्षन्ननलेक्षण०, म० 2 अ० 1 षन्नलिकेक्षण
553. म० 6 यथायम्
554. म० 1 गिरश्चाटू
555. अ० 1 निकटम्
556. म० 2 अ० 2 आयत्त
557. म० 6 मेष्य
558. म० 6 तद्भवनं
559. म० 1 प्राचीनानुभव०
560. म० 2 स्फुटम्
561. अ० 1 तादृशः



# साधारणश्लोकसूची

**[ साहित्यरत्नाकरस्थानां लक्ष्यलक्षणोद्धृतात्मकानां समेषां श्लोकानामकारादिक्रमेणानुक्रमणिका ]**

# साहित्यरत्नाकरे उदाहृतानां ग्रन्थानां सूची

**ग्रन्थानां नामानि** | **पृष्ठाङ्काः**

# साहित्यरत्नाकरे उट्टङ्कितानां ग्रन्थकर्तृणां सूची

# साहित्यरत्नाकरे उद्धृतानां श्लोकानां वाक्यानाञ्चाकारादिक्रमेण सूची

